THE

# HOWKHAMBÂ SANSKRIT SERIES;

A

)LLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 249.

# न्यायपरिशुद्धिः।

श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यप्रसादिता।

ीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकया युता।

वृन्दावननिवासि सर्वविद्याभूषणलक्ष्मणाचार्यण

टिप्पणीनिवेशन पुरःसरम्

संशोधिता।

NAYÂYAPARISHUDDHI

By

SRI VENKATNATH SRI VEDÂNTACHARYA

With a Commentary called Nyayasar.

By

SRI NIWÂSACHÂRYA,

Edited with Notes by Vidyàbhushan Lakshmanàchàrya of Brindàban.

FASCICULUS

*UBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.

AGENTS:—

OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press,*

BENARES.

*Price Rupee one*

॥ श्रीः ॥

—※—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२४०,

१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः ७ आनक

५ अन्यैर्देयं प्रतिस्तबकं ... ... ... ... " " १ "

६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ... ...

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १२

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया-व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्री-गागाभट्टविरचिता । तर्कपादः (मीमांसा) २

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्रविरचिता संपूर्णा (मीमांसा) ... २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णम् । (वेदान्तः)

(९) स्याद्वादमञ्जरी मल्लिषेणनिर्मिता सम्पूर्णा

(१०) सिद्धित्रयम् विशिष्टाद्वैतदर्शनप्रवर्तक श्रीमद्रामानुजाचार्यगुरुवरैः श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णम् वेदान्तः

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः)

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्राचीनमतविभक्त्यर्थविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः । सम्पूर्ण (न्यायः) ... ... ... ...

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् (मीमांसा) ...

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता । (मीमांसा) १

अथ

# न्यायपरिशुद्धेः प्रथमोऽध्यायः ।

श्रीमते रामानुजाय नमः ॥

श्रीमते वेदान्तमहादेशिकाय नमः ॥

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

पत्युः संयमिनां प्रणम्य चरणौ तत्पादकोटीरयोः
सम्बन्धेन समिध्यमानविभवान् धन्यांस्तथान्यान् गुरून् ॥
शुद्धं संश्रितबादरायणतनोर्नारायणस्योक्तिभिः
श्रीमान् वेङ्कटनायकः स्थितिपदं निर्माति नीतेः शुभम् ॥१॥

विद्यास्थानेषु धर्म्येषु गण्यते न्यायविस्तरः ।
स च विप्लावितस्तैस्तैस्ततोऽत्र परिशोध्यते ॥ २ ॥

---

श्रीमते रामानुजाय नमः ।

अथ न्यायपरिशुद्धेः न्यायसारसमा टीका प्रारभ्यते ॥

गुरुपङ्क्तिहारयष्टिं गुणरमणीयां सतां सदा हृद्याम् ।
श्रीमद्वेङ्कटनायकभूषितभागद्वयीं नमामि तमाम् ॥ १ ॥

द्रविडोपनिषद्देशिकमाधववंश्येन नीतिपरिशुद्धेः ।
व्याख्या विशदार्थपदा विरच्यते श्रीनिवासदासेन ॥ २ ॥

---

अथात्र मूलटीकयो राकारादिप्रदर्शिका टिप्पनी लिख्यते । तस्मै रामानुजार्याय नमः परमयोगिने । यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ॥ १ ॥ लक्ष्मणाचार्यचरणकरुणालब्धबुद्धिना । लघ्वी लक्ष्मणदासेन टिप्पन्यत्र निवेश्यते ॥ २ ॥ अथ विश्वस्मिन्नामरूपाण्यनुविहितवता देवदेवेन दत्तां वेदान्ताचार्यसंज्ञामवहितबहुवित्सार्थमन्वर्थयामि इत्यधिकरणसारावल्युक्तार्थनामवान् आचार्यवर्यं आदावभीष्टदायि मङ्गलमाचरति । १पत्युरिति । २मूले विद्यास्थानेष्विति ।पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश इति याज्ञवल्क्यस्मृतिः ।

यद्यपि कथंचिदाक्षपादं सत्पक्षे निक्षेप्तुं शक्यं न च कणभक्षपक्षनिक्षेपवत्क्लेशः । नापि तत्कर्ता गौतमस्तामसेषु परिपठ्यते । नापि च विप्रलम्भकत्वख्यातिः । तथापि च ब्रह्मसूत्रकारादिबहिष्कृतत्वान्नातीव वयमाद्रियामहे । न खल्वार्षत्वादिभिस्तदादरः अतिप्रसङ्गात् ।

प्राज्ञानां प्रथमेनैव गुरुणा हि स्वयं पुरा ।
लोकायतमतं प्रोक्तं लोकविप्लवकारणम् ॥

अथ वा । पितामह एवात्र प्रमाणम् । य इन्द्रविरोचनयोश्चार्वाकमतमुपदिष्टवान् । तथा गौतमोऽपि संभाव्यते । अथापि ।

काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः ।
त्रिदण्डधारिणा पूर्वं रक्षिता विष्णुना त्रयी ॥

इति स्मृतेः ।

---

निरवधिकभावभरितं निगमान्तगुरोर्निबन्धनं को वा ।
विवृणोत्वहं त्वहन्तादूरो विवृणोमि तत्र भक्त्यैव ॥ ३ ॥

भगवान् परमकारुणिको भगवत्प्रसादलब्धवेदान्ताचार्यापरगुणसमाख्यः श्रीमान् वेङ्कटनाथो गुरुः स्वचिकीर्षितस्य न्यायपरिशुद्ध्याख्यग्रन्थस्याविघ्नपरिसमाप्तये प्रचयगमनाय च ।

मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् ।
जपतां जुह्वतां चैव विनिपातो न विद्यते ।

इति । शास्त्रोपोद्बलितशिष्टाचारपरम्पराप्राप्तं गुरुपरम्परावन्दनरूपं मङ्गलमाचरन् विषयप्रयोजने निर्दिशति । पत्युः संयमिनामिति संयमिनां पत्युर्यतिपतेर्भगवतो भाष्यकारस्य चरणौ प्रणम्य तत्पादकोटीरयोस्तस्य भाष्यकारस्य चरणयोः किरीटस्य चेत्यर्थः । यतिराजत्वात् किरीटोपपत्तिः । पादत्वेनैकत्वविवक्षया पादकोटीरयोरिति द्विवचनोपपत्तिः । सम्बन्धेन शेषशेषिभावेन समधिगमितविभवान् भाष्यकारस्य चरणौ ये रामानुजवरदगुरुविष्णुचित्तप्रभृतयः प्रणमन्ति । भाष्यकारश्च यान् पूर्णार्ययामुनेयादीन् प्रण-

---

१ टीकायां मङ्गलेति मनुस्मृतिचतुर्थाध्यायवाक्यम् ।

बहवः पुरुषा राजन् ! सांख्ययोगविचारिणः ।
नैत इच्छन्ति पुरुषमेकं कुरुकुलोद्भव ? ॥
समासेन तु तद्व्यासः पुरुषैकात्म्यमुक्तवान् ।

इति महाभारतोक्तेश्च तद्बहिष्कारः इह तु न तथेति चेन्न तुल्यन्यायतया वचनस्योपलक्षणार्थत्वात् । न खलु तद्वा तादृग्वेति कश्चिद्विशेषः । यद्यपि काशकुशावलम्बनन्यायेन पक्षान्तरादाधिक्यमस्य पक्षस्य तथापि न तद्वेदान्तसन्निधौ । न खलु मशकाद्बलिष्ठोऽपि मातङ्गः कण्ठीरवमुपरुणद्धि ।

यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद ।
कुतार्किकाज्ञाननिवृत्तिहेतुः करिष्यते तस्य मया निबन्धः ।

इति वाक्यमक्षपादपक्षपातेनोक्तमित्यनास्थेयम् ।

उक्तं च पूर्वाचार्यैः ।

---

मति ते त्रिविधा अपि भाष्यकारसम्बन्धेनैव देदीप्यमानज्ञानलक्षणैश्वर्याः । अत एव धन्याः तान् गुरूंस्तथा तेन प्रकारेण प्रणम्य श्रीमान् "ऋचः सामानि यजूंषि, सा हि श्रीरमृता सताम्" इत्युक्तेः श्रीशब्दवाच्यत्रयीसम्पन्नः । एतेनाचार्यस्याप्ततमत्वं द्योत्यते । वेङ्कटनायको वेदान्ताचार्यः शुभं विद्यास्थानत्वेन वेदार्थावबोधहेतुत्वाच्छ्रेयस्करं नीतेर्न्यायस्य उपलक्षणमेतत् प्रत्यक्षादिप्रमाणवर्गस्येति यावत् । स्थितिपदं मर्यादारक्षकं न्यायविस्तरं शास्त्रम् ।

स्थानमर्यादयोः स्थितिः पदं व्यवसितत्राणस्थानलक्ष्म्याङ्घ्रिवस्तुषु ।

इति नैघण्टुकाः । संश्रिता वादरायणतनुर्व्यासशरीरं येन व्यासत्वेनावतीर्णस्य नारायणस्य ।

सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरः सराः ।
शरण्यं शरणं जग्मुर्नारायणमनामयम् ॥
तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ।

१ शांति पर्वणि मोक्षधर्मेषट्च्यधिकत्रिशततमाध्याये ।

काणादमाक्षपादं वा कापिलं तन्त्रमेव वा ।
तन्त्राण्येतानि सर्वाणि न तन्त्राण्यात्मनिर्णये ॥

इति। अत एव हि "एतेन शिष्टापरिग्रहा अपि व्याख्याता" इति सूत्रे भा[१]षितम् । एतेन वेदापरिगृहीतसांख्यपक्षक्षपणेन शिष्टाश्च ते वेदापरिगृहीताः कणभक्षाक्षपादक्षपणकभिक्षुपक्षाः क्षपिता वेदितव्या इति। न च सूत्रनिबद्धं सर्वं विद्यास्थानमिति नियमो दृष्टः। नचैक एवैकस्य विद्यास्थानस्य सूत्रकृदित्यपि वा ऋषिरित्येव वा राजाज्ञा। अन्यैरपि च तत्करणदर्शनात्।

---

अवतीर्णो महायोगी सत्यवत्यां पराशरात् ॥
उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् ।
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ॥
शतधा चैकधा चैव तथैव च सहस्रधा ।
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ॥
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ।
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ॥
को ह्यन्यो भुवि मैत्रेय ? महाभारतकृद्भवेत् ।

इति हि स्मर्यते। ब्रह्मसूत्रप्रमुखैः प्रबन्धैः करणैः शुद्धमविप्लुतं यथा तथा निर्माति। तत्र कुदृष्टिकल्पितमवद्यं निरस्यतीति भावः। अस्य ग्रन्थस्य प्रमाणवर्गो विषयः । तत्त्वावबोधश्च प्रयोजनमित्युक्तं भवति । ननु न्यायविस्तरशोधनस्य प्रयोजनं न पश्यामः तस्य विद्यास्थानत्वेन स्वतः शुद्धत्वात् शोधनीयांशो न लभ्यते येन न्यायपरिशुद्ध्युपक्रमः सप्रयोजनः स्यादित्यत आह । विद्यास्थानेष्विति । धर्म्येषु धर्मादनपेतेषु धर्मपथ्यर्थन्यायादनपेते इति यत्प्रत्ययः । धर्मावबोधोपयुक्तत्वात् शोधनं सफलमिति भावः। तैस्तैरिति । कणादपक्षिलोदयनादिभिर्विप्लावितः । शारीरकशास्त्राविरुद्धार्थकल्पनेन क्षोभितः। ततो हेतोरत्र न्यायपरिशुद्धाववः

---

१ मूलेभाषितमिति । ब्रह्मसूत्रद्वितीयाध्याय प्रथमपाद त्रयोदशसूत्रव्याख्याने श्रीरामानुजभाष्येभाषितम् ।

प्रमाणशब्दस्य भावे करणे च व्युत्पत्तिः । अत्र च प्रमैव प्रमाणमित्येके । प्रमाकरणमेवेत्यपरे । तयोरन्यतरदित्यन्ये यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमा । यदज्ञानात् संसारो यज्ज्ञानात्तन्निवृत्तिस्तत्प्रमेयम् । मुमुक्षिभिः प्रकर्षेण मेयत्वात् । सामान्यतो वा प्रमाविषयः प्रमेयम् । तद्द्वि[2]विधम् । द्रव्याद्रव्यभेदात् । आगन्तुकधर्माश्रयो द्रव्यम् । अतथाभूतमद्रव्यम् । द्रव्यं द्वेधा जडमजडमिति । जडं च द्वेधा । प्रकृतिः काल इति । अजडं च तथा । प्रत्यक् परागिति । प्रत्यगपि द्विविधम् । जीव ईश्वर

---

द्यांशपरिशोधनेन शारीरकशास्त्रानुगुणीक्रियत इत्यर्थः । ननु न्यायविस्तरस्य परिशोधनं कर्तव्यं चेत् गौतमीया न्यायपञ्चाध्याय्येव व्याख्येया स्यात् । तत एव कुमतिकल्पिताशेषविप्लवनिराकरणसिद्धेः । किं निबन्धान्तरकरणनिर्बन्धेनेत्यत आह । यद्यपीति । कथञ्चिदिति । अवयव्यादिसाधकसूत्राणामन्यपरत्वव्याख्यानेनेत्यर्थः । अक्षपादो गौतमः । तत्प्रोक्तमाक्षपादं सत्पक्षे सतां वेदान्तिनां सिद्धान्ते । कणभक्षः कणादः । विशेषशब्दाप्रामाण्यसमवायाद्यत्यन्तदुर्घटार्थपरिग्रहात् तत्पक्षो न वैदिकपक्षनिक्षेपार्ह इति भावः । तामसेष्विति । गौतमस्य तामसेषु पाठे हि ।

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।

ताः सर्वा निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ।

इति स्मृत्या[3] तत्प्रणीतशास्त्रस्य तमोमूलत्वेनानादरणीयत्वं स्यादिति भावः । विप्रलम्भकत्वख्यातिरिति । त्वं हि रुद्र महाबाहो ? मोहशास्त्राणि कारय । इत्यादिवत् गौतमस्य विप्रलम्भकत्वे न प्र-

---

१ मूले प्रमाणेत्यादि गौतमसूत्रे प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति निर्दिष्टत्वात्तेनैव क्रमेण पदार्थानन्यथा विशदयति ।

२ मूले द्विविधमिति । द्रव्याद्रव्यप्रभेदान्मितमुभयविधं तद्विदस्तत्त्वम् । इतितत्त्वमुक्ताकलापेऽप्येतैरुक्तम् ।

३ टीकायां स्मृत्येति द्वादशाध्यायमनुस्मृत्येत्यर्थः ।

इति । परागपि तथा । धर्मभूतज्ञानं नित्यविभूतिश्चेति । अथवा द्रव्यं द्विविधम् । आत्मानात्मभेदात् । त्रेधा वा भोक्तृभोग्यनियन्तृश्रुत्यनुसारात् । षोढा वा । त्रिगुणकालजीवेश्वरशुद्धसत्त्वमतिभेदात् । अस्वयं प्रकाशं जडम् । स्वयं प्रकाशमजडम् । मिश्रसत्त्वाश्रयः प्रकृतिः । कालः क्षणलवादिव्यवहारहेतुः । स्वस्मै भासमानं प्रत्यक् । परस्मै भासमानं पराक् । परतन्त्रचेतनो जीवः । स्वतन्त्र ईश्वरः । अर्थप्रकाशो बुद्धिः । प्रकृतिव्यतिरिक्तत्वे सति सत्त्वाश्रयो नित्यविभूतिः । अद्रव्य-

माणमिति भावः । ब्रह्मसूत्रकारादीति । आदिपदेन नाथमुनियामुनेयभाष्यकारव्यासार्या गृह्यन्ते । ननु ऋषिप्रणीतत्वादाप्तसर्वज्ञप्रणीतत्वाद्वा गौतमीयमादरार्हमित्यत आह । न खल्विति । अतिप्रसङ्गादिति । तत्प्रणीतानामसच्छास्त्राणामपि परिग्रहप्रसङ्गादित्यर्थः । तान्येवासच्छास्त्राण्याह । प्राज्ञानामिति । गुरुणा बृहस्पतिना । लोकायतमतं लोके देहात्मभ्रममूलदेहात्मवादस्य विस्तृतत्वाल्लोकायतमतमिति चार्वाकमतमुच्यते । यथोक्तं हरिवंशे षड्विंशे अध्याये ।

तेषां च बुद्धिसंमोहमकरोद्बुद्धिसंमतः ।
नास्ति वादार्थशास्त्रं हि धर्मविद्वेषणं परम् ॥
परमं तर्कशास्त्राणामसतां तन्मनोरमम् ।
न हि धर्मप्रधानानां रोचते वै कथान्तरे ॥
ते तद्बृहस्पतिकृतं शास्त्रं श्रुत्वाल्पचेतसः ।
पूर्वोक्तधर्मशास्त्राणामभवन् द्वेषिणस्तथा ।
प्रतर्कन्यायभरितं तन्मतं बहु मेनिरे ॥

इति अत्र ते इति इन्द्रद्वेषिणो रजिपुत्रा गृह्यन्ते । पितामहः । प्रजापतिः छान्दोग्ये अष्टमे ऽध्याये आत्मस्वरूपं पृष्टवतोरिन्द्रविरोचन-

१ टीकायामष्टमेऽध्याये इति । सप्तमखण्डप्रभृति द्वादशपर्यन्तेषु खण्डेषु ।

मनेकधा । सत्त्वशब्दादिवैचित्र्यात् । एकं वेतरविशिष्टं प्राधान्यतः प्रमेयं ब्रह्म । इतरेषां स्वनिष्ठैकब्रह्मनिष्ठत्वात् । तस्यैव च तथात्वेन मुमुक्षुभिः प्रकर्षेण मेयत्वश्रुतेः । अव्यवस्थितव्यवहारकारणं ज्ञानं संशयः । अयथाव्यवहारकारणं ज्ञानं विपर्ययः । संस्कारमात्रजं ज्ञानं स्मृतिः । तद्व्यतिरिक्तं ज्ञानमनुभवः। पुरुषप्रवृत्त्युद्देश्यं प्रयोजनम् । व्याप्त्यधिगमस्थानं दृष्टान्तः । प्रामाणिकत्वाभिमतैः परिगृहीतत्वोऽर्थः सिद्धान्तः । परार्थप्रमाणप्रयोगवाक्यावान्तरवाक्यान्यवयवाः । व्याप्त्यङ्गीकारे व्यापकानिष्टप्रसंजनं तर्कः । तर्कानुगृहीतप्रमाणपूर्वकतत्त्वावधारणं निर्णयः । वीतरागकथा वादः । विजिगीषुकथा जल्पः सापि हेत्वङ्गैकदेशविकला न्यूनम् । प्रतिपक्षस्थापनाहीना कथा वितण्डा ।

---

योरुदशराव आत्मानमवेक्ष्य यदात्मनो विजानीथ तन्मे ब्रूतमित्यादिना सुवसनाद्यलङ्कारपूर्वकमुदशरावे शरीरप्रतिबिम्बावेक्षणमुपदिश्य तथैव शरीरप्रतिबिम्बं दृष्टवतोस्तयो"रेष आत्मेतिहोवाचैतदभयममृत"मित्यादिना शरीरात्मभावं प्रजापतिरुपदिष्टवानिति श्रूयते । सम्भाव्यत इत्यनेन गौतमस्यासच्छास्त्रप्रवर्तकत्वे प्रमाणादर्शनं सूच्यते । अत एव तथैवाक्षिपति । कणादः काश्यपः शाक्यः शाक्यमुनिः पाषण्डा माध्यमिकादयोऽवैदिकाः त्रिदण्डधारिणा दत्तात्रेयतयावतीर्णेनेत्यर्थः । बहव इति । पुरुषाः कपिलासुरिपञ्चशिखहिरण्यगर्भपतञ्जलिप्रभृतयः । नैत इति । एते सांख्ययोगशास्त्रप्रवर्तकाः एकं पुरुषं पुरुषोत्तमं नेच्छन्ति तत्तस्मात् व्यासश्च समासेन सङ्क्षेपेण शारीरकसूत्रेण एक आत्मा शरीरी यस्य चिदचिदात्मकप्रपञ्चस्य स एकात्मा तस्य भावः ऐकात्म्यं पुरुषेण विष्णुना ऐकात्म्यमिति समासः । चिदचिदात्मकप्रपञ्चशरीरं परमात्मानं प्रतिपादितवानित्यर्थः । इह तु न तथेति । गौतमे न वाचनिको बहिष्कार इति भावः । तुल्यन्यायतयेति । वेदविरुद्धार्थाभिधा-

असद्धेतवो हेत्वाभासाः । प्रतिपक्षद्वयशब्दार्थारोपेण दूषणं छलम् । स्वव्यापि दूषणं जातिः । कथकाशक्तिलिङ्गं निग्रहस्थानम् । इत्येतादृशानि वाक्यानि किं न सूत्राणि स्युः । तदिह संक्षिप्तं लक्षणादिवाक्यं सूत्रं तदुदाहरणादिवाक्यं तु भाष्यादिकमिति विभाव्य संतोष्टव्यम् । न च पूर्वप्राबल्यव्यवस्था तत्पूर्वस्यापि संभवात् । वार्तिकस्य चानवतारप्रसङ्गात् । व्याकरणादिष्वन्यथान्यथाकरणस्वीकाराच्च । न च जैमिनेः प्रमाणलक्षणादिष्वौदासीन्यमात्रेण गौतमोक्तेषु काश्यपोक्तेषु वा निःशेषानुमतिसिद्धिर्मन्तव्या । अन्यपरतया लोकप्रसिद्ध्योपजीवनात् । परकल्पिततटाकोपजीवनवत् । कर्मकाण्डवृत्तिकाराद-

---

यित्वलक्षणबहिष्कारहेतोस्तुल्यत्वादित्यर्थः । उपलक्षणार्थत्वादिति । काकेभ्यो दधि रक्षतामित्यत्र दध्युपघातकत्वेन श्वमार्जारादीनामिव वेदविरुद्धार्थाभिधायित्वे गौतमादीनामपि वचनविषयत्वमित्यर्थः । यद्यपीति । बह्वर्थसम्वादाल्पार्थविरोधादिलक्षणाधिक्यं काशकुशावलम्बनप्रायमिति भावः । गौतमभक्तैः प्रतिपादितं गौतमीयशास्त्रस्योपादेयत्वं तेषामेव श्लाघार्हमित्याह । यदक्षपाद इति । जगतः शमाय लोकानां दुःखात्यन्तनिवृत्तय इत्यर्थः । अत एव शारीरकनिष्ठैर्न तथानुगृहीतमित्याह । उक्तं चेति । तन्त्राणि शास्त्राणि आत्मनिर्णये न तन्त्राणि न कारणानीत्यर्थः । तन्त्रं कुटुम्बकृत्ये स्यात्कारणे च परिच्छदे । शास्त्रे प्रधाने सिद्धान्त इति विश्वः । गौतमीयस्यापरिग्रहे भाष्यकारोक्तिं प्रमाणयति । अत एवेति । क्षपणको दिगम्बरः भिक्षुः पशुपतिः । ननु गौतमसूत्रस्य निराकरणे किं वा न्यायविस्तरविद्यास्थानं भवतु । अर्वाचीनानामनृषीणां सूत्रनिबन्धनानर्हत्वात् । न्यायविस्तरस्योच्छेद एव स्यादित्यत आह । न चेत्यादिना । अर्वाचीनानामनृषीणामपि सूत्रकरणशक्तिर्दृश्यते । तत्कृतं च निबन्धनमुपपन्नत्वात् वेदाविरुद्धत्वात् विद्यास्थानं भवत्वित्यभिप्रायेण प्रमाणादिपदार्थानां लक्षणपरीक्षात्मकसूत्रप्रायाणि वचनानि रचयति ।

योऽपि हि लोकसिद्धां प्रमाणव्यवस्थां यथायथमन्यथा संजगृहुः। अतो यावदिह युक्तियुक्तं तावदुपजीव्यते। न खलु तटाकस्थ-

---

प्रमाणशब्दस्येत्यादिना किं न सूत्राणि स्युरित्यन्तेन। भावे करणे चेति। ल्युटो भावे करणे च विधानादिति भावः। स्वाभिमतं लक्षणमाह। यथावस्थितेति। भ्रमव्यावर्तनायोक्तं यथावस्थितेति व्यवहारविशेषणम्। अत्र व्यवहारानुगुण्यं व्यवहारजननस्वरूपयोग्यत्वं तेन व्यवहारफलोपधानरहिते प्रमाविशेषे नाव्याप्तिरिति ध्येयम्। प्रमेयलक्षणमाह। यदज्ञानादिति। संसारहेतुभूताज्ञाननिरूपकत्वं मोक्षजनकज्ञानविषयत्वं च लक्षणद्वयम्। पूर्वं धातुः प्रत्ययेन युज्यत इति मतेन प्रमेयशब्दव्युत्पत्तिं दर्शयति। मुमुक्षुभिः प्रकर्षेण मेयत्वादिति। मुमुक्षुभिः प्रकर्षत्वेन ज्ञेयत्वादित्यर्थः। पूर्वं धातुरुपसर्गेण युज्यत इति मतेनाह। सामान्यतो वेति। प्रमेयत्वस्य केवलान्वयित्वादिति भावः। प्रमाविषयः। प्रकृष्टज्ञानविषयः। अबाधितज्ञानविषय इति यावत्। लक्षितं प्रमेयं प्रयोजनविवक्षाभेदेन बहुधा विभज्य दर्शयति। द्विविधमित्यादिना। तत्र द्रव्यलक्षणमाह। आगन्तुकधर्माश्रय इति। संयोगत्वादिरूपधर्माश्रयेषु संयोगादिष्वतिव्याप्तिवारणायागन्तुकपदं धर्मविशेषणम्। धर्माश्रयत्वं धर्मापृथक्सिद्धत्वम्। तेन विषयतयागन्तुकज्ञानाश्रयत्वमादायाद्रव्येषु नातिव्याप्तिः। अत्र वक्तव्यं सर्वं तत्तल्लक्षणावसरे वक्ष्यामः। आत्मानात्मविवेकस्य सांपरायिकफलार्थधर्मानुष्ठानहेतुत्वात् तदर्थतया विभागमाह। अथवेति। "भोक्ता भोग्यं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेती"ति श्रुत्यनुगुणविभागमाह। त्रेधा वेति। अस्मिन् पक्षे मतिकालनित्यविभूनीनां भोक्तृभोग्यनियन्तृधर्मत्वेन तेष्वन्तर्भावोऽवगन्तव्यः। विविच्य परिज्ञानायाह। षोढा वेति। पूर्वविभक्तानां जडादीनां लक्षणान्याह। अस्वयं प्रकाशमित्यादिना। नित्यविभूत्यामतिव्याप्तिवारणायोक्तं मिश्रेति सत्त्वविशेषणम्। तदर्थश्च रजस्तमोऽन्यतरमिश्रत्वम्। क्षणलवादीत्यादिशब्देन मुहूर्तादिपरिग्रहः। जीवलक्षणमाह। परतन्त्रेति। प्रकृत्यामतिव्याप्तिवा-

१ टीकायां भोक्तेति श्वेताश्वतरोपनिषदि प्रथमाध्याये

पङ्कोऽप्यपङ्किलबुद्धिभिस्तदवगाहिभिरुपजीव्यते । अतः सिंहवनगुप्तिन्यायेन यथावस्थितं न्यायानुगृहीतं वेदवेदान्तानुमतं च

---

रणाय चेतनपदम् । ईश्वरेऽतिव्याप्तिवारणाय परतन्त्रपदम् । बुद्धेर्लक्षणमाह । अर्थप्रकाश इति । प्रकाशत्वमात्रस्य धर्मिज्ञाननित्यभूतिसाधारणत्वादर्थपदम् । तेनार्थस्य प्रकाश इति षष्ठीतत्पुरुषेण विषयत्वं लभ्यते । नित्यविभूतेर्लक्षणमाह । प्रकृतीति । प्रकृत्यामतिव्याप्तिवारणाय प्रकृतिव्यतिरिक्तत्वे सतीत्युक्तम् ।

तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः ।
तत्त्वमेको महायोगी हरिर्नारायणः परः ।

इति[1] शास्त्रानुसारेण चिदचिद्विशिष्टस्य ब्रह्मण एकस्यैव प्रमेयत्वमिति पक्षं दर्शयति । एकं वेति । चिदचितोर्विशेषणतया तदन्तर्भाव इत्याह । इतरेषामिति । इतरेषां जीवप्रकृतिकालादीनां स्वनिष्ठब्रह्मैकनिष्ठत्वात् । स्वमहिमप्रतिष्ठितब्रह्माधारत्वादित्यर्थः । एतेन ब्रह्मणो विशेष्यत्वं प्रकृतिपुरुषकालादीनां विशेषणत्वं च ज्ञाप्यते । श्रुतेरिति । "ब्रह्मविदाप्नोति परम्"[2] इत्यादिश्रुतेरित्यर्थः । संशयलक्षणमाह । अव्यवस्थितेति । निश्चयेऽतिव्याप्तिवारणायाव्यवस्थितपदं व्यवहारविशेषणम् । कालादावतिव्याप्तिवारणाय ज्ञानपदम् । षोडशत्वेन विभागस्योपलक्षणपरत्वमभिप्रयन् प्रसङ्गाद्विपर्ययादीनां लक्षणमाह । अयथेत्यादिना । प्रमायामतिव्याप्तिवारणायायथेति । ज्ञानपदं पूर्ववत् । स्मृतेर्लक्षणमाह । संस्कारमात्रजमिति । प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रपदम् । संस्कारध्वंसेऽतिव्याप्तिवारणाय ज्ञानपदम् । अनुभवस्य लक्षणमाह । तद्व्यतिरिक्तमिति । घटादिष्वतिव्याप्तिवारणाय ज्ञानपदम् । प्रयोजनस्य लक्षणमाह । पुरुषप्रवृत्तीति । प्रवृत्त्युद्देश्यत्वं प्रवृत्तिप्रयोजककामनागोचरत्वम् । सिद्धान्तलक्षणमाह । प्रामाणिकेति । भ्रान्तत्वाभिमतैः परिगृहीतार्थातिव्याप्तिवारणाय प्रामाणिकपदम् । वस्तुनि विक-

१ टीकायां शास्त्रेति महाभारतशान्ति पर्वान्तर्गतमोक्षधर्मे सप्तपञ्चाशदधिकत्रिशततमाध्याये
२ तैत्तिरीयोपनिषद् ब्रह्मानन्दवल्ली

न्यायमनुसरामः । न पुनर्न्यायमात्रम् । यत्तु ज्ञातृसम्बन्धस्ये-
त्यादिग्रन्थमुपादायानन्तरमुक्तं श्रीविष्णुचित्तैः । व्याप्तिभंग-

ल्पाभावेन प्रामाणिकत्वस्य वैवक्षिकत्वज्ञापनायाभिमतपदम् ।
निर्णयलक्षणमाह । तर्कानुगृहीतेति । अप्रामाण्यशङ्कास्कन्दिते
प्रमाणपूर्वकतत्त्वावधारणेऽतिव्याप्तिवारणाय तर्कानुगृहीतत्वं प्रमा-
णविशेषणम् । प्रमाणस्य तर्कानुगृहीतत्वे तज्जन्यतत्त्वावधारणे
नाप्रामाण्यशङ्कावकाश इति भावः । जल्पलक्षणमाह । विजिगी-
ष्विति । वादेऽतिव्याप्तिवारणाय विजिगीषुपदम् । सापीति । विजिगीषु-
कथापि । हेत्वङ्गैकविकलेति । पक्षधर्मत्वादिरूपपञ्चकान्यतमहीना
इत्यर्थः । वितण्डालक्षणमाह । प्रतिपक्षेति । प्रतिक्षेप्यपक्षापेक्ष-
या प्रतिक्षेपकपक्षस्यापि प्रतिपक्षत्वात्प्रतिपक्षेत्युक्तिः । आर्षत्वाभा-
वाद्भवदुक्तं न सूत्रमित्यत आह । तदिहेति । वार्तिकभाष्ययोर-
भावात्त्वदुक्तं सूत्रमनर्थकं स्यादित्यत आह । तदुदाहरणादीति ।
आदिशब्देनोक्तानुक्तचिन्ते गृह्येते । भाष्यादिकमित्यादिपदेन वा-
र्तिकं गृह्यते । संतोष्टव्यमिति । गौतमीयसूत्रनिराकरणे न्याय-
विस्तरस्योच्छेदः स्यादित्येष निर्वेदो न कार्य इत्यर्थः । भवत्प्रणी-
तसूत्रस्य सत्त्वेऽपि गौतमीयस्य पूर्वत्वेन प्राबल्यात्तत्रैवादरः
स्यादित्यत आह । न च पूर्वप्राबल्यव्यवस्थेति । तत्पूर्वसम्भ-
दिति । ततः पूर्वमपि कस्यचिन्न्यायशास्त्रप्रवर्तकस्य सम्भवात्
तेन गौतमीयस्याप्यनादरसम्भवादिति भावः । उत्तरमात्रस्याना-
दरणीयत्वे तत्रोक्तानुक्तदुरुक्तिविचारात्मकवार्तिकस्यानवतारप्रस-
ङ्गादित्याह । वार्तिकस्य चेति । वैयाकरणैर्यथोत्तरं मुनीनां
प्रामाण्यमित्युत्तरस्यैव प्रामाण्याङ्गीकाराच्चेत्याह । व्याकरणादि-
ष्विति । ननु धर्मविचाराय प्रवृत्तो जैमिनिरवश्यवक्तव्यां प्रमा-
णव्यवस्थां नोक्तवानतो ज्ञायते गौतमीयं सूत्रं तस्याभिमतमित्यत
आह । न च जैमिनेरिति । अन्यपरतयेति । जैमिनेर्धर्मविचा-
राभिनिविष्टत्वेन वेदाविरुद्धप्रमाणव्यवस्थापकग्रन्थोपजीवनमात्रे-
तत्रौदासीन्यं न तु गौतमकाश्यपीयादिग्रन्थोपजीवनेनेति

१ जैमिनेरिति । जैमिनीयममीमांसासूत्रप्रथमाध्यायप्रथमपादस्थसत्संप्रयोगेत्यादिसूत्रेष्वित्यर्थः ।

भानुभवोऽनुमानमित्यर्थः । न्यायशास्त्रेषु तद्विशेषनिर्णय इति तदपि तन्निरूपणाधिकृतविद्यास्थानख्यापनपरम् । प्रमाणा-

---

भावः । अत एव गुरुकुमारिलादयः स्वानुगुणां प्रमाणव्यवस्थां संगृहीतवन्त इत्याह । कर्मकाण्डवृत्तिकारादयोऽपीति । तटाकस्थजलोपजीवनेऽपि तद्गतपङ्कानुपजीवनवत् गौतमीये वेदाविरुद्धांशपरिग्रहेऽपि तद्विरुद्धांशपरित्यागो न दोष इत्याह । अतो यावदिहेति । अपङ्किलबुद्धिभिः । अभ्रान्तैः । नन्वेवं वेदव्यवस्थापकस्य न्यायविस्तरस्य वेदेन व्यवस्थितत्वेऽन्योऽन्यानुग्राहिता स्यादित्याशङ्क्येष्टापत्तिरित्याह । अत इति । वेदव्यवस्थापकस्य न्यायविस्तरस्य वेदेन व्यवस्थितत्वाद्धेतोर्न्यायानुगृहीतं वेदं वेदानुमतं च न्यायमनुसरामः न पुनर्न्यायमात्रमित्यन्वयः । नन्वेवमन्योऽन्याश्रयो दोषः स्यादित्यत आह । सिंहवनगुप्तिन्यायेनेति "सिंहैर्विहीनं तु वनं विनश्येत्सिंहा विनश्येयुर्ऋते वनात्तु" इतिन्यायेनेत्यर्थः । एतदुक्तं भवति । संदिग्धांशे वेदे न्यायापेक्षणेऽपि न वेदमात्रस्य न्यायोऽपेक्षितः। न्याये च वेदविरुद्धांशत्यागाय वेदापेक्षणेऽपि न हि सर्वत्र न्याये वेदापेक्षेति विषयभेदान्नान्योऽन्याश्रयो दोषावहः । अत एवहि मनुनाप्युक्तम्[1] ।

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ।

इति । ननु श्रीविष्णुचित्तीयग्रन्थे गौतमीयन्यायविस्तरस्यानुमतिर्दृश्यत इत्यत आह । यत्त्विति । तदपीति । न्यायनिरूपणे प्रवृत्तं वेदाविरुद्धं किंचिदस्ति न तु गौतमीयमेवेति तस्य ग्रन्थस्य तात्पर्यमिति भावः । ननु सूत्रस्य निराकरणमयुक्तमित्यत आह । प्रमाणादीति । सर्पमार इति । विरुद्धांशस्त्याज्य इति न्यायो नास्मद्विषये सर्पदष्टः । नापि दण्डेन निवारित इत्यर्थः । अदृष्टविरोधं लोकविरोधं चाभिप्रेत्योभयोक्तिरिति ध्येयम् । नन्वेवं गौतमादेर्निराकरणे पूर्वपरत्वयोरप्यप्रयोजकत्वे को वास्य विद्यास्थानस्य वक्ता परिग्राह्योऽस्त्वित्यत आह । ततश्चेति । नन्वेवम्

१ टीकायां मनुनेति द्वादशाध्याये

दिसूत्रमुपादाय व्याचक्षाणैस्तत्पक्षनिष्ठैरपि पूर्वैः क्वचित्सूत्राणि निराकृतानि । तन्नयायस्य नास्मासु सर्पभारः । नापि दण्डानिवारणम् ततश्च ।

यथालोकं यथावेदं लौकिके वैदिकेऽपि च ।
यो वक्ता स परिग्राह्यः प्राक्तनोऽद्यतनोऽपि वा ॥ १ ॥
विवक्षितार्थवैशद्यं व्याकुलत्वमपूर्णता ।
उल्लोकतेत्यमी दोषा गुणकोट्यां जडैः कृताः ॥ २ ॥
भगवन्नाथमुनिभिर्न्यायतत्त्वसमाह्वया ।
अवधीर्याक्षपादादीन्नयबन्धि न्यायपद्धतिः ॥ ३ ॥
तदर्वाग्भिस्तदाचार्यैर्यथेष्टं मतमास्थितैः ।
प्रणिन्ये बहुधा तैस्तैः प्रमाणादिविचारणा ॥ ४ ॥

अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं यत्सूत्रं सूत्रविदो विदुः ।

इति सूत्रलक्षणशास्त्रोक्ताल्पाक्षरत्वादिलक्षणयुक्तस्य गौतमसूत्रस्य कथमपरिग्रह इत्याशङ्क्य गौतमसूत्रे विद्यमानोऽविशदार्थलक्षणो दोषोऽल्पाक्षरत्वेन व्याकुलत्वरूपो दोषो विश्वतोमुखत्वेनापूर्णत्वात्मको दोषः सारवत्त्वेन एवं सूत्रकरणेन लोकमर्यादातिक्रमश्चानवद्यत्वेन अज्ञैर्युष्माभिर्गुणत्वेनाभ्युपेताः न तूक्तदोषगुणनिर्मुक्ताल्पाक्षरत्वादयस्तत्र वर्तन्त इत्याह । विवक्षितेति । अत एव हि भगवन्नाथमुनिभिर्गौतमसूत्रमर्यादामवधीर्य न्यायसरणिर्निबद्धेत्याह । भगवदिति । न केवलं नाथमुनिभिरन्यैरपि पराशरभट्टारकादिभिः स्वमतानुसारेण प्रमाणादिविचारणा कृतेत्याह । तदर्वा-

१ टीकायामल्पाक्षरमिति तत्र प्रतिपिपादयिषितार्थविषयकप्रकारान्तरापेक्षया न्यूनवर्णकत्वमल्पाक्षरत्वम् । स्वगतसन्देहनिवर्तकप्रमाणान्तरानपेक्षत्वमसन्दिग्धत्वम् । साक्षात्प्रवर्तकत्वं सारवत्त्वम् । योगविभागादिभिरनेकार्थबोधकत्वं विश्वतोमुखत्वम् । अनर्थकपदरहितत्वमस्तोभत्वम् । पारायणेनापि फलजनकत्वमनवद्यत्वमिति बोध्यम् ।

तदयं भाष्यस्वरसनिद्धो बहिष्कारपक्षः । अङ्गीकाराकाङ्क्षिणामक्षपादीयमप्यस्मदुक्तैकान्ततया स्थास्यत इति तथैव स्थापयिष्यामः । अतो वयमपि महतामुक्तार्थतात्पर्यकल्पनेन नापराध्येम । न्यूनाधिकविरुद्धव्यपदेशादीनां लक्षणलक्षणोक्तीनां चाध्याहारान्यपर्याभ्यां तद्भक्तैरपि निर्वाहात् । तथास्मिन् यत्र स्फुटश्रुतिस्मृतिशारीरकाविरोधः स उद्देशतो निरुह्यते । यत्तावत्सूत्रितं प्रथमाध्याये[1] "घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः" इति । अत्र ज्ञानेन्द्रियपञ्चकोपादानं नेन्द्रियान्तरप्रतिक्षेपार्थम् । मनसः पृथक्प्रमेयतयोद्देशात् । अनन्तरमेव

भिरिति । एवं भाष्यस्वारस्यानुगुण्येन गौतमसूत्रस्य बहिष्कारपक्ष एव ज्ञात इत्याह । तदिति । गौतमपक्षपातेन गौतमीयाङ्गीकारं ये काङ्क्षन्ति तेषामस्मदुक्तैकार्थ्येनाङ्गीकारोऽस्त्वित्याह । अङ्गीकाराकाङ्क्षिणामिति । सूत्रस्यायुक्तार्थकल्पनेन पक्षिलादय एव गौतमस्यापराध्यन्ति न वयमित्याह । अत इति । न्यूनांशेऽधिकप्रक्षेपः अधिकांशस्य विरुद्धांशस्यान्यार्थत्वकल्पनमलक्षणस्य लक्षणतया कथनेऽप्यन्यकल्पनं च तत्तद्भक्तैः पक्षिलादिभिरपि क्रियमाणं तस्य निर्वाह एव न तस्यापराधः । तन्न्यायोऽस्मास्वपीत्याह । न्यूनाधिकेति । आदिपदेनासङ्गतनिरर्थकोक्ती गृह्येते । प्रतिज्ञातं निर्वाहं प्रथमाध्याये प्रथमं दर्शयति । यत्तावदित्यादिना । घ्राणरसनेत्यादिसूत्राणि तन्मतानुसारेण व्याख्यायन्ते । घ्राणं रसनं चक्षुस्त्वक् श्रोत्रं चैतानीन्द्रियाणि भूतेभ्यः पृथिव्यप्तेजोवाय्वाकाशेभ्यः प्रभवन्तीत्यर्थः । अत्र प्रथममेतावन्त्येवेन्द्रियाणीति भ्रमं वारयति । अत्रेति । पृथक् प्रमेयतयेति । "आत्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाश्च प्रमेयम्" इति सूत्रेऽभिधानादित्यर्थः । युगपदिति । विभुनात्मनाधिष्ठितेष्वि-

१ सूत्रे प्रथमेति । न्यायसूत्रे द्वितीयाह्निके

च "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इति लक्षणकरणात्। अभ्युपगमासिद्धान्तन्यायेन च तदिन्द्रियपरीक्षणात्।

अतश्चोक्तेन समानयोगक्षेमयुक्तिप्रमाणेन कर्मेन्द्रियवर्ग उपलक्षणीयः। "प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ" इति सूत्रेण वा तत्सिद्धिः। वाचः कण्ठोक्तेः पाण्यादिचतुष्टयस्य शरीरव्यापारकरतया सूचनादिति। शारीरके तु "सप्त गतेर्विशेषितत्वाच्च,, इति पूर्वपक्षमुपक्षिप्यासाधयच्च हस्तादीनामपीन्द्रियत्वं भगवान् बादरायणः। "हस्तादयस्तु स्थितेऽतो नैवम्" इति।

---

न्द्रियेषु नानार्थसंबद्धेष्वपि यत्संयोगक्रमवशाज्ज्ञानोत्पत्तिः क्रमते तन्मन इति लक्षणकरणादित्यर्थः। ननु तस्य प्रमेयत्वेऽपीन्द्रियत्वानङ्गीकारोऽस्त्वित्यतआह। अभ्युपगमेति। कणादाभ्युपगतस्य मन इन्द्रियत्वस्य गौतमीयैरप्यङ्गीकारादित्यर्थः।अतश्चेति।मनसइन्द्रियपरिगणनसूत्रे पाठाभावेऽपि ज्ञानरूपक्रियाकरणत्वरूपेण लिङ्गेन मनः षष्ठानीन्द्रियाणीत्यागमेन च यथेन्द्रियत्वमङ्गीक्रियते तथा हस्तादीनामप्यादानादिलक्षणक्रियाकरणत्वेन इन्द्रियाणि दशैकं चेत्यागमेन चेन्द्रियत्वमवर्जनीयमिति तान्यपि तत्रोपलक्षन्तामित्यर्थः। ननु कर्मेन्द्रियाणां सूत्रान्तरेऽप्यग्रहणन्न तेषामत्रोपलक्षणीयतेत्यत आह। प्रवृत्तिरिति। अत्र बुद्धिशब्देन मनो व्यपदिश्यते। वाङ्मनः शरीराणामारम्भ औदासीन्यव्यवच्छेदः। पुण्यपापरूपक्रियेति यावत्। सा प्रवृत्तिरिति सूत्रार्थः। कथमेतज्ज्ञायत इत्यत आह। शारीरके त्विति। तत्र हि किमिन्द्रियाणि सप्तैव उत एकादशेति संशय्य "सप्त गतेर्विशेषितत्वाच्च" इति पूर्वपक्षः कृतः। अस्यार्थः। इन्द्रियाणि सप्तैव कुतः गतेः सप्त प्राणाः प्रभवन्तीत्यादिषु सप्तानामेव जीवेन सह सञ्चारश्रवणात् "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च" इति सप्तानामेव योगकाले ज्ञानानीति विशेषितत्वाच्चेति। "हस्तादयस्तु

१ शारीरके इति वेदान्त सूत्रद्वितीयाध्याय चतुर्थपादे।

भूतेभ्य इति च नोपादानाभिप्रायम् । अहङ्कारोपात्तानामाप्यायकभूतविवक्षयापि तदुपपत्तेः । तथा च वेदार्थसङ्ग्रहे[1] "एवमाहङ्कारिकाणामिन्द्रियाणां भूतैराप्यायनं महाभारत उच्यत" इति समाधानम् । ऋष्यन्तरवाक्यस्यापि समानन्यायस्य निर्वाहार्थं परस्परविरुद्धेषु प्रमाणवाक्येषु तात्पर्यविशेषपरिकल्पनया परिहार एव हि पण्डितकृत्यम् । अनित्यमनोवादिभिरपि हि "अन्नमयं हि सोम्य मन[2]" इति श्रुतिराप्यायनपरतयैव योज्या । तुल्यमिदमन्यत्रापीति । यत्तु "बाधनालक्षणं दुःखं, तदत्यन्तविमोक्षोऽपवर्ग" इति तत्र दुःखात्यन्तनिवृत्तेरपवर्गत्वं स्वीकृतम् । न च तत्रानन्दः श्रौतः कण्ठोक्त्या प्रतिषिध्यते ।

---

स्थितेऽतो नैवम्" इति । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । हस्तादयः कर्मेन्द्रियाणि स्थिते शरीरे उपकारकाणि अतो नैवं न सन्त्वेन्द्रियाणि "दशेमे पुरुषे प्राणा आत्मैकादश, इन्द्रियाणि दशैकं च" इत्यादिश्रुतिस्मृतिभ्यामुपकारकत्वाविशेषाच्च । हस्तादीनां कर्मेन्द्रियाणामपीन्द्रियत्वमवर्जनीयमित्यर्थः । इन्द्रियाणां भूतोपादानवत्त्वं व्यावर्तयति । भूतेभ्य इति । अहङ्कारोपात्तानामिति । सात्त्विकाहङ्कारोपादानानामित्यर्थः । "देवा वैकारिका मता" इति हि स्मर्यते । आप्यायकभूतविवक्षयेति । अन्यथा त्वन्मते श्रोत्रस्याकाशात्मकत्वेनाकाशजन्यत्वाभावात् भूतेभ्य इति सूत्रमसङ्गतमेव स्यादिति भावः । समाधानमिति । भृगुभरद्वाजसंवादे ।

भूमेर्गन्धगुणं वेत्ति रसं चाद्भ्यः शरीरवान् ।
ज्योतिः पश्यति रूपाणि स्पर्शं वेत्ति च वायुतः ॥ १ ॥
शब्दं शृणोति च तथा आकाशात्तु शरीरवान् ।

१ वेदार्थसंग्रह इति । वेदान्तसारो वेदान्तदीपो वेदार्थसंग्रहः । गद्यगीताभाष्यसूत्रभाष्यनित्यक्रमा इति । इत्युक्तेषु भाष्यकाररचितेषु नवसु ग्रन्थेषु मध्ये श्रीभाष्यात्पूर्वं रचयित्वा श्रीनिवासचरणयोः समर्पितो भास्करयादवशाङ्करमतत्रययुक्तिनिरसनपूर्वकं निर्दोषवेदान्तार्थस्थापनपरो ग्रन्थस्तत्र ब्रह्माज्ञानवादिशाङ्करपक्षं विचार्य भास्करमतविचारारम्भे इत्यर्थः ।

२ छान्दोग्येषष्ठप्रपाठके पञ्चम खण्डे

ादभिप्राये चानन्यथासिद्धं किमपि न लिङ्गं पश्यामः। अत एव हे भूषणमते नित्यसुखसंवेदनसम्बन्धसिद्धिरपवर्गे साधिता । एतेन "तस्मात् सर्वदुःखविमोक्षोऽपवर्ग" इति चतुर्थाध्याय-वाक्यमपि निर्व्यूढम् । तत्राप्यानन्दनिषेधाभावात् । यच्च शारीरकद्वितीयाध्यायविरुद्धमिह द्वितीयाध्याये अवयविसमर्थन-मितीवाभाति तदपि तदेकार्थं योजयितुं शक्यम् । तथाहि

इत्यत्र मोक्षधर्मे ।

शब्दः श्रोत्रं तथा खादित्रयमाकाशसम्भवम् ।
वायोः स्पर्शं तथा चेष्टा त्वक्चैव त्रितयं स्मृतम् ॥
रूपं चक्षुस्तथा व्यक्तिस्त्रितयं ज्योतिरुच्यते ।
रसः क्लेदश्च जिह्वा च त्रयं जलगुणाः स्मृताः ॥

घ्राणं घ्रेयं शरीरं च तेषु भूमिगुणाः स्मृताः । इत्युक्तम् ।

इन्द्रियाणां भूतजन्यत्ववचनं भूताप्यायनपरमिति समाधानं गौतमवाक्यस्यापि तुल्यन्यायस्य निर्वाहकमित्यर्थः । आप्यायनं पोषणम् । तत्रैव ।

आप्यायन्ते च ते नित्यं धातवस्तैस्तु पञ्चभिः ।

इति सुव्यक्तमभिहितम् । अनित्यमनोवादिभिरिति । आहङ्कारिकमनोवादिभिर्वैदान्तिभिरित्यर्थः । मोक्षप्रतिपादकसूत्रविरोधं परिहरति । यत्त्विति । बाधनालक्षणं दुःखम् । प्रतिकूलवेद्यत्वं दुःखलक्षणमित्यर्थः । तदत्यन्तविमोक्षोऽपवर्ग इति । तस्य दुःखस्यात्यन्तात्विमोक्षोऽत्यन्तनिवृत्तिः । निवृत्तेरात्यन्तिकत्वं नाम निवृत्तसजातीयस्य तस्मिन्नेवात्मनि पुनरनुत्पाद इति । अनन्यथासिद्धमिति । आनन्दानुक्तिमात्रस्यान्यथासिद्धत्वादिति भावः । अवयविसाधकसूत्राणामन्यपरतया निर्वाहं प्रतिजानीते । यच्चेति । शारीरकद्वितीयाध्यायविरुद्धमिति । शारीरकद्वितीयाध्याये हि "तदनन्यत्वमारम्भणशब्दादिभ्य" इत्यादिनोपादानोपादेययोरनन्यत्वं साधितम् । तद्विरुद्धमवयविसाधनमित्यर्थः । अवयविसाधकत्वेन

१ तस्मादिति । वात्स्यायनभाष्यकारवाक्यमित्यर्थः ।

"नचैकदेशोपलब्धिरवयविसद्भावात्" । साध्यत्वादवयविनि संदेहः, । सर्वाग्रहणमवयव्यसिद्धेः, । धारणाकर्षणोपपत्तेश्च, । सेनावनवद्ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम्, इत्येतानि हि तत्सूत्राणि । न तानि विरुध्यन्ते । सेनावनादिव्यावृत्तोऽवयव्यारम्भकतया समवायिकारणतयाभिमतावस्थाविशेषापन्नः संघातविशेष एवावयविशब्देन निर्दिश्यत इत्यविरोधात् । तावतैवोपलम्भव्यवहारविशेषादेश्चरितार्थत्वात् । अतीन्द्रियाणुवचनमपि प्रदीपावयवानामि-

प्रतीयमानानि सूत्राण्यनुवदति । नचेत्यादिना । अवयविसद्भावाद्धेतोरेकदेशोपलब्धिर्नचान्यथा यावान् देश इन्द्रियसंयुक्तस्तावतः प्रदेशस्यैव ग्रहणं स्यात् । नतु घटः पट इत्यादिप्रतीतिरित्यर्थः । साध्यत्वादिति । अवयविनः पदार्थान्तरस्यावयवजन्यत्वात्तस्मिन्नवयविनि घटो वा वल्मीकं वेति संदेह उपपद्यते । अन्यथा घटवल्मीकयोर्मृत्समूहरूपत्वेनाविलक्षणत्वेन न संदेहः स्यादिति भावः । सर्वाग्रहणमिति । यत्र राश्यादौ नावयव्यस्ति तत एव न सर्वग्रहणम् । अपित्वेकदेशग्रहणम् । अन्यथा तत्राप्येको घट इति वदेकोऽयं पदार्थ इति प्रतीतिः स्यादित्यर्थः । धारणाकर्षणोपपत्तेश्च । घटपटादौ जलव्रीह्यादिधारणं वृक्षादौ शाखाद्येकदेशाकर्षणेन सर्वाकर्षणं च दृश्यते तदुभयमप्यवयव्यङ्गीकार एवोपपद्यते । अन्यथानारब्धावयविषु चूर्णपुञ्जादिष्वपि तत्प्रसङ्ग इत्यर्थः । सेनावनवदिति । सेनावनयोरनारब्धावयवित्वेऽपि यथैकत्वबुद्धिस्तथानारब्धावयविष्ववयवसमूहेऽप्येकत्वबुद्धिरुपपद्यत इति चेन्न समूहीभूतानां पार्थिवादिपरमाणूनामतीन्द्रियत्वात् सर्वाग्रहणादिदोषाः स्युरेव । सेनावनयोस्तु समूहान्तर्गतानां समूहिनामैन्द्रियकत्वादेकत्वबुद्धिरुपपद्यत इत्यर्थः । अविरोधमेवाह । सेनेति । व्यवहारविशेषः । धारणाकर्षणे । आदिपदेन सन्देहो गृह्यते । अतीन्द्रियाणुवादविरोधं परिहरति । अतीन्द्रियाणुवचनम-

वैन्द्रियकाणामेवावस्थाविशेषेणातीन्द्रियत्वाभ्युपगमादविरुद्धम् । अव्यक्तमेव हि त्रिगुणद्रव्यमवस्थाविशेषाद्व्यक्तं भवतीत्यागमिकाः । प्रत्येकमुपलम्भायोग्यानामपि संहतिविशेषरूपावस्थाभेदादैन्द्रियकत्वं तत्तारतम्यादिकं च हिमानीचूर्णपुञ्जादिष्वनारब्धावयविषु लोकसिद्धम् । उपमानाख्यप्रमाणान्तरसमर्थनं तु न्यायैकदेशिभिरेवोपमानस्यानुमानान्तर्भावप्रतिक्षेपमात्रपरतया निर्व्यूढम् । यच्च 'पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभाव' इति शब्दार्थसम्बन्धाभावमुपाक्षिप्य परिहरता

---

पीति । तारतम्यादिकमित्यादिपदेन शैत्यचक्षुः क्षोभादिकार्यविशेषो गृह्यते । हिमानी हिमसंहतिः । अनारब्धावयविष्विति । तत्रावयव्यनङ्गीकारादिति भावः । उपमानसाधनविरोधं परिहरति । उपमानाख्येति । 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि, इति सूत्रे उपमानस्य पृथग्ग्रहणमुपमानस्यानुमानान्तर्भावप्रतिक्षेपार्थं नतु पार्थक्येन प्रामाण्यप्रसिद्ध्यर्थमिति नैयायिकैकदेशिभिरेव निर्व्यूढम् । यथा ते वर्णयन्ति । प्रत्यक्षमेकमिति चार्वाकाः । कणादसुगतौ पुनरनुमानं च । ते द्वे शब्दश्चेति सांख्याः । नैयायिकैकदेशिनस्ते उपमानं चेति केचनेति । तस्मान्नास्माभिस्तत्र यतितव्यमिति भावः । शब्दसामयिकत्वप्रतिपादकसूत्रविरोधं परिहर्तुं तान्येव सूत्राण्यनुवदति । यच्चेत्यादि । अबादिशब्दानां जलरूपार्थसम्बन्धे घटादीनामिव पूरणं स्यात् । वन्ह्यादिशब्दानामग्निरूपार्थसम्बन्धे तृणादेरिव दाहः स्यात् । पृथिवीपाषाणादिशब्दानां पृथिवीपाषाणादिरूपार्थसम्बन्धे पटादेरिव पाटनं स्यात् । नचैतान्युपलभ्यन्ते । अतः शब्दानामर्थानां च न सम्बन्ध इत्याक्षिप्येत्यर्थः । शब्दार्थव्यवस्थानादप्रतिषेधः । शब्दानामर्थानां च व्यवस्थितत्वात् गुणत्वेन द्रव्यत्वेन च व्यावृत्तस्वरूपत्वात् न पूरणादिप्रसक्तिः । द्रव्येष्वेव हि तथा भावः । तस्मादप्रतिषेधो न सम्बन्धस्य निषेध इत्यर्थः । न सामयिकत्वाच्छब्दादर्थे प्रत्यय-

"शब्दार्थव्यवस्थानादप्रतिषेधः," । न सामयिकत्वाच्छब्दार्थप्रत्ययस्य, इत्यादिना सामयिकत्वमुक्तम् । तदपि संप्रतिपन्नसामयिकद्वारानुमानादिविलक्षणसम्बन्धविशेष ख्यापनार्थमिति योज्यम् । अनादिनिधनाविच्छिन्नसम्प्रदायवेदवृत्तीनां पदानां मन्वादिवचनविरुद्धसांकेतिकत्वोपपादनक्लृप्त्यसम्भवात् । यच्च "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" इति एतदपि अनादिनिधनस्यैव वेदस्य प्रातिकल्प-

स्य इति शब्दाज्जायमानस्यार्थविषयस्य प्रत्ययस्य सामयिकत्वात् । संकेतमूलत्वात् । सम्बन्धनिषेधो न सम्भवति । समयस्यैव सम्बन्धत्वादित्यर्थः । परिहरति । तदपीति । सम्प्रतिपन्नडित्थादिसामयिकशब्दप्रदर्शनमुखेनानुमानविलक्षणः "औत्पत्तिकस्तु शब्दार्थेन सम्बन्ध" इति सूत्रप्रतिपादितो नित्यः सम्बन्धः शब्दार्थयोरप्यभ्युपगन्तव्य इत्येव तत्सूत्र तात्पर्यं नतु समय एव सम्बन्ध इत्यैदंपर्यमित्यर्थः । तत्र हेतुमाह । अनादिनिधनेति । अनादिनिधनेष्वविच्छिन्नसम्प्रदायेषु वेदेषु विद्यमानानां पदानां मन्वादिवचनविरुद्धं सांकेतिकत्वं दुरुपपादमिति भावः । आप्तोक्तत्वेन वेदप्रामाण्यसमर्थनसूत्रविरोधं परिहर्तुमनुवदति । यच्चेति । मन्त्राणां पञ्चरात्राद्यागमोक्तानामायुर्वेदस्य वैद्यकस्य च यथाप्तपुरुषप्रणीतत्वेन प्रामाण्यं तथैव तस्य वेदस्याप्याप्तोक्तत्वेन प्रामाण्यम् । आप्तस्य वेदप्रणेतुरीश्वरस्य प्रामाण्यादबाधितज्ञानाश्रयत्वादिति सूत्रार्थः ।

अत एव च नित्यत्वम् ।
अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वं प्रसूयते ।

इति मन्त्रकृत्त्वेन प्रसिद्धानामपि वसिष्ठविश्वामित्रादीनां वेदजन्यत्वाम्नानात् मन्त्रकृत्त्वे तद्द्रष्टृत्वमेव न तु मन्त्रकर्तृत्वमित्यवसीयते । अतो वेदनित्यत्वस्य नानुपपत्तिः । नन्वेवमपि प्राकृतप्रलये शब्दस्य तदुपादानभूताहङ्कारादेश्च नष्टत्वात्कथं वेदनित्यत्वं

मीश्वरेणाप्ततमेन यथापूर्वं प्रवर्तनमभिसंधायेति सुगमम् । वर्णानित्यत्ववर्णनं तु न श्रुत्यादिविरुद्धम् । प्रत्युतानुकूलमेव । शारीरकदेवताधिकरणे हि वर्णानित्यत्वमवगम्यैव हि "अत एव च नित्यत्वं, समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च" इति वेदनित्यत्वं साधितम् । यत्तु जैमिनीयशब्दाधिकरणे वर्णनित्यत्वसमर्थनं व्याचख्युः स तु व्याख्यातृणामेवापराधः । असाङ्केतिकवाचकाकारनित्यत्वपरत्वेनान्यपरत्वात्तस्याधिकरणस्य । यच्च द्वितीयाध्यायान्ते "व्यक्त्याकृतिजातयस्तु पदार्थ" इत्युक्तम् । तत्रापि न वैशेषिकाभ्युपगतजातिस्वीकारे लिङ्गं पश्यामः । नह्यत्र द्रव्यगुणादिपदार्थपरिसंख्यानं क्रियते । "ते विभक्त्यन्ताः पदम्" इति प्रतिपादितपदवाक्यप्रदर्शनपरत्वात् । अनन्तरं च तिसृणामेव लक्षणमाह "व्यक्तिर्गुणविशेषाश्रयो मूर्तिः, आकृतिर्जातिलिङ्गाख्या,

---

कथं वा सर्वेषां वेदशब्दप्रभवत्वं तत्राह "समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च" इति कृत्स्नोपसंहारे जगदुत्पत्त्यावृत्तावपि पूर्वोक्तसमाननामरूपस्य तदवस्थत्वादेव न शब्दानित्यत्वम् ॥

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।

दृश्यन्ते तानि तान्येव तथा भावा युगादिषु । इति श्रुतिस्मृतिभ्यां तथैव प्रतिपादनाद्वेदस्य नित्यत्वमपौरुषेयत्वं चेति सूत्रार्थः । जात्यभ्युपगमसूत्रमनूद्य परिहरति । यच्चेति । नहीति । नह्यत्र प्रमेयपरिगणनं क्रियते येन जातेः पदार्थान्तरत्वं स्यात् किन्तु पदानामभिधेयत्वस्वरूपमुच्यते । अत एव तदनुगुणमेवोत्तरत्रापि लक्षणमुच्यत इत्यर्थः । व्यक्तिरिति । गन्धादिगुणाश्रयत्वं व्यक्तिलक्षणमित्यर्थः । इदं च वक्ष्यमाणवस्तुस्वरूपकथनम् । आकृतिरिति । जातेः सामान्यस्य लिङ्गत्वेन

समानप्रत्ययप्रसवाकारात्मिका जातिः" इति इह तु वस्तुस्वरूपनिरूपितस्वरूपविशेषकधर्मस्वरूपनिरूपकधर्मविषयतया यथासम्भवं योज्यम्। अतो न द्वितीयाध्यायेऽपि वेदान्तविरोधः। तृतीये "दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्" इत्यादिकं बाह्यान्तरेन्द्रियनिरूपणादिकं चात्यन्तोपयुक्तम्। न च मनोऽनित्यत्वादिकं तत्र सूत्रितम्। येन तदुत्पत्त्यादिश्रुतिकोपः। यच्चात्रोक्तम्। "गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकं श्रुतिप्रामाण्याच्च"इति। एतदेव यथाश्रुतं सिद्धान्ततया स्वीकार्यम्।

---

व्यञ्जकत्वेन यत्संस्थानमाख्यायते सा आकृतिः। जातिव्यञ्जकसंस्थानत्वमाकृतित्वमित्यर्थः। इदं च वक्ष्यमाणनिरूपितस्वरूपधर्मकथनम्। अनुगतत्वस्य व्यक्त्यन्तरग्रहणाधीनग्रहत्वान्निरूपितस्वरूपत्वम्। अत एव क्रमस्याविवक्षितत्वमभिप्रेत्याह। यथासम्भवमिति। तृतीयाध्यायोक्तः सर्वोऽप्यङ्गीकार्य इति न स्फुटविरोधप्रतीतिस्तत्रेत्याह। तृतीय इति। ननु तत्रत्यं मनोऽनित्यत्वं कथमभ्युपेयमित्यत आह। नचेति। शरीरस्य पाञ्चभौतिकत्वोक्तिर्नविरुद्धा। अस्माभिर्जातिसाङ्कर्यस्य दोषतयानभ्युपगमात्। तथैव न्यायसिद्धाञ्जने प्रपञ्चयिष्यमाणत्वात् इत्यभिप्रयन्नाह। यच्चेति॥

चेष्टा वायुः खमाकाशमूष्माग्निः सलिलं द्रवः।
पृथिवी चात्र सङ्घातः शरीरं पाञ्चभौतिकम्॥

इतिमोक्षधर्मदशमाध्यायोक्तरीत्या गन्धद्रवत्वाग्न्यादिपाकावयवादिसमूहीभावविवरदानानां पृथिव्यादिभूतपञ्चककार्याणां शरीरे विद्यमानत्वात् शरीरं पाञ्चभौतिकं "तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इतिश्रुतिश्च तथैव प्रतिपादयतीत्यर्थः। ननु गन्धादिसूत्रे शब्दस्य वाय्वादिगुणत्वानङ्गीकाराद्विरोध इत्याशङ्क्य अत्र सूत्रे गन्धादिग्रहणेन न शब्दपरिसंख्या क्रियते अपितु पृथिव्यादिषु गन्धादयः सन्त्येवेत्येतावदुच्यते। तेषु शब्दसिद्धिस्तु प्रत्यक्षप्रमाणात् पुराणान्तरवचनाच्च भवत्वतो न तत्सूत्रविरोध इत्याह।

यदपि "गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्या अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तर" इति गुणव्यवस्थापनं तत्र तु तथैवाभ्युपगमेऽपि न वस्त्वन्तरविरोधः । तथाप्याकाशादिषु शब्दादेरेकद्वित्रिचतुःपञ्चक्रमेण पुराणेषु पाठात् । आकाशानुप्रवेशात् आकाशादन्यत्र शब्द इति निर्वाह्ये वाय्वाद्यनुप्रवेशादुत्तरोत्तरेषु स्पर्शादिरिति निर्वोढुं शक्यत्वात् । उपलम्भान्वयव्यतिरेकाभ्यां व्यवस्थापनस्यापि समत्वात् । गन्धादिसूत्रं पृथिव्यास्ते सन्त्येवेत्ययोगव्यवच्छेदेन योज्यम् । आकाशस्यो-

---

यदपीति । न वस्त्वन्तरविरोध इति । न शब्दाङ्गीकारविरोध इत्यर्थः । तर्हि तत्र शब्दसिद्धौ किंमानमित्यत आह । तथापीति । गौतमेनानुक्तत्वेऽपीत्यर्थः । पुराणेषु पाठादिति । श्रीविष्णुपुराणे ।

आकाशवायुतेजांसि सलिलं पृथिवी तथा ।
शब्दादिभिर्गुणैर्ब्रह्मन् ? संयुक्तान्युत्तरोत्तरैः ॥
इति मो॒क्षधर्मे दशमाध्याये ।

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च भूगुणाः ।
शब्दः स्पर्शश्च रूपं च रसश्चापां गुणाः स्मृताः ।
शब्दः स्पर्शश्च रूपं च त्रिगुणं ज्योतिरुच्यते ।
शब्दः स्पर्शश्च वायव्यः स्पर्शश्च बहुधा स्मृतः ।
तत्रैकगुणमाकाशं शब्द इत्येव स स्मृतः ।

इति च पाठादित्यर्थः । ननु पृथिव्यादिषु शब्दोपलम्भस्याकाशानुप्रवेशकृतत्वेनान्यथासिद्धत्वान्न तत्र शब्दसिद्धौ प्रत्यक्षं प्रमाणं तत एव पुराणवचनमपि निर्वाह्यमित्यत आह । आकाशानुप्रवेशादिति । वाय्वादीति । पृथिव्यादिषु वाय्वाद्यनुप्रवेशकृत एव स्पर्शाद्युपलम्भ इत्यन्यथासिद्धितौल्येन स्पर्शादिरपि नाङ्गीक्रियेतेत्यर्थः । स्पर्शादेः पृथिव्यादिगुणत्वेनोपलम्भात्तद्गुणत्वव्यवस्थापने शब्दस्यापि पृथिव्यादिगुणत्वेनोपलम्भात् तद्गुणत्वव्यवस्थापि स्यादित्याह । उपलम्भेति । नन्वेवं स्पर्शादयः पृथिव्याः सन्त्येवेत्ययोगव्यवच्छेदपरतया सूत्रैकदेशो योजनीयः ।

त्तर इत्यत्र तु तस्य स एवेत्यन्ययोगव्यवच्छेदेन। कति कति चैवं सूत्राणि क्लिष्टानि परैरपि निरुध्यन्ते । यच्च स्वगुणान्नो- पलम्भत इति इन्द्रियाणि कस्मादितिचेत् सगुणानामिन्द्रियभा- वादित्यत्र न शब्दगुणोपलब्धेरित्युक्तम्। तत्रापि श्रोत्रेन्द्रियस्या- काशाप्यायितत्वात् आप्यायकगुणस्य तद्गुणतां पटेनलये पा- नीयसौरभादिवत् प्रकल्प्योत्तरमुक्तम् । अथवा यथागममाहं- कारिकत्वमिन्द्रियाणामजानतश्चोद्ये भूतेन्द्रियवादे स्थित्वैवेदमुत्त- रं गूढाभिप्रायेण दीयत इति । एतदुक्तं भवति । भवता कि- मिन्द्रियगुणोपलम्भाभाव उच्यते किं वा तदाप्यायकगुणोपल- म्भाभावः । पूर्वं अङ्गीकार एवोत्तरम् । शब्दादीनामनिन्द्रियगु- णत्वादुत्तरत्र व्यभिचार इति । अतो न वेदान्तविरोधप्रसङ्गः । चतुर्थे चाध्याये प्रवृत्तिरागद्वेषादिनिरूपणमात्मनित्यत्वादि

आकाशस्य शब्द एव गुण इत्यन्ययोगव्यवच्छेदेन तदेकदेशान्तरं योजनीयमिति सूत्रास्वारस्यं स्यादित्यत आह । कतिकतीति। शब्दस्य श्रोत्रेन्द्रियगुणत्वसूचकसूत्रविरोधपरिहाराय सूत्रमनुव- दति । यच्चेति । चक्षुरादीनीन्द्रियाणि स्वगतरूपं न गृह्णन्ति तत्कुत इति चोद्ये उत्तरम् सगुणानामिन्द्रियभावादिति। गुणवि- शिष्टानामेवेन्द्रियत्वेन स्वगुणान् प्रति स्वमिन्द्रियत्वलक्षणताव्यच्छे- दकाभावात् तैः स्वगतरूपादिकं न गृह्यत इति । अत्र शङ्कते। न शब्दगुणोपलब्धेरिति । सगुणानामिन्द्रियभाव इत्ययं पक्षो न भवति श्रोत्रेण स्वगुणः शब्दो गृह्यते इति यतः। अन्यथा श्रो- त्रेण शब्दानुपलब्धिप्रसङ्ग इत्यर्थः । गूढाभिप्रायेणेति । किमि- न्द्रियगुणोपलम्भाभाव उच्यते उत तदाप्यायकगुणोपलम्भा- भाव इति विकल्पे ऽभिप्रायो गूढः। पूर्वत्र सगुणानामिन्द्रियभावा- दित्युत्तरम् । उत्तरत्र न शब्दगुणोपलब्धेरित्युत्तरमिति सूत्रद्वयं व्याचष्टे । एतदुक्तम्भवतीति । अनिन्द्रियगुणत्वादिति । इन्द्रिया-

ना प्रेत्यभावादिप्रतिपादनम् अनिमित्तोत्पत्तिसर्वनित्यत्वादिनिराकरणं चात्यन्तानुगुणम् । अवयविप्रसङ्गश्च प्रागुक्तन्यायेन नेतव्यः । पञ्चमस्तु जातिनिग्रहस्थानमात्रोपक्षीणो न क्वचित्तत्त्वे उपकरोति । व्यवहाराङ्गविमर्शसौन्दर्यासौन्दर्यादिकं तु वास्तवलक्ष्यलक्षणयुक्त्यादिपरामर्शवैज्ञानिकैरर्थक्षितिमात्रानुसारेण नादरणीयम् । यत्पुनरर्वाग्भिरक्षचरण–पञ्चाध्याय्यां कुशकाशावलम्बनेन कणचरणकथां निवेश्य नैगमिक्यः पद्व्यो निरुध्यन्ते । तत्र तु नूनं स एव गौतमः प्रहसतीति स्वीकारपक्षः ।

यद्वा नातिबहिष्कारो नातीव च परिग्रहः ।
सांख्यादिवदिहापि स्यात्समाश्रितसौपतण्डुलः ॥
उपजीव्यबहुत्वेन विद्यास्थाननिवेशनम् ।
विरुद्धांशैकविषया सूत्रादिषु बहिष्क्रिया ॥

णामाहंकारिकत्वादित्यर्थः । अनिमित्तेति । अहेतुकमेव कार्यमुत्पद्यते सर्वेषां पदार्थानां नाशित्वं वा सर्वेषां नित्यत्वं वा न तु नित्यानित्यव्यवस्थेत्येवमादीनां मत्तप्रलापानां निराकरणं प्रतिक्षेपः । तत्र प्रसक्तस्यावयविसाधनस्य गतिमाह । अवयवीति । तत्त्वज्ञानानुपकारमेवाभिज्ञानादरमुखेन दर्शयति । व्यवहारेति । व्यवहारस्य कथाया अङ्गे यो विमर्शः प्रमाणोपन्यासः तस्य छलादिदोषराहित्यं सौन्दर्यं तद्व्यत्वमसौन्दर्यम् । आदिशब्देन निग्रहस्थानादिरूपो दोषो गृह्यते । वस्तुसंबन्धिलक्ष्यलक्षणयुक्तितदाभासादिनिरूपणचतुरैरर्थतत्त्वस्यैवानुसरणीयतया कथापुरुषयोर्गुणागुणा नादरणीया इत्यर्थः । अर्थाः षट् पदार्था द्रव्यगुणकर्मसामान्यविशेषसमवायाः । अभावः सप्तमः इत्यादिकाणादसूत्राणि गौतमहृदयानभिज्ञैरज्ञैर्निरीक्ष्य व्याख्यातानि तानि त्याज्यानीत्याह । यत्पुनरिति । अस्मदुक्तानुसारेण व्याख्याने गौतमीयमङ्गीकर्त्तुं योग्यमित्युपसंहरति । इति स्वीकारपक्ष इति ।

नियताधिकारश्चायं द्विजानां न्यायविस्तरः।
अप्रत्यवायो माहात्म्याद्दयालुः शास्त्रमादिशत्॥
सर्वाधिकारमित्येतदसमीक्षितभाषितम्।
कथमागमवृत्तान्तमनधीतागमा विदुः॥
निषिद्धे प्रेरयंस्तान्वा कथं कारुणिको भवेत्।
नच शक्या नरशिरः पावित्र्याद्यनुमाक्षतिः॥
विहायागममक्षादि द्विधा तत्रापि विप्लवः।
श्रुत्या ह्यनधिकारत्वात्तदन्यत्राव्यवस्थितेः॥
धर्मक्षोभानुमाभङ्गे कथं शूद्रादयः क्षमाः।
अथ त्रैवर्णिकैरुक्ते त्वन्यो विश्वसितीत्यपि॥
स्वयं न्यायविचारेऽस्य फलत्यनधिकारताम्।
प्रत्यक्षानुमयोर्यत्र नित्यं वेदानपेक्षता॥

नन्वेतावान् बहुसूत्रव्याख्यानक्लेशः किमर्थः। विरुद्धांशं परित्यज्योपयुक्तांशः स्वीक्रियतामित्यस्वरसात्तथैवाभ्युपगच्छति। यद्वेति। साङ्ख्यादिवदिति।

साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।
आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः।

इति शास्त्रेण सांख्यादिकं शरीरातिरिक्तात्मबोधनांशेन परिगृह्यते तद्वदित्यर्थः। तौषतण्डुल इति। अन्नार्थत्वेन व्रीहीणामार्जनेऽपि तुषांशपरित्यागेन तण्डुलांशस्य यथा ग्रहणमेवं विद्यास्थानत्वेन गौतमीयस्य परिग्रहेऽपि विरुद्धांशत्यागेनावश्यकांशमात्रग्रहणमिति तौषतण्डुलसमाधिशब्दार्थः। ननु गौतमीये विरुद्धांशसत्त्वे कथं तस्य विद्यास्थानत्वमित्यत आह। उपजीव्येति। नन्वेवं तस्य ब्रह्मसूत्रभाष्यकारादिभिः कथं बहिष्कारः कृत इत्यत आह-विरुद्धांशेति। इयता प्रबन्धेन वेदाविरुद्धप्रमाणवर्गो न्यायविस्तरस्य विषय इत्युक्तम्। इदानीमधिकारिणो निरूपयितुं प्रस्तौति। नियताधिकारश्चायमिति। शूद्रादिव्यतिरिक्तानां त्रैवर्णि-

तत्रापशूद्रभाष्योक्ता शूद्रादेरप्यधिक्रिया ।
चतुर्दशापि स्थानानि भगवान् धर्मविद्ययोः ॥
न स्प्रष्टव्यानि शूद्रैरित्यब्रवीदाश्वमेधिके ।
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ॥
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ।
यान्युक्तानि मया सम्यक् विद्यास्थानानि भारत ? ॥
उत्पन्नानि पवित्राणि पावनार्थं तथैव च ।
तस्मात्तानि न शूद्रस्य स्प्रष्टव्यानि कथंचन ॥ १२ ॥

इति तस्मादेतानि त्रैवर्णिकैरध्येतव्यानि । तत्र ब्राह्मणेन विद्याप्राप्तये धर्मानुष्ठानाय चाधिगन्तव्यानि क्षत्रियवैश्याभ्यां ध-

कानामेवास्मिन् शास्त्रेऽधिकार इत्यर्थः । ननु गौतमः स्वमाहात्म्यात् स्वस्मिन् स्वसम्बन्धिषु च प्रत्यवायरहितः सन् कारुणिकतया सर्वाधिकारं शास्त्रमुपदिष्टवानिति पक्षिलादिभिरुद्घुष्यते तत्कथमस्य नियताधिकारत्वमित्याशङ्क्य तदुक्तिमनूद्य दूषयति । अप्रत्यवाय इति । कथमिति । प्रत्यक्षादिप्रमाणानां न्यूनाधिकविभागाक्षेपस्य तर्कसहकृतेन ।

स्मृतिः प्रत्यक्षमैतिह्यनुमानश्चतुष्टयम् ।

इत्यागमेन निरसनीयत्वादनधीतागमानां शूद्राणामधिकरो न सम्भवतीत्यर्थः । कथं कारुणिक इति । कथमप्रत्यवाय इत्यपि भाव्यम् । अनधीतागमानामनधिकार इत्येतदेव प्रपञ्चयति । न चेति । नरशिरः कपालं शुचि प्राण्यङ्गत्वात् शङ्खवदित्यनुमानस्य ।

नारं स्पृष्ट्वास्थि सस्नेहं सवासा जलमाविशेत् ॥

इत्यागमं विना प्रत्यक्षादिभिर्भङ्गः कथं शूद्रैः कर्तव्यः । आगमे शूद्राणामनधिकारात्तद्‌तिरिक्तप्रमाणानामशौचव्यवस्थापकत्वाभावादुभयथापि न तस्य भङ्गः स्यादित्यर्थः । धर्मक्षोभेति । क्रत्वन्तरवर्तिनी हिंसा अधर्मसाधिका हिंसात्वात् क्रतुबाह्यहिंसावत् । क्षणिका क्रिया न कालान्तरभाविपश्वादिफलहे-

र्मानुष्ठानायैव। तथा शङ्खेन विद्यास्थानान्यनुक्रम्योक्तम्। "एतानि ब्राह्मणोऽधि कुरुते स च वृत्तिं दर्शयतीतरेषा"मिति। एवमेव धर्मशास्त्रसङ्ग्राहकैः समर्थितमिति। ततश्च येषां कर्मब्रह्ममीमांसावसेयतत्त्वहितरूपप्रमेयचिन्ताधिकारस्तेषामेव तात्पर्यपर्यवसायितया धर्मविद्यास्थानाभिमतन्यायविस्तराधिकार इति सिद्धम्।

प्रत्यक्षादिप्रमाणेन शुद्धिः पदतदर्थयोः।
मानमेयादिनियतिर्निर्दोषोक्तिश्च मानतः॥
ग्रावप्लवनवाक्यादावान्यपर्यविरोधतः।
चित्रापशुफलत्वादावबाधादुद्धारसङ्ग्रहः॥

तुः पूर्वक्षणवृत्तित्वाभावादहेतुवत्। इत्यादीनां धर्मक्षोभकाणामनुमानानां भङ्गे शूद्राणां सङ्कीर्णकानां च कथमधिकार इत्यर्थः। नन्वेतादृशस्थलेषु शूद्रादीनामनधिकारेऽपि आगमाभिज्ञत्रैवर्णिकवचनेन तेषां विश्वासो भवत्वित्याशङ्क्यान्यत्रापि तथैवास्तु किमेतेषामधिकारकल्पनाप्रयासेनेत्याह। अथेति—नन्वेवमपशूद्राधिकरणभाष्ये शूद्राणां न्यायाधिकारः कथमुक्त इत्याशङ्क्य वेदानपेक्षेषु प्रत्यक्षानुमानविचारेषु तेषामस्त्यधिकार इत्येतत्परं तद्भाष्यमिति समाधत्ते-प्रत्यक्षानुमयोरिति। इयता शूद्रादीनां वेदानधिकारमुखेन न्यायविस्तरानाधिकारः प्रतिपादितः। इदानीं न्यायविस्तरे साक्षादेवानाधिकारः शूद्रस्येति भगवता श्रीकृष्णेन प्रतिपादितमित्याह। चतुर्दशापीति। अध्ययनमात्रेण प्रमाणादिविचारपूर्वकधर्मानुष्ठानेन च धर्मसिद्धिहेतुत्वात्तेषां धर्मस्थानत्वम्। धर्मबोधहेतुत्वाच्च विद्यास्थानत्वमिति द्रष्टव्यम्। आश्वमेधिकवचनमेवोदाहरति। अङ्गानीति। पवित्राणि। अध्येतॄणां पापनिवर्त्तकानि। पावनार्थम्। श्रोतॄणां पापनिवृत्त्यर्थम्। विद्याप्राप्तये इति। शिष्याणामिति शेषः। ब्राह्मणस्यैव विद्यास्थानबोधकत्वं न क्षत्रियादीनामित्यत्र शङ्खवचनमाह। एतानीति। येषां ब्राह्मणादीनां वैदिकसाध्यकर्मविचाराधिकारस्तेषामेव तदुपयोगिषु न्यायविस्तरेष्वधिकारः इतरेषान्तु प्रयोजनाभावादपि

अनुवादविधानादिचिन्ता प्राप्त्यादिपूर्विका।
प्रत्यक्षादिष्वसिद्धेषु न कल्पेरन् कथंचन॥
एवमाद्युपयोगेन मुनिभिर्न्यायविस्तरः।
वेदानुग्रहणाद्धर्मविद्यास्थानतयोदितः॥
आगमाख्यप्रमाणे तु संशुद्धिर्न्यायविस्तरात्।
तद्विशेषस्य मीमांसा साधयेद्धर्ममानताम्॥
प्रमेयस्यापि संशुद्धिरन्ततो ब्रह्मचिन्तनात्।
इह तस्य निवेशस्तु तादर्थ्यादिप्रसिद्धये॥ ६॥

प्रमाणमेवास्य शास्त्रस्य प्राधान्यतो विषयः। तत्र प्रेक्षावदधिचिकिर्षासिद्ध्यर्थं प्रमेयतत्त्वज्ञानं हानोपादानद्वारा निः-

तत्रानधिकार इति दर्शयन्नधिकारिनिरूपणमुपसंहरति। ततश्चेति। इदानीं प्रत्यक्षादिनिरूपणस्य प्रयोजनमाह। प्रत्यक्षदीति। अविप्लुतानां पदानां तदर्थानां च ज्ञानं प्रत्यक्षप्रमाणाधीनम्। इदं मानमयं मानाभास इति व्यवस्था च प्रत्यक्षाधीना। भ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषरहितस्य लौकिकस्य शब्दस्य वेदस्य च प्रामाण्यसिद्धिः प्रत्यक्षानुमानोभयाधीना। "ग्रावाणः प्लवन्ते। आदित्यो यूपः। यजमानः प्रस्तरः"। इत्यादौ प्रत्यक्षेण विरोधे सिद्धे प्रमाणवाक्यत्वादबाधार्थमन्यत्र तात्पर्यमित्येतदपि प्रत्यक्षानुमानोभयसाध्यम्। "चित्रया यजेत पशुकामः'। दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत'। ज्योतिष्टोमेन स्वर्गकामो यजेत"। इत्येवमादिषु वेदेषु नश्वरस्य कर्मणः कालान्तरभाविफलजनकत्वं प्रत्यक्षविरुद्धमिति बाधः स्यादिति तन्निवृत्तये अपूर्वरूपद्वारसंग्रहः कर्तव्यः। स चायुर्वेदबोधितकालान्तरभाविपुष्टिजनकधातुसाम्यद्वारकघृतपानदृष्टान्तमूलकानुमानेनेति प्रत्यक्षादित्रितयसाध्यः। "अग्निहोत्रं जुहोति" इत्यग्निहोत्रपदेनाग्निदेवतारूपो गुणहोमो विधीयते। उत मन्त्रवर्णप्राप्ताग्न्यनुवादेनाग्निहोत्रपदं कर्मनामधेयमित्यत्राग्नेरनुवादस्य प्राप्तिसापेक्षत्वात्। प्राप्तिः शब्दप्र-

श्रेयसहेतुः । तच्च सपरिकरात् प्रमाणादिति परंपरया प्रयोजनज्ञापनाय प्रमेयदर्शनमात्रमिहाभिमतम् । अतः प्रधानविषयतया प्रमेयादिसाधकतया च प्रमाणं प्रमेयादपि पूर्वमुच्यते । तत्र व्यवच्छेद्याङ्गत्वादिमुखेन संशयादयोऽपि चतुर्दश यथायथं निरुह्यन्ते । नच षोडशत्वे निर्बन्धः । अतथात्वविपर्ययत्वाद्युपा-

माणसाध्या । अग्निहोत्रपदस्य कर्मसामानाधिकरण्यायत्तनामत्वज्ञानं प्रत्यक्षसाध्यम् । देवताप्रापकमन्त्रस्य कर्मशेषत्वज्ञानं लिङ्गसाध्यमिति । एतानि प्रयोजनानि प्रत्यक्षादिषु प्रमाणेष्वज्ञातेषु न सिध्यन्तीत्याखण्डलार्थः । नन्वेवं न्यायविस्तरेणैव वेदप्रामाण्यसिद्धेः किं मीमांसयेत्याशङ्क्य न्यायविस्तरमीमांसयोः प्रयोजनभेदं दर्शयति । आगमेति । शब्दप्रामाण्यसिद्धिर्न्यायविस्तरसाध्या । वेदस्य धर्मप्रमाणत्वसिद्धिस्तु मीमांसाधीनेति भावः । ब्रह्मविचारोपयुक्तत्वात् प्रमाणविचारस्य परम्परया ब्रह्मरूपप्रमेयत्वज्ञानमपि प्रयोजनमित्याह । प्रमेयस्यापीति । नन्वस्मिन् शास्त्रे प्रमेयस्योपादानं किमर्थमित्यत आह । इहेति । प्रमेयतत्त्वज्ञानार्थं प्रमाणविचारः क्रियत इति ज्ञापयितुं प्रमेयमुपात्तमित्यर्थः । तर्हि संशयादिनिरूपणं किमर्थमित्यत आह । तत्रेति । संशयहेत्वाभासजल्पवितण्डानिग्रहस्थानानां निरसनीयत्वात्प्रयोजनादीनां प्रमाणाङ्गत्वान्निर्णयस्य फलत्वान्निरूपणमित्यर्थः । पदार्थाः षोडशैवेति निर्धारणं कथमुपपद्यते संशयवद्विपर्ययादेरपि सद्भावात् । हेत्वाभासवत् प्रत्यक्षाद्याभासानामपि सम्भवात् । आभासत्वेन विपर्ययत्वेन च तेषां क्रोडीकारः स्यादितिचेन्न प्रमेयत्वेन सर्वेषां क्रोडीकारसम्भवात् । विशेषतो विपर्ययत्वेन तर्कस्यापि क्रोडीकारसम्भवाच्च । सदसत्कथात्वेन वादादिकथानां क्रोडीकारसम्भवाच्च । अवान्तरविशेषविवक्षायामानन्त्याशङ्क्येष्टापत्त्या परिहरति । नचेति । विपर्ययादीत्यादिपदेन स्मृतित्वानुभवत्वादयो गृह्यन्ते । ननु सामान्यधर्मैः क्रोडीकारसम्भवेऽपि संशयत्वादिविशेषाकारज्ञानस्य प्रयोजनमस्तीति तथा विभागः कृत इति चेत् तर्हि विपर्ययत्वानुभवत्वस्मृतित्वादिज्ञानानामपि प्रयो-

ध्यन्तराधीनसङ्ग्रहविभजनाभ्यां न्यूनाधिकोद्देशस्यापि शक्यत्वात् उपयोगानुपयोगाविशेषाच्च । एतावदेव गौतमस्यापि हृदयमिति अस्तितावदिदं प्रमाणमिति प्रसिद्धो लौकिकपरीक्षकव्यवहार-घण्टापथः । तदनादरे तु निराश्रयतया परीक्षणस्याप्यनुदयः ।

व्यवहारो हि जगतो भवत्यालम्बने क्वचित् ।
न तत्सामान्यतो नास्ति कथन्ता तु परीक्षते ॥
सामान्यनिश्चितार्थेन विशेषे तु बुभुत्सितम् ।
परीक्षा सूचिता स्वेष्टप्रमाणोत्पादनात्मिका ॥
न सर्वस्याप्रमाणत्वं स्वपक्षस्य स्वतः क्षतेः ।
न सर्वस्य प्रमाणत्वं स्वपक्षस्यान्यतः क्षतेः ॥

---

अन्यमस्तीति तथाधिकविभागः स्यादविशेषादित्याह । उपयोगेति । नन्वेवं गौतमकृतस्य विभागस्योद्देशस्य च विरोधः स्यादित्यत आह । एतावदेवेति । प्रयोजनानुसारेणोद्देशविभागौ कर्तव्यावित्येव गौतमस्य भाव इत्यर्थः । नन्विदं प्रमाणमिदमप्रमाणमिति प्रमाणव्यवस्थायां सिद्धायां प्रमाणस्य परीक्षात्मको विचारः कर्तव्यः । सैव नास्तीति वादिनं माध्यमिकं प्रति प्रमाणाप्रमाणव्यवस्थां प्रथमं साधयति । अस्ति तावदिति । अप्रतिरोधो लौकिकपरीक्षकव्यवहार एव प्रमाणाप्रमाणव्यवस्थासाधक इति भावः । प्रसिद्धिप्रकर्षप्रतिरोधाभावादिसूचनाय व्यवहारे घण्टापथत्वरूपणम् । तदनादरे त्विति । प्रमाणाप्रमाणव्यवस्थाया अनङ्गीकारे साधकाभावात्सर्वशून्यत्वपरीक्षापि तव न स्यादित्यर्थः । व्यवहारेति । प्रमाणाप्रमाणव्यवस्थारूपालम्बनाभावे सर्वेषां प्रवृत्तिनिवृत्तिरूपः सर्वोऽपि व्यवहारो भज्येतेत्यर्थः । ननु लौकिकादिव्यवहारादेव यदि प्रमाणाप्रमाणसिद्धिस्तर्हि किमत्र परीक्षणीयमित्यत आह । न तदिति । सामान्यतः प्रमाणाप्रमाणव्यवस्थायां सिद्धायां तयोः कथं प्रमाणत्वाप्रमाणत्वे इत्येतावदेव हि अत्र परीक्षत इत्यर्थः । सामान्यतो वस्तुसत्ताज्ञानाभावे विशेषबुभुत्साधीना स्वाभिमतप्रमाणप्रतिपादनरूपा परीक्षा

सिद्ध्यसिद्ध्योः स्वपक्षस्य सिद्धा लोकव्यवस्थितिः
तत्सिद्ध्यसिद्ध्योस्त्वत्पक्षो न कथंचन सिध्यति ॥
प्रमाणेन प्रमाणस्य बाधः स्वव्याहतेर्हतः ।
अप्रमाणेन तद्बाधे साधनं च ततो न किम् ॥
अप्रमाणात् प्रमाणाद्वा मानसिद्धिर्न चेन्न तत् ।
यतः प्रमाणतस्तस्य सिद्धिः स्वपररक्षिणी ॥
बाधाबाधव्यवस्थापि मानतः स्याद्व्यवस्थितात् ।
अन्यथा त्वद्व्यवस्थायां न व्यवस्थेत्यवस्थितेः ॥
सर्वत्र निर्णये न स्तः संशयोत्पत्तिनिर्णयौ ।
यथा तत्कोटितत्सिद्धिस्तथान्यत्रापि युज्यते ॥

कथं प्रवर्ततामिति तदर्थं सामान्यतो वस्तुसत्ताज्ञानमभ्युपगन्तव्यमित्याह । सामान्येति । प्रमाणाप्रमाणव्यवस्था नास्तीति वदन् वादी प्रष्टव्यः । किं सर्वस्याप्रमाणत्वादेवमुच्यते । उत सर्वस्य प्रमाणत्वात् । यद्वा परस्परबाधात् । अथवा सर्वस्य सन्दिग्धत्वादिति चतुर्धा विकल्प्याद्यं दूषयति । न सर्वस्याप्रमाणत्वमिति । सर्वस्याप्रमाणत्वे सर्वमप्रमाणमित्यस्यास्त्वत्प्रतिज्ञाया अप्यप्रमाणत्वं स्यादिति स्वपक्षत एव स्वपक्षः क्षत इत्यर्थः । द्वितीयं दूषयति । न सर्वस्य प्रमाणत्वमिति । सर्वस्य प्रमाणत्वे त्वदुक्तिरप्रमाणमित्यस्मद्वाक्यस्यापि प्रामाण्यं स्यादिति प्रतिपक्षवचनबाधितः स्वपक्ष इत्यर्थः । उक्तपक्षद्वयेऽपि दूषणमाह । सिद्ध्यसिद्ध्योरिति । प्रमाणाप्रमाणव्यवस्था नास्तीत्येवं रूपस्त्वत्पक्षो यदि सिद्धस्तर्हि तद्वाक्यस्य प्रामाण्यं प्रतिपक्षवाक्यस्याप्रामाण्यमित्येवं रूपा लोकव्यवस्था सिद्धा स्यात् । यदि न सिद्धा प्रमाणाप्रमाणव्यवस्थानिषेधस्यासिद्धौ तद्व्यवस्था सिद्धा स्यादेवेत्यर्थः । एवं लोकव्यवस्थासिद्ध्यसिद्ध्योस्त्वत्पक्षो न सिद्ध्यतीति दूषणान्तरमाह । तत्सिद्ध्यसिद्ध्योरिति । सा प्रमाणाप्रमाणव्यवस्था यदि सिद्धा तद्व्यवस्थानिषेधरूपस्त्वत्पक्षो न सि-

ध्यति । यदि न सिद्धा त्वत्प्रतिज्ञायाः प्रामाण्यं प्रतिपक्षप्रतिज्ञाया अप्रामाण्यमिति व्यवस्थाया अभावात्त्वत्पक्षः सुतरां न सिध्यतीत्यर्थः । तृतीयं दूषयति । प्रमाणेनेति । परस्परबाधात्प्रमाणाप्रमाणव्यवस्था नास्तीति वदन् वादी प्रष्टव्यः । प्रमाणेन प्रमाणं बाध्यते । उताप्रमाणेन । आद्ये प्रमाणेन प्रमाणस्य बाधे बाध्येन प्रमाणेन बाधकप्रमाणस्यापि बाधः स्यादिति न तेन प्रमाणबाधः सिध्यति । अन्त्ये अप्रमाणेन प्रमाणस्य बाधे तेन बाधकेनाप्रमाणेनाप्रमाणस्य बाधनं वा किं न स्यात् अविशेषात् । नतरामप्रमाणेन बाधः सिध्यतीत्यर्थः । नन्वेवं विकल्पस्त्वत्पक्षेऽपि सुलभः । कुत्रचित्प्रामाण्यं वदन् वादी प्रष्टव्यः । तत्प्रामाण्यं किमप्रमाणात्सिध्यति उत प्रमाणात् । आद्ये अप्रमाणेन प्रामाण्यवत्तत्राप्रामाण्यमपि सिध्येत् । आविशेषादिति नैकान्ततस्तत्र प्रामाण्यं सिध्यति । अन्त्ये स्वप्रामाण्यं स्वेनैव सिध्यति उतान्येन । आद्ये असम्भवः स्वस्मिन् स्वस्याप्रवृत्तेः । अन्त्ये तयोः परस्परप्रामाण्यग्रहणेऽन्योऽन्याश्रयः । अग्रहणे अभिमतासिद्धिः । तत्प्रामाण्यस्यान्येन ग्रहणे चक्रकादयः स्युरिति शङ्कते । अप्रमाणात्प्रमाणाद्वेति । परिहरति । न तदिति । यतो यस्मात्कारणात्प्रमाणेनैव प्रामाण्यं सिध्यति । सा च प्रामाण्यसिद्धिः । स्वप्रामाण्यमपि गृह्णाति । ज्ञानस्य स्वप्रकाशत्वेन स्वतः प्रामाण्यग्रहस्य वक्ष्यमाणत्वेन स्वनिष्ठप्रामाण्यस्य स्वेनैव ग्रहणे दोषाभावस्ततः कारणात्त्वदुक्तम् न सम्भवतीत्यर्थः । एवं च कस्यचित् प्रामाण्ये सिद्धे व्यवस्थितेन तेनाप्रमाणस्य बाधो युक्तः । नत्वप्रमाणेन प्रमाणस्य बाध इति बाधाबाधव्यवस्थापि सिध्यतीति परस्परबाधपक्षो न सम्भवतीत्याह । बाधाबाधव्यवस्थापीति । बाधाबाधव्यवस्थानङ्गीकारे दोषमाह । अन्यथा त्विति । बाधाबाधव्यवस्थानङ्गीकारे हि सा बाधाबाधव्यवस्था न क्वापि व्यवस्थिता स्यादिति त्वदीयबाधाबाधव्यवस्थापक्षस्य बाधाबाधव्यवस्थावादिनः परस्य पक्षेण बाधः स्यादिति बाधाबाधव्यवस्थैव सिद्धा स्यादिति नितरां त्वत्पक्षासिद्धिरित्यर्थः । चतुर्थं दूषयति । सर्वत्रेति । सर्वत्रापि निर्णयाभावेऽपि तव पक्षे संशयोत्पत्तिः संशयगोचरनिर्णयश्च न स्याताम् । धर्मिणः कोट्योश्च निर्णयस्य संशयहेतुत्वात्तदभावादित्यर्थः । यदि संशय-

धर्मिसाधारणाकारकोटीनां पूर्वनिश्चये।
असावयमयं वेति ह्याविर्भवति संशयः॥
सर्वत्र संशयस्तावन्न सर्वस्यापि दृश्यते।
सर्वं संदिग्धमिति ते निपुणस्यास्ति निश्चयः॥
संशयश्च न संदिग्धः संदिग्धाद्वैतवादिनः।
दूरं गत्वापि दुर्वारः संशये निर्णयस्तव॥

---

सिद्ध्यर्थमन्यत्र कोटिद्वयनिर्णयस्तत्र तद्धर्मिनिर्णयश्चाङ्गीक्रियते तद्वन्यत्रापि निर्णयोऽविशेषादङ्गीक्रियतामित्याह। यथेति। तत्कोटीति। तस्य धर्मिणः कोट्योस्तस्य धर्मिणश्च सिद्धिः निर्णय इत्यर्थः। संशये कोट्यादिनिर्णयो न हेतुर्येन सोऽङ्गीक्रियेतेति वादिनं प्रति कोट्यादिनिर्णयस्य संशयहेतुत्वमन्वयव्यतिरेकसिद्धमित्याह। धर्मीति। असौ ऊर्ध्वतादिविशिष्टः। अयमयं वा स्थाणुर्वा पुरुषो वेत्यर्थः। हि शब्दो लोकसिद्धान्वयव्यतिरेकप्रख्यापनपरः। सर्वस्य पुरुषस्य सर्वत्र पदार्थे संशय एवेत्येतन्न दृश्यते। कुत्रचिन्निर्णयस्यापि दर्शनात्। तस्मात् सर्वत्र संदेहो न साधयितुं शक्यत इत्याह। सर्वत्रेति। कस्य निर्णयो दृष्ट इत्यत आह। सर्वमिति। तवैव सर्वं संदिग्धमित्यस्मिन्नर्थे निर्णयो दृष्ट इत्यर्थः। निपुणस्येत्यनेन स्वनिर्णयानभिज्ञत्वरूपमनैपुण्यं व्यतिरेकलक्षणया परिहासार्थमुच्यते। त्वयोच्यमानः सर्वगोचरः संशयः संदिग्धो न वा। आद्ये त्वत्परिगृहीतस्य सर्वसंशयस्यासिद्धिः स्यात्। अन्त्ये सर्वसंदेहगोचरो निर्णयोऽभ्युपगतः स्यादिति त्वदीयसंदिग्धाद्वैतवादस्य भङ्गः स्यादित्याह। संशयश्चेति। ननु सर्वं संदिग्धमित्येतदपि संदिग्धमेवेति सर्वगोचरसंशयेऽपि संशयोऽङ्गीक्रियत इति चेत्तर्हि तदङ्गीकारहेतुस्तन्निर्णयोऽवश्यमेष्टव्य इति बहुकक्षाधावनेऽपि निर्णयस्त्वां न मुञ्चतीत्याह। दूरं गत्वापीति। प्रमाणाप्रमाणव्यवस्थामुपसंहरन् सामान्यतः प्रमाणज्ञानेऽपि किमिदं प्रमाणं न वेति विशेषसंशयस्य निवृत्तिः प्रमाणलक्षणस्य प्रयोजनमित्याह। मानामा-

मानामानविभागेऽतः सामान्येन व्यवस्थिते ।
क्वाचित्कसंकरोच्छित्त्यै लक्षणं संप्रचक्षते ॥ १२ ॥

तत्र व्युत्पत्तिविवक्षाभेदात्प्रमितिस्तत्करणं च यथेच्छं प्रमाणमाहुरित्यवोचाम । आश्रयप्रामाण्यस्यानादेशिकत्वात् । आप्तप्रामाण्यात् आप्तोक्तत्वहेतोः प्रामाण्यादित्यर्थः । नहि वक्तृप्रामाण्यं वाक्यप्रामाण्य उपयुज्यते लौकिकवाक्येषु । किन्तु कारणदोषालाभः द्विधापि प्रमितिरेव शोध्या । तत्रास्मदार्या एव

नेत्यादिना । स्वाभिमतं लक्ष्यं वक्तुं भावकरणव्युत्पत्तिभेदाद्विवक्षाभेदाच्च पूर्वाभ्युपगतं पूर्वोक्तं स्मारयति । व्युत्पत्तीति । नैयायिकैः प्रमाश्रयस्येश्वरस्य प्रामाण्यमङ्गीकृतमिति प्रमितिस्तत्करणं चेत्युभयमात्रोक्तिः कथमित्यत आह । आश्रयप्रामाण्यस्येति । अनादेशिकत्वादिति । पुरुषप्रवृत्तिनियमनरूपप्रयोजनराहित्यादित्यर्थः । तदर्थमेव हि प्रमाणवर्गविचारोऽस्मिन् शास्त्रे क्रियते । आदेशशब्दान्नियमनार्थकात् "प्रयोजन"मिति ठञि आदेशिकमिति रूपम् । अनादेशिकत्वात्प्रमाणत्वेनानुपदिष्टत्वादिति न्यायानिष्कर्षः कृतः । तर्हि "मन्त्रायुर्वेदवत्प्रामाण्यमाप्तप्रामाण्या"दिति गौतमेन कथमुक्तमित्यत आह । आप्तप्रामाण्यादिति । तस्य सूत्रस्याप्तस्य प्रामाण्यमस्तीति नार्थः । किन्त्वाप्तेनोक्तत्वाद्वेदस्य प्रामाण्यमस्तीत्यर्थ इति भावः । ननु वक्तुः प्रमाणत्वाभावे वाक्यस्य प्रामाण्यं न स्यादित्यत आह । न हीति । लौकिकवाक्येषु वक्तृप्रामाण्यस्य वाक्यप्रामाण्येऽनुपयुक्तत्वात् वेदेऽपि वक्तृप्रामाण्यस्य नोपयोग इति भावः । किन्त्विति । वक्तुः प्रमाणत्वेऽपि कारणदोषेण तद्वाक्यस्याप्रामाण्यदर्शनादिति भावः । स्वाभिमतं लक्ष्यमाह । द्विधापीति । करणप्रामाण्यस्याश्रयप्रामाण्यस्य च ज्ञानप्रामाण्याधीनज्ञानत्वात्तदुभयप्रामाण्यसिद्ध्यर्थमपि ज्ञानप्रामाण्यमेव विचारणीयमिति प्रमाया एव लक्ष्यत्वपरिग्रहो युक्त इति भावः । स्वाभिमतं लक्षणं वक्तुं पू:

केचिदन्यथाख्यातिमिच्छन्तः स्मृतेः प्रामाण्यमनिच्छन्तः सम्यगनुभवः प्रमेति लक्षयन्ति । उभयमिच्छन्तो यथार्थज्ञानं प्रमेति उभयमनिच्छन्तोऽनुभूतिः प्रमेति । एवं प्रायाणि च वाद्यन्तरोक्तानि लक्षणानि । वयं तु ब्रूमः । यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमेति ।

वैरुक्तानि लक्षणान्याह । तत्रेति । सम्यगनुभव इति । यथार्थानुभव इत्यर्थः । स्मृतावतिव्याप्तिवारणायानुभवपदम् । अन्यथाख्यातावतिव्याप्तिवारणाय सम्यक्पदम् । उभयमिच्छन्त इति । स्मृतेः प्रामाण्यमन्यथाख्यातिं चाभ्युपगच्छन्त इत्यर्थः । यथार्थज्ञानमिति । अन्यथाख्यातावतिव्याप्तिवारणाय यथार्थपदम् । इच्छाकृत्योरतिव्याप्तिवारणाय ज्ञानपदम् । उभयमिति । अन्यथाख्यातिं स्मृतिप्रामाण्यं चेत्यर्थः । अनुभूतिः स्मृभिन्ना धीः । स्मृतावतिव्याप्तिवारणाय स्मृतिभिन्नपदम् । एवं प्रायाणि चेति । नैयायिकादिवाद्यन्तरोक्तानि । यत्र यदस्ति तत्र तस्यानुभवः । तद्वति तत्प्रकारकानुभवः । अनधिगतार्थगन्तृप्रमाणमित्यादीनि लक्षणानि एवंप्रायाणि । पूर्वोक्तलक्षणवत् स्वसिद्धान्तासाधारणानीत्यर्थः । सर्वसिद्धान्तसाधारणं स्वाभिमतं लक्षणं वक्तुं प्रतिजानीते । वयमिति । भ्रमसंशयादिव्यावृत्त्यर्थं यथावस्थितपदं व्यवहारविशेषणम् । स्वाभिमतख्यातित्रयसंग्रहार्थं व्यवहारपदम् । अन्यथा यथार्थख्यात्यख्यातिपक्षयोरयथावस्थितज्ञानाभावेन यथावस्थितपदवैयर्थ्यं स्यात् । भ्रमत्वेनाभिमतस्यायथावस्थितव्यवहारजनकस्य धर्म्युपष्टब्धावयवग्रहणस्यासंसर्गाग्रहसहितज्ञानद्वयस्य च यथावस्थितत्वेन व्यावृत्तिरपि न स्यात् । प्रमाभ्रमविभागस्य लोकसिद्धस्य संरक्षणार्थं तदुभयमपि व्यावर्तनीयमेव । अनुगुणपदं व्यवहारजननस्वरूपयोग्यपरम् । तेनाजनितव्यवहारे यथार्थज्ञानविशेषे नाव्याप्तिः । कालादृष्टादावतिव्याप्तिवारणार्थं ज्ञानपदम् । यथार्थं स्मृतेः प्रामाण्याभ्युपगमाच्चानुभवपदमुक्तम् । स्वसैद्धान्तिकाभिमतख्यातित्रयपक्षसाधा-

यथार्थख्यातिमख्यातिमन्यथाख्यातिमेव वा ।
इच्छद्भिर्न विमन्तव्यमिदं लोकानुसारतः ॥

रणमिदं लक्षणमिति न व्यवहारपदवैयर्थ्यमित्येतदेवाह । यथार्थख्यातिमिति। ख्यातित्रयवादिभिरपि लोकव्यवहारानुसारेण प्रमाभ्रमविभागस्याभ्युपगन्तव्यतया तदर्थमिदं लक्षणमभ्युपगन्तव्यमित्यर्थः । केचिदाचार्याः सर्वेषां ज्ञानानां याथार्थ्यं मन्यन्ते । शुक्तिरजतज्ञानादावपि वैदिकपञ्चीकरणप्रक्रियया रजताद्यवयवानां सत्त्वात्तत्ररजतज्ञानमपि प्रमाणमेव । नेदं रजतमिति बाधो रजतादिबह्ववयवाभावविषयः। ननु तर्हि पूर्वं रजतावयवादिषु बहुत्वभानमवर्जनीयमित्ययथार्थं स्यादिति चेन्न । बहुत्वसंसर्गाग्रहेणैव बाधोपपत्तेरिति । अन्ये तु यथार्थख्यातिपक्षे अन्यथाख्यातावख्यातौ वा विश्रान्तिरेष्टव्येति तदन्यतरख्यातिपरिग्रह एव युक्तः। तत्रापीदं रजततया जानामीति व्यवहारासिद्धस्य पुरोवर्तिज्ञाने शुक्तिविषयकत्वस्यानुभूयमानस्यापह्नवानर्हत्वात् । विशेष्यताव्यधिकरणप्रकारकं ज्ञानं भ्रमः । ननु रजतत्वस्य इन्द्रियासन्निकृष्टस्य कथं तत्र भानम् । प्रत्यक्षे विषयसन्निकर्षस्य हेतुत्वादिति चेन्न। ज्ञानस्य व्यधिकरणप्रकारत्वे प्रमाणसिद्धे तदनुसारेण तत्रासन्निकृष्टस्यापि दोषमहिम्ना भानाभ्युपगमात् । दोषस्यारोपहेतुभूतायाः स्मृतेर्वा सन्निकर्षत्वस्याभ्युपगमाच्च तत्र रजतत्वभानोपपत्तेरिति वदन्ति। अपरे तु प्रत्यक्षहेतुत्वेन प्रामाण्यसिद्धस्य विषयसन्निकर्षस्य परित्यागे प्रमाणाभावात् । दोषादेश्च सन्निकर्षत्वस्य असम्प्रतिपन्नत्वात् । तत्र रजतज्ञानं चाक्षुषमेव न भवति । किन्त्विदमिति चक्षुषा गृह्यमाणे धर्मिणि रजतमिति स्मरणमात्रम् । तत्र ज्ञानद्वये एकत्वासंसर्गाग्रहादेकत्वव्यवहारः। इदं रजततया जानामीति व्यवहारोऽपि पुरोवर्तिज्ञाने रजतत्वप्रकारकत्वासंसर्गाग्रहादेव । रजतार्थिप्रवृत्तिरपि रजतभ्रमहेतुतया अवश्याभ्युपगन्तव्यतदसंसर्गाग्रहादेव । तद्धेतोरेवास्तु तद्धेतुत्वं मध्ये किन्तेनेति न्यायादिति वर्णयन्ति । एतैः सर्वैरपि प्रमाभ्रमविभागस्य

स्मृतिमात्राप्रमाणत्वं न युक्तमिति वक्ष्यते ।
अबाधितस्मृतेर्लोके प्रमाणत्वपरिग्रहात् ॥
बुद्धागमादित्यागे च न हेतुः स्मृतिमूलता ।
विशुद्धस्मृतिमूलेऽपि मानवादौ प्रसङ्गतः ॥
भ्रान्तिं प्रमातो भिन्दन्तो न चाहुः स्मृतिरित्यपि ।
स्मृतित्वमेव हि व्यक्तमप्रामाण्यं भवन्मते ॥

लोकव्यवहारसिद्धस्य संरक्षणीयत्वात्तदर्थं व्यवहारमुखेनास्मदुक्तमेव प्रमालक्षणमङ्गीकर्तव्यम् । ज्ञाने वैपरीत्यमङ्गीकुर्वद्भिरपि व्यवहारे वैपरीत्यस्यानभ्युपगमादिति । ननु नैयायिकादिभिः स्मृतेः प्रामाण्यानभ्युपगमात्तद्व्यावर्तकं विशेषणं किमिति नोक्तमित्याशङ्क्य स्मृतिप्रामाण्यमनिच्छद्भिः किं स्मृतिमात्रस्य प्रामाण्यमनभ्युपगतमुत बाधितायाः स्मृतेः । आद्ये पक्षे दूषणं स्मृतिनिरूपणे वक्ष्याम इत्याह । स्मृतीति । अन्त्ये इष्टापत्तिरित्याह । अबाधितेति । स्मृतिमात्रप्रमाणत्वमिति पाठे ननु स्मृतेः प्रामाण्ये बाधितस्मृतेरपि प्रमाणत्वं स्यादित्यत आह । स्मृतिमात्रेति । कुत इत्यत आह । अबाधितेति एवमवतारिका । ननु स्मृतेरपि प्रमाणत्वे बुद्धस्मृतिमूलो बौद्धागमः किमिति प्रमाणत्वेन नाङ्गीक्रियते इत्याशङ्क्य बुद्धागमस्याप्रामाण्यं न स्मृतिमूलत्वेन अपितु बाधितस्मृतिमूलत्वेन । अत एवाबाधितस्मृतिमूलानां मन्वादिस्मृतीनां प्रामाण्यमित्याह । बुद्धागमादीति । केचित्तु प्रमाभ्रमविभागव्यवहारस्य लोकसिद्धत्वात् तद्विभाजकोपाधी वक्तव्यौ । तत्रानुभवत्वस्मृतित्वव्यतिरेकेण धर्मान्तरस्यादर्शनादवश्यं स्मृतेरप्रामाण्यमङ्गीकर्तव्यम् । नचैवं शुक्तिरजतज्ञानस्यानुभवत्वात्तत्राप्रामाण्यं न स्यादिति वाच्यम् । तद्धर्मिज्ञानस्यैवानुभवत्वादारोप्यज्ञानस्य स्मृतित्वादिति वर्णयन्ति तन्मतमनुवदति । भ्रान्तिमिति । भ्रमं प्रमातो व्यावर्तयन्तः पुरुषाः स्मृतिः प्रमाणत्वेन नेष्यत इत्याहुरित्यन्वयः । दूषयति । स्मृतित्वमेव हीति । पीतः शङ्ख इत्यनुभूयमानारोप्यारोप्यज्ञानस्य स्मृतित्वं नास्तीति तस्याप्रामाण्यं न

पीतशङ्खभ्रमादौ च नह्येवमुपपद्यते ।
चक्षुषैव हि शङ्खादेः पीतिमादेश्च तत्र धीः ॥
ततश्च प्रतिपत्तौ वा व्यवहारोदयेऽपि वा ।
तथाभावान्यथात्वाभ्यां प्रमाभ्रान्तिव्यवस्थितिः ॥
विपर्ययादेर्व्याहृत्तिरेवमेव हि सिध्यति ।
यत्किञ्चिदन्यथात्वं हि वैपरीत्यमपीष्यते ॥
आत्मख्यात्यादिवादेषु अन्यथात्वमवारितम् ।
भ्रमप्रवृत्तिबाधादेरन्यथा नहि संभवः ॥
एवं सत्यन्यथाधीस्तत्सामग्री वापि लाघवात् ।
अयथाव्यवहारस्य हेतुरित्येव शिष्यते ॥
सर्वैरप्यन्यथाख्यातिर्दुस्त्यजत्वाल्लघीयसी ।

स्यादित्यर्थः । तर्हि प्रमाभ्रमव्यवस्था कथमित्यत आह । ततश्चेति । ज्ञानगतयथार्थत्वायथार्थत्वाभ्यां ज्ञानस्यान्यथात्वानङ्गीकारे तज्जन्यव्यवहारयथार्थत्वायथार्थत्वाभ्यां वा प्रमाभ्रमव्यवस्था सिध्यति । ज्ञानस्य वा व्यवहारस्य वा अयथार्थत्वं भ्रमव्यवहारानुरोधेनान्यथाख्यातित्वमभ्युपगच्छाद्भिरनभ्युपगच्छद्भिरप्येष्टव्यमेव । एवमेव प्रमाभ्रमव्यवस्थासिद्धौ यथार्थस्मृतेरपि स्मृतित्वेन प्रामाण्यानङ्गीकारो निर्मूल इति श्लोकद्वयार्थः । ननु विपरीते व्यवहारे निर्धारित एको हेतुर्वक्तव्यः अन्यथा व्यवहारवैपरीत्यस्याकास्मिकत्वप्रसङ्गात् । ततस्तैस्तैरात्मख्यातिनिरधिष्ठानख्यात्यनिर्वचनीयख्यातिनिर्विषयख्यातिसत्ख्यात्यन्यथाख्यात्यख्यातयो यथायथं हेतुभिरङ्गीक्रियन्ते । वस्तुनि विकल्पाभावेन तासां सर्वासामपि प्रामाणिकत्वं दुरुपपादम् । तत्रैकः पक्षः प्रामाणिकत्वेन निर्धारणीय इत्यत आह । आत्मख्यातीति । लोके शुक्तौ रजतार्थिनः प्रवृत्तिर्बाध्यते । भ्रान्त्या प्रवृत्तोऽस्मीति । तस्यैव पूर्वोत्पन्ने प्रवर्तके ज्ञाने भ्रमत्वव्यवहारोऽपि दृश्यते । तथा नेदं रजतमिति ज्ञानबाधोऽपि दृश्यते । तदेतत्सर्वं

तद्वादिनाप्यवर्ज्यत्वात्ततोऽप्यख्यातिलाघवम् ॥
स्वारस्यमन्यथाख्यातावख्यातौ लाघवं स्थितम् ।
इति दर्शयितुं भाष्ये[१] द्वितयं तदनुश्रितम् ॥
यन्नाथमुनिमिश्राद्यैर्यथार्थख्यातिसाधनम् ।
तल्लोकबुद्ध्यनारोहाद्दुर्भवं केचिदूचिरे ॥
मानाद्रूप्यादिसत्त्वेऽपि तयोरन्यतरद्ध्रुवम् ।
कार्याक्षमत्वाग्रहणात् तत्क्षमत्वग्रहेण वा ॥
ख्यात्यन्तराणां दोषास्तु तत्तत्सिद्धान्तशीलने ।

---

यथार्थरजतज्ञानापेक्षया शुक्तौ रजतज्ञानस्य वैलक्षण्याभावे न सङ्गच्छते । तथा च शुक्तौ रजतज्ञाने विसंवादिप्रवृत्तिजनकतावच्छेदकतया बाध्यतावच्छेदकतया च भ्रमपदप्रवृत्तिनिमित्तत्वेन चाविद्यमानप्रकारावगाहित्वमवर्जनीयम् । यथा तत्तत्ख्यातिनिराकरणे विशदमुपपादयिष्यामः । तथा चान्यथाख्यातिपक्ष एव प्रामाणिकः । नन्वेवं प्रवृत्तिबाधादिप्रयोजकत्वेनावर्जनीयत्वादन्यथाख्यातिपक्ष एव यदि प्रामाणिकस्तर्ह्यन्यथाख्यातिहेतुत्वेनारोप्य धर्मासंसर्गाग्रहरूपाया अख्यातेरवर्जनीयत्वादख्यातिपक्ष एव प्रामाणिकः स्यादिति चेत्तर्हि स एवास्तु । तद्धेतोरेवास्तु तद्धेतुत्वं मध्ये किन्तेनेति न्यायात् । अन्यथापरिहृताख्यातेरन्यथात्वमपि न कल्पनीयमिति लाघवं च स्यादिति श्लोकद्वयार्थः । अख्यातिपक्षे पूर्वोक्तं लाघवमेव विशदमुपपादयति । सर्वैरपीति । ननु तर्ह्यख्यातिपक्षस्यैव लाघवेन प्रामाणिकत्वे भाष्ये कथमन्यथाख्यातिपक्षस्याख्यातिपक्षस्य च परिग्रहः कृत इत्यत आह *स्वारस्यमिति । इदं रजतमनुभवामीत्येकत्वेनैव प्रतीयमानायाः प्रतीतेर्ग्रहणस्मरणात्मकत्वमनेकत्वं च युक्तितः साध्यमानं न प्रतीतिपथमारोहति । तथा रजतं स्मरामीति न क-

---

१ भाष्ये इति श्रीरामानुजाचार्यकृतब्रह्मसूत्रश्रीभाष्ये जिज्ञासाधिकरणे महासिद्धान्ते अनिर्वचनीयखण्डनप्रस्तावे ।

दाचिदप्यनुभवः । तत्तानुल्लेखश्च स्मृतित्वकल्पनायामस्वारस्य-मावहति । तत्र ज्ञाने एकत्वासंसर्गाग्रहः अनुभवत्वासं-सर्गाग्रहः रजतत्वप्रकारकत्वासंसर्गाग्रहः इत्यादिप्रतीतिव्या-ख्यानं च न लोकानुगुणत्वमनुमन्यते । दोषमहिम्ना स्मृ-तित्वानुभवः तत्तानुल्लेख इत्यादिकमपि तथैव । शुक्तौ रजतत्वप्रसक्तिलक्षणाया अन्यथाख्यातेरनभ्युपगमे नेदं रज-तमित्युत्तरकालभाविप्रसक्तप्रतिषेधात्मा बाधोऽपि न स्वरसो भ-वतीत्यन्यथाख्यातिपक्षस्वीकारे बह्वनुभवस्वारस्य मस्तीत्यर्थः । अख्यातौ लाघवमिति । पूर्वोक्तानुभवः सर्वोऽपि निर्वोढुं शक्यत इत्यन्यथाख्यातिसाधकानामन्यथासिद्धिः स्यात् । तद्धेतोरेवास्तु तद्धेतुत्वं मध्ये किन्तेनेत्येवं रूपं लाघवं न केनाप्यन्यथयितुं शक्य-मित्यर्थः । ननु केयमख्यातिः न धर्मिप्रकारयोः संसर्गाग्रहः । तयो-रनुपस्थितिदशायामपि रजतादिव्यवहारापत्तेः । तत्र तयोः संसर्गग्र-हाभावेन संसर्गाग्रहस्य सत्त्वात् । नाप्युपस्थितयोः संसर्गाग्रहः रजते नेदं रजतमिति ज्ञानकालेऽपि रजतव्यवहारापत्तेः । तत्राविद्यमानस्य रजतत्वसंसर्गस्य ग्रहे अन्यथाख्यात्यापत्त्या तत्संसर्गग्रहस्या-वश्यवक्तव्यत्वात् । तदुभयोपस्थिति सत्त्वाच्च । नचाभावप्रतियो-गित्वेनानुपस्थितत्वं प्रकारविशेषणं तत्र रजतत्वस्याभावप्रतियो-गित्वेनोपस्थितत्वान्न व्यवहार इति वाच्यम् । गेहनिष्ठाभावप्रति-योगिरजतत्वाधिकरणमिदं रजतमिति प्रतीत्या तद्व्यवहारो न स्यात् । तत्र रजतत्वस्याभावप्रतियोगित्वेनोपस्थितत्वेनःतत्प्रतियोगि-त्वेनानुपस्थितत्वाभावात् । धर्मिनिष्ठाभावप्रतियोगित्वेनानुपस्थित-त्वविवक्षयापि न निस्तारः । रजते नेदं रजतमित्यत्र रजतत्वाभावस्य धर्मिनिष्ठत्वाभावेनाभावप्रतियोगित्वेनोपस्थितिसत्त्वेऽपि धर्मनि-ष्ठाभावप्रतियोगित्वेनोपस्थित्यभावरूपाविशिष्टाभावसत्त्वादितिचेदत्र ब्रूमः । उपस्थितयोर्धर्मिप्रकारयोरसंसर्गाग्रह एव व्यवहारहेतुः । न च रजते नेदं रजतमिति प्रतीतिदशायामपि प्रवृत्त्यापत्तिरिति वा-च्यम् । तत्र रजतार्थिनो यथार्था प्रवृत्तिरापाद्यते उतायथार्था नाद्यः रजतत्वविशिष्टज्ञानस्य कारणत्वेन तदभावेनापादकाभावात् । नान्त्यः पुरोवर्तिनि विद्यमानस्य धर्मसंसर्गस्याग्रहः विसंवादि-प्रवृत्तिहेतुरिति तत्र रजतत्वसंसर्गस्याविद्यमानतया आपादकाभा-

वात् । अत एव शुक्तौ नेदं रजतमिति ज्ञानकाले न रजतार्थिनः प्रवृत्तिः। तत्र विद्यमानस्य रजतत्वासम्बन्धस्य ग्रहादिति।ननु संवादिविसंवादिप्रवृत्त्योर्विलक्षणकारणे इत्यननुगमः स्यादिति चेन्न कार्य्यस्याननुगतत्वे कारणाननुगमस्यादोषत्वात् । नचैवं प्रवृत्तावेको हेतुर्नेति वाच्यम् । प्रवृत्तिविषयधर्मिज्ञानस्य तत्र कारणत्वात् । ननु संवादिप्रवृत्तौ विशिष्टज्ञानहेतुताग्रहदशायां लाघवात् विशिष्टस्यैव सामान्यतः प्रवृत्तिमात्रे हेतुत्वं कल्प्यत इति चेत्। पूर्वं तथा कल्पने उत्तरकाले ख्यातेरपरिदृष्टान्यथात्वकल्पनरूपगौरवज्ञानेन पूर्वकल्पनस्य कार्य्यान्वितशक्तिवत्त्यागसम्भवादित्यलं बहुना । ननु तर्हि यथार्थपक्षः कुतो न परमार्थ इत्यत आह । मानादिति । पञ्चीकरणप्रक्रियया शुक्तौ रजतावयवसत्त्वे तद्विषयत्वे च रजतज्ञानस्य नेदं रजतमित्यस्य को विषयः। न तावद्रजताभावः रजतावयवानां तत्र सत्त्वात् । नापि कटकादियोग्यरजताभावः। तत्र तद्योग्यत्वस्य पूर्वं ग्रहे अन्यथाख्यातिः स्यात्। अग्रहे प्रमित्यभावात्तन्निषेधो न स्यात् । तत्र कटकादिकार्य्ययोग्यत्वासंसर्गाग्रहान्निषेध इति निर्वाहे अख्यातिपक्षस्वीकारः स्यादिति अख्यातित्वान्यथाख्यातित्वयोरन्यतरदङ्गीकर्तव्यमिति यथार्थख्यातिपक्षो वैभवादुक्तो न परमार्थ इत्यर्थः। आत्मख्यात्यादिपक्षाः कुतो नाङ्गीक्रियन्ते दुष्टत्वादिति चेत् के ते दोषा इत्यनुयोगं हृदि निधाय तत्तत्सिद्धान्तव्याख्यानमेव तेषां प्रत्याख्यानमितिन्यायेन तत्तत्सिद्धान्तपरिशीलनादेव दोषा ज्ञातुं शक्यन्त इति नास्माभिर्व्याख्येयाः दिक्प्रदर्शनमस्माभिः क्रियत इत्याह। ख्यात्यन्तराणामिति । बुद्धस्य हि चत्वारः शिष्याः । वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकभेदात् । तत्रैतावद्गुरूक्तसर्वशून्यत्वरूपार्थश्रवणमात्रेण वयं कृतार्था इति मन्यमानास्तदुपपत्तिप्रकारं नापृच्छन् ते माध्यमिकाः । शिष्यैर्योगश्चाचारश्च द्वयं करणीयं तत्राप्राप्तार्थस्य प्राप्त्यर्थपर्य्यनुयोगो योगः । गुरूक्तस्यार्थस्याङ्गीकरणमाचारः । ततश्च ते गुरूक्तार्थाङ्गीकरणादुत्तमाः पर्य्यनुयोगाकरणादधमाश्च अतस्तेषां माध्यमिका इति प्रसिद्धिः। ते सर्वशून्यत्ववादिनः। एतावद्गुरूक्तसर्वशून्यत्वे बाह्यार्थशून्यत्वमात्रमङ्गीकृत्य कथमान्तरस्यापि शून्यत्वमिति पर्यनु-

योगं कुर्वन्तस्ते योगाचाराः ते बाह्यार्थशून्यत्ववादिनः। एतावद्बुद्धेन सूत्रस्यान्ते पृष्टवन्तो भवन्तः सौत्रान्तिका भवन्त्वित्यभिहितास्ते सौत्रान्तिकाः । ते बाह्यान्तरपदार्थानां सत्यत्वमेव, अपि तु क्षणिकत्वम् बाह्यार्थस्यानुमेयत्वं च वदन्ति । एतावन्माध्यमिकान्प्रति सर्वशून्यत्वमुपदिष्टं योगाचारान्प्रति बाह्यपदार्थशून्यत्वमुपदिष्टं सौत्रान्तिकान्प्रति सत्यत्वम् सर्ववस्तुक्षणिकत्वम् बाह्यार्थस्यानुमेयत्वमेवेत्युक्तम्। अतो भगवतो विरुद्धेयं भाषेत्यवोचन् तेषां वैभाषिका इति प्रसिद्धिः । ते च बाह्यान्तरपदार्थानां प्रत्यक्षत्वक्षणिकत्वसत्यत्ववादिनः। अतश्चतुर्विधा बौद्धाः। तत्र बौद्धैकदेशिनो योगाचाराः प्राहुः। विज्ञानमेव तत्त्वं नान्यत् परमाणुसमुदायरूपं तदारब्धावयविरूपं वा न किञ्चिदस्ति परमाणूनामप्रामाणिकत्वात् तेषां क्षणिकानां समुदायिभावासम्भवात् । परमाणुसंयोगस्य व्याप्यवृत्तित्वाव्याप्यवृत्तित्वविकल्पदुःस्थत्वेन अवयवेष्ववयविनः कृत्स्नैकदेशविकल्पदुःस्थत्वेन च परस्परसंयुक्तावयवतदाश्रितावयव्यसम्भवाच्च । बाह्यार्थानामान्तरविज्ञानसम्बन्धानिरूपणेन तद्विषयत्वासम्भवाच्च। सम्बन्धं विना विषयत्वे सर्वविषयाणामेकस्मिन्नेव ज्ञानेऽवभासप्रसङ्गात् । नच बाह्यार्थाभावे नीलपीतादिज्ञानानां निरालम्बनत्वप्रसङ्गः। ज्ञानानामेव नीलपीताद्याकारत्वात् । नीलादिकं ज्ञानाभिन्नं ज्ञानोपलम्भव्याप्योपलम्भविषयत्वात् ज्ञानवत् । व्याप्यत्वस्याभेदेऽपि सम्भवेन न दृष्टान्तासिद्धिः। नच नीलतज्ज्ञानयोरभेदे नीलं जानामीति क्रियाकर्मभावेन भेदावभासविरोध इति वाच्यम् । तस्य द्विचन्द्रज्ञानवद्भ्रान्तित्वात् । तदाहुः।

सहोपलम्भनियमादभेदो नीलतद्धियोः।
भेदस्तु भ्रान्तिविज्ञाने दृश्येतेन्दाविवद्वये ॥
अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसम्वित्तिभेदवानिव लक्ष्यते इति ॥

ननु सर्वस्याप्यान्तरत्वे बाह्यत्वावभासः कथमिति चेदुपरि स्थितानां नक्षत्रादीनामुद्यतां भूमिष्ठत्वावभासवत् बाह्यत्वावभासस्यापि भ्रमत्वात् । अपि च स्तम्भज्ञानं कुड्यज्ञानमिति ज्ञानकृतस्य पक्षपातस्य ज्ञानकृतविशेषमन्तरेणानुपपत्तेरवश्यं विषयसारूप्यं

स्वयमेवात्मिपन्त्येव सङ्कीर्णाः कालवदूषणम् ॥
तत्रात्मख्यातौ तावत् ।
अन्यद्विज्ञानमस्तीति धीरन्यविषया न वा ।
आद्येऽर्थस्यापि तद्वद्धीरन्यथैवैकधीभवेत् ॥
सन्तानान्तरविज्ञानं स्वसंताने क्षणान्तरम् ।
या धीः साधयते सा हि स्वतो बाह्यं विगाहते ॥

ज्ञानस्याभ्युपगन्तव्यम् । ततश्चाङ्गीकृते च ज्ञानाकारे आकारद्वयानुपलम्भादपारमार्थिक्येव बहिराकारकल्पना । स्वप्नादिवच्चेदं द्रष्टव्यम् । यथा स्वप्नमायामरीच्युदकगन्धर्वनगरादिप्रत्यया ग्राह्यग्राहकाकारा भवन्ति । एवं जागरितप्रत्यया अपि । प्रत्ययत्वाविशेषात् । कथं पुनरसति बाह्यार्थे प्रत्ययवैचित्र्यमुपपद्यत इति चेन्न । वासनावैचित्र्यस्यैव नियामकत्वात् । अनादौ संसारे बीजाङ्कुरवज्ज्ञानानां वासनानां चान्योऽन्यनिमित्तकत्वेन वैचित्र्यात् । तस्मान्न सन्ति बाह्यार्थाः । आन्तरज्ञानमेव परमार्थः । तत् प्रतिशरीरं भिन्नं तदध्यवसायवैचित्र्यात् । करणकारणादिविरुद्धधर्माध्यासात् क्षणिकत्वं च । यदेव च स्वरसतः क्षणभङ्गुरं तदेव क्षणपरिकल्पनानिमित्तं भवति । स्वपरिकल्पितक्षणवृत्तित्वात्तस्य क्षणित्वम् । वस्तुतः स्वव्यतिरिक्तस्य क्षणरूपस्य कालस्याभावात् स्वयमेव क्षणोऽपि भवतीति तेषां मते प्रथमं दूषणमाह । आत्मख्यातौ तावदिति । दूषणमुच्यत इति शेषः । एवमुत्तरत्रापि द्रष्टव्यम् । देवदत्ताहमर्थरूपालयविज्ञानापेक्षया यज्ञदत्ताहमर्थरूपालयविज्ञानस्य भेदोऽस्तीत्यभ्युपगम्यान्यद्विज्ञानमस्तीत्युच्यते किल युष्माभिः । तत्रान्यद्विज्ञानमस्तीति विज्ञानेऽन्यत्वमवगाहते या धीः सा धीः स्वस्मादन्यद्विज्ञानमवगाहते न वा । आद्ये विज्ञानान्तरगोचरस्य विज्ञानस्य यथा सत्यत्वं तद्विषयकस्य विज्ञानस्य च यथा प्रमात्वं तथा घटादेर्ज्ञानगोचरस्यापि सत्यत्वं तद्विषयकज्ञानस्यापि प्रमात्वमव्याहतम् । अन्त्ये ग्राह्यग्राहकविज्ञानयोः भेदग्राहकमानाभावादेकविज्ञानपरिशेषापत्तिः । इष्टश्च प्रतिपुरुषं विज्ञानभेदो भव-

सहोपलम्भनियमः संविदो ग्राह्यलक्ष्म च ।
भेदोऽप्यत्रैव वेत्येवं ज्ञानार्थैक्यं न तद्भवेत् ॥
दोषादिहेतुजालस्य मिथ्यात्वेऽपि यथेष्यते ।
अधिष्ठानस्य मिथ्यात्वेऽप्यनिवार्यस्तथा भ्रमः ॥

---

द्भिरित्यर्थः। पुरुषभेदेन विज्ञानभेदाङ्गीकारमुखेन घटादितज्ज्ञानानां सत्यत्वं प्रसाध्य एकस्मिन्नेव पुरुषे क्षणिकविज्ञानानां परस्परभेदाङ्गीकारमुखेन तदाह । सन्तानान्तरविज्ञानमिति। एकस्मिन् क्षणिकज्ञानसन्ताने स्वसंतानगतं क्षणान्तररूपं विज्ञानं किञ्चिज्ज्ञानमवगाहते न वा। आद्ये स्वस्माद्ग्राहकात् ग्राह्यं भिन्नं क्षणान्तरविज्ञानमवगाहमानस्य यथा प्रमात्वं तथा घटाद्यर्थगोचरज्ञानस्यापि प्रमात्वम्। यथा च ग्राह्यस्य क्षणान्तरस्य विज्ञानस्य सत्यत्वं तथा घटादेरपि सत्यत्वं स्यात् । अन्त्ये क्षणान्तरविज्ञानभेदग्राहकप्रमाणाभावात् सर्वमपि विज्ञानमेकमेव स्यात्। न च तदिष्टं क्षणिकत्ववादिनामित्यर्थः । यच्च तैरुक्तं सहोपलम्भनियमादिभिर्ज्ञानार्थैक्यं तत्स्ववचनविरुद्धमिति दूषयति । सहेति । नीलादिकं ज्ञानाभिन्नं नियमेन ज्ञानेन तस्य सहोपलभ्यमानत्वात् । ग्राह्याणां ज्ञानेऽध्यस्तत्वेन ज्ञानसत्ताव्यतिरिक्तसत्ताशून्यत्वात् । घटादीनां विषयाणां ज्ञानेन सम्बन्धानुपपत्त्या विषयसमानाकारत्वस्य ज्ञानेऽभ्युपगन्तव्यतया आकारद्वयानुपलम्भाच्चेत्येव किल ज्ञानार्थयोरैक्यमङ्गीक्रियते तन्न भवेत् । सहभावग्राह्यग्राहकभावयो भेदगर्भत्वेन व्याघातादित्यर्थः । नीलतद्धियोः सहोपलम्भनियमः संविदो ग्राह्यलक्ष्माध्यासेन ग्राह्यभूतनीलादिभिन्नबोधे ऽप्यर्थ इवार्थ सदृशाकारत्वेन च वर्तत इति हेतोर्ज्ञानार्थयोरैक्यमुच्यते तज्ज्ञानार्थैक्यमेवं न भवेत् । एतादृशेन सहभावेन ग्राह्यग्राहकभावेन च न सिध्येदित्यन्वयः। ननु सहभावादिप्रत्ययो भ्रम इति न सहभावादिः परमार्थ इति चेन्न। तन्मूलभूतदोषाभावेन तस्य भ्रमत्वासम्भवात्। अनादिवासनाया एव दोषत्वात् कथं दोषासम्भव इति चेत् स दोषः सत्योऽसत्यो वा सत्यत्वे विज्ञानव्यतिरिक्तप्रपञ्चा-

ततो माध्यमिकस्यैव पक्षस्तत्रापि शिष्यते ।
नच तत्रापि निस्तारः सर्वथानुपपत्तितः ॥
असत्त्वं लौकिकं ब्रूपे लोकोत्तरमथापि वा
न निषेधो निरुपधिः पूर्वत्रान्यत्र धीपदम्

---

पलापो निर्मूलः । असत्यत्वे दोषनष्टुक्तेन्द्रियनत्सन्निकर्षनत्सं- बन्धिविषयाणां भ्रमहेतूनामसत्यत्वेऽपि यथा भ्रमरूपकार्यमु- त्पद्यते तथा विज्ञानरूपाधिष्ठानस्य मिथ्यात्वेऽपि भ्रमो भवि- तुमर्हतीति विज्ञानस्याप्यसत्यत्वं स्यात् । न चेष्टापत्तिः । तथात्वे माध्यमिकमतप्रवेशेन मतान्तरत्वं न स्यात् तदिदमाह । दोषा- दीति सार्द्धश्लोकेन । इदं चोपलक्षणं सहभावादिज्ञानानां भ्रमत्वेऽन्याख्यात्यापत्तिरिति द्रष्टव्यम् । "नाभावउपलब्धे"रिति योगाचारनिराकरणभाष्योक्तानि च दूषणान्यनुसन्धेयानि । अस्तु पुरुषदोषः वस्तुतत्त्वं तु तन्मतानुसारेण निरुह्यत इत्यत आह । नच तत्रापीति । "सर्वथानुपपत्तेश्चे"ति माध्यमिकमतनिरा- करणसूत्रमेवोच्चरयति । सर्वथानुपपत्तित इति । सर्वथानुपपत्तेः सर्वशून्यत्वम् भवदभिमतं न सम्भवति । किं भवान् सर्वं सदिति प्रतिजानीते असदिति वा अन्यथा वा सर्वथा तवाभि- प्रेतं तुच्छत्वं न सम्भवति । लोके भावाभावशब्दयोस्तत्प्रती- त्योश्च विद्यमानस्यैव वस्तुनः अवस्थाविशेषगोचरत्वस्य प्रति- पादितत्वात् । प्रकारान्तरस्य च लोकसिद्धप्रमाणाविषयत्वादि- त्यर्थः । ननु असत्त्वमेव पदार्थानां शून्यत्वं तच्च कालदेश- विशेषाव्यवच्छेद्यमाधारप्रतियोगिनिरपेक्षं चातो न लोकसिद्धेना- न्यथासिद्धिरित्यत आह । असत्त्वमिति । पदार्थानामसत्त्वमिति वदन् वादी प्रष्टव्यः । तत्किमसत्त्वं लोकान्तर्गतप्रमाणासिद्धम् । उत लोकबहिर्भूतप्रमाणासिद्धम् । नाद्यः चक्षुरादिभिर्लोकसिद्धप्रमाणै- रत्रेदमिदानीं नास्तीति सर्वोऽपि निषेधः सप्रतियोगिको नियत- देशकालश्च प्रतीयते । निरुपाधिर्नियतदेशकालप्रतियोगिविशेष- णरहितो निषेधो न प्रतीयत इति लोकसिद्धप्रमाणैस्त्वदभिम-

चतुष्कोटिविमुक्तं च तत्त्वं प्रामाणिकं न वा ।
पूर्वत्र तावती सत्ता नचेत्तद्धीरसन्मतिः ॥
अन्येषां तच्च निरधिष्ठानख्यातौ विचार्यताम् ।
अत्रासदेव भवतामत्रेति ज्ञायते न वा ॥

तासत्त्वासिद्धेः । न द्वितीयः लोकबहिर्भूतप्रमाणस्य लौकिकप्रमाणजन्यज्ञानगोचरत्वाभावेन ततस्त्वदभिमतासत्त्वसिद्धौ प्रमाणाभावादित्यर्थः । वस्तुतस्तु सत्त्वासत्त्वसदसत्त्वानिर्वचनीयत्वरूपकोटिचतुष्कविलक्षणं किल तव शून्यत्वरूपं तत्त्वं यथाहुः ।

"चतुष्कोटिविनिर्मुक्ततत्त्वं माध्यमिका विदु"रिति । तच्छून्यत्वं लोकप्रमाणसिद्धं वा न वा । आद्ये भवदभिमतशून्यत्वस्यापि लोकप्रमाणसिद्धानां घटादीनां यावती सत्ता तावती सिध्येदिति तस्यापि शून्यत्वं स्यात् ततश्चास्मदिष्टसिद्धिः । अन्त्ये शून्यत्वस्य लोकसिद्धप्रमाणगोचरत्वाभावेन शून्यत्वज्ञानं भ्रान्तिरेव स्यादिति सुतरामस्मदिष्टसिद्धिरित्याह । चतुष्कोटीति । एतावता योगाचारपरिगृहीते सर्वशून्यत्ववादे दोषा अभिहिता इदानीं साक्षान्माध्यमिकपरिगृहीते निरधिष्ठानाख्यातिपक्षे दोषं वक्तुं प्रतिजानीते । अन्येषामिति । ते किलैवं मन्यन्ते । विज्ञानं बाह्यार्थाश्च सर्वे न सन्ति शून्यमेव तत्त्वं तदेव हि युक्तं शून्यस्याहेतुसाध्यतया स्वतः सिद्धेः । सत एव हि हेतुरन्वेषणीयः । तच्च सत् भावादभावाच्च नोत्पद्यते । भावात्तावन्न कस्य चिदुत्पत्तिर्दृष्टा । नहि घटादिरनुपमृदिते पिण्डे जायते । नाप्यभावादुत्पत्तिः सम्भवति । नष्टे पिण्डादिके उत्पद्यमानघटादिकमभावात्मकमेव स्यात् । तथा स्वतः परतश्चोत्पत्तिर्न सम्भवति । स्वतः स्वोत्पत्तावात्माश्रयदोषात् प्रयोजनाभावाच्च । परतः परोत्पत्तौ परत्वाविशेषात् सर्वेषां सर्वेभ्य उत्पत्तिप्रसङ्गः । जन्माभावादेव विनाशस्याप्यभावः । जन्मविनाशसदसदादयो भ्रान्तिमात्रम् । नच निरधिष्ठानभ्रमासम्भवात् भ्रमाधिष्ठानं किञ्चित्पारमार्थिकं तत्त्वमाश्रयितव्यं दोषाश्रयत्वज्ञातृत्वापारमार्थ्येऽपि भ्रमोपपत्तिवत् अधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेरिति तन्मते दोषमाह । अत्रेति । अत्र इदंशब्दनिर्देशयोग्ये

आद्ये सिद्धमधिष्ठानं द्वितीये ख्यात्यपह्नवः ।
किञ्च स्वनेत्रनिष्ठ्यूतं तिमिरं तिमिरार्दितैः ॥
केशास्तबकसादृश्यात् तथा भ्रान्त्येत्र तादृशाः ।
यद्यप्यविद्यमानोऽर्थो विद्यमानतया स्फुरेत् ॥
तथाप्यसावधिष्ठानस्वदेशादौ मितो हि सः ।
इदंत्वेन प्रतीतेऽर्थे तदारोपं परे विदुः ॥
तस्मिन्निदंत्वारोपस्ते फलतस्तुल्यता द्वयोः ।
अनिर्वचनीयख्यातौ ।
अनिर्वाच्यतया वस्तु निरूप्येत न वा त्वया ।
आद्ये विरोधो त्रिविधो द्वितीयेऽस्मन्मतस्थितिः ॥
सदसद्व्यतिरेकोऽपि विरुद्धो यदि गृह्यते ।
सदसद्रूपता किंतु प्रतीता तन्न गृह्यते ॥
अनुष्णाशीतवत्तुच्छा ब्रह्मणश्चातिरेकिता ।
साध्येत ख्यातिबाधाद्यैर्यदि सिद्धं तदत्र नः ॥
नच विश्वस्य बाधोऽपि स्वरसादुपजायते ।
अप्रतिष्ठितयुक्त्या तु बाधो ब्रह्मापि संस्पृशेत् ॥

भूतलादौ असदविद्यमानमेव वस्तु भवतां मते ऽविद्यमानत्वेनाभिमतं घटादिकं वस्तु अत्रेदंशब्दनिर्देशयोग्ये भूतलादौ वर्तत इति सत्त्वेन ज्ञायते वा न वा । आद्ये । ज्ञायते इति पक्षे सिद्धमधिष्ठानमत्रेति प्रतीतेराधारविषयत्वात् । द्वितीये । न ज्ञायत इति पक्षे । ख्यात्यपह्नवः । प्रतीतेरपह्नव एव स्यात् । तथा च नाधिष्ठानमात्रनिषेधः । अपितु निरधिष्ठानभ्रमस्याप्यपलापप्रसङ्गः । सर्वेषां पदार्थानां देशकालावच्छिन्नतयैव प्रतीत्या देशविनिर्मुक्तवस्तुप्रतीतेर्लोकेऽदर्शनादित्यर्थः । ननु तिमिरार्दितदृष्टेः पुरुषस्य निरवलम्बनतया निर्विषयकभ्रमदर्शना न्निरधिष्ठानप्रतीतिरस्तीत्यत आह ।

किञ्चेति । तिमिरार्दितनेत्राणां पुरुषाणां स्वनेत्रेभ्यो निष्ठ्यूतं निर्गतं तिमिररूपं द्रव्यं तिमिरार्दितैस्तिमिररूपदोषोपद्रुतैर्नेत्रैः केशास्तवकसादृश्याद्धेतोस्तथा केशस्तवकत्वेन भान्ति प्रतीयन्ते। तथा च तिमिरस्यैव केशस्तवकारोपाधिष्ठानत्वान्न तस्यापि निरधिष्ठानत्वम्। ईदृशाः सादृश्यमूलकारोपाः शुक्तिकारजतभ्रमादयः । एवमेव केशस्तवकभ्रमवत् साधिष्ठाना इत्यर्थः । ननु शुक्तिकारजतभ्रमेषु इदंत्वेन प्रतीतेऽर्थे न रजतारोपः किन्तु रजतमिदमिति रजते इदन्त्वारोपः तथा च तत्र रजतस्यासत्त्वान्निरधिष्ठानत्वमुपपद्यत इत्याशङ्क्याह । यद्यपीति । अविद्यमाने रजते इदन्त्वरूपविद्यमानत्वारोपेऽपि न निरधिष्ठानता तस्याधिष्ठानभूतस्य रजतस्य पुरतो ऽविद्यमानत्वेऽपि स्वदेशे आपणादौ प्रमाणसिद्धत्वेनासत्त्वाभावादित्यर्थः । किञ्च इदन्त्वेन प्रतीयमाने शुक्तिकादौ रजतारोपस्यानुभवसिद्धस्यापह्नवेन रजते इदन्त्वारोपसमर्थनेन लोकानुभवविरोध एव सिध्यति नतु निरधिष्ठानभ्रमसिद्धिः । पूर्वत्र शुक्तिरधिष्ठानमुत्तरत्र रजतमधिष्ठानमिति द्वयोरपि पक्षयोरधिष्ठानसिद्धिलक्षणफलस्य तुल्यत्वादित्याह । इदन्त्वेनेति । परे । लोकानुभवानुसारिणो वैदिकाः ते लोकविलक्षणानुभवव्याख्यातुर्माध्यमिकस्येत्यर्थः । इदं चोपलक्षणम् । अविद्यमाने विद्यमानत्वारोपादन्यथाख्यातिरवर्जनीयेति बोध्यम् । इयता ग्रन्थेन प्रकटसौगताभ्युपगतावात्मख्यातिनिरधिष्ठानख्यातिवादौ निरस्तौ। इदानीं प्रच्छन्नसौगताभ्युपगतायामनिर्वचनीयख्यातौ दोषं वक्तुं प्रतिजानीते । अनिर्वचनीयख्याताविति । ते किल एवमभ्युपगच्छन्ति शुक्तिकायामिदं रजतमिति ज्ञाने नान्यत्र सतो रजतस्य विषयत्वमिन्द्रियसन्निकर्षाभावात् । नापीदं रजतमिति ज्ञानस्य ग्रहणस्मरणात्मकत्वम् । इदं रजततया चक्षुषानुभवामीति रजतज्ञानस्य चक्षुर्जन्यानुभवत्वेनानुभूयमानत्वात् । किन्त्वविद्यामहिम्ना प्रातिभासिकं प्रसिद्धरजतविलक्षणं जायते ज्ञायते च । तच्च न सत् बाध्यत्वात् नासत् प्रतीतियोग्यत्वात् किन्तु सदसद्विलक्षणमनिर्वचनीयमिति । एवमेव शुद्धे स्वप्रकाशे ब्रह्मणि मूलाविद्याकल्पितो व्यावहारिकप्रपञ्चोऽपि

सदसद्विलक्षणत्वादनिर्वचनीय इति व्यावहारिकप्रातिभासिकोभयगोचरज्ञानमप्रमाणमिति । तत्रानिर्वचनीयत्वं विकल्प्य दूषयति । अनिर्वाच्यतयेति । अनिर्वचनीयत्वेन भवद्भिरभ्युपगतं वस्तु अनिर्वाच्यशब्देनानिर्वाच्यत्वेन बोध्यते वा न वा । आद्ये विरोधः। अनिर्वाच्यत्वनिर्वाच्यत्वयोः परस्परविरहरूपत्वात् । नचेष्टापत्तिः। अनिर्वचनीयत्वनिर्वचनीयत्वयोर्विरुद्धयोरभ्युपगमे सत्त्वबाध्यत्वयोः प्रतीतिविषयत्वात्तयोरभ्युपगमप्रसङ्गः । नच तत्रापीष्टापत्त्या निस्तारः। सत्त्वाभ्युपगमे निर्वचनीयत्वस्यैवाभ्युपगमादनिर्वचनीयत्वाभ्युपगमो निर्मूलः स्यादित्यलमतिपल्लवेन । तदेतत्सर्वमभिप्रेत्याह। विविध इति । द्वितीये ऽस्मन्मतास्थितिः । अनिर्वाच्यशब्देन निर्वाच्यतया अनिर्वचनेऽस्मदभिमतं निर्वचनीयत्वमेव सिध्यतीत्यर्थः । किञ्च प्रपञ्चस्य सद्विलक्षणत्वेऽसत्त्वमेव सिध्यति कथमसद्विलक्षणत्वमभ्युपगम्यते सत्त्वाभावस्यैवासत्त्वरूपत्वेन तद्व्यतिरेकस्य वक्तुमशक्यत्वात् । यदि सद्भिन्नत्वासद्भिन्नत्वे विरुद्धेअननुभूतेअभ्युपगम्येते । तर्ह्यध्यासबाधाभ्यां सिद्धे सत्त्वासत्त्वे किमिति नाभ्युपगम्येते। विरुद्धाङ्गीकारस्योभयत्र तुल्यत्वात् ।इयांस्तु विशेषः । वस्तुनः सदसद्रूपताध्यासबाधाभ्यां प्रतिपन्ना सदसद्विलक्षणत्वं तु न प्रतिपन्नमिति तदिदमाह । सदसद्व्यतिरेकोऽपीति । तन्न गृह्यत इत्यत्र तदिति पदं तच्छब्दप्रतिरूपकमव्ययम् । तस्य तर्हीत्यर्थः । सदसद्रूपता प्रतीता किन्तु न गृह्यत इत्यन्वयः । ननु सत्त्वाभावो नात्रासच्छब्दार्थः सच्छब्देन कालत्रयाबाध्यं ब्रह्मोच्यते असच्छब्देन कालत्रयानन्वयि शशशृङ्गादिकं तुच्छमुच्यते । तदुभयविलक्षणत्वं प्रपञ्चे प्रतीतिबाधाभ्यामभ्युपगम्यते । इदमेव सदसद्विलक्षणत्वरूपमनिर्वचनीयत्वम् । यथा पृथिव्यां तेजोनिष्ठोष्णस्पर्शाद्विलक्षणो जलनिष्ठशीतस्पर्शाच्च विलक्षणोऽनुष्णाशीतस्पर्शोऽभ्युपगम्यते । तथात्रापि न विरोध इति चेत्तर्हि तुच्छाच्च ब्रह्मणश्च विलक्षणत्वं प्रपञ्चस्यास्मदिष्टमेवेति सिद्धं नः समीहितमित्याह । अनुष्णाशीतवदिति । आदिशब्देनोत्पत्तिविनाशाद्या वैलक्षण्यहेतवो गृह्यन्ते । अत्रापि तत्पदं पूर्ववद्योज्यम् । किञ्च बाधशब्देन वस्तुनः स्वदेशकालयोर्निषेधप्रतीतिर्विवक्षिता उत

नाशात्सदितरत्वं च नाशकाले यदीष्यते ।
स्वकाले यदि बाधः स्यान्नाशस्याप्यनिरूपणम् ॥
नित्यत्वेन श्रुतानां च केषां चिन्नहि नाशिता ।
भागासिद्धस्ततो हेतुर्नचैक्यं नाशबाधयोः ॥

---

ध्वंसो वा विवक्षितः । आद्ये सा प्रत्यक्षादिप्रतिष्ठितप्रमाणसिद्धा उत स्वबुद्धिकल्पितानुमानाभासमूला नाद्य इत्याह । नच विश्वस्येति । स्वरसादिति । त्वदूहकल्पितानुमानाभाससाचिव्यमन्तरेणेत्यर्थः । न द्वितीय इत्याह । अप्रतिष्ठितयुक्त्यात्विति । घटादिकं स्वावच्छिन्नप्रदेशे वर्तते वा स्वानवच्छिन्नप्रदेशे वर्तते वा । आद्ये आत्माश्रयः अन्त्येऽन्यत्रापि वृत्तिप्रसङ्गः । ज्ञानविषययोः कः सम्बन्धः । न संयोगः गुणानामपि ज्ञानविषयत्वात् न समवायः ज्ञानस्य घटादीनां च तदनभ्युपगमात् । न स्वरूपद्वयं तस्य निष्प्रतियोगिकत्वेनासंबन्धत्वादिति वृत्त्यनिरूपणाज्ज्ञानविषयत्वाभावाच्च । यदि नास्ति घटादिकमित्यादिपरदुरूहकल्पितो बाधाभासोऽप्रतिष्ठितयुक्तिमूलकबाधत्वेनात्र विवक्षितः तदा स बाधो ब्रह्मण्यपि प्रसज्येत विषयविषयिभावसम्बन्धखण्डनेन ब्रह्मणोऽपि प्रमाणजन्यज्ञानविषयत्वाभावाद्वृत्त्यभावाच्च बाधः स्यादित्यर्थः । द्वितीयेऽपि ध्वंसः किं वस्तूत्तरकालबाधो विवक्षित उत वस्तुसमकालबाधः तत्राद्य इष्टापत्तिरित्याह । नाशादिति । स्वोत्तरकालवृत्तिदण्डादिजन्यध्वंसप्रतियोगित्वेन प्रपञ्चे सदितरत्वं यद्युच्यते तर्हीष्यते तादृशमसत्त्वमङ्गीक्रियत इत्यर्थः । अन्त्ये तस्य ध्वंसत्वमेव न स्यात् प्रतियोगिसमकालत्वादित्याह । स्वकाले यदीति । किञ्च नाशित्वेन सद्भिन्नत्वं किं प्रपञ्चमात्रे साध्यते उत केषुचित्पदार्थेषु अन्त्ये इष्टापत्तिं हृदि निधाय आद्ये श्रुत्या नित्यत्वेन प्रतिप्रपन्नेषु कालप्रकृतिजीवादिषु नाशित्वाभावाद्भागासिद्धो हेतुरिति श्रुतिप्राबल्यावष्टम्भेन नित्यत्वमेवेति । किञ्च निषेधप्रतीत्यात्मकस्य बाधस्य न ध्वंसात्मकत्वं सम्भवतीति बाधशब्देन नाशपरिग्रहश्चानुपपन्न इत्याह । न चैक्यं नाशबाध-

निर्विषयख्यातौ ।

विषयालीकभावादौ ख्यात्यन्तरपरिग्रहः ।

अनुल्लेखस्तु रूप्यादिर्धीरित्युक्त्या निराहितः ॥

ततश्चात्रान्यथाधीर्वा तद्धेतुमतिरेव वा ।

भ्रान्तिर्वस्तुविरूपस्य व्यवहारस्य कारणम् ॥ ३४ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतौ न्यायपरिशुद्धौ प्रत्यक्षाध्याये प्रथममाह्निकम् ॥ १ ॥ १ ॥

---

योरिति । एतच्चोपलक्षणम् । भ्रमविषयस्य रजतस्य सदसद्विलक्षणस्य भ्रमकाले सत्त्वेन भानादन्यथाख्यातिरवर्जनीयेत्यपि द्रष्टव्यम् । तदेकदेशिन एव केचिद्बाधानुपपत्तिपरिहारार्थं शुक्तिरजतादिज्ञानानां निर्विषयतां मन्यन्ते यथाहुः ।

भ्रमे निर्विषया वृत्तिर्ज्ञानाभासतयेष्यते

इति तेषां पुरुषाभासानां मते दोषं वक्तुं प्रतिजानीते । निर्विषयख्याताविति । यद्वा "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इति नरशृङ्गादिशब्दश्रवणानन्तरमवश्यंभवत्येव निर्विषया वृत्तिर्या सा विकल्प इति पातञ्जलास्तेषां मते दोषमाह । निर्विषयशब्देन किं विषयस्यालीकत्वमुच्यते उत प्रतिपन्नोपाधिनिष्ठाभावप्रतियोगित्वात्मकं मिथ्यात्वमुच्यते आहोस्वित्तत्राविद्यमानत्वं यद्वा विषयानुल्लेख एव । आद्ये ऽसत्ख्यात्यापत्तिः । नचेष्टापत्तिः । प्रतीतिविषयस्यालीकत्वव्याघातात् । द्वितीयेऽनिर्वचनीयख्यातिरेव स्यात् । तृतीयेऽन्यथाख्यातिः । तत्राविद्यमानस्य विद्यमानत्वेन भानाभ्युपगमात् । चतुर्थे रजतादिज्ञानस्य निर्विषयत्वमित्युक्तिर्व्याघृत्तैव स्यात् । रजताद्यनुल्लेखे कथं तस्य रजतज्ञानत्वं रजतज्ञानत्वे च कथं रजतानुल्लेख इति दोषानाह । विषयालीकभावादाविति । आदिपदेन मिथ्यात्वाविद्यमानत्वे गृह्येते । ख्यात्यन्तराणि । असत्ख्यात्यनिर्वचनीयख्यात्यन्यथाख्यात्यादयः तासां

श्रीमते रामानुजाय नमः ।

तदिहान्यथाख्यातिपक्षे विपर्ययस्य संशयस्य च व्यवच्छेदार्थं यथावस्थितव्यवहारानुगुणं ज्ञानमिति प्रमाणलक्षणे यथावस्थितादिविशेषणम् । अख्यातिपक्षेऽपि तत्सामग्र्यनुप्रविष्टं ज्ञानं तत्तच्छब्देन व्यपदिश्यते । तच्च तत्राप्रमाणमिति

---

परिग्रहप्रसङ्ग इत्यर्थः । एवं ख्यात्यन्तराणां दुष्टत्वाद्विपरीतव्यवहारकारणतयान्यथाख्यातिर्वा तस्या अन्यख्याख्यातेर्हेतुभूतमसंसर्गाग्रहविशिष्टं ज्ञानद्वयं वाङ्गीक्रियते तयोरेव च भ्रमशब्दवाच्यत्वमित्युपसंहरति । ततश्चेति । वस्तुविरूपस्य । विसम्वादिन इत्यर्थः । इति श्रीमद्वेदान्ताचार्य्यचरणारविन्दानुसन्धानविशदप्रतिबोधेन भरद्वाजकुलजलधिकौस्तुभश्रीदेवराजाचार्य्यसूनुना श्रीनिवासदासेन विरचितायां न्यायपरिशुद्धिव्याख्यायां न्यायसारसमाख्यायां प्रत्यक्षाध्याये प्रथममाह्निकम् ॥ १ ॥ १ ॥

---

श्रीमते रामानुजाय नमः ॥

इयतः समयानहं महान्तं मतिभेदं विवशः प्रपद्यमानः ।
स्वमवश्यमञ्जसाद्य दैवान्निगमान्तार्यनिबन्धतः प्रबुद्धः ॥

यथावस्थितव्यवहारशब्दव्यावर्त्यस्य भ्रमशब्दार्थस्यायथावस्थितव्यवहारकारणस्य समर्थितत्वात्तानि पदानि सप्रयोजनानीत्याह । तदिहेति । प्रथममन्यथाख्यातिपक्षे प्रयोजनमाह । अन्यथाख्यातीति । यथावस्थितादिविशेषणमिति । तत्र यथापदेन पदार्थानतिवृत्तिवाचिना अयथाव्यवहारजनकस्य विपर्ययस्य व्यावृत्तिः । अवस्थितशब्देनानवस्थितव्यवहारकारणस्य संशयस्य व्यावृत्तिः । व्यवहाररूपकार्यमुखेन कारणस्य लक्षणाद्यथावस्थितपदयोर्व्यवहारविशेषणत्वात् । यथोक्तविशेष्यविशेषणभावे न वैयर्थ्यमिति ध्येयम् । अख्यातिपक्षे पदप्रयोजनमाह । अख्यातीति । ननु तत्रायथावस्थितव्यवहारकारणस्यासंसर्गाग्रहसहितस्य ज्ञानद्वयस्य यथार्थत्वेन प्रमाणत्वात्कथं व्यवच्छेद इत्यत आह।

लोकसिद्धत्वाद्यवच्छेद्यमेव । तत्रापि प्रत्येकांशे याथार्थ्यं न विहन्यते । तत्राद्ये पक्षे अन्यस्यान्यथाध्यवसायो विपर्ययः । द्वितीये तु पक्षे सामान्यतो धर्मिस्फुरणे सत्यप्रतिपन्नतद्विरोधविरुद्ध विशेषाध्यवसायोऽपि । स चायमनेकविधः । एकानेकविरुद्धविशेषस्फुरणात् । तत्रैकविशेषस्फुरणं यथा पीतः शङ्ख इत्यादि अनेकविशेषस्फुरणं यथा एकमेव भिन्नमभिन्नं चेत्याद्यनैकान्तवा-

---

तश्चेति । नन्वेवं व्यवच्छेदे धर्म्यारोप्यज्ञानयोः प्रत्येकं स्वस्वविषये यथार्थत्वेन प्रमाणत्वात्तदसङ्ग्रहः स्यादित्यत आह । तत्रापीति तयोः प्रत्येकं स्वस्वविषये यथावस्थितव्यवहारजनकत्वात्तेनाकारेण सङ्ग्रहः । असंसर्गाग्रहविशिष्टस्य ज्ञानद्वयस्य मिलितत्वाकारेणायथावस्थितव्यवहारकारणत्वात्तेनाकारेण व्यवच्छेदश्चः स्यादिति न विरोध इति भावः । अन्यथाख्यातिपक्षे विपर्य्ययस्वरूपमाह । तत्रेति । अख्यातिपक्षे विपर्ययस्वरूपमाह । द्वितीये त्विति । घटपटाविति समूहालम्बने परस्परधर्मविरुद्धधर्मभानात्तस्यापि विपर्ययत्वं स्यादिति तद्व्यवच्छेदार्थमाह । अप्रतिपन्नतद्विरोधेति । इदं धर्मविशेषणं तत्र समूहालम्बने घटपटत्वयोःपटघटत्वयोश्च मिथो विरोधस्य भानान्नातिप्रसङ्ग इति भावः । उभयत्राध्यवसायपदमनध्यवसायरूपस्य व्यवच्छेदार्थम् । ननु तस्यापि विपर्ययत्वे को दोष इति चेत् । तत्र परीक्षकाणां विपर्ययव्यवहाराभावेन तत्र तद्व्यवहारप्रसङ्गस्यैव दोषत्वात् । व्यवहारानुरोधेनैव लक्षणस्य वक्तव्यत्वादिति भावः । उक्तं विपर्ययं विभज्योदाहरति । स चायमिति । पीतः शङ्ख इति । नन्वत्र शङ्खत्वपीतत्वरूपानेकविशेषस्फुरणात्कथमेकविशेषस्फुरणत्वमिति चेद्धर्मितावच्छेदकव्यतिरिक्तस्यैकस्यैव स्फुरणात्तथात्वमिति बुध्यस्व । अत्र शङ्खत्वेन विशेषरूपेण धर्मिस्फुरणात् कथं सामान्यतो धर्मिस्फुरणे सतीति पूर्वोक्तलक्षणोपपत्तिरिति शङ्का न कार्या । तत्र सामान्यशब्देन विपरीतव्यवहाराविरोधिनो धर्मस्य विवक्षणादत्र च पीतव्यवहारे शङ्खत्वस्फुरणस्याविरोधित्वादिति द्रष्टव्यम् ।

दिनाम्। प्रपञ्चः सद्विलक्षणोऽसद्विलक्षणश्चेत्यद्वैतवादिनाम्। परस्परविरुद्धानेकविशेषवत ईदृशस्य विपर्ययस्य संशयाद्भेदो मिथो विरोधाभिमानविरहेण समुच्चिताध्यवसायः। धर्मिविरोधे परस्परविरुद्धानेकविशेषस्फुरणम् यथा। विपुलत्वैकत्वविशिष्टे चन्द्रेऽल्पत्वद्वित्वादिग्रहः। विपर्ययमेव धर्मान्तरधर्म्यन्तरभेदादन्यथाख्यातिविपरीतख्यातिभेदेन क्वचिद्व्यवहरन्ति। यथा पीतशङ्खरज्जुसर्पभ्रमे। तयोश्च रजस्तमसी मूलमिति गीयते।

यया धर्ममधर्मं च कार्यं चाकार्यमेव च।
अयथावत्प्रजानाति बुद्धिः सा पार्थ ? राजसी॥

---

भिन्नमभिन्नमिति। अत्र धर्मितावच्छेदकैकत्वातिरिक्तानेकविशेषस्फुरणात्पूर्वस्माद्भेदः। अनेकान्तवादिनामिति। आर्हतानां तद्भक्तभास्करमतानुवर्तिनां चेत्यर्थः। नन्वीदृशस्य परस्परविरुद्धानेकविशेषावगाहिनो विपर्ययस्य कथं संशयाद्भेद इत्यत आह। परस्परेति। विरोधाभिमानविरहेणेति। संशये परस्परं कोटयो र्विरोधोऽपि भासते। अत्र तु दोषवैचित्र्यात् कोट्योर्विरोधो न भासते इति भेदः। अल्पत्वद्वित्वादिग्रह इति। यद्यपि धर्मविरोधे तद्विशिष्टधर्मिणोऽपि विरोधोऽस्त्येव तथापि पूर्वोदाहरणेषु धर्मितावच्छेदकविशिष्टधर्मिणा विरोधः। अत्र तु धर्मितावच्छेदकभूतचन्द्रत्वव्यतिरिक्तेन।

अष्टाशीतिसहस्राणि विस्तीर्णो योजनानि तु।

इति प्रमाणप्रतिपन्नेन वैपुल्येनादुष्टप्रत्यक्षसिद्धैकत्वेन च विशिष्टस्य धर्मिणश्चन्द्रस्य तेनैवाकारेण प्रादेशिकत्वद्वित्वादिधर्मेण विरोध इति प्राधान्यात्तद्धर्मविरोध एवात्र विवक्षित इति भावः। विपुलत्वैकत्वादीत्यादिपदेन प्रत्यग्दिग्गमनपरिग्रहः। द्वित्वादीत्यादिपदेनाभ्रगमनरूपदोषारोप्यदिगन्तरगमनम्विवक्षितम्। धर्मान्तरधर्म्यन्तरभेदादिति। संसर्गारोपतादात्म्यारोपभेदादित्यर्थः। ययेति। यया बुद्ध्या धर्माधर्मौ कार्याकार्ये अयथावत्

अधर्मं धर्ममिति या मन्यते तमसा वृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ ? तामसी ॥

इति । यद्यपि रज्जुसर्पादिभ्रमे रज्जुत्वादिधर्मविपरीत-सर्पत्वादिधर्माध्यास एव । तथापि स्वरूपनिरूपकधर्मकत्वे-नान्तरङ्गतया धर्मिवैपरीत्यव्यपदेशः । श्वैत्यादेस्तु निरूपि-तस्वरूपविशेषकत्वमेव । विवरणे त्वेवमुक्तम् । त्रिविधमज्ञा-नम् । स्वरूपाज्ञानमन्यथाज्ञानं विपरीतज्ञानमिति । स्वरूपाज्ञानं नाम वस्तुनोऽप्रतिपत्तिः । अन्यथाज्ञानं वस्तुनो वस्त्वन्तरतया भासनम् । यथा शुक्ते रूप्यतया । विपरीतज्ञानं तु यथाव-द्वस्तुनि भासमाने युक्तिभिस्तस्यान्यथोपपादनम् । यथा ज्ञातृतया अहन्त्वेन चात्मनि भासमानेऽपि कुयुक्तिभिरस्य भ्रान्ततो-

---

तत्तद्धर्म्यसंसर्गिधर्मवत्तया पुरुषो जानाति सा बुद्धी रजोमूले-ति संसर्गारोपस्य रजोमूलत्वमुच्यते । अधर्मं धर्ममिति । रज्वा-दीन्सर्वार्थान्सर्पादय इत्यन्यतादात्म्येन या बुद्धिर्मन्यते विषयी-करोति सा बुद्धिस्तामसीति तादात्म्यारोपस्य तमोगुणमूलत्वमुच्य-ते । यद्यपीति । अधर्मे धर्मतादात्म्यारोपस्थले रज्वादौ सर्पाद्यारो-पस्थले च धर्मत्वसर्पत्वादिसंसर्गारोप एव वक्तुं शक्य इत्यर्थः । तथापीति । स्वरूपनिरूपकधर्मारोपनिरूपितस्वरूपधर्मारोपयोरा-रोप्यधर्मभेदेन भेदात्प्राचीनव्यवहारस्य गुणभेदेन भ्रमभेदनिरूपि-काया गीतायाश्च नानुपपत्तिरित्यर्थः । अन्यथाख्यातिविपरीत-ख्यात्योर्भेदः प्रकारान्तरेण विवरणे प्रतिपादित इत्याह । विवर-णेत्विति । त्रिविधमज्ञानमिति । अन्यथाज्ञानविपरीतज्ञानयोरपि यथावद्वस्तुभानाभावादज्ञानत्वमुपपद्यत इति भावः । कुयुक्तिभिरि-ति । ज्ञातृत्वं नात्मधर्मः धर्मत्वात् दृश्यत्वादिवत् । आत्मा नाहंप्रत्य-यगोचरः आत्मत्वात् अजडत्वात् निर्विकारत्वात् व्यतिरेके-ण घटादिवदित्यादयः कुयुक्तयः । कुदृशां प्रच्छन्नबौद्धानाम् । अधर्मे-ति । अधर्मः सर्वविपर्ययहेतुः सामान्यकारणं, चक्षुरादिबहिरिन्द्रिय-

पपादनं कुदृशामिति । अधर्मेन्द्रियदोषदुस्तर्काभ्यासदुर्व्याप्त्यनुसंधानविप्रलम्भकवाक्यश्रवणादिभिस्तत्त्वाग्रहसहकृतैर्विपर्ययस्य यथासम्भवमुद्भवः । सामान्यधर्मिस्फुरणे सत्यप्रतिपन्नतद्विरोधप्रतिपन्नामिथोविरोधानेकविशेषस्फुरणं संशयः । यथोर्ध्ववस्तुमात्रग्रहणे सति तद्विरोधितयाननुसंधीयमानयोर्मिथः स्फुटविरोधयोः स्थाणुत्वपुरुषत्वयोः स्फुरणम् । अयं स्था-

---

दोषः प्रत्यक्षविपर्ययहेतुः । मनोरूपेन्द्रियदोषाः दुस्तर्काभ्यासदुर्व्याप्त्यनुसन्धानानि तीर्थकराणां शङ्करादीनां दुर्दर्शनकल्पनाहेतुभूतयौक्तिकविपर्ययहेतुः। तच्छिष्यप्रशिष्याणां तादृशविप्रलम्भकवाक्यं तादृशविपर्ययहेतुः । वस्तुनस्तथात्वाग्रहसहकारी । अधर्मस्य सामान्यतो भ्रमहेतुत्वेऽपि तत्त्वविन्निग्रहादिरूपाधर्मविशेषस्य शङ्करादिविपर्ययहेतुत्वमित्याभिप्रेत्याधर्मस्य पृथग्गणनमिति मन्तव्यम्। एतत्सर्वमभिप्रेत्याह । यथा सम्भवमिति । विप्रलम्भकवाक्यश्रवणादिभिरित्यादिपदेन भ्रान्तवाक्यश्रवणविपरीतव्युत्पत्त्यादयो गृह्यन्ते । संशयलक्षणमाह । सामान्येत्यादिना । गोत्वाश्वत्वे मिथोविरुद्धे इत्यध्यवसायेऽतिव्याप्तिवारणार्थं धर्मिस्फुरणे सतीत्युक्तम । घटपटौ मिथो भिन्नाविति निश्चये पुनरप्यतिव्याप्तिरित्यत उक्तं सामान्येति स्फुरणविशेषणम् । तत्र न कोटिद्वयसाधारणधर्मवत्तया धर्मिस्फुरणमिति नातिव्याप्तिः । नन्वेवमपि घटपटौ मिथोभिन्नौ तुल्यपरिमाणौ चेति निश्चये ऽतिव्याप्तिरत उक्तमप्रतिपन्नतद्विरोधेति अनेकविशेष विशेषणम् । तत्र तुल्यपरिमाणत्वरूपसामान्यधर्मवत्तया धर्मि स्फुरणेऽपि स्वस्वधर्मापेक्षयाऽविरोधस्फुरणेऽपि अन्यदीयकोट्यपेक्षया तयोर्धर्मिणोर्मिथोविरोधस्फुरणमस्तीति न तत्रातिव्याप्तिरिति भावः । एवमेव भिन्नाभिन्नं चेति । भ्रमरूपनिश्चयेऽतिव्याप्तिवारणार्थं प्रतिपन्नमिथोविरोधेत्युक्तम् । बहुकोटिकसंशयसंग्रहार्थमनेकेत्युक्तम । विशेषशब्दः कोटिपरः । तद्विरोधितयाननुसंधीयमानयोरिति । अन्यतरकोटिनिर्धारणाभावान्न कस्या अपि कोट्या धर्मिणा विरोधः तदानीमनु-

णुर्वा पुरुषो वेति मिथोविरोधाग्रहणे तयोर्विकल्पो न स्यात् । तत एव डोलावेगवदत्र स्फुरणक्रम इत्येके । एकस्मिन् युगपदन्योऽन्यप्रतिक्षेपस्य धीविरुद्धत्वात् । अत्र चैतन्यस्य विषयेण दृढसंयोगो हि निश्चयः । तस्यैव बहुभिर्युगपददृढसंयोगः संशय इत्यात्मसिद्धिग्रन्थोऽपि न विरुद्धः । इतरथा ज्ञानार्थयोर्दृढादृढसं-

---

सन्धीयत इत्यर्थः । ननु विरोधो नाम परस्पराभावरूपत्वं तच्चैकस्मिन्नेकदा प्रतीयमानयोः कोट्योः कथं ग्राह्यं कालदेशस्वरूपभेदाभावे प्रतियोगितदभावावगाहनस्य प्रतीतिस्वरूपविरुद्धत्वादित्यत आह । मिथोविरोधाग्रहण इति । वाशब्दार्थौ विकल्पः । प्रतीयमानोऽपलपनीयः स्यादित्यर्थः । पूर्वोक्तविरोधे कः परिहार इत्यत आह । तत एवेति । विरोधग्रहणादेवेत्यर्थः । भावाभावकोटिद्वयविषयकस्य क्रमिकस्य ज्ञानद्वयस्याङ्गीकारात् स्वरूपभेदेन विरोधः परिह्रियत इत्यर्थः । नन्वेकस्यैवेन्द्रियसंयोगस्य परस्परोपमर्दकसन्तन्यमानज्ञानपरम्पराजनकत्वं कथमुपपद्यतामिति शङ्कां दृष्टान्तेन निरस्यति । दोलावेगवदिति । यथा एकमेव डोलाप्रेरणं परस्परोपमर्दकसंतन्यमानादिग्द्वयसंयोगहेतुत्वे भानं जनयति । तथा एक एवेन्द्रियसंयोगः परस्परोपमर्दकसन्तन्यमानभावाभावगोचरज्ञानपरंपरां जनयतीति भावः । एवं भावाभावगोचरत्वस्य ज्ञानस्वरूपभेदाङ्गीकारेणापरिहारे देशकालभेदाभावाद्विरोधस्तदवस्थ एव स्यादित्याह । एकस्मिन्निति । एवं संशये विरोधभानाभ्युपगमादेव संशयनिश्चययोः स्वरूपभेदनिरूपकात्मसिद्धिग्रन्थो निर्व्यूढ इत्याह । अत्रेत्यादिना । बहुभिः कोटिभिः । कोटीनां द्रव्यत्वाभावात् तद्धर्मिसंयोग एव तत्संयोगत्वेनोच्यते । संशये विरोधभानानभ्युपगमे संशयनिश्चययोः स्वरूपवैलक्षण्यनियामकौ ज्ञानार्थयोर्दृढादृढसंयोगावङ्गीकार्यौ । ऊर्ध्वतांशे निश्चयत्वसिद्ध्यर्थं कश्चन दृढसंयोगोऽङ्गीकार्य इति ज्ञानार्थं संयोगत्रयमङ्गीकर्तव्यमिति तेषां संयोगानां क्रमभाविनां कथं यौगपद्य-

श्लेषनिरूपणानुपपत्तेः । युगपदिति तु शैघ्र्यमात्रपरम् । यौगपद्याभ्युपगमेऽपि अदृढत्वं परस्परप्रतिक्षेपप्रकारविशेष एव अन्यथा अयमूर्द्धो वा स्थाणुर्वेत्यादिसंशयप्रसङ्गः । यद्यप्यविरुद्धेष्वपि केषुचित् अधर्मादिमूलकविरोधग्रहणात् केषांचिदीदृशोऽपि संशयः सम्भवति । यथात्मा ज्ञानं वा ज्ञाता वेति । यथा

---

मित्यत आह । युगपदिति । शैघ्र्यमात्रपरमिति । शीघ्रं जायमानेषु संयोगेषु कालभेदाः प्रत्यक्षेण दुर्ग्रहाः इत्येतत्परं युगपदित्यर्थः । ननु नैयायिकमते संशय एकं ज्ञानमङ्गीकृतं वाशब्दानुरोधाद्विरोधस्फूर्तिरप्यङ्गीकृता दोषमहिम्ना विलक्षणधीस्वभावो ऽप्यूरीकृतः । तद्वदेव युगपदेकस्यैव धर्मिज्ञानसंयोगस्य भासमानविरोधकनानाकोटिभानात्मकत्वमङ्गीकर्तुं शक्यमित्याशङ्क्याह । यौगपद्याभ्युपगमेऽपीति । एकस्यैव ज्ञानार्थसंयोगस्य ऊर्ध्वतांशे दार्ढ्यं नाम निश्चयात्मकत्वं स्वभावविशेषः । कोट्यंशे ऽदृढत्वं च परस्परविरुद्धकोटिभानात्मकसंशयत्वमेव । नतु तन्तुसंयोगस्येवादृढत्वं कुठारसंयोगस्येव दृढत्वं च वक्तुं शक्यम् । एकस्मिन् संयोगे तयोर्विरुद्धयोरसम्भवात् । अन्यतरमात्राङ्गीकारे कोट्योरिव धर्मितावच्छेदकांशेऽपि संशयत्वापत्तेः धर्मितावच्छेदकांश इव कोट्योरपि निश्चयत्वापत्तेर्वेत्यर्थः । नन्वात्मा ज्ञानं वा ज्ञाता वा ज्ञानं धर्मो वा धर्मी वा इत्याद्यविरुद्धकोटिकज्ञानस्य कथं संशयत्वम् । अत्मनो ज्ञानत्वेन धर्मभूतज्ञानाश्रयत्वेन च प्रमाणप्रतिपन्नत्वेन तयोर्विरोधाभावात् । तथा धर्मभूतज्ञानस्यात्मधर्मत्वेन घटज्ञानेच्छारूपावस्थाश्रयत्वेन धर्मित्वाच्च । नच तज्ज्ञानं निश्चय एवेति वाच्यम् । कल्पोल्लेखेनानवधारणात्मकत्वादित्याशङ्क्य कोट्योर्वस्तुतो विरोधाभावेऽपि दुर्मताभिमानमूलकविरोधभानस्य तत्रापि सत्त्वादुक्तसंशयलक्षणे विरोधभानस्यैव प्रविष्टत्वात् तस्य संशयत्वमुपपद्यत इति परिहरति । यद्यपीत्यादिना । अधर्मादीत्यादिपदेन तत्त्वाग्रहकालदेशविप्रकर्षादयो गृह्यन्ते । विरुद्धानेकविशेषावभास इति । विरुद्धत्वेन भासमानानेककोटिज्ञानमित्यर्थः । "समानानेकधर्मोपपत्तेर्विप्रतिप-

ज्ञानं धर्मो धर्मी वेत्यादि तथाप्याभिमानिकं परस्परप्रतिक्षेपित्वं तत्राप्यस्त्येवास्य च समानधर्मविप्रतिपत्तिभ्यामेवासाधारणकारणाभ्यां यथासम्भवमुद्भवः। तदुक्तं तत्त्वरत्नाकरे । कश्चैष संशयः कतिविधश्च। एकस्मिन् धर्मिणि विरुद्धानेकविशेषावभासः स द्विविध इत्यादिना। तत्र समानधर्मः साधारणो धर्मस्तज्जनितो यथा ऊर्ध्वत्वाविशेषात् स्थाणुर्वा पुरुषो वेति। अगृह्यमाणबलतारतम्यविरुद्धानेकज्ञापकोपस्थापनमिह विप्रतिपत्तिः। सा च सजातीयविजातीयाभासरूपाद्वित्रिचतुरादिज्ञापकभेदाद्बहुप्रकारा। प्रत्यक्षतदाभासविप्रतिपत्तेः संशयो यथा। चक्षुषा संमुखं प्रतिभाति दर्पणतले स्पर्शनेनान्यथा किमिदं संमुखं विमुखं वेति। अनुमानतदाभासविप्रतिपत्तेर्यथा । धूमवत्त्वात्पर्वतो ऽग्निमान निरालोकत्वादनग्निः इत्यत्र साग्निरनग्निर्वेति । श्रुतिविप्र

---

तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय' इति गौतमीयसूत्रस्थसमानपदमाचार्यैरुपात्तम् । तत्र मानशब्दस्य परिमाणार्थकत्वेन समानशब्दस्य तुल्यपरिमाणत्वमर्थः स्यात तथा च भूम्यादिषु नित्यत्वानित्यत्वसंशयजनकस्य द्रव्यत्वादे साधारणधर्मस्य संग्रहो न स्यादित्यतस्तदर्थमाह । समानधर्मे साधारणो धर्म इति । तथा च रूढोऽर्थो विवक्षितो न यौगिक इति द्रव्यत्वादेरप्यस्ति संग्रह इति भावः । विप्रतिपत्तिशब्दं व्याचष्टे । अगृह्यमाणेति । विरुद्धानेकज्ञापकोपस्थापं ज्ञापकानां बलतारतम्ये गृह्यमाणे प्रबलेन दुर्बलकोटेर्बाध ए स्यात् न संशय इत्यत उक्तमगृह्यमाणबलतारतम्येति । द्वित्रिचतुरादीति । द्वयोस्त्रयाणां चतुर्णां पञ्चानामधिकानां वा ज्ञापकानामुपस्थापने तावत्कोटिकाः संशयाः स्युरित्यर्थः । प्रत्यक्षतदाभासविप्रतिपत्तेरिति । वस्तुनि विकल्पासम्भवात् विरुद्धानेकोपस्थापकानां सर्वेषामाश्रयेन प्रामाण्यं न सम्भवती त्येकस्यैव प्रामाण्यमितरेषां चाभासत्वमित्यभिप्रेत्य कोट्यन्तर

तिपत्तेर्यथा । भेदाभेदव्यपदेशाभ्यां जीवो ब्रह्मणो भिन्नोऽभिन्नो वेत्यादि । वादिविप्रतिपत्तेर्यथा । वैशेषिकौपनिषदवाक्यद्वयश्राविणो मध्यस्थबुद्धेः । किमिन्द्रियाणि भौतिकान्याहंकारिकाणि वेति । एवं पामरादिवाक्यविप्रतिपत्तेरपि । नद्यास्तीरे पञ्च फलानि सन्ति न सन्ति वेत्यादि । प्रत्यक्षानुमानविप्रतिपत्तेर्यथा । चक्षुषा पीतशङ्खभ्रमे शङ्खत्वाच्च सितत्वानुमाने किमयं शङ्खः पीतः सितो वेति । प्रत्यक्षागमविप्रतिपत्तेर्यथा । किमहमर्थः स्थूलोऽणुर्वेति । अनुमानागमविप्रतिपत्तेर्यथा किं परमाणूपादानकं जगदुत ब्रह्मोपादानकमित्येषा दिक् । केचित्तु विप्रतिपत्तिशब्दमात्रे मुह्यन्तो वादिविप्रतिपत्तिमेव विप्रतिपत्तिं मन्यन्ते । तदयुक्तम् । विशेषाभावात् । यदुक्तं प्रज्ञापरित्राणे ।

---

ज्ञापकेष्वाभासपदप्रयोग इति सर्वत्र द्रष्टव्यम् । औपनिषदाः । वेदान्तिनः । भौतिकानि । पृथिव्यादिभूतारब्धानि । आहङ्कारिकाणि सात्त्विकाहङ्कारारब्धानि । प्रत्यक्षागमविप्रतिपत्तेरिति । अहं स्थूल इति प्रत्यक्षस्य "बालाग्रशतभागस्य, आराग्रमात्रो ह्यवरोऽपि दृष्टः" इत्याद्याम्नायस्य च विप्रतिपत्तेरित्यर्थः । एवं तत्तद्वादिवाक्यविप्रतिपत्तेः जीवो ब्रह्मणो भिन्नोऽभिन्नो भिन्नाभिन्नो वा जगत् परमाणूपादानमुत संविद्विवर्तः संवित्परिणामो वेत्यादि त्रिचतुरादिकोटिकाः संशयाश्च द्रष्टव्याः । तदिदमाह । एषा दिगिति । नैयायिकास्तु विरुद्धार्थप्रतिपादकवादिद्वयवाक्ययोरेव विप्रतिपत्तिशब्दार्थत्वं मन्यन्ते तन्मतमनूद्य निराकरोति । केचित्त्विति । विशेषाभावादिति । विरुद्धार्थप्रतिपत्तिजनकत्वस्य विप्रतिपत्तिशब्दार्थस्य प्रत्यक्षादिष्वपि सत्त्वात् तेषां सांशयिकात्वाच्च न विशेष इत्यर्थः । ननु तर्हि संशयत्रैविध्यं प्रज्ञापरित्राणे प्रतिपादितं कथमुपपाद्यमित्याशङ्क्य प्रज्ञापरित्राणग्रन्थमनूद्य समाधत्ते । यदुक्तमित्यादिना । परानुकारमात्रमिति । "समानानेकधर्माभ्यां विमतेश्च तदुद्भव" इति एवं रूपस्य नैयायिकमतस्यैवानुसारः

साधारणाकृतेर्दृष्ट्या नेकाकारग्रहात्तथा ।
विपश्चितां विवादाच्च त्रिधा संशय इष्यते ।

इति । तदपि नूनं परानुकारमात्रम् । द्वितीयतृतीययोरैकराश्यात् । ग्राहकावान्तरभेदस्यातिप्रसङ्गित्वात् । अप्रयोजकत्वाच्च । अत्र चानेकाकारग्रहो नानाकारग्रहो विवक्षितः । नत्वनेकव्यावृत्तासाधारणाकारग्रहः । अनन्तर"मर्थेष्वेष्वविशेषेण ह्याकारग्राहि धीद्वय" इत्यादिना तस्यैवोदाहरणात् । असाधारणधर्मादपि केचित्संशयमाहुः । यथा गन्धवत्त्वात् पृथिवी नित्यानित्या वेत्यादि । अत्र गन्धवत्त्वस्य नित्यात्मादिव्यावृत्तेः

---

कृतः न तु स्वमतानुसार इत्यर्थः । अत्र हेतुमाह । द्वितीयतृतीययोरिति । अनेकाकारग्रहस्य विपश्चितां विवादस्य च विरोधोपस्थापकत्वाविशेषेण विप्रतिपत्त्यन्तर्गतत्वादित्यर्थः । ननु प्रत्यक्षत्वशब्दत्वादिग्राहकतावच्छेदकानां भिन्नत्वात् भेदेन परिगणनमित्यत आह । ग्राहकावान्तरभेदस्येति । अतिप्रसङ्गित्वादिति । अनुमानादीनां विरुद्धधर्मोपस्थापकानामपि पृथक् परिगणनप्रसङ्गादित्यर्थः । इष्टापत्तिं परिहरति । अप्रयोजकत्वादिति । लाघवेन तावत्संग्राहकैकधर्मस्यैव भेदपरिगणनप्रयोजकत्वेनावान्तरधर्माणां नानात्वकृतगौरवेण तदप्रयोजकत्वादित्यर्थः । नन्वेकः साधरणः स न भवतीत्यनेक इति व्युत्पत्त्या सूत्रस्थानेकशब्दस्याप्यसाधारणधर्मार्थकत्वेनोपस्थापकैकत्वानेकत्वकृतभेदस्य विद्यमानत्वेन द्वितीयतृतीययोः कथमैकराश्यमित्यत आह । अत्र चेति । सूत्रेऽपि नानाकोट्युपस्थापकानां प्रत्यक्षादीनामेवानेकशब्देन ग्रहणमिति भावः । अनेकशब्दस्य नानाकोट्युपस्थापकपरत्वे उपस्थापकभेदजनितज्ञानद्वयोदाहरणप्रतिपादकोत्तरग्रन्थ एव प्रमाणमित्याह । अनन्तरमिति । साधारणासाधारणविप्रतिपत्तिभ्यः संशय इति संशयत्रैविध्यमभ्युपगच्छतां नैयायिकादीनां मतं दूषयितुमनुवदति । केचिदित्यादिना ।

कृतकत्वादिवदनित्यत्वस्मारकत्वमनित्याबादिव्यावृत्तेः निरवयवत्वादिवन्नित्यत्वस्मारकत्वमिति विरुद्धविशेषद्वयान्वितसमानधर्मस्येव तदुभयव्यावृत्तासाधारणधर्मस्यापि संशयहेतुत्वमुपपन्नमिति तदयुक्तम्। नहि तत्र गन्धवत्त्वादिना संशयोत्पत्तिः। अपि तु व्यतिरेकिनिरूपणविलम्बात्। प्रागेव गन्धादिविशिष्टद्रव्यस्य नित्यानित्यसाधारणतया भासमानैर्द्रव्यत्वादिभिरेव तत्रान्यतराशिरो निर्णिनीषया विशेषकधर्मचिन्तायां तु गन्धवत्त्वमुभयानन्वितत्वादुभयोरप्यनिष्कर्षकमित्येतावदेव चिन्त्यते। केवलव्यतिरेकिभङ्गे चैतद्विशदं भविष्यति। गन्धवत्त्वात्पृथिवी नित्या वानित्या वेति तु यदा कश्चिद्व्यवहरेत् तत्रापि गन्धवत्त्वं नित्यत्वानित्यत्वयोरन्यतरस्य प्रयोजकं न वेत्येव सन्देहः।

---

तत्रापि नित्यानित्यसाधारणैर्द्रव्यत्वादिभिरेव संशयः। द्रव्यत्वस्य भावत्वेन शीघ्रोपस्थितिकत्वात्। नतु गन्धवत्त्वेन तस्य नित्यानित्यनिष्ठाभावप्रतियोगित्वेनोपस्थितेः। व्यतिरेकोपस्थित्यधीनतया विलम्बितत्वेन गन्धवत्त्वस्य तत्राप्रयोजकत्वादिति दूषयति। तदयुक्तमिति। ननु तत्र गन्धवत्त्वस्य नित्यानित्यव्यावृत्तिः किमर्थं चिन्त्यत इत्याशङ्क्य द्रव्यत्वादिभिर्जातस्य संशयस्य गन्धवत्त्वेन निवृत्तिर्न सम्भवति तस्या एकस्या अपि कोट्या अव्याप्यत्वेन तज्ज्ञानस्य विशेषदर्शनत्वाभावादित्येतदर्थं गन्धवत्त्वस्य नित्यानित्यव्यावृत्तिश्चिन्त्यते इत्याह। तत्रेति। अन्यतराशिरः। अन्यतरकोटिः। ननु गन्धवत्त्वात्पृथिवी नित्या अनित्या वेति संशयो दृश्यते तत्र पञ्चम्या हेतुर्विधीयत इति तज्जन्य एव संशयो वक्तुमुचित इत्यत आह। गन्धवत्त्वादिति। तादृशव्यवहारस्यानभिज्ञकृतत्वमभिप्रेत्य कश्चिदित्युक्तम्। पञ्चम्या कोट्यपेक्षया प्रयोजकत्वमुच्यते न संशयापेक्षयेति संशयं व्याख्याय दर्शयति। तत्रापीति। ननु गन्धवत्त्वं नित्यत्वानित्यत्वान्यतरकोटिप्रयोजकं

सोऽपि धर्मत्वादिलक्षणसमानधर्मत्वादेव । अथ नित्यव्यावृत्तधर्मत्वादनित्यत्वमनित्य व्यावृत्तधर्मवत्वाच्च नित्यत्वं पुरस्कृत्य नित्योऽनित्यो वेति संशेरते तदापि हेतुभूतधर्मद्वयनिमित्तोऽयं संशयः । नह्येक एवात्र हेतुः गन्धस्तु तत्र सामान्यरूपस्तटस्थः न तु हेतुः । विप्रतिपत्तिमपि केचित् समानधर्म एवान्तर्भावयन्ति । यथा हि ऊर्ध्वत्वमुभयसाधारणं तथा वादिपरिगृहीतत्वादेरपि साधारणत्वात् । विमतिविषयस्य धर्मिणो वा सामान्यवेषस्य तदुभयसाधारण्यादिति तथापि साधारणधर्मस्य सहानुभूतस्थाणुत्वपुरुषत्वस्मारकत्ववत् विप्रतिपत्तेरपि समानधर्मोक्तिनिरपेक्षाया एव तदुपजीव्यतया तत्पूर्वभाविन्याः साक्षात्तद्विशेषस्मारकत्वसिद्धेर्द्वैधमुक्तमस्माभिः

---

न वेत्यस्य संशयस्यासाधारणधर्मजन्यत्वमस्तीत्याशङ्क्य तस्य धर्मित्वेन परमुपयोगः कोट्युपस्थापकधर्मस्तु धर्मत्वादिः साधारण एवेति न संशयत्रैविध्यमित्याह । सोऽपीति । ननु गन्धवत्त्वस्य नित्यव्यावृत्तत्वेनानित्यत्वस्मारकत्वम् । अनित्यव्यावृत्तत्वेन च नित्यत्वस्मारकत्वमिति साधारणधर्मवदसाधारणधर्मस्यापि कोटिस्मारकत्वेन संशायकत्वमस्तीति शङ्कते । अथेति । तत्रानित्यव्यावृत्तधर्मवत्त्वनित्यव्यावृत्तधर्मवत्त्वरूपधर्मद्वयस्यैव नित्यत्वानित्यत्वरूपकोटिद्वयस्मारकतया संशायकत्वं गन्धवत्त्वं तु तदुभयसम्पादकतया मध्यस्थमिव कोटिद्वयस्मारकधर्मोपस्थितिसम्पादकत्वेन संशये प्रयोजकमेव न हेतुरिति समाधत्ते । तदापीति । ये तु गन्धवत्त्वस्य नित्यत्वानित्यत्वरूपकोट्युपस्थापकानित्यव्यावृत्तत्वनित्यव्यावृत्तत्वरूपधर्मद्वयसम्पादकत्वं तद्वदेव विप्रतिपत्तेरपि वादिपरिगृहीतत्वरूपसाधारणधर्मसम्पादकत्वमेव तथापि संशयद्वैविध्यमपि न सम्भवतीत्याहुः तन्मतमनूद्य दूषयति । विप्रतिपत्तिमपीति । साधारणधर्मस्येव विप्रतिपत्तेरपि

पुनश्चायं द्वित्रिचतुरादिशिरोऽधिकरणभेदाद्बहुविधः। यथायं स्थाणुर्वा पुरुषो वेति। घटः सत्योऽसत्यो निर्वचनीयोऽनिर्वचनीयो वेत्यादि तथेमौ स्थाणू वा पुरुषौ वा। एते पदार्थाः सत्या असत्या अनिर्वचनीया निर्वचनीया वेत्यादि। यस्तु द्वयोरन्यतरस्य चोरत्वे सिद्धेऽयं चोरोऽयं वा चोर इति संदेहः स त्वयं चोरो न वेत्येवं रूपसंशयद्वयसमाहारः। यद्वा यश्चोरः सो ऽयमयं वेत्येक एव। अथवा चोरत्वमेतन्निष्ठमेतन्निष्ठं वेति। यद्यप्युभय-

---

साक्षात् कोट्युपस्थापकत्वेन तस्याः साधारणधर्मोपस्थापकत्वकल्पनायां गौरवात् प्रमाणाभावाच्च। तत्र विप्रतिपत्तिरेव संशयहेतुः। गन्धवत्त्वं तु न साक्षात् कोटिद्वयोपस्थापकम्। अपि तु नित्यानित्यव्यावृत्तत्वरूपकोट्युपस्थापकसंपादकतया प्रयोजकमेव न हेतुः। यथा च नित्यव्यावृत्तत्वानित्यव्यावृत्तत्वरूपयोर्धर्मयोरेव कोटिद्वयोपस्थापकत्वेन विप्रतिपत्तावन्तर्भावः सम्भवति। विप्रतिपत्तेस्तु न साधारणधर्मान्तर्भाव इत्यभिप्रेत्य परिहरति। तथापीति। शिरोऽधिकरणभेदात्। कोटीनां धर्मिणां च भेदादित्यर्थः। ननु द्वयोरन्यतरस्य चोरत्वे प्रमाणान्तरप्रतिपन्नेऽयमयं वा चोर इति संशयो दृश्यते स चानेकधर्मिकः चोरत्वरूपैककोटिकश्चेति पूर्वोक्तसंशयेभ्यो विलक्षण इति तत्र नानाकोटिकज्ञानत्वरूपपूर्वोक्तलक्षणाभावादव्याप्तिरित्याशङ्क्य स संदेहश्चोरत्वतदभावरूपकोटिद्वयावगाही तत्तत्पुरुषधर्मिकसंशयद्वयसमाहार एवेति नाव्याप्तिरित्याह। यस्त्विति। एकत्वेनैव संशयो ऽनुभूयत इति मन्यमानं प्रत्याह। यद्वेति। चोरधर्मिको देवदत्तत्वयज्ञदत्तत्वकोटिक एक एव संशय इत्यर्थः। ननु देवदत्तयज्ञदत्तव्यतिरिक्तस्याचोरत्वेन निर्णीतत्वान्न धर्मित्वं देवदत्तयज्ञदत्तयोस्तु चोरत्वं न निर्णीतमित्युभयथापि चोरत्वस्य धर्मितावच्छेदकत्वं न सम्भवतीत्यस्वरसादाह। अथवेति। चोरत्वधर्मिकदेवदत्तनिष्ठत्वयज्ञदत्तनिष्ठत्वरूपकोटिद्वयावगाहि संशय इत्यर्थः। नन्वेवमपि देवदत्तयज्ञदत्तव्यतिरिक्तपुरुषनिष्ठं चोरत्वं न धर्मि तेषां चोरत्वव्यतिरेकनिर्णयात्। अत एवोक्तं द्वयोरन्यतरस्य

व्यतिरिक्तपुरुषचोरत्वाभावे तयोरन्यतरस्याचोरत्वे वा तात्पर्यान्निर्णयगर्भत्वम् । तथाप्युभयोरन्यतरविशेषनिर्णयाभावात् तस्मिन्नंशे संशय एव । नच कस्यापि ज्ञानस्य संशयनिर्णयात्मताविरोधः। सर्वस्मिन्नपि संशये धर्म्यंशादौ निर्णयस्य दुस्त्यजत्वात् । पुनर्द्विविधोऽयमन्यतरकोटिपरिशेषयोग्यत्वतदयोग्यत्वभेदात् । पूर्वो यथा स्थाण्वात्मके वस्तुनि स्थाणुः पुरुषो वेति । उत्तरस्तु पलालकूटे द्विरदो गिरिशिखरं वेति । तत्र निरूपकाणां प्रायशः

---

चोरत्वे सिद्ध इति । अन्यथा द्वयोरेव संशयविषयत्वं कथं स्यात् नापि तदुभयनिष्ठं तस्यानिर्णीतत्वेन धर्मित्वायोगात् यदि तदुभयान्यतरनिष्ठत्वाकारेण निर्णीतं तर्हि तस्य तदुभयान्यतरनिष्ठत्वेन निर्णीतत्वादेव संशयोऽनुपपन्न इति शङ्कते । यद्यपीति । अन्यतरनिष्ठत्वाकारेण निर्णये ऽपि अत्रैव चोरत्वमिति पुरुषविशेषे निर्णयाभावाच्चोरत्वस्य निर्णीताकारेण धर्मित्वमनिर्णीतविशेषाकारेण संशयश्चोपपद्यत इत्यभिप्रेत्य परिहरति । तथापीति । नचैकस्य संशयस्यान्यतरनिष्ठत्वांशे निर्णयात्मकत्वं विशिष्य तत्तत्पुरुषवृत्तित्वांशे संशयात्मकत्वमङ्गीकर्तव्यमिति । तथा च संशयत्वनिश्चयत्वयोरेकत्र समावेशः स्यादित्याशङ्क्य एकत्र समावेश इष्ट एव । अंशभेदेन परमविरोध इति परिहरति । न चेति । एककोटिकानेककोटिकसंशयवादिमतेऽपि कोट्यंशे संशयात्मकत्वं धर्म्यंशे निर्णयात्मकत्वमङ्गीकर्तव्यमिति संशयत्वनिश्चयत्वयोरेकत्र समावेशो दुस्त्यज इत्याह । सर्वस्मिन्नपीति । स्थाणुर्वा पुरुषो वेत्यत्रान्यतरकोटिव्याप्यग्राहकप्रमाणेनान्यतरकोटिः प्रमितुं शक्या । पलालकूटधर्मिकगजत्वगिरिशृङ्गत्वकोटिकसंशये तु न कापि कोटिः प्रमितुं शक्येति तयोरन्यतरकोटिपरिशेषयोग्यत्वतदयोग्यत्वकृतो भेद इत्यभिप्रेत्य विभागं दर्शयति । पुनर्द्विविध इत्यादिना । भेदेन विभागस्य प्रयोजनं दर्शयति । तत्रेति । निरूपकाणां पूर्वः अनिरूपकाणामपरः पूर्वत्र पाक्षिकोऽर्थलाभः उत्तरत्र त्वर्थलाभ एव नास्तीति विवेकप्रदर्शना-

पूर्व एव भवति तेनैव च प्रवृत्तस्य पाक्षिकोऽर्थलाभः । यद्वा निरीहस्यैव कदाचिद्द्वितीयेन संशयेन विपर्ययेण च प्रवृत्तस्य दैवात्तदातनार्थसन्निपातेनाभिमतलाभ इति । पुनरपीमौ संशयविपर्ययौ सामान्यधर्मिणो विशेषाणां चानुभूयमानत्वस्मर्यमाणत्वादिभेदाद्बहुविधावूहनीयाविति किंसंज्ञकोऽयं वृक्ष इत्येवमादिरूपोऽनध्यवसायो नामान्यो ज्ञानविशेष इति केचित् । तदसारं तस्य संज्ञादिविशेषसंदेहसमनन्तरभावितद्विशेषबुभुत्सात्मकत्वात् । अ-

---

र्थे पूर्वोक्तविभाग इति भावः । ननु पलालकूटे गजत्वगिरिशृङ्गत्वसंशयेन प्रवृत्तस्य कदाचिद् गजलाभोऽपि दृश्यत इति कथमर्थलाभ एव नास्तीत्याशङ्क्याह । यद्वेति । गजार्थमप्रवृत्तस्यैव तस्य गजसंशयेन प्रवृत्तस्यापि गजलाभो दैवकृतः न संशयमूलकप्रवृत्तिकृत इत्यर्थः । विपर्ययेण चेति । दृष्टान्तार्थं यथा शुक्तौ रजतज्ञानेन प्रवृत्तस्य दैवात्तदातनार्थलाभो न विपर्ययमूलकप्रवृत्तिकृतः तथेहापीति तत्र च कथं चित्संशयविपर्ययोरप्युपयोगो वक्तुं शक्यत इत्यभिप्रायेण यद्वेति पक्षान्तरारम्भ इति विभावनीयम् । स्मर्यमाणत्वादीत्यादिपदेन प्रत्यक्षत्वानुमेयत्वादिभेदो गृह्यते । स देवदत्तो विद्वान्न वा तद्गतत्वेनानुमितो वह्निररुणो नीलो वा स वह्निरनुष्ण उष्णो वा इत्यादिसंशयविपर्ययभेदाः स्वयमेवोहितुं शक्या इत्याह । ऊहनीयाविति । एककोटिकसंशयवादिनां कपटसौगतानां मतमनूद्य दूषयति । किं संज्ञकोऽयमिति । एकस्मिन्नविज्ञातसंज्ञाविशेषे वृक्षेऽयमाम्रो वा पनसो वाश्वत्थो वेति संज्ञाविशेषे संदेहानन्तरं कास्य संज्ञेति बोद्धुमिच्छा जायते । तस्या अयमाकारः किं संज्ञकोऽयं वृक्ष इति । नतु संशयाकारः येनैककोटिकः संशयः स्यादिति परिहरति । तदसारमित्यादिना । संशयत्वाभ्युपगमेऽपि बहुकोटिकत्वमेव तस्येत्याह । अथवेति । पनसादिसंज्ञाविशेषाणामेवात्र कोटित्वं तत्रानुपूर्वीविशेषाः कोटितावच्छेदका धर्माः परं न प्रतीयन्त इत्यर्थः । ननूहस्यैककोटिकत्वदर्शनात् कथमेककोटिकसंशयनिरास इत्याशङ्क्योहशब्देन प्रायः पुरुषे-

थवात्वच्छेदकादर्शनादनवच्छिन्नकोटिविशेषः संशय एव । ऊहस्तु प्रायः पूरुषेणानेन भवितव्यमित्यादिरूप एककोटिसहचरितभूयोधर्मदर्शनादनुद्भूतान्यकोटिकः स एव । प्रायः पुरुषेण भवितव्यमिति पुरुष एवेत्यभिप्रायश्चेति यथोचितं प्रत्यक्षानुमानादिष्वनुप्रवेशः । तर्करूपमूहं त्वनुमाने वक्ष्यामः । त्रिविधं प्रमाणं प्रत्यक्षानुमानशब्दभेदात् । भगवता मनुनाप्युक्तम्—

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता । इति—

---

णानेन भवितव्यमित्याकारकं ज्ञानंविवक्षितमुत तर्करूपम् । आद्येऽपि तस्यानध्यवसायरूपो ऽध्यवसायरूपो वा नाद्य इत्याह । ऊहस्त्विति । यत्कोटिसहचरितानेकधर्मोपलम्भः तत्कोटावुत्कटत्वमिति तान्त्रिकाभ्युपगत उत्कटानुत्कटकोटिद्वयविषय एव न त्वेककोटिक इत्यर्थः । स एवेति । संशय एवेत्यर्थः । न द्वितीय इत्याह । प्रायः पुरुषेणेति । प्रायः शब्दस्यावधारणार्थकत्वमङ्गीकृत्याध्यवसायात्मक एव स ऊह इत्यङ्गीक्रियत इत्यर्थः । यथोचितमिति । तस्य निश्चयस्य चक्षुरादीन्द्रियजन्यत्वे प्रत्यक्षान्तर्भावः व्याप्तिज्ञानजन्यत्वेऽनुमानेऽन्तर्भावः संस्कारजन्यत्वे स्मृतावन्तर्भाव इत्यर्थः । न द्वितीय इत्याह । तर्करूपमिति । "अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क" इति गौतमसूत्रे तर्कस्योहशब्देन व्यवहारात्तर्कस्योहसब्दवाच्यत्वम् । तर्कस्य नैककोटिकसंशयात्मकत्वमित्यनुमानपरिच्छेदे वक्ष्याम इत्यर्थः । प्रमाणानां विभागे वादिभेदेन वैविध्यदर्शनात् स्वाभिमतं विभागं सप्रमाणं दर्शयति । त्रिविधमित्यादिना । विविधागममिति । श्रुतिस्मृतीतिहासपुराणादिबहुविधागमात्मकं शास्त्रं चेत्यर्थः । पराशरशौनकोक्तयोरेकानुपूर्वीकत्वाद् द्वयोः सकृदुपादानम् । दृष्टम् । प्रत्यक्षं तदर्चावतारसाक्षात्कारभावे ततो दृष्टानुमानम् रामकृष्णाद्यर्चावतारलिङ्गजन्यं रामकृष्णादिविभवावतारज्ञानम् । एतत्कालवर्तिनामागमजं ज्ञानं परवासुदेवादिविग्रहगोचरम् । एवं त्रिविधमपि

आह च भगवान् शौनकः ।

दृष्टानुमानागमजं ध्यानस्यालम्बनं त्रिधा इति ।

भाष्यकारेण च प्रत्यक्षादित्रयं स्वशब्देनोपादाय प्रमाणसंख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषय इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिरिति अन्येषामनादरः कृतः । सर्वाभ्युपगतप्रमाणानामिति च पराभ्युपगममात्रं द्योतयति । तत्र प्रतिवादिनः षट्प्रमाणाभ्युपगमात् । प्रत्यक्षानुमानागमानामेव च मिथो भेदो वेदार्थसङ्ग्रहे विशदमुपपादितः । यत्तु मत्तः स्मृतिर्ज्ञानमपोहनमित्यत्र भाष्यम् । "ज्ञानमिन्द्रियलिङ्गागमयोगजो वस्तुनिश्चय" इति तत्रापि योगजस्य प्रत्यक्षस्य प्राधान्यात् पृथग्व्यपदेशः । अन्तर्भावं च वक्ष्यामः । उक्तं च श्रीविष्णुचित्तैः प्रमेयसङ्ग्रहे । प्रमाणसंख्याविवादेऽपीत्यत्र त्रिप्रमाणत्वं भाष्योक्तमिति । भाष्येषु च केषुचित् कोशेषु यथार्थख्याति समर्थनदशायामथवा किमनेन बहुनोपपादनप्रकारेण प्रत्यक्षानुमानागमाख्यं प्रमाणजातमागमगम्यं च निरस्तनिखिलदोषगन्धमनवधिकातिशयासंख्येयकल्याणगुणगणं सर्वज्ञं सत्यसंकल्पं परं ब्रह्माभ्युपगच्छतां किं न सेत्स्यति किं नोपपद्यते इत्यादिपाठो दृश्यते । यद्यपि स्मृतिरपि यथार्था

---

ज्ञानं ध्यानस्य कारणमित्यर्थः । आलम्बनगोचरत्वादालम्बनत्वोक्तिः । ऋषिसंवादमुक्त्वा भाष्यकाराद्याचार्यसम्मतिमाह । भाष्यकारेण चेत्यादिना । ननु सर्वाभ्युपगतशब्देन किं पूर्वेषामभ्युपगमो विवक्षितः नेत्याह । सर्वाभ्युपगतप्रामाणानामिति चेति । प्रतिवादिनः । प्रच्छन्नबौद्धस्य । ननु गीताभाष्ये प्रमाणचातुर्विध्यमुपपादितामिति कथं त्रैविध्यं भाष्यकाराभिमतमित्यत आह । यत्त्विति । तदविशेषादिति । प्रत्यक्षादिष्वन्तर्भावस्य विवक्षितत्वादित्यर्थः । ऐतिह्यमागमः । प्रत्यक्षाद्यवि-

प्रमाणमिति वक्ष्यते । तथापि प्रत्यक्षादिमूलतया तदविशेषात् पृथगनुक्तिः । उक्तं च तत्त्वरत्नाकरे प्रत्यक्षादिमूलानां स्मृतीनां स्वस्वमूलेऽन्तर्भावविवक्षया प्रमाणत्रित्वाविरोधः । चतुष्ट्वे च वैदिकानुवादो दर्शित इति । स चायमनुवादः पूर्वोपात्तः ।

स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् । इति ।

प्रत्यक्षाद्यविशेषेण वेदानुवादाच्चेति । प्रज्ञापरित्राणे तु । स्मृतिप्रामाण्यानभ्युपगमेऽपि ज्ञानस्य तावत्करणभेदाच्चातुर्विध्यमेवोक्तम् ।

तत्रेन्द्रियार्थसंबन्धो लिङ्गशब्दग्रहौ तथा ।
संस्कारोन्मेष इत्येते संविदां जन्महेतवः इति ।

यत्तु तत्रैव ।

स्वयं सिद्धिस्तथा दिव्यं प्रत्यक्षमनुमागमः ।
पञ्च सन्ति प्रमाणानि जैमिनिव्यासयोर्हृदि ॥

इत्यादिना स्वयं सिद्धिदिव्ययोः पृथङ्निरूपणं कृतं त्यक्षावान्तरवैरूप्यबोधनाभिप्रायम् । यथोक्तं श्रीविष्णुचित्तैः । भगवत्प्रसादलब्धयोगिप्रत्यक्षं दिव्यमिति । तत्र साक्षात्कारि प्रमा प्रत्यक्षम् । साक्षात्त्वं च जातिरूपः उपाधिरूपो वा कश्चिज्ज्ञानस्वभावविशेषः स्वात्मसाक्षिकः । ज्ञानकरणजज्ञान-

शेषेणेति । प्रत्यक्षादिवत्स्मृतेरपि पृथङ्निर्देशादित्यर्थः । स्मृतिप्रामाण्यानभ्युपगमेऽपीति । स्मृतेर्याथार्थ्यानभ्युपगमेऽपीत्यर्थः । प्रथमोद्दिष्टस्य प्रत्यक्षस्य लक्षणमाह । तत्रेति । प्रत्यक्षभ्रमेऽतिव्याप्तिवारणाय प्रमापदम् । अनुमानादिषु तद्वारणाय साक्षात्पदम् । जातिरूप इति । ज्ञानस्य द्रव्यत्वेन संस्थानविशेषरूपाया जातेरविरोधादिति भावः । स्वभावविशेषः । धर्मविशेषः । तादृशधर्मे प्रमाणमाह । स्वात्मसाक्षिक इति । अहमिदं

स्मृतिरहिता मतिरपरोक्षमिति निष्कर्षे नाव्याप्त्यादिप्रसञ्जनम् । प्रमेयसंग्रहे त्वेवमुक्तम् । साक्षादनुभवः प्रत्यक्षम् । साक्षात्त्वं जातिरित्यादि । तत्त्वरत्नाकरेऽप्येवमुक्तम् ।

अपरोक्ष प्रमाध्यक्षमापरोक्ष्यं च संविदः ।
व्यवहार्यार्थसंबन्धिज्ञानजत्वविवर्जनम् इति ।

पारोक्ष्यं चैवमुक्तम् । पारोक्ष्यं व्यवहार्यानन्तर्गतं वस्तु-

साक्षात्करोमीति स्वस्वानुभव एव तत्र प्रमाणमित्यर्थः । उपाधिपक्षे निर्वचनप्रमाणं दर्शयति । ज्ञानेति । ज्ञानकरणकज्ञानान्यत्वे सति स्मृतिभिन्नत्वं प्रत्यक्षत्वम् । अनुमितिशाब्दयोरतिव्याप्तिवारणाय सत्यन्तम् । तयोर्व्याप्तिपदपदार्थज्ञानजन्यत्वान्नातिव्याप्तिः । व्याप्त्यादिज्ञानस्यैव करणत्वमिति पक्षे ज्ञानकरणकभिन्नत्वं तदर्थ इति बोध्यम् । स्मृत्यामतिव्याप्तिवारणाय स्मृतिभिन्नत्वम् । संस्काराजन्यत्वविवक्षायां तु प्रत्यभिज्ञाप्रत्यक्षेऽव्याप्तिः स्यात् । इन्द्रियजन्यज्ञानत्वं प्रत्यक्षत्वमिति विवक्षायामीश्वरप्रत्यक्षे योगिप्रत्यक्षस्य इन्द्रियाजन्यत्वपक्षे तत्र चाव्याप्तिः स्यादिति तदिदममाह । इति निस्कर्षे नाव्याप्त्यादिप्रसञ्जनमिति । उक्तप्रकारेण निर्वचने नाव्याप्तेरतिव्याप्तेर्वा प्रसक्तिरित्यर्थः । ज्ञानाजन्यत्वं च स्वतन्त्रज्ञानजन्यभिन्नत्वं विवक्षितं तेन चक्षुरादिपरतन्त्रसौरभज्ञानजन्ये सुरभिश्चन्दनखण्ड इति प्रत्यक्षे नाव्याप्तिरिति बोध्यम् । साक्षात्त्वस्य जातित्वे पूर्वग्रन्थसम्मतिमाह । प्रमेयसंग्रहे त्विति । उपाधित्वे तामाह । तत्त्वरत्नाकरेऽपीति । अपरोक्षेति । अपरोक्षप्रमाणत्वं प्रत्यक्षप्रमाणत्वम् । ज्ञानस्यापरोक्षत्वं नाम प्रवृत्तिविषयार्थसम्बन्धिज्ञानजन्यभिन्नत्वम् । प्रवृत्तिविषयार्थो वन्ह्यादिस्तत्सम्बन्धी धूमादिः शब्दश्च तज्ज्ञानजन्यज्ञानमनुमितिः शाब्दी च तद्भिन्नत्वमित्यर्थः । तत्तत्प्रमाणमूलायाः स्मृतेस्तत्तत्प्रमाणान्तर्भावविवक्षया तद्व्यावर्तकविशेषणं न दत्तमिति बोध्यम् । प्रसङ्गात्तन्त्रत्यपारोक्ष्यप्रतिपादकमानभेदमाह । पारोक्ष्यमिति । व्यवहारः वन्ह्याद्यर्थिप्रवृत्तिस्तद्विषयो

वेदनापेक्षं तदनन्तर्गतलिङ्गाद्यनपेक्षं पारोक्ष्यमनुमानादाविति । वरदविष्णुमिश्रैः मानयाथात्म्यनिर्णये त्वेवमुक्तम् । अपरोक्षप्रमा प्रत्यक्षं प्रमाया आपरोक्ष्यं नाम विशदावभासत्वमिति ब्रूमः किमिदं वैशद्यं नाम असाधारणाकारेण वस्त्ववभासकत्वमित्यादि । साक्षात्त्वं द्विधा । नित्यं चानित्यं च ईश्वरनित्यज्ञानादिनिष्ठं नित्यम् । अस्मदादिज्ञाननिष्ठं त्वनित्यम् । अस्मदादिप्रत्यक्षं द्विधा । योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति । तत्र योगिप्रत्यक्षं प्रकृष्टादृष्टविशेषजं तद्युक्तावस्थायां मनोमात्रजन्यं वियुक्तावस्थायां तु बाह्येन्द्रियजन्यमपि । तच्च बुभुत्सादिप्रतिनियतविषयमाग-

---

व्यवहार्यः तदनन्तर्गतमिष्टतावच्छेदकेष्टभिन्नं लिङ्गं शब्दश्च तज्ज्ञानजन्यत्वं पारोक्ष्यमित्यर्थः । एतदेव लक्ष्यारूढं दर्शयति । तदनन्तर्गतेति । व्यवहार्यानन्तर्गतेत्यर्थः । प्रवृत्तिविषयतावच्छेदकसौरभादिज्ञानजन्ये सुरभिश्चन्दनखण्ड इत्यादिप्रत्यक्षेऽतिव्याप्तिवारणाय व्यवहार्यानन्तर्गतेत्युक्तम् । अनुमानादावित्यादिपदेन शाब्दज्ञानपरिग्रहः । प्रत्यक्षमूलायाः स्मृतेः प्रत्यक्षान्तर्भावविवक्षया तदसङ्ग्रह इत्यत्रापि बोध्यम् । असाधारणाकारेणेति । व्यापकतावच्छेदकशक्यतावच्छेदकव्यतिरिक्ततदसाधारणसंस्थानपरिमाणरूपादिविशिष्टवस्तुगोचरत्वमित्यर्थः । अनुमितिशाब्दयोर्व्यापककतावच्छेदकशक्यतावच्छेदकव्यतिरिक्तविषयत्वं नास्तीति नातिव्याप्तिरिति भावः । धर्मभूतज्ञानस्य नित्यत्वात्तत्र नित्या नित्यविभागो न वक्तुं शक्यत इति तद्धर्माणामेव नित्यत्वानित्यत्वमभिप्रेत्य नित्यानित्यविभागमाह । साक्षात्त्वं द्विधेति । आकृतिव्यतिरिक्ताया जातेरस्माभिरनभ्युपगमात् । साक्षात्त्वरूपाया जातेरनित्यत्वं सम्भवतीति भावः । मनोमात्रजन्यमिति । योगदशायां बहिरिन्द्रियव्यापाराभावादिति भावः । वियुक्तावस्थायामिति । योगाभावकाले प्रकृष्टादृष्टविशेषसहकृतचक्षुरादिजन्यं चेत्यर्थः । बुभुत्सादिप्रतिनियतविषयमिति । यत्र जिज्ञासा विवित्सा निराचिकीर्षा वा तन्मात्रगोचरमित्यर्थः । यो-

मैकसिद्धं च । भावनाबलजमात्रं जगत्कर्तरि प्रत्यक्षं प्रतिक्षिप्तं शास्त्र[1]योन्यधिकरणे । अन्यत्र भाष्यकारैरेव साक्षाद्योगिप्रत्यक्षस्य कण्ठोक्तेः । तस्य सम्भवतोऽप्यागमिकेश्वरज्ञानमूलस्यागमानुवादत्वापादनाशङ्कया तत्रौदासीन्यात् । धर्मादयः कस्य चिदिन्द्रियग्राह्याः प्रमेयत्वात् घटवत् । मीमांसकानाम-

गजन्यप्रत्यक्षस्य सद्भावे उक्तप्रकारभेदे च किं प्रमाणमित्यत आह । आगमैकसिद्धं चेति ।

दि[2]व्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ।
त[3]त्सर्वं धर्मवीर्येण यथावत्संप्रपश्यति ।

इत्यादिकमत्र भाव्यम् । ननु तर्हि जगत्कर्तुरीश्वरस्य प्रत्यक्षविषयत्वं कथं शास्त्रयोन्याधिकरणे प्रतिक्षिप्तं तस्य योगजप्रत्यक्षगोचरत्वसम्भवादित्यत आह । भावनाबलजमिति । तत्र हि परिभावितकामिनीसाक्षात्कारसदृशः भावनाबलमात्रजः साक्षात्कार ईश्वरे प्रतिक्षिप्तः । नतु प्रकृष्टादृष्टसहकृतेन्द्रियजः साक्षात्कार इत्यर्थः । अन्यत्र । "ज्ञानमिन्द्रियलिङ्गागमयोगजो वस्तुनिश्चय" इति गी[4]ताभाष्य इत्यर्थः । नन्वेवं योगजप्रत्यक्षसिद्धेश्वरबोधकत्वादेवागमस्यानुवादकत्वं स्यादित्यत आह । तस्य सम्भवतोऽपीति । आगमादीश्वरमधिगम्य तं प्रपद्य तत्प्रसादेन लब्धदिव्येन्द्रियाणां योगिनां ज्ञानमागमं स्वासिद्धानुवादीकर्तुं नेष्टे । आगमादीश्वरसिद्ध्यभावे स्वस्यैवानुदयात् । प्रत्युत स्वस्यैवागमाधिगतार्थगन्तृत्वादित्यर्थः । अनुमानेन योगजसाक्षात्कारसिद्धिरिति वदतां नैयायिकानामनुमानान्यनूद्य दूषयति । धर्मादय इति । अनेनार्थाद्योगजप्रत्यक्षसिद्धिरिति तेषां हृदयम् । धर्मादय इत्यादिपदेन अधर्मभावनादीनां ग्रहणम् । मीमांसकानामप्रत्यक्षत्वादिति । मीमांसकानां प्रत्यक्षव्यतिरिक्तप्रमाणगम्यत्वादित्यर्थः । अन्यथा विशेषनि-

---

१ ब्रह्मसूत्र श्रीरामानुजभाष्ये प्रथमपाद तृतीयाधिकरणे नापियोगजन्यं भावना प्रकर्षजन्मनस्तस्य विशदावभासत्वेऽपि पूर्वानुभवविषयस्मृतिमात्रत्वान्न प्रामाण्यमिति कुतः प्रत्यक्षतेति वाक्येनेति भावः । २ गीतायामेकादशाध्याये= ३ रामायणे द्वितीयसर्गे ।
४ गीतापञ्चदशाध्याये मत्तःस्मृतिर्ज्ञानमपोहनं चेत्यत्र श्रीरामानुजभाष्ये इत्यर्थः ।

प्रत्यक्षत्वाद्वा अस्मत्सुखादिवदित्याद्यनुमानानां विपक्षे बाधकविरहादिभिराभासत्वात् । आगमबाधप्रसङ्गस्यैव पुरस्कारे त्वागमेनैव चरितार्थत्वात् । अन्यथा धर्मादयः कस्यचिच्चक्षुर्ग्राह्या इति वदतो बौद्धस्य किं प्रतिवक्ष्यसि । यश्चानुव्यवसाये सविषयव्यवसायप्रत्यक्षतामिच्छति । तस्यास्मदादिष्वपि धर्मादिव्यवसायानुव्यवसाये धर्मादिप्रत्यक्षत्वसिद्धौ कथं तदतिरिक्तयोगिप्रत्यक्षानुमानसिद्धिः । तद्व्यवच्छेदेन प्रयोगेऽपि सौगतोक्तचाक्षुषत्वादिसाधनप्रसङ्गः स्यादिति । स चादृष्टविशेषो

---

षेधस्य शेषाभ्यनुज्ञापरत्वात् मीमांसकव्यतिरिक्तपुरुषप्रत्यक्षत्वादिति हेत्वर्थः स्यात् । तथा च साध्याविशेषः स्यात् । मीमांसकैः प्रत्यक्षप्रमाणगम्यत्वेनानभ्युपगतत्वादित्यर्थाङ्गीकारे दृष्टान्तासिद्धिरस्मत्सुखादीनामपि तैः प्रत्यक्षगम्यत्वाङ्गीकारादिति द्रष्टव्यम् । इत्यादीति । प्रत्यक्षत्वं धर्मादिगोचरवृत्ति मानविभाजकोपाधित्वात् प्रत्यक्षत्वानुमानत्वान्यतरत्वादित्यादिकमादिपदग्राह्यम् । बाधकविरहादिभिरित्यादिपदेन प्रत्यक्षत्वम् धर्मादि गोचरवृत्ति न भवति ज्ञानकरणकज्ञानस्मृत्यवृत्तिधर्मत्वात् । सत्त्वप्रत्यक्षत्वान्यतरत्वात् घटत्ववत् इत्यादिप्रतिपक्षहेतवो गृह्यन्ते । ननु धर्मादेरप्रत्यक्षत्वेऽतीन्द्रियार्थग्राहियोगजप्रत्यक्षबोधकागमबाधप्रसङ्गो विपक्षे बाधकस्तर्कः । अत एव प्रत्यक्षानुमानानि बाधितानीति न सत्प्रतिपक्षत्वमपीत्यत आह । आगमेति । चरितार्थत्वादिति । आगमसिद्धस्यैव साधनात् सिद्धसाधनता स्यादित्यर्थः । अन्यथेति । आगमबाधस्यापुरस्कार इत्यर्थः । किञ्च त्वन्मते धर्माद्यनुमितिगोचरानुव्यवसायप्रत्यक्षे धर्मस्यापि विषयत्वात् सिद्धसाधनं स्यादिति न योगिप्रत्यक्षसिद्धिरित्यत आह । यश्चेति । ननु धर्मादयः स्वातन्त्र्येणेन्द्रियग्राह्या इति वा लौकिकप्रत्यक्षविषया इति वा साध्यत इति यदि कश्चिद्ब्रूयात्तं प्रति सौगतोक्तचाक्षुषत्वानुमानप्रतिबन्दिः स्मार्यते । तद्व्यवच्छेदेनेति । मन्वादिद्रष्टृत्वोपयुक्तमृषीणामतीन्द्रियार्थज्ञानमार्षं तदपि योगजप्रत्य

योगाभ्यासतपश्चर्यादिभिर्जायते । तस्मादार्षाभिमतमपि प्रकृष्टादृष्टजत्वाविशेषात् तत्रैवान्तर्भूतमिति । यथोक्तं प्रज्ञापरित्राणे ।

अत्रेन्द्रियानपेक्षं यज्ज्ञानमर्थावभासकम् ।
दिव्यं प्रमाणमित्येतत्प्रमाणज्ञाः प्रचक्षते ॥
परमेश्वरविज्ञानं मुक्तानां च धियस्तथा ।
संजयार्जुनवाल्मीकिप्रभृत्यार्षधियोऽपि तत् इति ।

इन्द्रियानपेक्षमिति । अदिव्येन्द्रियानपेक्षमित्यर्थः । अत एव हि गीयते । दिव्यं ददामि ते चक्षुरित्यादि । यद्वा परमेश्वरादिविज्ञानसहपाठादिभिस्तथैव तन्मतम् । अनन्तरं चैवमुक्तम् ।

स्वाभाविकस्य ज्ञानस्य स्वतः सर्वावभासिनः ।
अविद्याप्रतिबन्धस्याप्रतिबन्धोऽक्षयोगतः ॥
अविद्याहानितो मुक्तपुरुषाणां हि संविदाम् ।
स्वाभाविकस्वरूपेण निखिलार्थावभासिता ॥

---

क्षान्तर्भूतमेवादृष्टविशेषसहकृतेन्द्रियजत्वस्य विभाजकोपाधेरनुगतत्वादित्याह । तस्मादिति । आर्षज्ञानस्य योगजप्रत्यक्षान्तर्भावे प्राचीनग्रन्थसंमतिमाह । यथोक्तमिति । ननु सञ्जयार्जुनादिज्ञानानां व्यासकृष्णप्रसादलब्धदिव्येन्द्रियजन्यत्वस्य भारतादावेवोक्तत्वात् तेषां कथमिन्द्रियानपेक्षत्वमित्यत आह । अदिव्येति । अत एवेति । अदिव्येन्द्रियाजन्यत्वादेवेत्यर्थः । ईश्वरादिज्ञानसहपाठबलेनानिन्द्रियजन्यत्वमेव संजयादिज्ञानस्यापीति तस्य ग्रन्थकर्तुर्मतमिति ज्ञायत इति नास्माभिरदिव्येन्द्रियानपेक्षत्वेन व्याख्येयमित्याह । यद्वेति । अस्मिन्नर्थे उत्तरग्रन्थं सम्वादयति । अनन्तरं चैवमुक्तमिति । तर्हि व्यासकृष्णप्रसादलब्धदिव्येन्द्रियस्यानुपयोगः स्यादिति शङ्कां निराकरोति । स्वाभाविकस्येति । अविद्याप्रतिबन्धनिवृत्तिरिन्द्रियफलमित्यर्थः । अत एव मुक्तपुरुषाणां ज्ञाने नेन्द्रियापेक्षेत्याह । अविद्याहानित इति । तथा चार्षज्ञानस्य विषयग्राहित्वे इन्द्रियानपेक्षत्वे ऽपि

प्रतिबन्धकभावस्य प्रत्युत्तम्भकभाविना ।
परेणानुगृहीता धी ऋषीणां सर्वभासिका इति ।

मानसप्रत्यक्षमप्यस्मदादीनां नास्त्येवेति वृद्धसम्प्रदायः । आत्मस्वरूपस्य तद्धर्मभूतज्ञानस्य च स्वयं प्रकाशत्वात् । सुखदुःखेच्छाद्वेषप्रयत्नानां तत्तद्धेतुतयाभिमतज्ञानविशेषानतिरेकस्य वेदार्थसंग्रहे समर्थितत्वात् । नित्यत्वादिविशिष्टास्मदाद्यनुभवस्य शास्त्रप्रसिद्धत्वात् । पूर्वानुभवादिज्ञानस्य स्मृतिरूपत्वात् । आत्मसुखादिव्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रियानपेक्ष्य प्रवृत्त्यनुपपत्तेरिति । शास्त्रयोन्याधिकरणभाष्यस्यान्वारोहेणाप्यु-

---

अविद्याप्रतिबन्धनिवृत्त्यंशे तदपेक्षेत्याह । प्रतिबन्धकभावस्येति । प्रत्युत्तम्भकभाव उत्तेजकत्वं सोऽस्यास्तीति तथोक्तः तेन । प्रतिबन्धकभावस्य । प्रतिबन्धकत्वस्य प्रतिबन्धकपदार्थस्येति वा परेण वैरिणा प्रत्युत्तम्भकभाविनानुगृहीता सती ऋषीणां धीः सर्वावभासिकेत्यन्वयः । अस्मदादीनामिति । अयोगिनामित्यर्थः । योगिनां तु मानसप्रत्यक्षमस्त्येवेति भावः । अत एवोक्तं तद्युक्तावस्थायां मनोमात्रजन्यमिति । ननु मानसप्रत्यक्षाभावे आत्मनस्तद्धर्मभूतज्ञानस्य च सिद्धिः कथमित्यत आह । आत्मस्वरूपस्येति । तर्हि सुखादिसिद्धिः कुत इत्यत आह । सुखेति । समर्थितत्वादिति । तथा च स्वप्रकाशत्वादेव न कारणाधीनसिद्ध्यपेक्षेति भावः । नन्वेवमपि नित्यत्वाणुत्वशेषत्वादिविशिष्टात्मस्वरूपतद्धर्मज्ञानसिद्ध्यर्थं मानसप्रत्यक्षमङ्गीकार्यमित्यत आह । नित्यत्वादीति । तर्ह्यतीतानुभवस्मृत्यादिसिद्ध्यर्थं तदत्याज्यमित्यत आह । पूर्वानुभवेति । ननु शास्त्रयोन्याधिकरणे सुखादिव्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रियानपेक्षप्रवृत्तेरसिद्धेरिति भाष्ये वर्तते । तेन सुखाद्यान्तरपदार्थेषु मनसो निरपेक्षप्रवृत्तिरस्तीति ज्ञायते ततः कथं मानसप्रत्यक्षनिरास इत्यत आह । सुखादीति ।

---

१ ब्रह्म सूत्रश्रीरामानुजभाष्ये प्रथमपाद तृतीयाधिकरणे इत्यर्थः ।

पपत्तेरिति । ततश्चादिव्यबाह्येन्द्रियप्रसूतं ज्ञानमयोगिप्रत्यक्षं तत्सामान्यादृष्टालोकविशेषादिसहकृतेन्द्रियजन्यं दृष्टसामग्रीविशेषात् प्रतिनियतविषयं तच्छ्रोत्रादीन्द्रियासाधारणकारणभेदात्पञ्चधा । विषयेन्द्रियसम्बन्धश्च द्रव्येषु संयोगः । द्रव्याश्रितेषु रूपादिषु संयुक्ताश्रयणम् । यथोक्तं तत्त्वरत्नाकरे ।

अत्र वृद्धा विदामासुः संयोगः सन्निकर्षणम् ।
संयुक्ताश्रयणं चेति यथासम्भवमूह्यताम् इति ।

पुनः प्रत्यक्षं द्विधा । सविकल्पकं निर्विकल्पकं चेति । सप्रत्यवमर्शप्रत्यक्षं सविकल्पकम् । तद्रहितं प्रत्यक्षं निर्विकल्पकम् । उभयविधमप्येतद्विशिष्टविषयमेव । अविशिष्टवस्तुग्राहि-

---

तस्येति । मनस इत्यर्थः । अन्वारोहेणाप्युपपत्तेरिति । नैयायिकमते स्थित्वा भाषितमित्यन्यथापि सिद्धेः सम्भवात्तद्भाष्यं न मानसप्रत्यक्षे लिङ्गमिति भावः । अदिव्यबाह्येन्द्रियेति । दिव्येन्द्रियाणां साक्षात्कारजनने मनसः स्मृत्यादिजनने च विषयसम्बन्धापेक्षाविरहादिति भावः । यथासम्भवमिति । योगजसाक्षात्कारेऽन्यथाख्यातौ चोक्तसम्बन्धासम्भवादिति भावः । सप्रत्यवमर्श इति । प्रत्यवमर्शस्तत्तोल्लेखस्तेन सहितं प्रत्यक्षं सविकल्पकमित्यर्थः । "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" इति सूत्रे[१] ऽव्यपदेश्यशब्दस्य निष्प्रकारार्थकत्वं परिकल्प्य—

अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं वस्तुमात्रजम् इति ॥

अविशिष्टविषयं निर्विकल्पकमित्यभ्युपगच्छन्ति तेषां नैयायिकानां मतं निराकरोति । उभयविधमप्येतदिति । तादृशनिर्विकल्पकसद्भावे प्रमाणं किं प्रत्यक्षमनुमानमागमो वेति विक-

---

१ न्याय सूत्रे प्रथमाध्यायचतुर्थसूत्रम् ।

णो ज्ञानस्यानुपलम्भादनुपपत्तेश्च । बालमूकतिर्यगादिविज्ञानमपि हि संज्ञादिविकल्परहितमपि विशिष्टवस्तुविषयमेव । अन्यथा तेषां हेयोपादेयविभागपूर्वकं प्रवृत्तिविशेषानुपपत्तेः । विप्रतिपन्नं विशिष्टज्ञानं विशेषणज्ञानपूर्वकं विशिष्टज्ञानत्वात् सुरभिचन्दनमित्यादिविशिष्टज्ञानवदिति चेन्न । एकसामग्रीवेद्यविशेषणेषु तन्निरपेक्षत्वात् । स्वरूपसम्बन्धपक्षे स्वरूपग्रहणेनैव

---

ल्प्याद्ये दोषमाह । अनुपलम्भादिति । तादृशनिर्विकल्पकगोचरप्रत्यक्षस्यासिद्धेरित्यर्थः । द्वितीये दोषमाह । अनुपपत्तेश्चेति । तादृशानुमानाभावादित्यर्थः । तृतीये निर्विकल्पसमाधिबोधकयोगशास्त्रस्यापि न निर्विशेषवस्तुग्रहबोधकत्वमिति शतदूषण्यां प्रपञ्चितम् । दृष्टान्ते ऽप्यविशिष्टविषयत्वं नास्तीत्याह । बालमूकेति । संज्ञादिविकल्परहितमपीति । बालमूकतिर्य्यगादिज्ञानानामन्नकण्टकवह्निव्याघ्रादिशब्दवैशिष्ट्यानवगाहित्वेऽपीष्टद्विष्यतावच्छेदकान्नत्वाहित्वकण्टकत्वादिप्रकारावगाहित्वमस्तीत्यर्थः । अन्यथेति । इष्टद्विष्यतावच्छेदकप्रकारावगाहित्वाभावे तेषामन्नार्थं प्रवृत्तिरहिकण्टकादिभ्यो निवृत्तिश्च न स्यादित्यर्थः । प्रतिज्ञातमुपपत्त्यभावमेव वक्तुं निर्विकल्पकसाधकमनुमानमनुवदति । विप्रतिपन्नमिति । निर्विकल्पकप्रत्यभिज्ञयोर्बाधासिद्धसाधनयोः परिहाराय विप्रतिपन्नपदम् । हेतौ विशिष्टपदं निर्विकल्पके व्यभिचारवारणाय । एकसामग्रीवेद्येति । सुरभिचन्दनं सोऽयं घट इत्यादिज्ञानेषु सौरभतांशे चक्षुषः स्वविजातीयसंस्कारजन्यायाः स्मृतेर्विशेषणप्रत्यासत्तितयाऽपेक्षणेऽपि चक्षुर्मात्रजन्ये घटज्ञाने तदपेक्षाया अभावादित्यर्थः । तथा चानुमानबाधः संस्कारसहकृतेन्द्रियजन्यत्वं वोपाधिरिति भावः । चक्षुरुन्मीलनानन्तरभाविनोऽविशिष्टविषयत्वं वदन् वादी प्रष्टव्यः । तस्याविशिष्टविषयत्वं किं विशेषणाविषयत्वात् उत विशेष्याविषयत्वात् आहोस्विद्विशेषणविशेष्यसम्बन्धाविषयत्वात् । तत्रापि सम्बन्धः किं स्वरूपसम्बन्ध उत समवाय इति विकल्प्य नाद्यः विवक्षितासिद्धेः । न द्वितीयः असम्भवादित्यभिप्रेत्य न तृतीयप्रथम इत्याह । स्वरूपसम्बन्धपक्ष इति । न तृतीय-

संबन्धस्यापि ग्रहणात् । तावतैव विशिष्टग्रहणसिद्धेः । समवायवादेऽपि तस्यैव गृह्यमाणस्य विशेषणविशेष्यभावरूपत्वात् । समवायविशिष्टप्रत्यये तथैवाभ्युपगमात् । तद्वैशिष्ट्यग्रहे च गुणवैशिष्ट्यग्रहस्यावर्जनीयत्वात् । नच समवायस्य सविकल्पकैकविषयतेति वाच्यम् । निर्विकल्पके धर्मवद्धर्मिवच्च तत्संबन्धस्याप्यैन्द्रियकत्वाविशेषेण ग्रहणसम्भवात् । योग्यस्य सन्निकृष्टगृह्यमाणसंबन्धिनः संबन्धस्याग्रहणानुपपत्तेः । अन्यथा नित्यं तदग्रहापातात् । प्रथमाक्षसन्निपातजा बुद्धिः विशिष्टविषया

---

द्वितीय इत्याह । समवायवादेऽपीति । समवायस्य चक्षुः सन्निकृष्टत्वेन योग्यत्वेन च ग्रहसम्भवात्तस्य च विशेषणविशेष्यभावरूपसम्बन्धसम्बन्धरूपत्वेन ज्ञानस्य विशिष्टविषय त्वसम्भवादित्यर्थः । ननु समवायस्य विशेषणविशेष्यभावसम्बन्धत्वं नाभ्युपगम्यत इत्यत आह । समवायविशिष्टेति । पटसमवायवन्तस्तन्तव इह तन्तुषु पटसमवाय इति समवायविशिष्टप्रत्यक्षे समवायस्य विशेषणत्वविशेष्यत्वयोर्युष्माभिरभ्युपगमादित्यर्थः । ननु धर्मिणि नीलादिगुणविशिष्टत्वं न गृह्यतेऽ तस्तस्याविशिष्टविषयत्वमित्यत आह । तद्वैशिष्ट्यग्रह इति । धर्मिणि गुणसमवायस्य वैशिष्ट्यग्रहे गुणवैशिष्ट्यग्रहस्यावर्जनीयत्वादित्यर्थः । ननु निर्विकल्पकस्य समवायविषयत्वमेव नास्ति येन वैशिष्ट्यग्रहः स्यादिति शङ्कते । न चेति । सम्बन्धिग्रहाभावान्न सम्बन्धग्रह इति चोद्यं व्यावर्तयति । गृह्यमाणसम्बन्धिन इति । अन्यथेति । समवायस्य निर्विकल्पकाविषयत्वे सविकल्पकेऽपि तस्य विषयत्वं न स्यादित्यर्थः । ननु तथापि प्राभाकरैः समवायस्यातीन्द्रियत्वमभ्युपगम्यत इति चेत्तर्हि तस्यैवासिद्धेरिति तात्पर्यम् । निर्विकल्पकसाधकहेतोः सत्प्रतिपक्षतामप्याह । प्रथमाक्षेति । इत्यादीत्यादिशब्देन विशिष्टज्ञानत्वादिति पूर्वोक्त एव हेतौ व्यर्थविशेषणत्वं गृह्यते । निर्विकल्पकस्य सिद्ध्यसिद्धिभ्यां व्याहतत्वेन व्यावर्त्याभावात् । ज्ञानत्वादित्येव हेतुप्रयोगे अव्यवस्थयानुमानं बाधि-

बुद्धित्वात् सम्प्रतिपन्नवदित्याद्यपि चिन्त्यम् । नच सविकल्पकं न प्रत्यक्षमिति वाच्यम् । साक्षात्काराबाधाद्यविशेषात् ॥

सहकारिविशेषेण न वैजात्यं प्रसज्यते ।
तज्जातीये तु यत् किञ्चिद्वैषम्यं सम्भवेदपि ॥
यत्र दृश्येत वैजात्यं तथा तत्राभ्युपेयते ।

---

तं स्यात् । तदिदमाह । चिन्त्यमिति । सविकल्पकस्याप्रामाण्यमभ्युपगच्छताम् प्रच्छन्नानां विशदानां च सौगतानां मतं निराकर्तुमनुवदति । नचेति । ननु सविकल्पकं न प्रत्यक्षमिति अनेन प्रत्यक्षत्वाभाव उच्यते उत प्रमाण्याभावः उभयत्रापि यथाक्रममुत्तरमाह । साक्षात्काराबाधाद्यविशेषादिति । आद्ये इदमित्थं साक्षात्करोमीत्यनुभवस्य निर्विकल्पकवत् सविकल्पके विद्यमानत्वादित्युत्तरम् । अन्त्ये निर्विकल्पक इव सविकल्पकेऽपि बाधादर्शनादित्युत्तरं द्रष्टव्यम् । आदिशब्देनार्थजत्वाद्यविशेषो गृह्यते । यद्वा सविकल्पकस्य संस्कारजन्यत्वान्न प्रत्यक्षत्वमिति सौगतः शङ्कते । न चेति । निर्विकल्पकस्येव सविकल्पकस्यापि साक्षात्कारत्वेबाधकाभावादर्थजत्वाविशेषाच्चेति परिहरति । साक्षात्काराबाधाद्यविशेषादिति । संस्कारजन्यत्वात्कथं प्रत्यक्षत्वमित्यत्राह । सहकारीति । स्मृताविव सविकल्पके संस्कारस्य न स्वातन्त्र्येण कारणत्वं येन प्रत्यक्षत्वं न स्यात्किं त्विन्द्रियसहकारितया तथा चेन्द्रियजन्यत्वेन प्रत्यक्षमेव सविकल्पकमित्यर्थः । सहकारिविशेषकृतं वैषम्यं कार्येऽवश्यं वक्तव्यमिति यदि तर्हीन्द्रियजन्ये ज्ञाने सहकारिविशेषायत्तं प्रत्यक्षविशेषत्वमेव स्यान्न तु प्रत्यक्षत्वाभावः स्मृतित्वं वा स्यादित्याह । तज्जातीये त्विति । नन्वेवं संस्कारजन्यत्वं स्मृतित्वप्रयोजकं न स्यात् तथा स्मृतेरपि स्मृतित्वं संस्कारप्रयोज्यं न स्यादित्यत आह । यत्रेति । स्मृतावनुभवसिद्धस्य स्मृतित्वस्यापलापायोगात् तत्र संस्कारमात्रकारणत्वं प्रयोजकमङ्गीक्रियते न तावता संस्कारसहकृतेन्द्रियकारणस्य सविकल्पकस्य स्मृतित्वं कल्पयितुं युक्तमित्यर्थः । न-

तावता नैव सर्वत्र भवेदेतस्य कल्पनम् ॥
केवलेन्द्रियजं वापि न किञ्चिज्ज्ञानमिष्यते ।
सहकारिविशेषा हि विभिद्यन्ते प्रतीन्द्रियम् ॥
अतः संस्कारसम्भेदेऽप्यपरोक्षत्वयोगतः ।
प्रत्यक्षत्वं विकल्पस्य न क्वचिद्विनिवर्तते ॥

निर्विकल्पकमेकजातीयेषु द्रव्येषु प्रथमपिण्डग्रहणमित्यादिभाष्यं

---

न्वेवमिन्द्रियमात्रजन्यत्वमेव प्रत्यक्षत्व प्रयोजकमस्तु तथा च सहकारिविशेषसम्भेदात् सविकल्पकस्य प्रत्यक्षत्वं न स्यादिति चेत्तत्राह । केवलेति । निर्विकल्पकस्यापि सहकारिविशेषासहकृतेन्द्रियजन्यत्वाभावात् प्रत्यक्षत्वं न स्यादित्यर्थः । निर्विकल्पकेऽपीन्द्रियस्य सहकारिविशेषसद्भावनियममुपपादयति । सहकारीति । प्रतीन्द्रियम् । तत्तदालोकादृष्टादीनां भिन्नत्वादित्यर्थः । इन्द्रियजन्यत्वमेव प्रत्यक्षत्वप्रयोजकं तच्च सहकारिविशेषसम्भेदेऽपि नापैतीति । यदि निर्विकल्पकस्य प्रत्यक्षत्वमङ्गीक्रियते तर्हि सविककल्पकस्यापीन्द्रियजन्यत्वेन प्रत्यक्षत्वं संस्कारलक्षणसहकारिविशेषसम्भेदेऽपि नापैतीत्युपसंहरति । न क्वचिदिति । एकत्र व्यक्तिविशेषेऽपि न निवर्तत इत्यर्थः । ननु भाष्ये सन्मात्रग्राहिप्रत्यक्षभङ्गे "अतो निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणम् । द्वितीयादिपिण्डग्रहणं सविकल्पकमित्युच्यते । तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारता न प्रतीयते । द्वितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिरिति प्रथमप्रतीत्यनुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिधर्मविशिष्टत्वं द्वितीयादिपिण्डग्रहणावसेयमिति द्वितीयादिग्रहणस्य सविकल्पकत्वम् । सास्नादिसंस्थानरूपगोत्वादेरनुवृत्तिर्न प्रथमपिण्डग्रहणे गृह्यत इति प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वं न पुनः संस्थानरूपजात्यादेरग्रहणात्" इत्यादिना सविकल्पकनिर्विकल्पकयोरन्यथैव लक्षणमुक्तमित्यत आह । निर्विकल्पकमिति । अयमभिप्रायः । संस्कारसहकृतेन्द्रियजन्यतया सप्रत्यवमर्शं ज्ञानं सविकल्पकम् । संस्कारनिरपेक्षकेवलेन्द्रियजं ज्ञानं

तु उदाहरणपरं योज्यम् । अत एव हि विष्णुचित्तैरुक्तम् । संस्कारोद्बोधसहकृतेन्द्रियजन्यं ज्ञानं सविकल्पकमिति । एकजातीयेषु प्रथमपिण्डग्रहणं द्वितीयादिपिण्डग्रहणेषु प्रथमाक्षसन्निपातजं ज्ञानं निर्विकल्पकमिति । अन्यत्र चोक्तम् । केवलचक्षुरादीन्द्रियजन्यं निर्विकल्पकमित्यादि । यत्तूक्तं तत्त्वरत्नाकरे ।

विशेषणानां स्वायोगव्यावृत्तिरविकल्पके ।
सविकल्पेऽन्ययोगस्य व्यावृत्तिः संज्ञिना तथा इति ॥

तत्रापि संस्कारनिरपेक्षत्वसापेक्षत्वयोः प्रदर्शनपरत्वं ग्राह्यम् । प्रत्यक्षस्य चैवं विभागोऽभिहितः । द्विविधं चैतत्प्रत्यक्षमर्वाचीनमनर्वाचीनं च युगपदशेषविषयसाक्षात्कारक्षममनर्वाचीनम् । तद्योगिमुक्तेश्वराणां प्रभावविशेषाधीनमुपपादयि-

---

निर्विकल्पकं तदेतद्दृश्यते प्रथमपिण्डग्रहणदशायामिदमित्येव ग्रहणात् । द्वितीयादिपिण्डग्रहणेषु तज्जातीयतया सोऽयमिति परामर्शादिति । ननूक्तेन लक्षणप्रकारेण विभागे प्रथमपिण्डग्रहणेऽपि सविकल्पकत्वं सम्भवति । यथा प्रथमपिण्डस्यैव द्वितीयग्रहणे सेयं गौरिति द्वितीयादिपिण्डग्रहणेष्वपि निर्विकल्पकत्वं स्यात् । यथा विस्मृतप्रथमपिण्डस्य परामर्शाभावात् द्वितीयादिपिण्डेष्वपीयं गौरिति । अतो लक्षणोदाहरणयोरसामञ्जस्यमिवाभातीति चेत् । अयमाशयः । निर्विकल्पकसविकल्पकविभागस्तावदुक्तप्रकारमन्तरेण नोपपद्यते । उदाहरणमपि सम्भवल्लक्षणव्यक्तिविशेषपरम् । अतः प्रथमद्वितीयाद्यनादर एवेति । अयं च प्रथमद्वितीयाद्यनादरः श्रीविष्णुचित्तग्रन्थे विशदमुपपादित इत्याह । अत एव हीति । अन्यत्र चेति । श्रीविष्णुचित्तग्रन्थ एव प्रदेशान्तर इत्यर्थः । तत्त्वरत्नाकरग्रन्थमनूद्य तत्रत्यनिर्विकल्पकसविकल्पकविभागविरोधं परिहरति । यत्त्विति । स्वायोगव्यावृत्तिः । गोत्वाद्यसम्बन्धराहित्यम् । अविकल्पके । निर्विकल्पके । अन्ययोगव्यावृत्तिः । गव्यश्वत्वादिसम्बन्धव्यावृत्तिः । संज्ञिना । गवादिना अ-

ष्यते इत्यादि। अत एव कुदृष्टीनां सन्मात्रग्राहिप्रत्यक्षमिति अविलक्षजल्पितं निरस्तम्। क्रमयौगपद्यादिदूषणं तु भ्रान्तिविकल्पेऽपि

---

वैशिष्ट्यं तथा प्रकाशत इत्यर्थः। अभिहित इति। तत्त्वरत्नाकरे इत्यनुषङ्गः। इत्यादीत्यादिपदेन तद्भिन्नमस्मदादिज्ञानमर्वाचीनमित्युत्तरग्रन्थो गृह्यते। अत एवेति। सर्वज्ञानानां विशिष्टविषयत्वोपपादनादेवेत्यर्थः। कुदृष्टीनाम्। प्रच्छन्नबौद्धानाम्। अविलक्षजल्पितमिति। निर्लज्जजल्पनमित्यर्थः। विलक्षशब्दस्य लज्जितपरत्वमालङ्कारिकैरुक्तम्।

आत्मनश्चरिते सम्यक् ज्ञाते ऽन्यैर्यस्य जायते।
अपत्रपातिमहती स विलक्ष इति स्मृत इति॥

विलक्ष्यजल्पितमिति पाठे तु विगतं लक्ष्यं विषयो यस्य तदिति योगवृत्त्याश्रयणेन निरर्थकजल्पितमित्यर्थो द्रष्टव्यः। ते ह्येवमाहुः। घटादिभेदः क्षणिकेन ज्ञानेन क्रमेण गृह्यते उत युगपत् आद्येऽधिकरणप्रतियोगिनोः पूर्वमग्रहे भेदज्ञानानुपपत्तिः अन्त्ये एकमेव प्रथमज्ञानं पूर्वं धर्मिणं विषयीकृत्य अनन्तरं भेदं विषयीकरोतीति वक्तव्यम्। तथाच विरम्य व्यापारप्रसङ्गः। ननु पूर्वज्ञानं धर्मिमात्रविषयकं द्वितीयज्ञानं धर्मगोचरमिति चेन्न पूर्वज्ञानस्य नष्टत्वेन द्वितीयज्ञानस्यैव धर्मिधर्मोभयविषयकत्वं वक्तव्यमिति पूर्वोक्तक्रमयौगपद्यदोषानतिवृत्तेः। पूर्वज्ञानस्य धर्मिमात्रगोचरत्वेन सन्मात्रग्राहिप्रत्यक्षसिद्धेश्च न प्रत्यक्षं घटपटादि तत्सत्त्वं वा गृह्णाति किन्त्वधिष्ठानत्वेन घटपटाद्यनुगतं सन्मात्रम्। तथा च प्रत्यक्षमपि सद्रूपब्रह्माद्वैतानुकूलमेव। तथा सति सत्सदित्येव प्रत्यक्षं स्यात् न तु घटः सन्निति प्रत्यक्षम्। इन्द्रियाद्यनुविधायीतिचेन्न यथा भ्रमेष्विदमंशस्याधिष्ठानस्य प्रत्यक्षेण ग्रहणम्। इन्द्रियान्वयव्यतिरेकानुविधानस्य तत्रैवोपक्षयः रजतांशस्य त्वारोपितस्य भ्रान्त्या प्रतिभासः तथा सर्वत्र सन्मात्रस्य प्रत्यक्षेण ग्रहणम्। तत्रैवेन्द्रियव्यापारः। घटादिवस्तुप्रतिभासो भ्रान्त्यैवेत्यभ्युपगमात्। तद्वदिह बाधादर्शनात्तथाभ्युपगम एव निर्मूल इति चेत्। बाधादर्शनेऽपि देशकालव्यवहितवस्तुन इव घटादिभेदवस्तुनः प्रत्यक्षायोग्यत्वस्यैव तत्र मू-

समानम्। भ्रान्तिरूपो हि विकल्पः क्षणिकत्वान्न विरम्य व्यापर्तुमलम्। नच पूर्वज्ञानवार्तां जानाति नच स्वयं धर्मिप्रति

लत्वात्। तथा हीन्द्रियव्यापारानन्तरं प्रतीयमानो घटादिः सर्वतो भिन्न एव प्रतीयते तदा तत्र घटादिभेदसंशयविपर्ययादर्शनात् यत्रापि स्थाण्वादौ पुरुषत्वादिसंशयस्तत्रापि तद्व्यतिरिक्तप्रतियोगिनां सद्भावात्। ननु भेदज्ञानं प्रतियोग्यंशे संस्कारसापेक्षत्वात्स्मृतिरूपमस्तु प्रत्यभिज्ञानमिव तत्तांश इति चेन्न तथापि भेदागतप्रतियोगिवैशिष्ट्यांशे तदभावात्। नचायं भेदप्रतियोगिवैशिष्ट्यगोचरानुमित्या तत्संस्कारसम्भवः भेदज्ञानं विना अनुमानप्रवृत्त्ययोगेनात्माश्रयापत्तेः। अस्तु तर्हि भेदांश इव प्रतियोगिवैशिष्ट्यांशेऽपि प्रत्यक्षत्वं तद्वैशिष्ट्यप्रत्यक्षायोगात्। सम्बन्धिद्वयप्रत्यक्षं विना सम्बन्धप्रत्यक्षासम्भवात्। तस्मात्प्रत्यक्षायोग्यस्य प्रतियोगिनो भ्रान्तिरूपप्रतिभास इति तदेकवित्तिवेद्यत्वनियतस्य भेदस्य भेदैकवित्तिवेद्यत्वनियतस्य घटादेश्च भ्रमैकविषयत्वात्प्रत्यक्षं निर्विशेषसन्मात्रग्राहीति तदिदमनूद्य प्रतिवन्द्या दूषयति। क्रमयौगपद्यादीति। भ्रान्तिविकल्पः। शुक्तिकारजतरज्जुसर्पादिविकल्पः। समानमिति। तत्रापि धर्मिभेदयोः युगपद्ग्रहो न सम्भवति धर्मिप्रतियोगिनोः पूर्वग्रहाभावात्। एकैव वृत्तिः प्रथमं धर्मिणं विषयीकृत्य पश्चाद्भेदं विषयीकरोतीति क्रमग्रहोऽप्यनुपपन्नः विरम्य व्यापारप्रसङ्गादित्यर्थः। विरम्य व्यापर्तुमित्यत्र पृङ् व्यायाम इति धातोर्ह्रस्वऋवर्णान्तत्वेनानिट्त्वात् नियमतोव्याङ्पूर्वात्तस्मात्तुमुनि व्यापर्तुमिति रूपम्। ननु पूर्वा वृत्तिर्धर्मिणं विषयीकरोति द्वितीया वृत्तिस्तु भेदमतो न विरम्य व्यापारप्रसङ्ग इत्यत आह। नचेति। उत्तरज्ञानमिति शेषः। अयं भावः। उत्तरज्ञानकाले पूर्वज्ञानस्य क्षणिकत्वेन नष्टत्वादुत्तरज्ञानस्य धर्मिणमविषयीकृत्य भेदमात्रविषयकत्वमननुभूतमसम्भवि चेति। नन्वेकैववृत्तिर्धर्मिभेदौ युगपदेव विषयीकरोत्यतो न विरम्य व्यापारादिदोष

योगिग्रहणाभावे भेदग्रहणं मन्यसे तथापि यदि कल्पना भेदविशिष्टं युगपद्गृह्णाति का प्रत्यक्षे सर्पमृतिः। अतो धर्मिवद्योग्यत्वात् जात्यादिरूपभेदोऽपि युगपद्ग्राह्यः। अभेद इव भेदोऽपि स्वरूपतः प्रतीतौ न प्रतियोगिसाकाङ्क्षः। भेदव्यवहारस्तु अभेदव्यवहारवत् तत्साकाङ्क्षः। अतः प्रथममेव भेदधीर्युक्ता अत एव धर्मधर्मिणोः धर्मिप्रतियोगिनोरन्येषां च प्रतीताव-

---

इत्यत आह। नच स्वयमिति। अस्माभिरिव त्वया धर्मिप्रतियोगिज्ञाननैरपेक्ष्येण भेदग्रहस्यानभ्युपेतत्वादित्यर्थः। ननु भ्रान्तिधर्मिज्ञाननैरपेक्ष्येण भेदविशिष्टं धर्मिणं युगपद्गृह्णातीत्यभ्युपगम्यत इति चेत्तर्हि प्रमायामपि तथाभ्युपगमे को दोष इत्याह। तथापीति। सर्पमृतिरिति। प्रत्यक्षप्रमाणं भेदांशे न सर्पदष्टमित्यर्थः। तथा च प्रत्यक्षप्रमाणेनापि धर्मिभेदयोर्युगपद्ग्रहणमनिवारणीयमित्युक्तं भवति। प्रतिवन्द्या अनुत्तरत्वं मन्वानं प्रति भेदग्रहमुपपादयति। अत इति। भेदज्ञाने न प्रतियोगिज्ञानापेक्षेति सदृष्टान्तमुपपादयति। अभेद इवेति। प्रतियोगिज्ञानस्योपयोगमाह। भेदव्यवहारास्त्विति। भेदो नाम घटत्वादिर्वा अतिरिक्तो वा। आद्ये घटज्ञानादेव भेदव्यवहारापत्तिः घटो भिन्न इत्यनयोः शब्दयोः पर्यायत्वेन सह प्रयोगानुपपत्तिश्च। अन्त्ये घटे घटत्वभेदस्य घटत्वे घटभेदस्य च ग्रहे अन्योऽन्याश्रयप्रसङ्गः। भेदज्ञाने प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानस्य परस्परज्ञानहेतुत्वात्। इत्थमेव घटनिष्ठभेदप्रतियोगिनां पटादीनां स्वस्वधर्मप्रतियोगिकानां धर्मिधर्मनिष्ठानां भेदानां ग्रहेऽन्योऽन्याश्रयप्रसङ्गश्च। धर्माणां धर्मिणां च परस्परव्यावर्तकत्वात्। तदुक्तं श्रुतप्रकाशिकायां "धर्मेण धर्मी सविशेषः धर्मिणा धर्मः सविशेष" इति परोक्तान्योऽन्याश्रयप्रकारा अतिरिक्तभेदानङ्गीकारादेव निरस्ता इत्याह। अत एवेति। यतोऽतिरिक्तभेदो नाभ्युपगम्यते घटत्वादिधर्मरूपे च भेदे ज्ञायमाने न प्रतियोगिज्ञानापेक्षा अत एवेत्यर्थः। नच घटज्ञानादेव भेदव्यवहारापातः भेदव्यवहारस्य प्रतियोगिज्ञानसापेक्षत्वात्।

न्योऽन्याश्रयो निरस्तः । ततश्च व्युत्पत्तेस्तद्व्यवहारेऽपि न तत्प्रसङ्गः । भेदशब्देन व्यवहारस्य तु प्रतिसम्बन्धिनिरूपिताकारे व्युत्पन्नत्वात्तदपेक्षा । भेदत्वं हि भेदानां प्रतियोगिना निरूप्यं न तु जात्यादिलक्षणं स्वरूपम् । यद्ग्रहो यत्र यदारोपविरोधी स हि तस्य तस्माद्भेदः । गोत्वादि च गृह्यमाणं स्वस्मिन् स्वाश्रये चाश्वत्वाद्यारोपं निरुणद्धीति स्वस्य स्वाश्रयस्य स्वयमेव तस्माद्भेदः । अपि च प्रतियोगिसापेक्षत्वनिरपेक्षत्वलक्षणविरुद्धधर्माध्यासेन भेदात् स्वरूपभेदग्रहणैक्यं न सम्भवतीति वदन् भेददूषणार्थमेव भेदं साधयतीति स्ववचनविरोध

नच सहप्रयोगानुपपत्तिः । भेदत्वस्याधिकस्य भिन्नव्यवहारविषयत्वादिति द्रष्टव्यम् । ततश्चेति । पूर्वोक्तप्रकारेण भेदज्ञानादेव घटपटादिशब्दव्युत्पत्तिसम्भवादित्यर्थः । ननु व्यवहारस्य व्यवहर्तव्यज्ञानातिरिक्तज्ञानानपेक्षत्वात् भेदव्यवहारे प्रतियोगिज्ञानापेक्षा न स्यादित्याशङ्क्य इदमापादनं घटपटादिशब्देन भेदव्यवहारे उत भेदशब्देन तद्व्यवहारे । आद्ये इष्टापत्तिमभिप्रेत्य द्वितीये परिहारमाह । भेदशब्देनेति । प्रतिसम्बन्धिनिरूपिताकारो भेदत्वमत एवाह । भेदत्वं हीति । ननु धर्मभेदौ परस्परभिन्नौ प्रतियोगिसापेक्षत्वानिरपेक्षत्वरूपाविरुद्धधर्माध्यासादित्यनेन घटत्वादिधर्माद्यपेक्षया भेदसिद्धेर्न धर्मस्यैव भेदत्वमिति पक्षो न युज्यत इत्याह । अपि चेति । भेदग्राहिसविकल्पकस्याप्रामाण्यं वक्तुं भेद इति कश्चनपदार्थो नास्तीति धर्मस्वरूपतद्व्यतिरेकादिविकल्पेन समर्थयन् कथं धर्मे भेदप्रतियोगिकभेदं साधयेत् तथात्वे भेदस्य क्वचित् प्रामाणिकतया तद्ग्राहिसविकल्पकस्य प्रामाण्यप्रसङ्गाद्व्याघात इत्यर्थः । घटत्वादिधर्मरूपभेदस्य न प्रतियोग्यपेक्षा किन्तु तन्निष्ठभेदत्वस्य तथा च हेतोरसिद्धिरित्यपि द्रष्टव्यम् । ये कुदृष्टयः "तद्धास्य विजज्ञौ, तमसः पारं दर्शयति, आचार्यवान् पुरुषो वेद, तस्य तावदेव चिरं यावन्न विमोक्ष्ये"

(१ तमस इति छान्दोग्ये सप्तमप्रपाठके वर्तते ।

इति । शब्दजन्यमपि प्रत्यक्षमस्तीति त एव वर्णयन्ति तदप्ययुक्तम् । व्याघातात् । न हि परोक्षजननस्वभावतया सिद्धा सामग्री विशेषाभावे कचित्स्वभावमतिपतेत् । न चैकजातीयसामग्रीतः प्रसूतं कार्यं विचित्रं स्यात् । एकयैव सामग्र्या सर्वजातीयोत्पत्तिप्रसङ्गात् । एकस्य कार्यस्य विरुद्धजातियोग-

इत्यादिश्रुतिष्वाचार्योपदेशानन्तरमेव ब्रह्मसाक्षात्कारोदयजविनन्मुक्तिश्रवणात् "वेदान्तविज्ञानसुनिश्चितार्था" इति ज्ञानान्तरनैरपेक्ष्यश्रवणात् "तं त्वौपनिषद"मिति ब्रह्मण उपनिषदेकगम्यत्वश्रवणाच्च औपनिषदं वाक्यमेव ब्रह्मसाक्षात्कारे कारणम् । ननु शब्दस्य परोक्षज्ञानजनकस्वभावस्य कथमपरोक्षज्ञानजनकत्वमिति चेन्न दशमस्त्वमसि संवित्स्वप्रकाशा इत्यादौ अपरोक्षार्थविषयके वाक्ये ऽपरोक्षज्ञानजनकत्वदर्शनात् । अपरोक्षार्थविषयकत्वमेव हि ज्ञानस्यापारोक्ष्यं नाम अन्यानिरुक्तेः अर्थापरोक्षं तु नापरोक्षज्ञानविषयत्वं येनान्योन्याश्रयो भवेत् । किन्तु तत्तत्पुरुषीयचैतन्याभेदः । अन्तः करणतद्धर्माणां साक्षिणि कल्पिततया तदभेदसत्त्वात् । बाह्यचैतन्यकल्पितानां घटादीनां बाह्यचैतन्यवृत्तिकृततत्तत् पुरुषीयचैतन्याभेदाभिव्यक्त्या तदभेदसत्वाच्च न काप्यव्याप्तिः । एवं च सर्वदा सर्वपुरुषचैतन्याभिन्नत्वात् "यत्साक्षादपरोक्षाद्ब्रह्म"इति श्रुत्युक्तरीत्या स्वत एवापरोक्षं ब्रह्मेति अपरोक्षार्थविषयत्वात् तत्त्वमस्यादिवाक्यानामपरोक्षज्ञानजनकत्वसम्भवादित्याहुः तदभिमतं शाब्दापरोक्षं निराकर्तुमनुवदति । शब्दजन्यमपीति । त एव । पूर्वोक्ताः कुदृष्टय एव । व्याघातादिति । अज्ञातकारणजन्यत्वस्य प्रत्यक्षत्वस्य ज्ञातकारणके शाब्दज्ञानेऽवृत्तेः तथात्वे भावाभावयोरेकत्र समावेशप्रसङ्गादित्यर्थः । परोक्षज्ञानरूपस्मृतिजनकसंस्कारस्यापरोक्षप्रत्यभिज्ञाजनकत्वं दृष्टमित्यत आह । विशेषाभाव इति । तत्रेन्द्रियसहकारित्वरूपविशेषसत्त्वेन स्मृताविव स्वातन्त्र्याभावादपरोक्षज्ञानजनकत्वम् । अत्र तु

(१) छांदोग्ये षष्ठाध्याये चतुर्दशखण्डे । (२) यदिति । बृहदारण्यके तृतीयाध्यायचतुर्थब्राह्मणे ।

प्रसङ्गाच्च । दमस्त्वमसीत्यादिदृष्टान्तेऽपि त्वमर्थमात्रं प्रत्यक्षं दशमोऽहमिति प्रत्ययो हि नेन्द्रियस्वातन्त्र्येणोदेति । किं तु पुरुषवचनानुरोधेन । तन्मूलेऽपि चेत्प्रत्यक्षता एवं धर्मवांस्त्वमसीति कार्तान्तिकोपदेशादौ तादृशोऽहमस्मीति बोधे धर्मादेरपि प्रत्यक्षत्वप्रसङ्गः । ततश्चाप्रत्यक्षमिति जगति किञ्चिन्न स्यात् । प्रत्यक्षभूतं यत्किञ्चिदुद्दिश्य विशेषणतयैव सर्वस्य प्रत्यक्षत्वोपपत्तेः । पूर्वावगतदशमभावं तु पुरुषं प्रत्युपदेशे

---

शब्दस्येन्द्रियसहभावः एक एवेति घटसामग्र्या पटादीनां सर्वेषामुत्पत्तिप्रसङ्गादित्यर्थः । एकस्येति । घटसामग्रीप्रसूतस्य पटत्वादिजातियोगप्रसङ्ग इत्यर्थः । तत्त्वमस्यादिशब्दः स्वविषयगोचरप्रत्यक्षजनकः स्वतोऽपरोक्षार्थगोचरत्वात् दशमस्त्वमसि संवित्स्वप्रकाशेति वाक्यवदित्यनुमाने दृष्टान्तासिद्धिमाह । दशमस्त्वमसीति । अयमुपदेश अवगतदशमभावं प्रति वा अनवगतदशमभावं प्रति वेति विकल्प्यान्त्य आह । त्वमर्थमात्रमिति । नेन्द्रियस्वातन्त्र्येणेति । तथात्वे आप्तोक्तेः पूर्वमपि दशमोऽहमिति प्रत्यक्षापत्तेरित्यर्थः । तन्मूलेऽपि चेदिति । विशेष्यांशे चक्षुषः सन्निकर्षयोग्यतासद्भावमात्रेण शब्दजन्येऽपि ज्ञाने यदि प्रत्यक्षत्वमभ्युपगम्यत इत्यर्थः । कार्तान्तिकः ज्यौतिषिकः । इष्टापत्तिं निरस्यति । ततश्चेति । आद्य आह । पूर्वेति । स्याद्वा न वेति । वस्तुतः शब्दजन्ये ज्ञाने ऽपरोक्षत्वव्यवहारोऽसम्भावित इत्यर्थः । घटमानयेति वाक्ये व्यभिचारवारणाय स्वतोऽपरोक्षेति पदमर्थविशेषणं स्वप्रकाशेत्यादीत्यादिपदेन दशमस्त्वमसि सुखी त्वमसीत्यादिवाक्य परिग्रहः इत्याद्यनुमानानीत्यादिपदेन विगीतं ज्ञानं साक्षात्कारि तत्त्वमस्यादिवाक्यजन्यज्ञानत्वात् तद्वाक्यगोचरश्रावणप्रत्यक्षवत् तत्रैव प्रतिज्ञायामपरोक्षविषयत्वात् सुखादिज्ञानवत् अपरोक्षत्वं तत्त्वमस्यादिवाक्यजन्यज्ञानवृत्ति अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात् ज्ञानत्ववदित्यादीनि शतदूषण्यां प्रपञ्चितानि गृह्यन्ते । स्वानुमाने ऽप्रयोजकत्वमुद्धरति । उपलम्भेति । शब्दादमुमर्थं

माषराशिप्रविष्टमसीन्यायेन पूर्वापरापरोक्षधीनैरन्तर्येण मध्यवर्तिशब्दजन्यधियोऽपरोक्षत्वव्यवहारः कस्यचित्स्याद्वा न वा। अत एव तत्त्वमस्यादिशब्दः स्वविषयगोचरप्रत्यक्षज्ञानजनकः स्वतोऽपरोक्षार्थगोचरत्वात् संवित्स्वप्रकाशेत्यादिवाक्यवदित्याद्यनुमानानि निरस्तानि। दशमत्वस्वप्रकाशत्वादिविशिष्टाकारेण दृष्टान्तेष्वपरोक्षज्ञानजननासिद्धेः। तथा विगीतः शब्दो न स्ववाच्यगोचरप्रत्यक्षधीजनकः शब्दत्वात् संप्रतिपन्नवदित्याद्यपि प्रतिप्रयोक्तव्यम्। उपलम्भविरोधः शब्दप्रत्यक्षलक्षणसंकरादिप्रसङ्गोऽत्र विपक्षे बाधकः। नैवं पूर्वस्य शब्दजन्यप्रत्यक्षमन्तरेणापि योगजादृष्टजनितसाक्षात्कारात् प्र-

---

प्रत्येमीति परोक्षत्वानुभवविरोध इत्यर्थः। शब्दप्रत्यक्षलक्षणसंकरः एकस्यैव ज्ञानस्य शब्दत्वप्रत्यक्षत्वयोरङ्गीकारे शब्दप्रत्यक्षलक्षणयोः संकरप्रसङ्गेन लक्षणत्वमेव न स्यादित्यर्थः। आदिपदेनैकयैव सामग्र्या सर्वजातीयोत्पत्तिप्रसङ्गादिपूर्वोक्तबाधकतर्का गृह्यन्ते। पूर्वोक्तेन परानुमानेन स्वानुमानस्य सत्प्रतिपक्षत्वं वारयति। नैवं पूर्वस्येति। पूर्वोक्तस्य त्वदुक्तानुमानस्यैव विपक्षे बाधका न सन्तीत्यर्थः। तथा च दुर्बलत्वान्न तेन प्रतिरोध इति भावः। नन्वेवं शब्दजन्यसाक्षात्कारानङ्गीकारे "निचाय्य तं मृत्युमुखात्प्रमुच्यते,[1] क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावर"[2] इत्यादिशास्त्रसिद्धमोक्षजनकप्रत्यक्षस्य प्रकारान्तरेणासम्भवात् मोक्ष एव न स्यादित्यत आह। शब्दजन्यप्रत्यक्षमन्तरेणापीति। योगजेति। अस्ति च योगिप्रत्यक्षमदृष्टविशेषसहकृतान्तःकरणजन्यमागमसमाधिजन्यमास्तिकानाम्। श्रूयते हि "योगो द्वितीयमभिवीक्षणाय"इति चक्षुरित्यनुषज्यते। रामायणे च।

रहस्यं[3] च प्रकाशं च यद्वृत्तं तस्य धीमतः।

---

(१) निचाय्येति। कठोपनिषदि प्रथमाध्याये तृतीयवल्ल्याम्।

(२) क्षीयन्ते इति मुण्डके द्वितीये द्वितीयखण्डे।

(३) रहस्यमिति। रामायणे बालकाण्डे द्वितीयसर्गे।

णिधानविशेषप्रसादितपरमात्मसंकल्पाद्वा निःश्रेयससिद्धेरिति।

प्रत्यक्षं चिदचिन्मयं जगदिदं यस्येत्यनुश्रूयते।
यश्चानन्यधियामनन्तविभवः प्रत्यक्षतामश्नुते॥

---

तत्सर्वं धर्मवीर्येण यथावत्सम्प्रपश्यसि, इति।

यद्यपि योगिप्रत्यक्षं फलमात्रमित्यस्मन्मतं तथापि तदधीनायाः परिशेषासिद्धेः अन्यथा सिद्धेश्चोपन्यासोऽनुपपन्नः।

क्लृप्तकल्प्यविरोधे तु युक्तः क्लृप्तपरिग्रहः।

इत्याचार्यैरनुगृहीतम्। प्रणिधानम्। उपासनं तत्र विशेषः दर्शनसमानाकारत्वं तथा च भाषितम्। "सा च स्मृतिर्दर्शनसमानाकारा।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।

इत्यनेनैकार्थ्यात्। एवं च सति "आत्मा वारे द्रष्टव्य" इत्यनेन निदिध्यासनस्य दर्शनरूपता विधीयते। भवति च स्मृतेर्भावनाप्रकर्षाद्दर्शनरूपता" इति। निःश्रेयससिद्धेरिति। नैवं पूर्वस्येत्यनेनान्वयः। इत्थं प्रतिपादितं प्रत्यक्षवैविध्यं संग्रहेण दर्शयन् "मंगलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते अध्येतारश्च वीरपुरुषा भवन्ति" इत्यभियुक्तवचनानुसारेण भगवत्प्रार्थनारूपं मङ्गलमाचरति। प्रत्यक्षमिति। तत्तत्पुरुषप्रत्यक्षगोचरश्चिदचिदात्मकः प्रपञ्चो यस्य शेषभूत इत्यनुश्रूयते "यस्यात्मा शरीरं यस्य पृथिवी शरीरम्" इत्यादिनाम्नायते। एतेनास्मदादिजन्यप्रत्यक्षमुक्तं भवति। यश्चानन्तविभवः। लीलाभोगविभूतिरूपापरिच्छिन्नविभवयुक्तः। अनन्यधियाम्। शब्दादिविषयवैमुख्येन स्वैकोपासकानां प्रह्लादवामदेवादीनां प्रत्यक्षतां योगजप्रत्यक्षविषयतामश्नुते भजते। एतेन योगजं प्रत्यक्षमुक्तं भवति। यश्चैकः समाभ्यधिकरहितः सन् विश्वं चिदचिदात्मकप्रपञ्चं युगपत्कालभेदमन्तरेण

---

(१) भाषितमिति। ब्रह्मसूत्रश्रीरामानुजभाष्ये जिज्ञासाधिकरणारम्भे।
(२) बृहदारण्यके द्वितीयाध्याये चतुर्थ ब्राह्मणे।
(३) मङ्गलेत्यादि। व्याकरण महाभाष्ये द्वितीयाह्निके वृद्धिरादैजिति सूत्र व्याख्याने।

यश्चैको युगपत्सदा स्वत इदं विश्वं दरीदृश्यते ।
प्राज्ञं तं प्रतिपन्नमोक्षणविधादक्षं दिदृक्षेमहि ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ प्रत्यक्षाध्याये द्वितीयमान्हिकम् ॥ १ ॥ २ ॥

समाप्तः प्रथमाध्यायः ।

---

सदा तथैव सर्वेषु कालेषु स्वतः स्वाधीनतया अनेन विशेषणत्रयेण क्रमेण बद्धमुक्तनित्यानामयुगपदागन्तुकान्याधीनानित्यप्रत्यक्षाणि व्यावर्त्यन्ते । अनेन व्यावर्तनेन च व्यावर्त्यानां प्रत्यक्षाणां प्रकारभेदो ऽर्थादुक्तो भवति । दरीदृश्यते । भृशं पश्यति । "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति यङि द्विर्वचनात्मनेपदरीगागमेषु च दरीदृश्यत इतिरूपम् । अनेन नित्यप्रत्यक्षमुक्तं भवति । प्रतिपन्नानां प्रतिबुद्धानां मोक्षणविधायां संसारनिवर्त्तनरूपायां क्रियायां स्वेन "मोक्षयिष्यामि नेयामि परमां गतिम् ।

अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम इति—

प्रतिज्ञातसंसारनिवर्तनपूर्वकपरमपुरुषार्थप्रापणप्रकारे वा दक्षं चतुरम् । तम् । पूर्ववाक्यत्रयप्रतिपादितप्रकारविशिष्टम् । प्राज्ञम् । "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" "प्रज्ञेनात्मना संपरिष्वक्त" इत्यादिप्रमाणप्रतिपन्नप्रकृष्टज्ञानशालिनं भगवन्तं पुरुषोत्तमं दिदृक्षेमहीति लिङा इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधीयते "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सनि "ज्ञाश्रुस्मृदृशां सन" इत्यात्मनेपदम् । अनेन मुक्तिकालभाविनः "सदा पश्यन्ति सूरय" इति प्रार्थनेन पृथङ्मुक्तप्रत्यक्षमप्युक्तं भवति ।

इति श्रीमद्वेदान्ताचार्य्यसूनुना श्रीनिवासदासेन विरचितायां न्यायपरिशुद्धिव्याख्यायां न्यायसारसमाख्यायां प्रत्यक्षाध्याये द्वितीयमाह्निकम् ॥ १ ॥ २ ॥

समाप्तश्चाध्यायः प्रथमः ।

---

( १ ) मोक्षयिष्यामीतिगीतायाम् । ( २ ) नयामीति वाराहे ।
( ३ ) अभयमिति । रामायणेलंकायुद्धकाण्डेविभीषणशरणागतौ ।
( ४ ) तद्गुणेति । ब्रह्मसूत्रेषु द्वितीयाध्याये तृतीयपादे एकोनत्रिंशं सूत्रम् ।

अथ प्रत्यक्षमूलत्वादागमज्येष्ठभावतः ।
तयोरन्तरतः साङ्गमनुमानं प्रसाध्यते ॥
व्याप्यस्य व्याप्यत्वानुसंधानाद्व्यापकविशेषप्रमितिरनुमान-

---

श्रीमते रामानुजाय नमः ।

यस्य प्रत्यक्षमिदं विश्वं चिदचिन्मयं हयास्यस्य ।
यस्याध्यक्षोऽयमिमं निगमान्तगुरुं निरीक्षिषीय सदा ॥

सङ्गतिं दर्शयन्ननुमाननिरूपणं प्रतिजानीते । अथेति । जातमात्रस्य प्रमाणान्तरसाचिव्यानपेक्षं प्रत्यक्षं प्रथमं प्रवर्तते ततः पक्षे हेतुव्याप्त्यादिग्रहे सति पश्चादनुमानं भवति । तेन प्रयोज्यप्रयोजकवृद्धव्यवहारदर्शनाधीनशक्तिग्रहे सति शाब्दमुदेतीति लोकमर्यादानुसारेण प्रत्यक्षस्य प्रथमं निरूपणं कृतम् तदधीनस्यानुमानस्येदानीं निरूपणं क्रियते करिष्यते चैतदधीनस्य शब्दस्येति प्रत्यक्षशाब्दयोर्मध्येऽनुमानस्य निरूपणं सङ्गतमेवेति भावः । एतेनानुमानाधीनप्रत्यक्षे क्वचिदनुमानस्यापि हेतुत्वमस्तीति तन्निरूपणस्य प्राथम्यं किन्न स्यादित्यादि चोद्यानि निरस्तानि वेदितव्यानि । व्याप्तिपक्षधर्मतोपाधिभूयोदर्शनावयवतर्कहेत्वाभासच्छलजातिनिग्रहस्थानादिनिरूपणस्यात्राध्याये क्रियमाणस्यासङ्गतिं परिहरति । साङ्गमिति । तेषामनुमानोपकारकत्वान्निरूपणमत्र सङ्गतमेवेति भावः । तेषामुपकारप्रकारश्च तत्तदवसरे प्रदर्शयिष्यते । अनुमानस्य लक्षणमाह । व्याप्यस्येति । अव्याप्ये धूलीपटलादौ व्याप्यत्वज्ञानाज्जायमानायां वह्न्याद्यनुमितावतिव्याप्तिवारणाय व्याप्यस्येत्युक्तम् । तस्या भ्रमत्वादसंग्रहः । व्याप्यत्वाभावज्ञाने व्याप्यत्वज्ञानस्य प्रतियोगिज्ञानतया हेतुत्वात्तत्रातिव्याप्तिवारणाय व्यापकपदम् । संशयोत्तरप्रत्यक्षेऽतिव्याप्तिवारणाय विशेषपदम् । तेनेन्द्रियासन्निकृष्टत्वं विवक्षितमिति तत्र करादिव्यापकस्य पुरुषस्येन्द्रियसन्निकृष्टत्वान्नातिव्याप्तिः । प्रमितिपदं ज्ञानसामान्यपरं न यथार्थज्ञानपरं भ्रान्तानुमितेर्व्याप्यस्येत्यनेनैव व्यावृत्तत्वेन यथार्थव्यावर्त्याभावादिति बोध्यम् । अत्र चिन्त्यते । संशयोत्तरप्रत्यक्षेऽतिव्याप्तिवारणाय विशेषपदं न

मू। तत् प्रमाणं करणदोषबाधकप्रत्ययरहितत्वात्। किंच।

---

देयम्। तत्र करादिव्याप्यज्ञानाद्व्यापकानुमितेरेवोदयात्। ननु प्रत्यक्षसामग्रीसत्त्वे कथमनुमित्युदय इति चेन्न तस्याः प्रत्यक्षसामग्र्याः संशायकत्वेन प्रत्यक्षनिश्चयसामग्र्यभावात्। अन्यथा व्याप्यदर्शनमन्तरेणैव कुतो न प्रत्यक्षनिर्णयः। अस्तु वा प्रत्यक्षसामग्री तथापि परामर्शानन्तरं पक्षादिप्रत्यक्षपरिहारायानुमितिसामग्र्या बलवत्त्वस्य क्लृप्ततयानुमितेरेवोदयात्। न च भिन्नविषये सा बलवतीति वाच्यम्। भिन्नत्वविशेषणे गौरवेण तथात्वाकल्पनात्। न च प्रत्यक्षसंशयानन्तरं व्याप्यदर्शनाधीनपुरुषत्वादिनिश्चय इमं साक्षात्करोमीत्यनुभवात्प्रत्यक्षमेव तत्र जायत इति वाच्यम्। करादिमत्तया पुरुषमनुमिनोमीत्येव तत्र निपुणानामनुभवात्। साक्षात्करोमीत्यनुभवस्य चानुमित्या संशये निरस्ते ऽनन्तरभाविप्रत्यक्षविषयत्वसम्भवात्। अनिपुणानां तु माषराशिप्रविष्टमसीखण्डे माषत्वव्यवहारवत् पूर्वापरप्रत्यक्षमध्यवर्तिन्यामनुमितावपि प्रत्यक्षव्यवहारसम्भवात्। तथाचानुगृहीतमाचार्यैरेव शाब्दापरोक्षखण्डने "पूर्वापरापरोक्षधीनैरन्तर्येण मध्यवर्तिशब्दजन्यधियोऽपरोक्षत्वव्यवहारः कस्यचित्स्याद्वा नवा" इति। एवं च सति विशेषपदमुपनयावान्तरवाक्यार्थज्ञानजन्ये न्यायजन्ये महावाक्यार्थज्ञाने व्यापकाविषयेऽतिव्याप्तिवारणाय प्रतीतिविशेषणम्। विशेषप्रमितिः। प्रमितिविशेषः। शब्दज्ञानान्या प्रतीतिरित्यर्थः। अतो न पूर्वोक्तातिव्याप्तिरित्यलं बहुना। अनुमानाप्रामाण्यवादिनं चार्वाकं प्रत्यनुमानप्रामाण्यं साधयति। तत् प्रमाणमिति। अनुमानस्याप्रामाण्यं वदन्वादी प्रष्टव्यः। अनुमितिरेव स्वरूपतो नास्तीत्युच्यते उत सा यथार्था न भवतीति। यद्वा संशयात्मिकेति विकल्प्याद्ये धूमादिभ्यो वह्न्यादीन् प्रतीत्य तदर्थं प्रवर्तमाना एव प्रतिवक्तार इति हृदि निधाय द्वितीयं निराकरोति। करणदोषबाधकप्रत्ययरहितत्वादिति। अनुमानाप्रामाण्यवादिनं प्रति हेतूपन्यासो न सम्भवतीत्यस्वरसादाह। किञ्चेति। अनुमानस्याप्रामाण्यं न बहिरिन्द्रियैर्ज्ञातुं शक्यते। तेषामान्तरपदार्थग्रहणाशक्तत्वात्। न मनसा मानसाध्यक्षभङ्गात्।

अनुमानाप्रमाणत्वं नाध्यक्षेणैव गम्यते ।
नानुमानेन तेनैव तद्विरोधप्रसंगतः ॥
नच तत् संशयाकारं सर्वलोकाविरोधतः ।
नच किं चेति दुर्ज्ञानं तथात्वेनैव निर्णयात् ॥
संदेहादनुमेयादौ प्रवृत्तिरिति वादिनः ।
प्रत्यक्षेऽपि तथैव स्याद्बाधाबाधादिसाम्यतः ॥

---

अभङ्गेऽप्यप्रामाण्यस्य बहिर्विषयघटितशरीरस्य मनसा ग्रहणासम्भवात् । नानुमानेन अनुमानाप्रामाण्यसाधकानुमानस्य प्रामाण्ये सर्वानुमानाप्राण्यप्रतिज्ञाविरोधः । अप्रमाण्यानुमानस्य प्रामाण्यमेव सिध्यतीति साध्यविरोधश्च प्रसज्यत इत्यर्थः । तृतीयं निराकरोति । न चेति । सर्वलोकविरोधत इति । सर्वेषां जनानां लिङ्गादमुमर्थं निश्चिनोमीत्यनुभवव्यवहारयोस्तन्मूलकनिःशङ्कप्रवृत्तिनिवृत्त्योश्चासम्भवप्रसङ्गादित्यर्थः । नन्वनुमीयमाने वह्न्यादावित्थमिति परिमाणरूपादितत्तदसाधारणाकारस्यानिर्णयात् तस्य संदेहात्मकत्वमुच्यत इत्याशङ्कते । नच किञ्चेति । किंचिदिदमिति विशेषाकारविशिष्टत्वेन ज्ञातुमशक्यं वह्न्यादिकमित्यर्थः । परिहरति । तथात्वेनैव निर्णयादिति । व्यापकतावच्छेदकव्यतिरिक्तविशेषाकारानिर्णयाभावेऽपि व्यापतावच्छेदकावच्छिन्नसाध्यनिर्णयरूपत्वादनुमानस्य न संशयात्मकत्वमित्यर्थः । अन्यथा गुरुत्वाद्याकारानिर्णयात् प्रत्यक्षस्यापि संशयात्मकत्वं स्यात् । परिमाणस्य प्रत्यक्षत्वेऽपि इयदस्तीति परिमितिविशेषनिर्णयाभावात् तस्याप्यनिर्णयः स्यादिति बोध्यम् । अनुमानाधीनप्रवृत्तिनिवृत्त्योः संदेहादपि सम्भवेनानुमानस्य निश्चयत्वं न कल्प्यमित्यत आह । संदेहादिति । बाधाबाधादिसाम्यत इति । यथा प्रत्यक्षे निश्चिनोमीत्यनुभवस्य बाधकाभावेन तस्य निश्चयत्वं तथानुमितावपि निश्चिनोमीत्यनुभवस्य बाधकाभावेन तस्यापि निश्चयत्वमङ्गीकार्यम् । यदि च गौरवलक्षणबाधकबलेनानुमानस्य निश्चयत्वं न कल्प्यते तर्हि तत एव प्रत्यक्षस्यापि अनिश्चयत्वं किं न कल्प्यत इत्यर्थः । हेत्वभावादनुमानमेव नोदेतीति चार्वाकेणोक्तम्

यत्तु चार्वाकेणोच्यते ।
विशेषेऽनुगमाभावात्सामान्ये सिद्धसाधनात् ।
तद्वतोऽनुपपन्नत्वादनुमानकथा कुत इति ॥
अन्यत्र च ।
विशेषानुगमाभावात्सामान्ये सिद्धसाधनात् ।
अनुमाभङ्गपङ्केऽस्मिन्निमग्ना वादिदन्तिन इति ॥

तत् स्ववचनविरुद्धम् । अनुमाननिरासाय हेतूपन्यासात् । तस्य च हेतोः स्वसाध्यव्याप्त्यनभ्युपगमेऽनुमानस्य तेन बाधितुमशक्यत्वात् । अभ्युपगमे तत्रापि विशेषेऽनुगमाभाव इत्यादिप्रसंगात् ।

न व्याप्तिर्निर्णयायोगादिति व्याप्तमिदं न वा ।

---

तुवदति । विशेषेऽनुगमाभावादिति । ननु व्यापकविशेषोऽनुमीयते उत व्यापकसामान्यम् विशेषस्य पक्षसंबन्धिनः पूर्वमज्ञानेन तन्निरूपितव्याप्तेरज्ञानात् तदननुमानात् न प्रथमः। व्यापकसामान्यस्य व्याप्तिग्रहदशायामेव गृहीतत्वात् सिद्धसाधनेनानुमानं नोदेतीति द्वितीयपक्षोऽप्यनुपपन्न इत्युभयथापि पक्षस्य साध्यवत्त्वज्ञानमशक्योपपादनमित्यनुमानप्रसक्तिरसम्भाविनीत्यर्थः । अन्यत्र चेति। चार्वाकेणैव प्रकारान्तरेण कथितमित्यर्थः। अन्यत्र चेत्यत्र उच्यत इत्यनुषज्ज्यते। अनुमाभङ्गपङ्क इति। अस्मिन् विकल्प्याभिहितेऽनुमानभङ्गरूपे कर्दमेऽनुमानप्रामाण्यवादिन एव गजा निमग्ना इत्यर्थः । स्ववचनविरोधमेवोपपादयति । अनुमाननिरासाय हेतूपन्यासादिति । अनुगमाभावात् सिद्धसाधनात् तद्वतोऽनुपपन्नत्वादित्यादिहेतूनां साध्यसाधकत्वासाधकत्वयोरस्मदिष्टसिद्धेश्चार्वाकस्य प्रतिज्ञाविरोध इत्यर्थः । ननु हेतुसाध्ययोर्नियतसम्बन्धरूपा व्याप्तिरेव नास्ति शतशः सहचरितयोरपि पार्थिवत्वलोहलेख्यत्वयोः वज्रमणौ व्यभिचारदर्शनेन सर्वत्रापि व्यभिचारसम्भवेन नियमायोगादित्यत आह । न व्याप्तिरिति । कुत्रापि व्याप्तिरेव नास्ति नियमायोगादिति त्वदुक्तयोर्हेतुसाध्य-

व्याप्तं चेत्स्वीकृता व्याप्तिर्न व्याप्तं चेन्न दूषणम् ॥
सर्वस्य व्यभिचारित्वे व्यभिचारो न सिध्यति ।
एकस्याव्यभिचारित्वे न सर्वव्यभिचारिता ॥

ततश्च सामान्यसिद्धैव व्याप्तिर्हेतोः पक्षधर्मताख्यसहकारिसाहित्यात् साध्यविशेषमुपस्थापयतीति दर्शनबलादभ्युपेत्यम् । अप्रमाणत्वपक्षेऽप्यन्वयव्यतिरेकावासिता सैव हि सामग्री । अन्यथानुमानतो विशेषप्रतीतिमात्रस्याप्यनुदयप्रसंगात् । यथा च सामान्यधीः सामग्रीमध्यपातिनी विशेषबुभुत्सा-

---

थोर्व्याप्तिरस्ति न वा । आद्ये व्याप्तिस्वीकारापत्तिः अन्त्ये त्वदुक्तहेतोर्व्याप्यत्वाभावेनासाधकत्वाद्व्याप्तिनिरासो न भवतीत्यर्थः । सर्वो व्यभिचारी मेयत्वात् सम्प्रतिपन्नवदित्यादि परोक्तव्यभिचारसाधकानुमानानि दूषयति । सर्वस्येति । सर्वस्यापि व्यभिचारित्वे त्वदुक्तहेतोरपि व्यभिचारित्वेन साधानाक्षमत्वादुक्तसाध्यसिद्धिरेव नास्ति । त्वदुक्तहेतुमात्रस्याव्यभिचारित्वे तस्य सर्वपदार्थान्तर्गतत्वेन सर्वो व्यभिचारीति प्रतिज्ञाविरोध इत्यर्थः । प्रतिबन्द्या अनुत्तरत्वं मन्वानं प्रत्यनुमानहेतुं व्याप्तिग्रहमुपपादयति । ततश्चेति । सामान्यव्याप्तिज्ञानमेव पक्षधर्मताज्ञानरूपसहकारिविशेषसमवाहितं पक्षसम्बन्धिव्यापकमनुमापयतीत्यर्थः । अस्मिन्नर्थे प्रमाणमाह । दर्शनबलादिति । लोकानुभवस्यैव तत्र प्रमाणत्वमिति भावः । अप्रमाणत्वपक्ष इति । अनुमानस्य संशयात्मकत्वाङ्गीकारेऽपीत्यर्थः । सैव पक्षधर्मताधीसहकृता सामान्यव्याप्तिधीरेवेत्यर्थः । विशेषप्रतीतिमात्रस्यापीति । पक्षे साध्यसंशयस्यापीत्यर्थः । इयांस्तु विशेषः पक्षधर्मताधीसहकृता सामान्यतो व्याप्तिरेव पक्षे साध्यप्रतीतिं जनयतीति संशयानुमानवादिनाप्यङ्गीकार्यमेव । अन्यथा परोक्षसाध्यार्थप्रवृत्त्यनापत्तेः । सा साध्यप्रतीतिरनुभवरूपेत्यस्माभिः स्वीक्रियते त्वया तु संशयरूपेत्यनुमानमङ्गीक्रियते इति न सामान्यसिद्धिस्त्वया वक्तुं शक्येति भावः । सामान्यबुद्धेर्विशे-

दिहेतुस्तथा सर्वविशेषसंग्राहिसामान्यव्याप्तिधीरपि विशेषानुमितिहेतुरिति यथादर्शनमाद्रियेथाः । सा च साध्यविशेषपक्षसंबन्धमात्रात्मा अत्यन्तविद्भिरिष्यते । तदतिरिक्तविशेषानुमाने त्वनुगमाभावविरोधादयो दोषाः स्युः । अत एव च वयमत्यन्तातीन्द्रियवस्त्वनुमानं नेच्छामः । तदेतत्सूत्रकारैरेव "शास्त्रयोनित्वात्" इति जगत्कर्तुः शास्त्रैकप्रमाणकत्वं वदद्भिः प्रदर्शितम् । अस्त्वनुमानं प्रमाणं तथापि प्रत्यक्षान्तर्भूतं स्यादिति चेन्न साक्षादिन्द्रियव्यापारसाध्यत्वाभावात् । नापि लि-

---

षगोचरकार्यजनकत्वं सनिदर्शनमुपपादयति । यथा चेति । नन्वेवमनुमानस्य प्रमाणत्व ईश्वराद्यतीन्द्रियार्थसिद्धिरनुमानतोऽशक्येत्यभ्युपगमो विरुध्यत इत्यत आह । सा चेति । अन्यत्र प्रमाणान्तरसिद्धस्यैव वह्न्यादेः पक्षसम्बन्धमात्रमेव हेतोः पक्षधर्मताबलात्सिध्यति न त्वतीन्द्रियमिति वेदान्तनिष्णातैर्भाष्यकारादिभिरङ्गीक्रियते इत्यर्थः । अतीन्द्रियार्थानुमानाङ्गीकारे दोषमाह । अतिरिक्तेति । अत एव चेति । यतोऽत्यन्तातीन्द्रियानुमाने चार्वाकोक्ता विशेषानुगमाभावादयो दोषाः स्युरत एवेत्यर्थः । जगत्कर्तुः शास्त्रैकप्रमाणकत्वं वदद्भिः सूत्रकारैरेवानुमानस्यात्यन्तातीन्द्रियार्थे प्रामाण्यं नास्तीत्यर्थादुक्तमेवेत्याह । तदेतदिति । नन्वनुमानस्य प्रामाण्येऽपि न प्रमाणान्तरत्वं तस्य प्रत्यक्ष एवान्तर्भावसद्भावात् । तथा च प्रत्यक्षमेकमेव प्रमाणमिति मया प्रतिज्ञातमनुपहतमेवेति पुनरपि चार्वाकः प्रत्यवतिष्ठते । अस्त्विति । अनुमानस्य प्रत्यक्षत्वमिन्द्रियजन्यत्वेनैव वाच्यम् अन्यथाऽसम्भवात् । तत्र बहिरिन्द्रियजन्यत्वात् प्रत्यक्षत्वमुतान्तरिन्द्रियजन्यत्वात् । उभयत्रापि साक्षादिन्द्रियजन्यत्वात् उत सद्वारकतया तज्जन्यत्वादिति विकल्प्य न प्रथमद्वितीययोः प्रथमावित्याह । साक्षादिति । अन्तर्बहिरिन्द्रियाणां साध्येन सन्निकर्षाभावेन साध्यज्ञानस्य साक्षात्तदुभयजन्यत्वाभावादित्यर्थः । प्रथमद्वितीयमाशङ्क्य निराकरोति । नापीत्यादिना । स्मर्यमाणलिङ्गादिति । तत्र लिङ्गज्ञानस्य स्मृतिरूप-

ग्रहणावान्तरव्यापारद्वारेन्द्रियजम् । इन्द्रियव्यापारोपरमेऽपि स्मर्यमाणलिङ्गाद्व्यापकप्रतीतेः । नापि संस्कारादिप्रत्यासत्त्या मानसता । बाह्येन्द्रियग्राह्येष्वपि तत्तत्प्रत्यासत्त्या मानसप्रत्यक्षत्वप्रसंगात् । न चैतदिष्टम् । बाह्यान्तरप्रत्यक्षविभागायोगात् । बाह्यार्थेषु च मनसः स्वातन्त्र्यादर्शनात् । यत्परतन्त्रता मनसस्तत्पृथक् प्रमाणमित्युच्यते । वेद्यांशपारोक्ष्यं चानुमितेरैन्द्रियकत्वविरोधि । परंपरया प्रत्यक्षमूलत्वमात्रेण प्रत्यक्ष-

---

त्वेन बहिरिन्द्रियजन्यत्वाभावान्न द्वारत्वम् । तज्जन्यस्तज्जन्यजनकोऽवान्तरव्यापार इति ह्यवान्तरव्यापारलक्षणम् । तथा चान्यत्रापि न लिङ्गज्ञानस्य व्यापारत्वम् । अत्रैव व्यभिचारादिति भावः । द्वितीयद्वितीयमाशङ्क्य निराकरोति । नापीति । संस्कारादीत्यादिपदेन तज्जन्या व्याप्त्यादिस्मृतिर्गृह्यते । बाह्येन्द्रियग्राह्येष्वपीति । विषयेषु बाह्येन्द्रियसन्निकर्षाणामेव मनःप्रत्यासत्तित्वसम्भवेन बाह्येन्द्रियजन्यज्ञानानामपि मानसप्रत्यक्षत्वं स्यादित्यर्थः । इष्टापत्तिं परिहरति । नचेति । विभागायोगादिति । बाह्यान्तरप्रत्यक्षभेदस्य सर्वानुभवसिद्धस्याप्यपलापप्रसङ्गादित्यर्थः । ननु यदसाधारणं सहकार्यासाद्य मनो बहिर्गोचरां प्रमां जनयति तस्यैव प्रमाणान्तरत्वमिति चक्षुरादिबाह्येन्द्रियाणामपि पृथक्प्रामाण्यमस्तीति न बाह्यान्तरप्रत्यक्षविभागविरोध इति, यदि तर्हि व्याप्त्यादिज्ञानानामपि मनःसहकारिणां सिद्धं पृथक्प्रामाण्यमित्यभिप्रेत्याह । बाह्यार्थेष्वित्यादिना । नन्वनुमितेः स्वप्रकाशत्वेन स्वांशे प्रत्यक्षत्वस्य वक्तव्यत्वेनाविरोधाय वेद्यांशे प्रत्यक्षत्वमेवास्तु अतो नानुमानस्य बहिर्भाव इत्यत आह । वेद्यांशेति । धूमाद्वह्निं प्रत्येमि न पश्यामीत्यनुभवसिद्धेन वेद्यांशपारोक्ष्येण विरोधात् तत्प्रत्यक्षत्वमङ्गीकर्तुं न शक्यते अंशभेदश्च स्मृताविव वेद्यत्वांशयोः परोक्षत्वापरोक्षत्वविरोधं शमयतीत्यर्थः । ननु पूर्वं प्रमाणत्रैविध्योपपादनाय प्रत्यक्षादिमूलानां स्मृतीनां प्रत्यक्षाद्यन्तर्भावो दर्शितः तद्वदनुमानस्यापि प्रत्यक्षमूलत्वात् प्रत्यक्ष एवान्तर्भावः स्यादित्यत आह ।

त्वोपचारं तु न वारयामः। न चानुमितिः स्मृतिमात्रमिति वक्तुं शक्या। अधिकाविषयकत्वात्। न चानेकसंस्कारसम्भेदेन तत्। अनुभूतानेकस्मरणयौगपद्यसम्भवेऽपि वैशिष्ट्यविशेषस्याननुभूतस्य स्मृत्ययोगात्। शाब्दत्वं तु असम्भावितमेव। अतः सिद्धमनुमानं प्रमाणमिति। अनधिक-

---

प्रत्यक्षमूलत्वमात्रेणेति। प्रत्यक्षादिमूलासु स्मृतिषु गौणः प्रत्यक्षादिव्यवहार इष्ट एवेत्यर्थः। नन्वस्तु स्मृतावनुमानस्यान्तर्भावः स्मृतेश्चाप्रामणत्वात् प्रत्यक्षमेकमेवेति प्रतिज्ञाया न हानिरिति पुनरपि चार्वाकः शङ्कत तत्राह। नचेति। अधिकविषयत्वादिति। साध्यगोचरसंस्काराविषयपक्षविषयत्वादित्यर्थः। ननु पक्षसाध्योभयगोचरसंस्कारद्वयसम्भेदेन तदुभयगोचरा स्मृतिः स्यात् सैवानुमितिरित्याशङ्क्य परिहरति। नचेति। वैशिष्ट्यस्येति। पक्षसाध्यसंसर्गस्येत्यर्थः। ननु परार्थानुमानस्य न्यायमूलत्वात्तस्य शाब्देऽन्तर्भावः स्यादिति तटस्थशङ्कां निराकरोति। शाब्दत्वं त्विति। असम्भावितमिति। परार्थानुमानेऽपि न्यायमूलत्वाद्व्याप्तिपक्षधर्मताज्ञानादनुमितिरन्यैव जायते। तस्यां तु शाब्दत्वमसम्भावितमेवेत्यर्थः। अनुमितिलक्षणे व्याप्यव्यापकयोः प्रवेशादननुसंहितोपाधेरुपहितप्रत्ययायोगात् अनुमितित्वं दुर्ज्ञानं स्यादिति तयोर्लक्षणमाह। अनधिकेत्यादिना। कालतो देशतश्च तदुभयतश्च व्याप्याः व्यापकाश्च त्रिप्रकारास्तेषामेकयत्नेन लक्षणकथनार्थं देशकालयोरुपादानम्। न्यूनवृत्तिव्याप्यमधिकवृत्तिव्यापकमित्युच्यमाने समव्याप्तिकयोर्व्याप्यव्यापकयोरव्याप्तिः स्यादिति अनधिकदेशकालनियमं व्याप्यमन्यूनदेशकालवृत्तिव्यापकामिति व्यतिरेकमुखेनोक्तिः। नियमशब्दोऽत्र वृत्तितारूपसम्बन्धपरः। अत एव व्यापकलक्षणे वृत्तिशब्दः प्रयुक्तः। सम्बन्धनियमरूपाया व्याप्तेर्व्याप्यनिष्ठतां दर्शयितुं तत्र नियमशब्दप्रयोगः। अधिकदेशकालवर्त्तिनि व्यभिचारिणि वह्न्यादौ न्यूनदेशकालवर्त्तिनि धूमादावव्यापके चातिव्याप्तिवारणाय तद्विशेषणद्वयमुभयत्रेति द्रष्टव्यम्। नन्वेवमिदं प्रमेयमभिधेयत्वा-

देशकालनियतं व्याप्यम् । अन्यूनदेशकालवृत्तिव्यापकम् । तदाहुः ।

देशतः कालतो वापि समो न्यूनोऽपि वा भवेत् ।
स्वव्याप्यो व्यापकस्तस्य समो वाप्यधिकोऽपि वा ॥

देशकालनियमश्च क्वचिद्देशैक्ययौगपद्याभ्याम् । यथा रसगुडत्वयोः । क्वचिद्यौगपद्यमात्रेण । यथा गन्तृच्छायासूर्यस्थि-

---

दिति केवलान्वयिन्यधिकदेशकालाप्रसिद्ध्याअनधिकदेशकालवृत्तित्वमभिधेयत्वेऽव्याप्तमिति चेत् तत् किम् अधिकदेशकालवर्त्यभिधेयत्वं न भवतीतिचेत् अत एव लक्षणं नाव्याप्तमिति पश्यतु भवान् । यथा चैतत्तथा केवलान्वयिनः पञ्चमरूपोपपादने आचार्यैरेवाभिधास्यते । व्याख्यास्यते चास्माभिरित्युपरम्यते । देशतो व्याप्यव्यापकयोः कालतो नियमाभावात् कालतो व्याप्यव्यापकयोर्देशतो नियमाभावादव्याप्तिः स्यादित्याशङ्क्य सम्भावितनियम एव लक्षणे निविष्टः तेन नाव्याप्तिः स्यादिति हृदि निधाय तथैव वृद्धसम्मतिमाह । तदाहुरित्यादिना । नन्वेवमननुगमः स्यादिति चेन्न कस्य किं व्याप्यं कथं व्याप्यतेति लौकिकव्यवहारानुसारेण लक्ष्याणामननुगतत्वेन लक्षणाननुगमस्यादोषत्वात् । एवं च व्याप्यस्यैव अनधिकदेशकालवृत्तित्वं व्यापकस्यैवान्यूनदेशकालवृत्तित्वमिति नियतम् । व्याप्यव्यापकयोर्देशकालकृतं सामानाधिकरण्यमेव व्याप्तिरित्युक्तं भवतीति हृदि निधाय नियतसामानाधिकरण्यरूपाया व्याप्तेः कालदेशभेदाभ्यां वैविध्यं दर्शयति । देशकालनियमश्चेति । रसगुडत्वयोरिति । रसविशेषगुडत्वयोरित्यर्थः । रसमात्रस्य गुडत्वव्यभिचारित्वादिति द्रष्टव्यम् । रसगुडयोरिति पाठे तु नैयायिकमतेनोदाहरणमिदं तैरवयव्यङ्गीकाराद्गुडावयवनिष्ठरसविशेषेण गुडस्य सामानाधिकरण्यसम्भवादिति ध्येयम् । इदं च समव्याप्त्यभिप्रायेण । विषमव्याप्तिस्तु देशकालयौगपद्याभ्यां धूमवह्न्योरिति बोध्यम् । गन्तृच्छायासूर्यस्थितिविशेषयोरिति । स्वचरणाभ्यां स्वच्छायापरिमाणमभिगन्तुः पुरुषस्य एतावत्या

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि-मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । (वेदान्तः) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्याय श्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं संपूर्णम् (वेदान्तः) ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्तः) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्तः) ... ... २

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ३

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ... ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । ... ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... ... २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्योः—प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ... ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद. शर्मकृता अध्यात्म सुधातरङ्गिण्याख्य टीकया सहिता । ३

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृतिः। बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता। ४

(४५) शास्त्रदीपिका। श्रीपार्थसारथिमिश्र प्रणिता। रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपादः। ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय--श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाख्यटीकाद्वयसंवलिता। १०

(४७) व्याकरणसिद्धान्तसुधानिधीः । पर्वतीय विश्वेश्वरसूरिविरचितः। ६

(४८) विरमित्रोदयः। लक्षणप्रकाशः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः। ७

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचितः। महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकयासमलंकृतः। ६

(५०) विरमित्रोदयः। राजनीतिप्रकाशः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः। ५

(५१) पूर्वमीमांसा अधिकरणकौमुदी। श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृत १

(५२) प्रशस्तपादभाष्यटीकासंग्रहः । तत्र कणादरहस्यम्। श्रीशंकरमिश्रविरचितम् १

(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेत २

(५४) वीरमित्रोदयः । तीर्थप्रकाशः। महामहोपाध्याय श्रीमित्रमिश्रविरचितः। ६

(५५) सांख्यसंग्रहः। तत्र सांख्यतत्त्वविवेचनम् श्रीषिमानन्द ( क्षेमेन्द्र ) विरचितम् । सांख्यतत्त्वयाथार्थ्यदीपनम् भावागणेशविरचितम्। समाससूत्रव्याख्या सर्वोपकारिणी च। १

(५६) न्यायपरिशुद्धिः। श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यप्रसादिता। श्रीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकयायुता। १

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा बनारस सिटी

October 1918.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 250.

# न्यायपरिशुद्धिः ।

श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यप्रसादिता ।
श्रीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकया युता ।
वृन्दावननिवासि सर्वविद्याभूषणलक्ष्मणाचार्येण
टिप्पणीनिवेशन पुरःसरम्
संशोधिता ।

NAYÂYAPARISHUDDHI,

By

SRI VENKATNATH SRI VEDÂNTÂCHÂRYA

With a Commentary called Nyayasar.

By

SRI NIWÂSÂCHÂRYA,

Edited with Notes by Vidyâbhushan
Lakshmânacharya of Brindâban,

FASCICULUS II-२

*PUBLISHED & SOLD BY THE SECRETARY*,
CHOWKHAMBA SANSKRIT SERIES OFFICE. BENARES.
AGENTS:-OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO; BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
*Benares.*

*Price Rupee one.*

॥ श्रीः ॥

—:०:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२५०


१ अस्यां चौखम्बा— संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्थाः

३ एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आनकाः

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... ... " " १ "

६ आपणव्ययः पृथग् नास्ति । ... ... ... ... ... ...


साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

तिविशेषयोः। क्वचिद्देशैक्येनैव। यथा पाकतज्जन्यगुणयोः। क्वचिद्भिन्नदेशतया भिन्नकालतया च। यथा दिवानिशाकरास्तगमनातिक्रान्तसमुद्रक्षोभयोरित्यादि। अत्रेदं तत्त्वम्। या-

---

छायया इह नभोभागे सूर्यो वर्तत इति भूगतया छायया नभोगतसूर्यस्थितिविशेषानुमानात्तयोः कालिकी व्याप्तिरित्यर्थः। शङ्कुच्छायेति पाठे तु शङ्कोः प्राक्प्रत्यक्छायाभ्यां सूर्यस्य प्रत्यक्प्राग्दिगवस्थानं यथासंख्यमनुमीयते इति तयोर्भूनभोगतयोः कालिकी व्याप्तिरिति द्रष्टव्यम्। पाकतज्जन्यगुणयोरिति। पाकजरूपादेः कार्यस्य तेजःसंयोगरूपपाकस्य कारणस्य च कालतो व्याप्त्यभावात् सा दैशिक्येवेत्यर्थः। दिवेति। अह्नि चन्द्रास्तगमनेन पूर्वरात्रौ समुद्रक्षोभोऽनुमीयते। चन्द्रदर्शनात्समुद्रः क्षुभ्यतीति प्रसिद्धिः। तत्र चन्द्रास्तगमनं मेरुपिहितनभोदेशाक्रामः समुद्रक्षोभस्तु समुद्रजल इति न देशैक्यं दिवा चन्द्रास्तगमनं निशि समुद्रक्षोभ इति न कालैक्यमपीत्यर्थः। अश्रान्तसमुद्रक्षोभेति पाठे दिवा वातकृतसमुद्रक्षोभसम्भवात् तद्व्यावृत्त्यर्थमश्रान्तपदम्। वातकृतस्य क्षोभस्य तात्कालिकत्वेन सातत्याभावादिति द्रष्टव्यम्। ननु देशतः कालतश्च व्यधिकरणयोर्नियतसामानाधिकरण्यरूपव्याप्तेरभावात् कथं व्याप्यत्वव्यापकत्वे स्याताम्। किञ्च महानसीयधूमस्य पर्वतीयवह्न्यपेक्षया अधिकदेशवृत्तित्वात् कथं व्याप्यता। ननु तस्य व्याप्तिर्माभूदिति चेत्तर्हि सर्वासां धूमव्यक्तीनां परस्परव्यधिकरणसर्ववह्निव्यक्त्यपेक्षया अधिकाधिकरणत्वेन धूममात्रस्य वह्निव्याप्यता न स्यात् एवमेकस्या वह्निव्यक्तेः स्वसमानाधिकरणव्यधिकरणधूमव्यक्तिद्वयापेक्षया न्यूनवृत्तित्वात्तस्या व्यापकता न स्यात्। एतन्न्यायेन सर्वासां वह्निव्यक्तीनामन्यूनवृत्तित्वोपपादनासम्भवात् सर्ववह्निव्यक्तीनां व्यापकत्वं न स्यादित्यत आह। अत्रेदं तत्त्वमिति। यादृग्रूपस्येति। यद्धर्मावच्छिन्नस्येत्यर्थः। यादृग्रूपेण। यद्रूपावच्छिन्नेनेत्यर्थः। तदिदम्। तद्धर्मावच्छिन्नमित्यर्थः। तथाच तत्तद्धूमव्यक्तीनां व्यधिकरणवह्न्यपेक्षया अधिकवृत्तित्वेऽपि नधूमत्वावच्छिन्नस्य वह्नित्वावच्छिन्नापे-

दृग्रूपस्य यद्देशकालवर्तिनो यस्य यादृग्रूपेण यद्देशकालवर्तिना येनाविनाभावः तदिदमविनाभूतं व्याप्यम् । तत्प्रतिसंबन्धिव्यापकमिति । तेन निरुपाधिकतया नियतः संबन्धो व्या-

---

क्षया अधिकवृत्तित्वम् । धूमवति यस्य कस्यापि वह्नेः सद्भावात् । एवं वह्निविशेषस्य स्वसमानाधिकरणव्यधिकरणव्यक्तिद्वयनिष्ठवह्नित्वावच्छिन्नन्यूनवृत्तित्वेऽपि न वह्नित्वावच्छिन्नस्य न्यूनवृत्तित्वं तत्रोभयत्रापि वह्नित्वावच्छिन्नस्य सद्भावादिति नाव्याप्तिरिति भावः । अविनाभावः । नियतसामानाधिकरण्यमित्यर्थः । तथा च चन्द्रास्तगमनसमुद्रक्षोभयोर्भिन्नकालत्वेऽपि नक्तंदिवारूपस्थूलकालमादायावच्छेदकभेदेन वृक्षे संयोगतदभावयोरिवैकाधिकरण्यस्य नियतस्य सम्भवान्न पूर्वोक्ताव्याप्तिरिति द्रष्टव्यम् । एतेन कालतो देशतश्च व्यधिकरणयोर्व्याप्तिसत्वेऽपि व्याप्यस्य साध्याधिकरणवृत्तित्वाभावात् न पक्षधर्मतेति चोद्यं निरस्तम् । नन्वेवमप्यह्नि चन्द्रास्तगमनस्य समुद्रक्षोभाभावसमानाधिकरणत्वाद्व्यभिचारः स्यादिति चेत्? वृक्षः कपिसंयोगी एतद्वृक्षत्वादित्यत्रैतद्वृक्षत्वस्य कपिसंयोगाभावसमानाधिकरणस्य व्यभिचारं किं मन्यसे? नेति, चेत् कुतः ? साध्याभावस्य प्रतियोगिसमानाधिकरणत्वेन व्यभिचारानापादकत्वादिति चेदत्रापि तव दृष्टिर्न तमोरुषिता । अहोरात्ररूपे एकस्मिन् काले साध्याभावस्य प्रतियोगिसमानाधिकरणत्वेन व्यभिचारानापादकत्वान्न दोष इति वर्णनीयम् । अवान्तरकालभेदस्तु मूलाग्रभेद इव समाधेय इति कृतं प्रसक्तानुप्रसक्त्या । नन्वेवमपि व्याप्यव्यापकयोर्नियतसामानाधिकरण्यस्य पक्षादन्यत्र निश्चयः पक्षे तत्संदेहेन निर्णयायोगात् तथा च स श्यामो मित्रातनयत्वादित्यत्र पक्षातिरिक्तेषु सप्तसु पुत्रेषु मित्रातनयत्वश्यामत्वयोः नियतं सामानाधिकरण्यं गृहीतमिति तत्राप्यनुमितिः स्यात् । पक्षीयसाध्यसामानाधिकरण्यसंदेहस्याप्रतिबन्धकत्वात् । यदि च पक्षीयसाध्यसामानाधिकरण्यसंदेहेन साध्यानुमितिव्याप्तिग्रहयोः प्रतिबन्धस्तदानुमानमात्रस्योच्छेदः स्यादिति नेयं व्याप्तिरित्यत आह । तेनेति । तेन व्यापकेन

प्तिरित्युक्तं भवति ।

यथोपलम्भं भूयोभिर्दर्शनैर्गम्यते तु सा।

नियतः सम्बन्धः व्याप्यस्य सामानाधिकरण्यमित्यर्थः। निरुपाधिकतयेति। "सहयुक्ते ऽप्रधाने" इति तृतीया । निरुपाधिकत्वमुपाधिज्ञानरहितत्वम् । तेनोपाधिज्ञानाभावेन सहितं नियतसामानाधिकरण्यज्ञानमेवानुमापकमित्युक्तं भवतीति निष्कर्षः । तथा च स श्यामो मित्रातनयत्वात् इत्यत्र शाकपाकजत्वोपाधिज्ञानेनाहितस्य साध्यसामानाधिकरण्यसन्देहस्यानुमितिव्याप्तिग्रहयोः प्रतिबन्धकत्वेऽप्यन्यत्र स्वारसिकपक्षीयसाध्यसामानाधिकरण्यसंशयस्यानुमितिव्याप्तिग्रहयोर्ग्राह्यसंशयत्वेनाप्रतिबन्धकत्वान्न नानुमानमात्रोच्छेद इति भावः । अन्ये तु इत्थंभूतलक्षणे तृतीयामाश्रित्य निरुपाधिकतयोपाध्यभावेन नियतो व्यावृत्तः सम्बन्धः सामानाधिकरण्यमनुपाधिकं सामानाधिकरण्यमेव व्याप्तिस्तेनोपाधिग्रहस्थले व्याप्तिग्रहाभावादेवाननुमितिं वर्णयन्ति । नन्वेषा व्याप्तिर्ग्रहीतुमेव न शक्या । सा किं सकृत् साध्यहेतुसहचारदर्शनेन गृह्यते उत भूयोभिस्तद्दर्शनैः। नाद्यः व्यभिचारिणोऽपि सकृत्सहचारदर्शनसम्भवेनातिप्रसङ्गात् । नान्त्यः आशुतरविनाशिनां भूयसां दर्शनानां क्रमिकतया मेलनाभावात् । भूयोदर्शने सत्यपि व्यभिचारग्रहे व्याप्त्यग्रहाच्च। न चोपाध्यभावज्ञानरूपसहकारिविलम्बात्तद्विलम्बः। तस्यावश्यकत्वे भूयस्त्वविशेषणवैयर्थ्यात् । किञ्चानुपस्थितोपाधेर्व्यभिचारास्फूर्तौ व्याप्तिग्रहस्यानुभूयमानतया नोपाध्यभावज्ञानमपि तत्सहकारि । अपि च यत्रोपाध्यभावावधारणे व्यभिचारित्वभ्रमस्तत्र व्याप्तिग्रहप्रसङ्गः । न चोपाध्यभावस्य व्यभिचाराभावव्याप्यत्वात्तज्ज्ञाने कथं व्यभिचारज्ञानमिति वाच्यम् । प्रत्यक्षे व्याप्त्यग्रहस्याप्रतिबन्धकत्वात् । अन्यथा शङ्खत्वज्ञाने पीतत्वप्रत्यक्षानुदयप्रसङ्गः। तथाच प्रत्यक्षव्यभिचारज्ञाने बाधकाभावः। किं बहुना व्यभिचाराभावव्याप्यत्वस्योपाध्यभावेऽज्ञानदशायां तत्र व्यभिचारज्ञाने बाधकाभावाच्चेत्युभयथापि व्याप्तिग्रहासम्भवान्नानुमानस्य प्रामाण्यनिस्तार इति चोद्यं निराकरोति । यथोपल

सकृदेवानवच्छिन्नसंबन्धो नहि भासते ॥

तदुक्तं वरदविष्णुमिश्रैः । तस्मादनुमानाङ्गभूता व्याप्तिर्भूयो-दर्शनावसेयैवेति । तत्त्वरत्नाकरे तु सा सकृद्दर्शनसाध्यैवोक्ता ।

सम्बन्धोऽयं सकृद्ग्राह्यः प्रतीतिस्त्वरसात्तथा ।
प्रतीतयो हि स्वरसाद्धर्मधर्म्यवधीन् विदुः ॥

---

म्यमिति । सा नियतसम्बन्धरूपा व्याप्तिर्भूयोभिर्दर्शनैरवगम्यते । तथैव लोके उपलम्भात् । सकृद्दर्शनेन व्याप्तिग्रह इति मतं निराकरोति । सकृदेवेति । अनवच्छिन्नः बहुव्यक्तिनिरूपितत्वेन सकृद्दृष्टव्यक्तिमात्रापरिच्छिन्नः निरुपाधिक इति वा सम्बन्धः । सामानाधिकरण्ये न भासते उपाधिव्यभिचारशङ्कयोः सकृद्दर्शनेन निरासासम्भवात् । हिशब्दोऽस्मिन्नर्थे आपामरपण्डितमव्याहतां प्रसिद्धिं द्योतयति । तुशब्दः पूर्वोक्ताशेषशङ्काव्यावर्तकः उपाधिव्यभिचारयोरुपस्थित्यभावे नियतसामानाधिकरण्यरूपा निरुपाधिकसम्बन्धरूपा वा व्याप्तिस्तत्तत्प्रमाणैर्गृह्यत इति सर्वसम्प्रतिपन्नम् । तत्रैकत्राधिकरणे कयोश्चिद्व्याप्यव्यापकयोः सामानाधिकरण्यस्य सकृद्दर्शनेन ग्रहणेऽन्यत्राप्येवमेवेति नियमांशस्योपाध्यभावस्य च ग्रहीतुमशक्यत्वात् भूयोभिरेव दर्शनैरधिकरणप्रतियोगिव्यक्तिभेदावगाहिभिरनवगाहिभिर्वा व्यभिचारोपाधिशङ्कयोर्निरस्तयोस्तावद्दर्शनजनितसंस्कारसहकृतेनान्तिमप्रत्ययेन पूर्वदृष्टाशेषाधिकरणप्रतियोग्यवगाहिनिरुपाधिकतया वा नियततया वा सम्बन्धोऽवगाह्यते । तेषां च दर्शनानां मेलकाश्च संस्कारा इति न किंचिदनुपपन्नम् । तदिदं वक्ष्यति भूयोदर्शनजनितसंस्कारसमुदायाधीनविमर्शविशेषेणोपाधिसम्भावनामुच्छिन्दता निःशङ्कसम्बन्धनियमसिद्धिरिति । तत्त्वरत्नाकरग्रन्थ विरोधं शमयितुं तमनुवदति । तत्त्वरत्नाकरे त्विति । सम्बन्धोऽयमिति । सामानाधिकरण्यमात्रमित्यर्थः । अस्मिन् मते व्यभिचारज्ञानविरहे स्वरूपसति सामानाधिकरण्यमेव व्याप्तिः । अत एवाह प्रतीतिस्वरसादिति । एकेनैव दर्शनेन साध्यसामानाधिकरण्यसम्बन्धग्रहः स्वरसादेव जायते । तदेवोपपादयति । प्रतीतयो हीति । सर्वाः प्रतीतयो

इत्यादिना। सकृदेव च सर्वधूमव्यक्तिग्रहणमपि सामान्यरूपैक्यादुपपादितम्। असन्निकृष्टेष्विन्द्रियसंयोगश्च संयुक्ताश्रिताश्रयत्वमित्युक्तम्। सन्निहितधूमादिव्यक्तिसंयुक्तस्येन्द्रियस्य तदाश्रितधूमत्वादिः संयुक्ताश्रितस्तदाश्रयत्वेन व्यक्त्यन्तराणि संयुक्तानीत्यादिना।

तृतीयः सन्निकर्षोऽयं सन्निकर्षनिरूपणे।

अनुक्तस्तत्प्रमेयस्य व्याप्तेरत्रैव साधनात् इत्यन्तेन।

इदं तु सर्वप्रत्यक्षत्वप्रसंगभीरवो वैभवं मन्यन्ते। पूर्वपूर्वसहदर्शनान्तरमनपेक्ष्यैव धर्मधर्मिणस्तेषां सम्बन्धं च गृह्णन्तीत्यर्थः। ननु सर्वासां साध्यसाधनव्यक्तीनां सकृदेव ग्रहासम्भवात् कथं तावन्निरूपितं सामानाधिकरण्यं सकृद्दर्शनगम्यमित्यत आह। सकृदेवेति। ननु सामान्यप्रत्यासत्तिरूपसन्निकर्षाङ्गीकारे "अत्र वृद्धा विदामासु"रित्यादिना सन्निकर्षद्वयस्यैव निरूपणमसंगतं स्यादित्यत आह। तृतीय इति। तत्प्रमेयस्येति। व्याप्तेः प्रकारान्तरेण ग्रहीतुमशक्यत्वात् अत्रैव सामान्यस्य सन्निकर्षत्वं कल्प्यत इत्यर्थः। इदं त्विति। इदम्। सामान्यस्य सन्निकर्षत्वकल्पनपूर्वकं व्याप्तेः सकृद्दर्शनगम्यत्वसाधनम्। सामान्यप्रत्यासत्त्यङ्गीकारे सर्वेषां सर्वे पदार्थाः प्रत्यक्षाः स्युरिति त्रस्यन्तोऽस्मदीयाः व्याप्तिग्रहोपपादने उपपत्तिबाहुल्यपरामिति मन्यन्त इत्यर्थः। अर्वाचीनास्तु सामान्याकारेण सर्वसाक्षात्कार इष्ट एव विशेषाकारेण प्रत्यक्षाभावादेव तेषु संशयविपर्य्यासाविति वदन्ति। तदसत् प्रमेयतया विश्वसाक्षात्कारेण प्रत्यक्षाभावस्य वक्तुमशक्यतया संशयविपर्य्ययाद्यभावापादनस्य दुरुत्तरत्वात्। ननु प्रमेयतया विश्वसाक्षात्कारेऽपि तद्विशेषप्रकारकसाक्षात्काराभावान्न दोष इति चेत्। प्रमेयवानिति विश्वप्रकारकसाक्षात्कारेण पूर्वोक्तापादनस्य दुरपनोदत्वात्। नच सामान्यप्रत्यासत्त्यभावे कथंचिदपि व्याप्तिग्रहासम्भवात् तत्सिद्धौ विश्वसाक्षात्कारप्रयुक्तदोषाः कथंचिदुभाभ्यां समाधेया इति वाच्यम्। सामान्यप्रत्यासत्तिमन्तरेण

दर्शनजनितसंस्कारप्रचयसहकृते त्वन्तिमे प्रत्यक्षे सकृदेव सामान्यतस्तज्जातीयसमस्तसङ्ग्राहिसद्धेतुसामग्रीमहिम्नाप्यसम्बन्धप्रकाशायोगात् । सम्भावितसम्बन्धप्रकाशनमात्रपरत्वे तु नातिप्रसङ्गः । एवं वास्तु सकृद्दर्शनेन भूयोदर्शनेन वा व्याप्तिग्रहस्तत्राप्यन्तिममन्यद्वा ग्राहकं बाह्यं मानसं वास्तु तत्र सर्वैरपि भूयोदर्शनं न परित्याज्यम् । तत्रापि भूयोदर्शनजनितसंस्कारसमुदायाधीनविमर्शविशेषेण उपाधिसम्भावनामुच्छिन्दता निःशङ्कसम्ब-

---

भूयोभिर्दर्शनैरेव सम्भावितसर्वसंग्राहिभिर्व्याप्तिग्रहस्योपपादितत्वात् तदिदं वक्ष्यति । सामग्रीमहिम्नाप्यसम्बन्धप्रकाशायोगात्सम्भावितसम्बन्धप्रकाशनमात्रपरत्व इति । ननु व्याप्तिः सकृद्दर्शनगम्येति नायमर्थः प्रथमदर्शने गृह्यते तत्रापि सामान्यप्रत्यासत्त्या सर्वव्यक्त्युपस्थितिरिति च किन्तु भूयोदर्शनजनितसंस्कारसहकृतेऽन्तिमप्रत्यये सकृदेव गृह्यत इति तेन न तत्त्वरत्नाकरग्रन्थविरोध इति यदि तर्हि तथैवास्त्वित्याह । पूर्वपूर्वेति । नातिप्रसङ्ग इति । प्रथमदर्शनग्राह्यत्वसर्वसाक्षात्कारयोः प्रसङ्गो नेत्यर्थः । एवं सकृद्दर्शनेनेति उपपादितेन सकृद्दर्शनेनेत्यर्थः । अन्तिममन्यद्वेति । उक्तप्रकारसकृद्दर्शनं वा तत्सहितानि पूर्वदर्शनानि वेत्यर्थः । केचित्तान्त्रिकाः व्याप्तिग्राहकं ज्ञानं बाह्येन्द्रियजन्यमिति वदन्ति । अन्ये तु तज्ज्ञानं मानसिकमिति वदन्ति । उभयथापि तद्भूयोदर्शनाधीनमेव । तत्र बाह्यत्वान्तरविवेकेन न प्रयोजनमित्यर्थः । ननु सत्यपि भूयोदर्शने क्वचिद्व्याप्तिग्रहो न दृश्यते यत्रोपाधिशङ्कास्ति तत्कथं भूयोदर्शनस्य व्याप्तिग्राहकत्वमित्यत आह । तत्रापीति । विमर्शविशेषेणेति । तर्केणेत्यर्थः । तथा चोपाधिव्यभिचारशङ्काविरहसहकृतं भूयोदर्शनं व्याप्तिग्राहकमिति नोक्तदोष इति भावः । ननु भूयोभिर्दर्शनैर्व्याप्तिर्गृह्यत इत्यत्र किमिदं भूयोदर्शनं भूयःसु व्याप्यव्यापकाधिकरणेषु तयोर्दर्शनं वा भूयसीनां व्याप्यव्यापकव्यक्तीनां वा भूयांसि दर्शनानि वा नाद्यःपुरुषद्वयाविनाभूतेगृहेपकेन पुरुषेण पुरुषान्तरानुमानेऽधिकरणस्यैकत्वेन भूयस्त्वा-

न्धनियमासिद्धिरिति च सिद्धम् । अतः परं तु विकल्पनमायासायैवेति विरम्यते । तादात्म्यतदुत्पत्तिभ्यामेवाविनाभाव इति सौगताः । यथाहुः ।

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमो दर्शनान्न नदर्शनात् इति ।

तदसत् । अकार्यानात्मभूतकृत्तिकोदयादिना अकारणानात्मभूतरोहिण्युदयाद्यनुमानात् । कथं च तादात्म्ये लिङ्गलिङ्गिभा-

भावात् । न द्वितीयः द्रव्यत्वाद्वाच्यत्वानुमाने व्यक्तिबाहुल्याभावात् । न तृतीयः भूयस्त्वस्य त्रिचतुराद्यनन्तप्रकारत्वेनाननुगतत्वात् । न चोपाधिव्यभिचारशङ्कानिवर्तनक्षमत्वेन तेषामनुगम इति वाच्यम् । निवर्तकतावच्छेदकापरिचये निवर्तकत्वस्य दुर्ग्रहत्वात् । तत्परिचये च तस्यैव व्याप्तिग्राहकतावच्छेदकत्वसम्भवाच्चेति चेन्न । दर्शनभूयस्त्वस्यैव विवक्षितत्वात् । न चाननुगमः उपाधिसंशयनिवर्तनक्षमत्वेनैवानुगमात् । न च निवर्तकतावच्छेदकापरिचयः तत्र तत्र सम्भावितसंख्याविशेषस्यावच्छेदकस्य शक्यग्रहत्वात् । तदग्रहे दोषाभावाच्च । नच तथागृहीतान्येव दर्शनानि उपाध्यादिसंशयं निवर्तयन्ति नान्यथेति राजाज्ञा । नच तेषामेव व्याप्तिग्राहकतावच्छेदकत्वमनुगतत्वेन भूयोदर्शनत्वेनैव व्याप्तिग्रहकारणत्वादिति तदिदमाह । अतः परं त्विति । आयासायैवेति । निष्फलमित्यर्थः । एतेन हेतुकदुर्दुरूहसिद्धाया भावशतभारमन्थराया निबन्धुरप्यनुसन्धानपदवीमन्धयन्त्या व्याप्तिलक्षणकन्थाया निबन्धननिर्बन्धस्तद्ग्रहाय व्यभिचाराग्रहसहितसहचारग्रहहेतुतया विचाराभिनिवेशश्च परमायाससार इत्युक्तं भवति । सौगतास्तु तादात्म्यतदुत्पत्तिभ्यामेवाविनाभावः भेदसहिष्णुरभेदस्तादात्म्यं ततः कार्यं कारणमनुमापयति । तादात्म्यं च स्वात्मानमेव यथा धूमाद्वह्न्यनुमानं शिंशुपात्वाद्वृक्षानुमानं चेत्याहुस्तन्मतमनूद्य निराकरोति । तादात्म्येति । कार्यकारणभावाद्वेति । कार्यकारणभावेन वा स्वात्मभावेन वा नियाम

वः । तथात्वेन वा भेदे कथं तत् । यदि च शिंशुपात्ववृक्षत्वयोरैक्यं सर्वोऽपि वृक्षः शिंशुपैव स्यात् । न वा कश्चित्कश्चित् । किंच ।

सति भावे न कार्यत्वं किंतु सत्येव भाविता ।
तस्माद्भेदविनाभावः स्यादात्माश्रयणं ध्रुवम् ॥

व्याप्तिर्द्विधा । अन्वयव्यतिरेकभेदात् । साधनविधौ साध्यविधिरूपेण प्रवृत्ता व्याप्तिरन्वयव्याप्तिः । यथा यो धूमवान् सोऽग्निमानिति । साध्यनिषेधे साधनानिषेधरूपेण प्रवृत्ता व्याप्तिर्व्यतिरेकव्याप्तिः । यथा योऽनग्निः स निर्धूम इति । सेयमुभयविधापि व्याप्तिरुपाधिसम्भवे दुष्यति । साधनाव्यापकत्वे सति साध्यसमव्याप्तः साधनधर्मव्यतिरिक्तो धर्म उपा-

---

केन व्यापकेन व्यावृत्तोऽविनाभाव एव व्याप्तिः । दर्शनादर्शनाभ्यामन्वयव्यतिरेकाभ्यां व्याप्तिर्नास्तीत्यर्थः । नदर्शनादिति नञ्समासः । दर्शनशब्दश्चायं कर्मणि व्युत्पन्नः । कृत्तिकोदयादिनेति । आदिपदेनाकार्यभूतरसादिनानात्मभूतेन चाकारणानात्मभूतरूपाद्यनुमानसङ्ग्रहः । किञ्च व्याप्तिर्नाम सम्बन्धविशेषः । स च भेदाधीन इति कथं तत्प्रतिपक्षे तादात्म्ये जाग्रति स्वात्मानं लभेतेत्याह । कथं तादात्म्ये लिङ्गलिङ्गिभाव इति । सामान्यात्मविशेषात्मना भेदो ऽङ्गीक्रियते इत्यत आह । तथात्वेन वा भेद इति । कथं तदिति । तादात्म्यं कथमुपपद्यत इत्यर्थः । अनुपपत्तिमेव दर्शयति । यदि चेति । सर्वोऽपीति । आम्रपनसादिरपीत्यर्थः । यदि च वृक्षत्वसत्त्वेऽप्याम्रादौ न शिंशुपात्वं तदा शिंशुपायामपि शिंशुपात्वं न स्यादित्याह । कश्चिदिति । कश्चिदपि वृक्षः शिंशुपा न स्यादित्यर्थः । किञ्च यस्मिन् सति यद्भवति तत्तस्य कार्यमिति न कार्यलक्षणं किन्तु यस्मिन् सत्येव यद्भवतीति नियमघटितं ततः कार्यत्वाद्यविनाभावोऽङ्गीक्रियते तदात्माश्रयोऽवर्जनीय इत्याह । सति भाव इति । विधिरस्तित्वम् । उपाधिसद्भावे दुष्यतीति । अनौपाधिकसम्बन्धरूपव्याप्तिपक्षे उपाधिसत्त्वे तदभावलक्षणविशेषणासा-

धिः । सावयवत्वादनित्यत्वसाधने कृतकत्वस्य कृतकत्वाद-नित्यत्वसाधने सावयवत्वस्य समव्याप्तहेतुप्रयोगे तत्स्वरूपस्य चोपाधित्वव्युदासाय विशेषणत्रयम् । पक्षेतरत्वादेरुपाधित्वव्युदासाय तु समशब्दः । इतरथा साध्यव्यापक इत्येतावता सावयवत्वादेरुपाधित्वव्युदासः शक्यः । सावयवमीश्वर-

---

बाध्याप्तिरेव नास्ति । नियतसामानाधिकरण्यव्याप्तिपक्षे तु उपाधेर्व्यभिचारव्याप्तत्वात् तदा हि तेन व्यभिचाररूपनियमाभावात् सा नास्तीत्यर्थः । पदानां व्यावर्त्यमाह । सावयवत्वादिति । अनित्यत्वरूपसाध्यसमव्याप्तस्यापि कृतकत्वस्य सावयवत्वरूपसाधनव्यापकत्वात्तत्र नाति व्याप्तिः । अतः साधनाव्यापकपदेन तद्व्यावृत्तिरित्यर्थः । कृतकत्वादिति । कृतकत्ववति निरवयवे रूपादौ अनित्ये सावयवत्वस्याभावात् न साध्यव्याप्तिरिति साध्यसमव्याप्तपदेन तद्व्यावृत्तिरित्यर्थः । समव्याप्तहेतुप्रयोग इति । कृतकत्वादनित्यत्वसाधने कृतकत्वस्य द्रव्यत्वात् संयोगित्वसाधने द्रव्यत्वस्य वा साधनस्य स्वाव्यापकत्वात् अभेदे व्याप्यव्यापकभावानङ्गीकारात्समव्याप्तत्वाच्चोपाधित्वं स्यादिति तद्व्यावृत्त्यर्थं साधनधर्मव्यतिरिक्तपदमित्यर्थः । साधनरूपो यो धर्मः तद्भिन्नत्वं साधनान्यत्वमिति तदर्थः । एतेषां च हेतूनामनाभासत्वात् तत्रोपाधिनिवृत्तिः कर्तव्येति भावः । पक्षेतरत्वादेरित्यादिपदेन पक्षत्वतदसाधारणपर्वतत्वाद्यत्यन्ताभाववत्त्वं गृह्यते । व्युदासायत्विति । अन्यथानुमानमात्रोच्छेदप्रसङ्ग इत्याशयः । इतरथेति । पक्षेतरत्वादेरनुग्राहकतर्काभावादेव साध्यव्यापकत्वं ग्रहीतुं न शक्यते तत्सत्त्वे तदुपाधित्वमिष्टमेव । अत एव वह्निरनुष्णः पदार्थत्वादित्यादौ वह्नीतरत्वमुपाधिरेवेति न्यायविदः । विषमव्याप्ताश्चोपाधयस्तान्त्रिकैः प्रयुज्यन्ते च । एतच्चोपलक्षणम् । अभेदे व्याप्यव्यापकभावाङ्गीकारे साधनधर्मव्यतिरिक्तपदमपि न देयमिति द्रष्टव्यम् । ननु सावयवत्वस्यानित्यत्वसाधकत्वमेव नास्ति शुभाश्रयविग्रहसहस्रस्थूणास्थानादीनां सावयवानामपि नित्यत्वा-

विग्रहादिकं नित्यतया श्रुत्यादिसिद्धमनभ्युपगच्छतां सावयवत्वाद्युदाहरणम् । अभ्युपगच्छतां तु द्रव्यत्वाद्वाच्यत्वसाधने वस्तुत्वस्य वस्तुत्वाद्वाच्यत्वसाधने द्रव्यत्वस्य चोपाधित्वव्युदासाय विशेषणद्वयमित्युदाहर्तव्यम् । नचोपाधिव्याप्त्योर्निरूपणेऽन्योऽन्याश्रयता । यावत्साधनदेशमवर्तमानो यावत्साध्यदेशवर्तीत्युपाधिनिरूपणात् । स च द्विधा । निश्चितः शङ्कितश्च ।

ङ्गीकारादित्यत आह । सावयवमिति । श्रुत्यादीत्यादिपदेन पुराणपञ्चरात्रादयो गृह्यन्ते । अनभ्युपगच्छतामिति । नैयायिकादीनामित्यर्थः । नन्वेवं न्यायमते कृतकत्वमप्यनित्यत्वसाधने ध्वंसे व्यभिचारीति चेन्न ध्वंसरूपपदार्थान्तरानङ्गीकारिप्रभाकरादिमते तस्य सद्धेतुत्वसम्भवात् । न्यायमते च जन्यभावत्वार्थकत्वेन व्यभिचारवारणाच्च । एवं च साध्येऽनित्यत्वेऽपि भावत्वाविशेषणान्न समव्याप्तिहानिरित्यपि द्रष्टव्यम् । द्रव्यत्वाद्वाच्यत्वसाधन इति । वस्तुत्वस्य साधनव्यापकत्वात्तद्व्यावृत्तिः साधनाव्यापकत्वपदेन क्रियत इत्यर्थः । वस्तुत्वाद्वाच्यत्वसाधन इति । द्रव्यत्वस्य संयोगादावेव साध्यव्यापकत्वात् तद्व्यावृत्तिः साध्यव्यापकत्वपदेन क्रियत इत्यर्थः । अन्योऽन्याश्रयतेति । निरुपाधिकत्वेन व्याप्तेर्ज्ञातव्यतया तत्रोपाधिज्ञानस्यापेक्षितत्वादुपाधेश्च साध्यव्याप्तिसाधनाव्याप्तिघटितत्वेन व्याप्तिज्ञानसापेक्षत्वाच्चेत्यर्थः । उपाधिनिरूपणादिति । नन्वेवं साधनपक्षधर्मावच्छिन्नसाध्यव्यापकेषु उपाधिषु शुद्धसाध्यव्याप्त्यभावादव्याप्तिरिति चेत् तत्रापि शुद्धसाध्यव्यापकोपाधीनां वक्तुं शक्यत्वेन तेषामनुपाधित्वे दोषाभावात् । स श्यामो मित्रातनयत्वादित्यत्र सारविकारादिव्यावृत्तस्य नैल्यविशेषस्यैव साध्यत्वेन शुद्धसाध्यव्यापकत्वात् उद्भूततमस्कभूतारब्धत्वस्य नैल्यव्यापकस्योपाध्यन्तरस्य सम्भवाच्च । वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यस्य सदनुमानत्वेन तत्रोपाधेरनपेक्षितत्वात् । धर्मादयः प्रत्यक्षाः प्रमेयत्वादित्यत्रापि योग्यत्वादेरेवोपाधित्वसम्भवाच्चेति भावः । उक्तमुपाधिं विभजते । स चेति । विप्रतिपन्ना सेवा । ईश्वरसेवा "भोगेन त्वितरे

व्याप्तः पक्षे नास्तीत्यवधारितो निश्चितोपाधिः। यथा विप्रतिपन्ना सेवा दुःखहेतुः सेवात्वात् राजसेवावदित्यनुमाने पापारब्धत्वम् । अयं चेश्वरसेवायां नास्तीति शास्त्रतो निश्चितत्वाद्व्याप्तत्वाच्च निश्चितोपाधिः । पक्षावृत्तिव्याप्त्योरन्यतरस्यापि संदेहे संदिग्धोपाधिः । तत्राद्यो यथा विप्रतिपन्नो जीवः एतच्छरीरावसाने मुक्तिमान् निष्पन्नसमाधित्वात् शुकादिवत् इत्यत्र कर्मात्यन्तपरिक्षय उपाधिः । स च निष्पन्नसमाधौ विप्रतिपन्ने जीवेऽस्ति नास्ति वेति संदिग्धत्वाच्छङ्कितोपाधिः । यद्यपि योगिनामुत्तरपूर्वाघयोरश्लेषविनाशौ भवतस्तथापि प्रारब्धकर्मणामेकशरीर एव पर्यवसानमिति न नियमः । निष्पन्नोपायस्यापि प्रतिबन्धककर्मविशेषादनेकदिवसस्थितिवदनेकशरीरपरिग्रहोपपत्तेः। तथा च सूत्रितम् । "भोगेन त्वितरे क्षपयित्वाथ संपद्यत" इति "यावदधिकारमवस्थितिराधिकारिकाणाम्" इति च "विनिष्पन्नसमाधेस्तु मुक्तिस्तत्रैव जन्मनि" इत्यादिस्मृतिस्त्वनिष्पन्नसमाधेः शरीरान्तरयोगानियमपरतया प्रायिकविषया। अतो नास्य साधनाव्यापकत्वम् । अपक्षनिष्ठतया निश्चितोऽपि संदिग्धव्याप्तिको यथा विप्रतिपन्नमधर्मः निषिद्धत्वात् ब्राह्मणहिंसावदिति हिंसाव्यतिरिक्तसमस्तनिषिद्धपक्षीकारेण प्रयोगे हिंसात्वमुपा-

---

क्षपयित्वाथ संपद्यत" इति । तुशब्दः पूर्वपक्षव्यावर्तकः इतरे प्रारब्धफले पुण्यपापे यावता शरीरेण समापनीये तावता शरीरेण सुखदुःखानुभवेन क्षपयित्वा अथानन्तरं संपद्यते ब्रह्म प्राप्नोतीत्यर्थः "यावदधिकारमवस्थितिराधिकारिकाणाम्" वशिष्ठादीनां यावदधिकारसमाप्ति नार्चिरादिका गतिरस्ति । अपि त्वधिकारेऽवस्थितिरेवेत्यर्थः । विप्रतिपन्नमिति । पतितजन्तुभक्षणादिकलञ्जभक्षणाद्यधर्मेषु हिंसात्वस्य साध्यव्यापकत्वाभावान्नोपाधित्वं स्यादित्यत आह । हिंसाव्यतिरिक्तसमस्तनिषिद्ध-

धिरिति यदि कश्चिद्ब्रूयात् । तदाग्नीषोमीयादिषु विपक्षेषु हिंसालक्षणमस्ति वा नवेति सांख्यवेदान्तिविप्रतिपत्त्या संदिहानस्य हिंसात्वं संदिग्धव्याप्तिकं भवति । पक्षे च स्वयं पतितजन्तुभक्षणादौ निषिद्धेऽपि हिंसात्वं नास्त्येवेति निश्चितमिति । उपाधेश्च साधनाभिमतधर्मे स्वगतव्याप्यत्वाध्यासहेतुत्वादुपाधिशब्दवाच्यत्वम् । तदेवं हेतोः सोपाधिकत्वे व्याप्यत्वासिद्धिः । निरुपाधिकसम्बन्धे व्याप्यत्वसिद्धिः । केचित्तु व्यापकाभावाद्व्याप्याभावप्रतिपादनमुखेन साध्यव्यापकस्योपाधेर्दूषणत्वमाहुः ।

---

पक्षीकारेणेति । तथा च तत्र साध्यस्य संदिग्धत्वात् न साध्याव्यापकत्वमिति भावः । कश्चिदिति । तटस्थ इत्यर्थः । विपक्षेष्विति । अग्नीषोमीयादीनां धर्मत्वेन निर्णीतत्वादिति भावः । हिंसालक्षणमस्ति न वेति । "अशुद्धमितिचेन्न शब्दात्" इत्यत्राग्नीषोमीयपशुसंज्ञपनस्य सांख्यैरुक्तं उहिंसात्वमाक्षिप्य "न वा एतन् म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः"इति शास्त्रेण तस्य हिंसात्वाभाव एव प्रतिपाद्यते इति समाहितम् । यथोक्तं भाष्यकारैः "अतिशयाभ्युदयसाधनभूतो व्यापारोऽल्पदुःखदोऽपि न हिंसा प्रत्युत रक्षणमेवेति" तथा च तदधिकरणविप्रतिपत्तिश्राविणो मध्यस्थस्य संदेहो भवतीत्यर्थः । संदिहानस्येत्युक्त्या सिद्धान्तिनस्तु हिंसात्वपक्ष एव साध्याव्यापकत्वान्नोपाधिरिति गम्यते । अयं च संदेह उपाधेः साध्यव्याप्यत्वसंदेहःसमव्याप्तस्यैवोपाधित्वमिति पक्षेण इतरथा ब्राह्मणहिंसादावेव साध्यव्यापकसंभवेनाग्नीषोमीयादौ हिंसात्वसंदेहस्योपाधिसंदेहत्वमेव न स्यादिति बोध्यम् । अत एव समव्याप्तोपाधिपक्षमेवोपाधिशब्दवाच्यतोपपादनमुखेन द्रढयति । उपाधेश्चेति । उप समीपे स्थिते स्वगतो धर्मो येनाधीयते स उपाधिशब्दार्थः । यथा जपाकुसुमं समीपस्थिते स्फटिके स्वगतं लौहित्यमवभासयदुपाधिर्भवति तथा साध्यव्याप्यो ऽपि साध्याव्याप्ये स्वगतं व्याप्यत्वमादधातीति साध्यव्याप्यस्यैवोपाधित्वं युक्तमितिभावः । एवं च सत्युपाधेर्दूषकताबीजमुपसंहरति । तदेवमिति ।

तदा साधनाव्यापकत्वे सति साध्यव्यापक इत्येव वक्तव्यम् । तथापि सर्वस्य पक्षेतरत्वस्य नोपाधिता । पक्षस्य साध्यविपर्ययानिश्चये तद्व्यतिरिक्तत्वस्य व्यापकत्वानिश्चयात् । नन्वतीन्द्रियोपाधिशङ्कायां कथं साध्यनिश्चयः । मैवम् । अनुमानाप्रामाण्यवादिभिरतीन्द्रियस्य शङ्कितुमशक्यत्वात् । तत्र प्रामाण्याभ्युपगमे तु क्वचिन्निरुपाधिकत्वसिद्धावन्यत्रापि तद्-

---

व्याप्त्यभावज्ञापकत्वेनोपाधेर्दूषकत्वमित्यर्थः । ये उपाधेः सत्प्रतिपक्षोत्थापकतया दूषकत्वं वर्णयन्ति तेषां मतमाह । केचित्त्विति । तेषां मते साध्यव्यापकत्वमात्रस्यैव दूषकताप्रयोजकतया समव्याप्तपदमनुपादेयमित्याह । तदेति । नन्वेवं तन्मते पक्षेतरत्वस्योपाधित्वनिरासः कथमित्यत आह । तथापीति । व्यापकत्वानिश्चयादिति । ननु व्यापकत्वानिश्चयेऽपि व्यापकतासंदेहात् पक्षेतरत्वस्य संदिग्धोपाधित्वं स्यात् तथाप्यनुमानमात्रोच्छेदस्तदवस्थ एवेति चेन्न पक्षीयसाध्यसंदेहस्यानुमानाङ्गत्वेन तदाहितस्योपाधिसंदेहस्य न दूषकता पक्षादन्यत्र साध्यव्यापकतासंदेह एव संदिग्धोपाधेर्दूषकत्वात् सत्प्रतिपक्षसम्पादकतया दूषकत्वपक्षे संदिग्धोपाधेर्लिङ्गनिश्चयाभावेनादूषकत्वाच्च ।

अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भव इति ।

संदिग्धोपाधेर्दूषकत्वपक्षे अतीन्द्रियोपाधिशङ्कयानुमानमात्रोच्छेदमाशङ्कते । नन्विति । उपाधिशङ्काहितया व्यभिचारशङ्कया व्याप्तिग्रहाभावेनानुमानानुदयादित्यर्थः । अत एव ह्यतीन्द्रियोपाधिशङ्कायास्तर्केणैव निरसनीयतामाह । मैवमित्यादिना । अनुमानाप्रामाण्यवादिभिरिति । सर्वथा प्रमाणपथमनवतीर्णानामुपाधित्वेन शङ्कितुमशक्यत्वादतीन्द्रियतया तत्र प्रत्यक्षस्याभावात् तादृशसंशयजनकस्यागमस्यासम्भावितत्वाच्चानुमानत एवातीन्द्रियोपाधिसिद्धिरिति वक्तव्यमित्यर्थः । ननु नानुमानसिद्धोऽतीन्द्रियोपाधिरत्र शङ्क्यते येनानुमानप्रामाण्यं स्यात् किन्तु सपक्षे प्रत्यक्षसिद्धा

विशेषात् । अपिच शङ्क्यमानोऽतीन्द्रिय उपाधिर्व्यापको न वा । पूर्वत्र वह्न्यादेरपि सार्वत्रिकत्वप्रसङ्गः । उत्तरत्रापि नित्योऽनित्यो वा । नित्यत्वे साध्यस्यापि सदातनत्वापातः । अनित्यत्वेऽपि हेतुसाध्ययोरुभयोर्व्यापक उभयाव्यापकोऽन्यतरव्यापको वा । आद्ये साधनाव्यापकत्वाभावादुपाधिलक्षणहानिः । द्वितीयेऽप्युभयासंसर्गेऽप्युभयव्याप्यतामात्रेऽपि साध्यसमव्याप्त्यभावात् । तृतीयेऽपि साधनमात्रव्यापकस्य विशेष्यविशेषणयोरभावात् । साध्यमात्रव्यापकस्य तु साधनाव्यापकत्वं पक्षादन्यत्र हेतोः स्वव्यतिरेकेण वृत्तेर्वा पक्ष एव वा स्यात् । न प्रथमः । तथा सति साध्यव्यापकस्य हेतुमन्तरेण वृत्तौ हेतोः साध्यव्यभिचारः क्वचिदन्यत्र दृष्ट इत्युक्तं भवति । स एव प्रत्यर्थितां भजते । अन्यथा तथाभूतोपाधेरसंभवः । द्वितीये तु सर्वत्र सपक्षे योऽसौ साध्यवदनुगत उपाधिस्तस्य तेनैव हेतुना पक्षे साधनाद्धेतोस्तद्व्यभिचारस्याप्यसम्भवात् । पक्षे चातीन्द्रियस्य तस्याभावस्याप्यदर्शनात् । तेनापि निरु-

---

एव केचन धर्मा उपाधित्वेन शङ्क्यन्ते इत्यस्वरसादाह । अपि चेति । व्यापको न वेति । प्रमेयत्वादिवत् सार्वत्रिको न वेत्यर्थः । उभयासंसर्ग इति । हेतुसाध्यसामानाधिकरण्याभाव इत्यर्थः । व्याप्यतामात्रेऽपीति । मात्रशब्देन व्यापकत्वं व्यवच्छिद्यते । विशेषणयोरभावादिति । साध्यसमव्याप्तत्वसाधनाव्यापकत्वयोरभावादित्यर्थः । हेतुमन्तरेण वृत्ताविति । हेतोः स्वव्यतिरेकेण वृत्तौ स्वस्यापि हेतुमन्तरेण वृत्तिरुक्ता भवतीति कृत्वा साध्याभाववति हेतुवृत्तिरूपव्यभिचारोपपादनायैवमुक्तमिति ध्येयम् । अन्यथेति । साधनस्य व्यभिचारित्वाभावे साध्यव्यापकसाधनाव्यापकस्य वस्तुनोऽसम्भव इत्यर्थः । ननु पक्षे तदभावस्य निर्णीतत्वाच्च लिङ्गेन साध्यव्यापकानुमानं क्रमत इत्यत आह । पक्षे चेति । संदिग्धातीन्द्रियोपाध्यभावस्यापि प्रतियोगि-

पाधिक एव सम्बन्ध इति साध्यवत्साध्यसामग्रीवच्च हेतुबलादेव सोऽपि पक्षे समाप्तं न स्वनिवृत्त्या साध्यं निवर्तयितुमलमिति स कथमुपाधिः। अथ तेनैवाप्यतीन्द्रियेणातीन्द्रियोपाध्यन्तरप्रयुक्तः सम्बन्ध इति शङ्क्येत तथा सत्यनवस्थापातः । अपिच ।

उपाधित्वेन शङ्क्यस्य सम्बन्धो निरुपाधिकः ।
अन्यथोपाधिता नास्ति तद्वदन्यत्र गृह्यताम् ।

तत्त्वरत्नाकरे त्वेवमुपाधेः स्वरूपं प्रमाणमवान्तरभेदो दूषणत्वप्रकारश्चोपपादितः । यथा

केनाचिद्यस्य सम्बन्धो योऽवच्छेदक एव हि ।
तस्योपाधिर्यथा वह्नेरार्द्रैधो धूमसंगमे ॥

निर्णयानर्हत्वेन बाधाभावान्नानुमानप्रवृत्तिविरोध इति भावः । तेनापीति । उपाधित्वेन शङ्क्येनापीत्यर्थः । उपाधित्वेन शङ्क्यस्य साधनस्य सम्बन्धो निरुपाधिक इति वक्तुं न शक्यते तत्राप्युपाध्यन्तरशङ्कायाः पूर्ववत् सम्भवादिति शङ्कते । अथेति । तेनैवापीति । एवकारो भिन्नक्रमः तेनापि सम्बन्ध उपाध्यन्तरप्रयुक्त एवेत्यन्वयः । अनवस्थापात इति । तत्राप्युपाध्यन्तरशङ्कायां पूर्वोक्तप्रकारेणोपाधिनिराकरणेन साधनाव्यापकत्वपर्य्यवसानं स्यादिति तत्राप्युपाध्यन्तरशङ्कायामनवस्था स्यात् दूषणप्रकारश्च सर्वत्रानुवर्तत एव । अतस्तत्रैव विश्रमः स्यादिति तत्रानुमानमपहतमेवेति भावः । उपाधित्वेनेति । उपाधित्वेन शङ्क्यस्य साध्यस्य च सम्बन्धो निरुपाधिको भवतीत्यकामेनापि स्वीकार्यमित्यर्थः। तत्त्वरत्नाकरग्रन्थोक्तं स्वरूपादिप्रकारमुदाहरति। यथेत्यादिना सर्वशङ्कातिप्रसङ्गपाटनपटीयांश्च तर्क इत्यन्तेन । केनाचिदिति । येन व्यापकत्वाभिमतेन यस्य व्याप्यत्वाभिमतस्य सम्बन्धे साहचर्ये योऽवच्छेदकः असम्बन्धव्यावर्तकः अयमेव हि तेन तस्य सम्बन्धे उपाधिरित्यर्थः । उदाहरति । यथेति। श्रोत्रत्वयोग इति । इदमुदाहरणं वैशेषिकमतेन विमतः प्रदेशः

श्रोत्रत्वयोगो नभसो यथा वा कर्णशष्कुली ।
संसारयोगे जीवस्य कर्माविद्यादि वा यथा ॥

साध्यव्याप्तसाधनाव्यापक इति तमुपलक्षयन्ति केचित् । साधनाव्यापकः साध्यसमव्याप्तिरिति चेत्यादिना स्वरूपं निदर्शितम् । किमस्य ज्ञापकं साधनस्य क्वचित्साध्यसम्बन्धख्यापकं सम्बन्धग्रहणवेलानुयायिस्वरूपवैकल्यं वा । असम्बन्धख्यापकं च व्यभिचारदर्शनं तच्च साध्यविरुद्धधर्मकतया निश्चिते प्रमाणबाधिते पक्षे विपक्षे वा हेतोर्दर्शनम् । अग्नीषोमीयशास्त्रबाधिते पक्षे दृष्टं हि हिंसात्वं निषिद्धत्वमात्मन उपाधिं कल्पयति । प्रमेयत्वं च नित्यात्मादिविपक्षे दृष्टमनित्यत्वसाधने कृतकत्वादिकमुपाधिं करोति । सपक्षेषु च यावद्रूपविशिष्टतया साधनं साध्यसम्बन्धित्वेन दृष्टं तदन्यतररूपविकलं चेत्पक्षे दृश्यते तदा व्याप्तरूपाप्रत्यभिज्ञानात् सर्वरूपविशिष्टमेवोपाधयति।

---

श्रोत्रेन्द्रियं भवितुमर्हति नभस्त्वादित्यत्र कर्णशष्कुल्या उपाधित्वमित्यर्थः । संसारयोग इति । विप्रतिपन्नो जीवः संसारी जीवत्वादित्यत्र कर्माविद्यादिरुपाधिरित्यर्थः । आदिपदेनास्मितारागद्वेषाभिनिवेशा गृह्यन्ते । तेषां च प्रत्येकमेवोपाधिता साध्यसमव्याप्तिरिति साध्येन सह समव्याप्तिर्यस्येत्यर्थः । वह्न्यार्द्रेन्धनसंयोगस्य वा वह्निसंयोगार्द्रेन्धनसंयोगस्य वात्रोपाधित्वात् न तत्र समव्याप्तिगर्भोपाधिलक्षणस्याव्याप्तिरिति बोध्यम् । स्वरूपे उपपादिते प्रमाणोपपादनाय पृच्छति । किमस्य ज्ञापकमिति । प्रमाणमाह । साधनस्येति । साध्यविरुद्धधर्मानिश्चयस्य भ्रमसाधारणत्वादाह । प्रमाणबाधित इति । दृष्टं हिंसात्वमिति । एतच्च सांख्यादिमतेन स्वमतेऽग्नीषोमीये हिंसात्वाभावात् द्वितीयमुपाधिज्ञापकमुपपादयति । स पक्षेषु चेति । सर्वरूपविशिष्टमेवोपाधयतीति । शाकाद्याहारपरिणामविशिष्टमित्रातनयत्वमेव

यथा भावितनयश्यामलिमन्यनुमेये मैत्रीपुत्रत्वं भूतपुत्रेषु दृष्टं शाकाद्याहारपरिणामविशेषम्। एवं जातीयके रूपवैकल्यकल्पितोपाधिके हेतावप्रयोजकत्वव्यपदेशः परीक्षकाणाम्। व्यभिचारकल्पितोपाधिकयोस्तु बाधितो विरुद्धो नैकान्तिक इत्यादिनोपाधेः प्रमाणावान्तरभेदादिकं प्रपञ्चितम्। एवं चोपसंहृतम्। तदेष बहुरूपः। व्यभिचार एव हि प्रतिबन्धाभावः। उपाधिरेव व्यभिचारनिदानम्। प्रमाणानिश्चित एवोपाधित्वेन शङ्कनीयः। साधने सोपाधिः साध्ये निरुपाधिरेव उपाधित्वेन निश्चेयः। सर्वं शङ्कातिप्रसंगपाटनपटीयांश्च तर्क इति। तदेवं निरुपाधिकसंबन्धं व्याप्यं साधनमित्यनर्थान्तरम्। तस्य द्वे रूपे

---

साध्ये प्रयोजकं करोतीत्यर्थः। तत्र विशेष्यांशस्याप्रयोजकत्वात् विशेषणस्यैवोपाधित्वमिति पर्यवसितोऽर्थः। उपाधेरवान्तरभेदमाह। एवं जातीयकेति। दूषकत्वप्रकारप्रतिपादकोपसंहारग्रन्थमुदाहरति। एवं चोपसंहृतमिति। प्रतिबन्धाभाव इति। व्याप्त्यभाव इत्यर्थः। शङ्कनीय इति। चोदनीय इत्यर्थः। साधने सोपाधिः साध्ये निरुपाधिरिति साध्यसमव्याप्तत्वे सातत्यादिव्यवहारात् साधनत्वादेरनुमापकतावच्छेदकत्वात्तस्य पृथग् लक्षणं वक्तव्यमित्यत आह। व्याप्यं साधनमिति। तथा च साधनहेतुशब्दयोर्गत्यर्थकधातूत्पन्नत्वेन "सर्वे गत्यर्था ज्ञानार्था" इति न्यायेन ज्ञापकवाचित्वात्। कारणवाचित्वाभावात् लीनमर्थं गमयतीति प्राचीनोक्तव्युत्पत्त्यनुसारेण लिङ्गशब्दस्यापि ज्ञापकार्थत्वात् साधनहेतुलिङ्गशब्दैर्व्याप्यधूमादिकमेवाभिधीयत इति वस्त्वन्तरासिद्धेः पृथग्लक्षणकरणमप्रसक्तमिति भावः। अनर्थान्तरमिति। एकार्थकमित्यर्थः। प्रपञ्चनादिति। सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिश्च व्याप्तेः प्रपञ्चः पक्षे सत्त्वमबाधितविषयत्वं च पक्षधर्मतायाः व्यापकबाधे व्याप्यासिद्ध्या पक्षधर्मताऽसिद्धेः असत्प्रतिपक्षत्वं तु द्वयोरपि साधारणं सत्प्रतिपक्षत्वे व-

अनुमित्यङ्गभूते । व्याप्तिः पक्षधर्मता चेति तयोरेव प्रपञ्चनात् पञ्च रूपाणि । पक्षव्यापकत्वं सपक्षे सत्त्वं विपक्षवृत्तिरहितत्वम-बाधितविषयत्वम् असत्प्रतिपक्षं चेति । सिषाधयिषितधर्मविशिष्टो धर्मी पक्षः । यथाग्निमत्त्वादिसाधने पर्वतादिः । तस्मिन्नभिन्नप्रकारेण स्वायोगव्यवच्छेदेन सर्वत्र वर्तमानत्वं पक्षव्यापक-

---

स्तुनि विकल्पासम्भवेन विरुद्धसाध्ययोर्द्वयोर्मध्येऽन्यतरत्र व्याप्तिपक्षधर्मतयोर्व्यतिरेकावश्यंभावेनासत्प्रतिपक्षत्वस्य व्याप्तिपक्षधर्मतोभयोपपादकत्वात्साधनवति क्वापि पक्षे साध्यबाधस्य व्यभिचारसम्पादकत्वेनाबाधितविषयत्वस्य तत्र व्याप्त्युपपादकतया तदपि तयोः साधारणमेवेति विवेकः । सपक्षादिष्वति व्याप्तिवारणाय सिषाधाधयिषितधर्मविशिष्टत्वविशेषणम् । धर्मस्य सिषाधयिषितत्वं च सिषाधयिषायोग्यत्वं तेन गर्जितेन मेघानुमानेन न नभस्यव्याप्तिस्तस्य तदानीमसिषाधायिषितत्वेऽपि तद्योग्यतासम्भवात् । योग्यता च साधकबाधकमानाप्रसक्तिः । पक्षलक्षणमुक्त्वा पक्षव्यापकत्वं निर्वक्ति । तस्मिन्निति । घटत्वपटत्वादिषु भागासिद्धेष्वतिव्याप्तिवारणाय सर्वत्रेत्युक्तम् । नन्वेवं पर्वते पूर्वभागे विद्यमानस्य धूमस्य परभागेऽवृत्तेरव्याप्तिः स्यादित्यत उक्तं स्वायोगव्यवच्छेदेनेति । शान्तधूमे पर्वते धूमस्य कारणात्मनावस्थितत्वात्तत्रातिव्याप्तिवारणायाभिन्नप्रकारेणेत्युक्तम् । तत्र धूमस्य हेतुतावच्छेदकधूमत्वभिन्नेन तत्कारणत्वप्रकारेण विद्यमानत्वान्नातिव्याप्तिः । पूर्वभागे वह्निमान् परभागे धूमवत्त्वादित्यत्र धूमस्य पर्वते पक्षेऽयोगव्यवच्छेदेन विद्यमानत्वादतिव्याप्तिरित्युक्तमभिन्नप्रकारेणेति । अभिन्नप्रकारत्वं च कदाचिद्धेतुवृत्तितायां साध्यानुमितौ योऽवच्छेदकत्वेनाभिमतः तद्भिन्नावच्छेदकरहितत्वम् । स च साध्यवृत्तितावच्छेदकभाग एवेति नातिव्याप्तिरित्यर्थः । नन्वेवं दिवानिशाकरास्तगमनातिक्रान्तसमुद्रक्षोभानुमाने साध्यवृत्तितावच्छेदकभिन्नदेशकालावच्छिन्नत्वादव्याप्तिः स्यादिति चेन्न तत्र सर्वदा एकावच्छेदकावच्छिन्नत्वेन हेतुवृत्त्यभावात् । स च साध्यवृत्त्यवच्छेदकोऽन्यो वेति यथासम्भवं

त्वम् । सिषाधयिषितधर्मसजातीयधर्मवान् सपक्षः । यथा महानसादिः । तस्मिन् सर्वत्र कतिपयव्यक्तौ वा वृत्तिः सपक्षे सत्त्वं सर्वसपक्षावृत्तिराहित्यमित्यर्थः । कृतकत्वादयः सपक्षव्यापकाः । धूमत्वादयः सपक्षैकदेशवर्तिनः । तत्र सपक्ष एव हेतुधर्मेणापि समन्वितः साधर्म्यदृष्टान्तः तस्य व्याप्तिदर्शनस्थानत्वात् । उभययोगापेक्षासाध्यतज्जातीयशून्यो विपक्षः ।यथा महाह्रदादिः । तत्र सर्वत्रावृत्तिर्विपक्षवृत्तिरहितत्वम् । इदं च कचिद्विपक्षाभावात् कचित्तत्संसर्गाभावात् इति द्विविधम् । पूर्वं केवलान्वयिनि द्वितीयमन्वयव्यतिरेकिणि चानन्तरं द्रष्टव्यम् । अन्ये तु विपक्षाद्व्यावृत्तिरितीदं रूपं कल्पयित्वा केवलान्वयिनश्चतूरूपत्व-

---

प्राह इति । सिषाधयिषितधर्मसजातियधर्मवानिति । सिषाधयिषितभिन्नव्यापकतावच्छेदकाक्रान्तधर्मवानित्यर्थः । पक्षेऽति व्याप्तिवारणाय भिन्नान्तम् इतरत्तु विपक्षेऽतिव्याप्तिवारणाय सर्वत्र धर्मिधर्मपदे स्वरूपकथने सर्वत्रेति समव्याप्त्यभिप्रायेण कतिपयेति विषमव्याप्तिकाभिप्रायेण । अननुगमपरिहारायाह । सर्वसपक्षेति । प्रसङ्गात् सपक्षस्यैव हेतुमत्तया साधर्म्यदृष्टान्तत्वमुपपादयति । तत्रेति । ननु व्यापकसत्त्वमात्रमेव दृष्टान्तत्वप्रयोजकमस्तु किं हेतुसत्त्वापेक्षयेत्यत आह । तस्येति । साध्यतज्जातियशून्य इति । व्यापकशून्य इत्यर्थः । पक्षसपक्षान्य इति वार्थः । तत्र सर्वत्रावृत्तिरिति । व्यभिचारिणोऽपि यत् किंचिद्विपक्षवृत्तिराहित्यमस्तीत्युक्तं सर्वत्रेति । अनन्तरमिति । केवलान्वय्यन्वयव्यतिरेकिणोर्निरूपणावसर इत्यर्थः । वैशेषिकास्तु सति विपक्षे हेतोरवर्तनं विपक्षाद्व्यावृत्तिरितीदं च रूपं केवलान्वयिनि नास्तीति चतूरूप एव केवलान्वयिहेतुरिति वदन्ति तन्मतमनुवदति । अन्ये त्विति । तत्तद्रूपे ह्यसिद्ध्यादिराहित्यमेव रूपतयाभ्युपेयमिति तद्वत्रापि विपक्षवृत्तित्वदोषस्य व्यावृत्तिरेव रूपतया वक्तव्यतया च व्यभिचाराभावरूपस्य विपक्षवृत्त्यभावस्य केवलान्वयिनि त्वया,

माहुस्तदसत् । विपक्षवृत्त्याख्यदोषस्याभाव एव ह्यत्र रूपत्वेन विवक्षितः । तावदेवान्वयव्यतिरेकिण्यपि रूपं तच्च रूपं तुल्यं केवलान्वयिन्यपीति विपक्षसद्भावस्तु व्यतिरेकव्याप्तेरङ्गं विपक्षवृत्तिरूपदोषस्य च न पुनस्तदभावस्य विपक्ष एव हेतुना शून्यो व्यतिरेकदृष्टान्तो भवति। हेतुमानपि हि विपक्षोऽस्त्येव येन हेतोरनैकान्त्यादि वक्ष्यते । ततश्चानैकान्त्यानुपदर्शितव्याप्तिकत्वादिपरिहाराय व्यतिरेकदृष्टान्तस्योभयनिवृत्त्यपेक्षा । व्याप्तिदर्शनस्थानं हि दृष्टान्तभूतमाहुः । प्रबलेन प्रमाणेन पक्षे निश्चितसाध्याभाववत्त्वं बाधितविषयत्वम् । यथा महाह्रदो वन्हिमानित्यादौ । तदभावस्त्वबाधितविषयत्वं यथा पर्वतः परभागेऽग्निमानित्यादौ । समबलतया प्रतीयमानप्रमाणो-

---

व्यङ्गीकार्यत्वात् सोऽपि पञ्चरूप एवेत्यभिप्रेत्य दूषयति । तदसदिति । ननु तर्ह्यन्वयव्यतिरेकिवत् केवलान्वयिनश्च विपक्षसद्भावोऽङ्गं स्यादित्याशङ्क्याह । विपक्षसद्भावस्त्विति । विपक्षवृत्तित्वरूपदोषस्येति दृष्टान्तार्थं पूर्ववद्वैधर्म्यदृष्टान्तं निरूपयति । विपक्ष एवेति । ननु विपक्षत्वादेव हेतुशून्यता सिध्यतीति सा पृथङ्गवक्तव्येत्यत आह । हेतुमानपीति । व्यापकाभाववत्त्वमेव हि विपक्षत्वमिति भावः । अनैकान्त्यादीत्यादिपदेन व्याप्यत्वासिद्धिसोपाधिकत्वे गृह्येते । ननु तर्हि हेत्वभाववत्त्वमेव वैधर्म्यदृष्टान्तत्वप्रयोजकमस्त्वित्यत आह । अनुपदर्शितव्याप्तिकत्वेति । आदिपदं पूर्ववत् । प्रबलेनेति । अत्र साध्याभावभ्रमस्य सद्धेतावपि सत्त्वादव्याप्तिः स्यादित्यत आह । प्रमाणेनेति । प्रमाणस्य समतायां न्यूनतायां च स्वविषयनिश्चय एव न सम्भवतीति निश्चयोपपादनाय प्रबलपदं विपक्षे साध्याभावनिश्चयस्याबाधितहेतावपि सम्भवादतिव्याप्तिः स्यादित्यत उक्तं पक्ष इति । परभागेऽग्निमानिति । पूर्वभागे वह्न्यभावस्य प्रत्यक्षेण निश्चितत्वात् तत्र वह्निसाधने बाधितविषयत्वमेव हेतोरित्यर्थः । समबलतयेति । वस्तुनि विकल्पाभावेन साध्यतदभावसाधकयोरेकत्र

परोधाभावोऽसत्प्रतिपक्षत्वं यथा धूमानुमानादेः । द्विधा च व्याप्यम् । अन्वयव्यतिरेकि केवलान्वयि चेति । तत्र पूर्वोक्तपञ्चरूपोपपन्नं विपक्षवदन्वयव्यतिरेकि । यथा पर्वतोऽग्निमान् धूमवत्त्वात् यो धूमवान् सोऽग्निमान् यथा महानसः । योऽनग्निः स निर्धूमः यथा महाह्रद इति । यद्यपि स्वसाध्यसाधने अन्वयव्यतिरेकयोरन्यतरेणैवालमिति तावता व्यपदेशोऽपि युक्तः तथाप्युभयसद्भावज्ञापनायासाधारणकेवलान्वयिभ्यां व्यावृत्तिज्ञापनाय च व्याप्तिद्वयेन व्यपदेशः । तादृशमेव विपक्षरहितं केवलान्वयि यथा ब्रह्म शब्दवाच्यं वस्तुत्वात्

---

वास्तविकबलतौल्याभावेनासम्भवः स्यादित्यत उक्तं प्रतीयमानेति । उपरोधः । साध्यसिद्धिप्रतिबन्धः । इदं च पदमविरोधे प्रमाणान्तरसद्भावमात्रेण सत्प्रतिपक्षतां वारयितुम् । वैशेषिकोक्तत्रेधाविभागनिराकरणाय स्वाभिमतविभागमाह । द्विधा चेति । चशब्दो ऽवधारणार्थः । तत्रेति । आभासव्यावृत्त्यर्थं पञ्चरूपोपपन्नमित्युक्तं केवलान्वयिव्यावृत्त्यर्थं विपक्षवदित्युक्तम् । पञ्चरूपोपपन्नत्वं विपक्षवत्त्वं च ज्ञापयति । यथेति । उक्ते रूपत्रयवत्त्वे वस्तुतो बाधप्रतिरोधयोरभावादनुक्तावपि स्वयमेवानुपलम्भादवगन्तुं शक्यमित्यबाधितत्वासत्प्रतिपक्षत्वे नोक्ते । नन्वेवमनुपलम्भादेव विपक्षवृत्तित्वाभावोऽवगन्तुं शक्यत इति स च नोदाह्रियेत उदाहृतश्च यो ऽनग्निः स निर्धूम इतीति चेन्न विपक्षवृत्तित्वाभावरूपोपपादनार्थं न भवति यो ऽनभग्निः स निर्धूम इत्युक्तिः किंतु व्यतिरेकव्याप्तिप्रदर्शनार्थम् । अर्थात्तु तस्याप्युक्तिः संजाता । तदिदं यद्यपीत्यादिग्रन्थेन स्फुटम् । असाधारणकेवलान्वयिभ्यामिति । अन्वयव्याप्तावनुपदर्शितायामसाधारणत्वभ्रमः स्यात् व्यतिरेकव्याप्तावनुपदर्शितायां केवलान्वयित्वभ्रमः स्यादिति तदुभयव्यावर्तनाय तदुभयं प्रदर्शनीयमित्यर्थः । तादृशमेवेति । पञ्चरूपोपपन्नमेवेत्यर्थः । तस्य प्रयोजनं पूर्ववत् अन्वयव्यतिरेकिव्यावर्तनाय विपक्षरहितमित्युक्तम् । उक्तानुमानद्वये विपक्षरहितत्वमेवोपपा-

द्रव्यत्वाद्वा घटादिवत् । अनुभूतिरनुभाव्या वस्तुत्वात् घटादिवत् इत्यादि । नह्यवाच्यमननुभाव्यमिति वा किञ्चिदस्ति येन विपक्षः स्यात् । असदस्तीतिचेन्न व्याहतवचनत्वात् । निरुपाधिकनिषेधासंभवाच्च । सोपाधिनिषेधे सत एवासच्छब्देनाप्याकारान्तरानिमित्तेन व्यपदेशः । तथा च यदि तत्र वस्तुत्ववाच्यत्वादिहेतुसाध्यव्यतिरेक उच्यते तदा व्याघातः । अव्याहतस्थलेषु त्वन्वयव्यतिरेकित्वमेव स्यात् । नच तदतिरिक्तमसदिति किंचित्प्रतीमो येन तत्र व्यतिरेकमनुसंदधीमहि । एतेनासतो व्यतिरेकदृष्टान्तत्वमिच्छन्तो निरस्ताः । तथा सत्यभावरूपेषु साध्येष्वसतोऽन्वयदृष्टान्तत्वस्याप्यवर्जनीयत्वम् ।

दयति । नह्यवाच्यमिति । विपक्षमाशङ्कते । असदस्तीति चेदिति । व्याहतवचनत्वादिति । अस्तीति व्यवहारायोग्यस्यासतोऽस्तीति व्यवहारो व्याहत इत्यर्थः । दूषणान्तरमाह । निरुपाधिकनिषेधासंभवाच्चेति । असतोऽभावतयाधिकरणप्रतियोगिसत्त्वावश्यंभावेन तत्सत्त्वे घटाभावादिवद्वस्तुत्ववाच्यत्वादिकं स्यादेवेत्याधिकरणप्रतियेगिनोरभावेनासम्भावित एवेत्यर्थः । ननु तस्याप्यधिकरणप्रतियोगिनौ स्यातामित्यत आह । सोपाधीति । सत एवेति । विद्यमानस्यैवेति वा प्रामाणिकस्यैवेति वार्थः । आकारान्तरनिमित्तेनेति । नञर्थोल्लिखित्प्रतीतिविषयत्वेनेत्यर्थः । तथा चेति । प्रामाणिकत्वे सतीत्यर्थः । ननु ब्रह्म गुणाश्रयः द्रव्यत्वादित्यादौ द्रव्यत्वाद्यभावेषु साध्यहेतुव्यतिरेको व्याहत इत्यत आह । अव्याहतस्थलेषु त्विति । ननु घटाद्यभाववद्भावोऽप्यस्तीत्यत आह । नचेति । सद्भावोऽप्रतीतिपराहत इत्यर्थः । ब्रह्म सत् अबाध्यत्वात् व्यतिरेकेण गगनकुसुमवदिति कलिब्रह्ममीमांसका वर्णयन्ति तेऽसतोऽप्रामाणिकत्वकथनेन निरस्ता इत्याह । एतेनेति । दूषणान्तरमाह । तथा सतीति । व्यतिरेकदृष्टान्तत्वाङ्गीकार इत्यर्थः । अभाव रूपेषु साध्येष्विति । ब्रह्म शब्दवाच्यं न भवतीत्यादिष्वित्यर्थः । साध्यसत्त्वेऽपि हेत्वभावादन्वयदृष्टान्तत्वं

यत्वप्रसंगाच्च । हेतोश्चाप्रतीयमानत्वादेरभावात्मकस्य वा यस्य कस्यचित् प्रयोक्तुं शक्यत्वात् । भाष्यादिषु क्वचित् शशविषाणाद्युदाहरणं प्रतिबन्ध्यभिप्रायेण परमतेन वेति द्रष्टव्यम् । पिशाचानां पिशाचभाषयैवोत्तरं देयमिति न्यायात् । स्वयमेव निरुपाधिनिषेधासम्भवस्य शून्यवादनिराकरणे दर्शितत्वाच्चेति । तर्हि विपक्षरहितस्य केवलान्वयिनो विपक्षवृत्त्यभावः कथमिति चेत् हंत किं तस्य विपक्षवृत्तित्वमस्ति तदपि

---

न सम्भवतीत्यत आह । हेतोश्चेति । अप्रतीयमानत्वादेरिति । दृश्यत्वाभावादेरित्यर्थः । आदिपदेनानुभाव्यत्वान्याधीनप्रकाशत्वजडत्वाभावा गृह्यन्ते । ननु भाष्येऽनुभूतेरनुभाव्यत्वसमर्थनावसरेऽनुभूतेरननुभ्याव्यत्वे गगनकुसुमादिवदसत्त्वमेव स्यादित्युच्यते एवं प्रदेशान्तरेऽपि शशविषाणाद्युदाहरणं दृश्यते तत्कथमुपपद्यत इत्यत आह । भाष्यादिष्विति । प्रतिबन्ध्यभिप्रायेणेति । अनुभूतेरनुभवाविषयत्वे परमार्थत्वाङ्गीकारे ऽसतोऽपि परमार्थता स्यादनुभूतेर्वा सत्त्वं स्यादिति प्रतिबन्ध्यभिप्रायेण भाष्यादिषु तदुक्तिः नतु दृष्टान्तत्वमपि तत्र विवक्षितमिति भावः । यद्वा परैः कुदृष्टिभिरसतोऽपि दृष्टान्तत्वाङ्गीकारात्तन्मतानुसारेण शशविषाणाद्युदाहरणं भाष्यादिषु कृतमित्याह । परमतेन वेति । स्वानभ्युपगतस्य स्वेनोक्तिः कथमुपपद्यत इत्यत आह । पिशाचानामिति । न म्लेच्छितवै इति निषेधसत्त्वेन स्वानभ्युपगतायाः पिशाचभाषायाः पिशाचैः सम्वादे परिग्रहो न दोषायेति न्यायादित्यर्थः । कथमित्थं ज्ञायत इत्यत आह । स्वयमेवेति । नन्वेवं निरुपाधिनिषेधानङ्गीकारे केवलान्वयिनि विपक्षस्याप्रसिद्धत्वेन तद्वृत्तित्वस्य सुतरामप्रसिद्धत्वात्तदभावः कथमङ्गीक्रियत इति नैयायिकः शङ्कते । तर्हीति । अन्यत्र प्रसिद्धस्य व्यभिचारस्याभाव एव हि विपक्षवृत्तित्वाभावः तस्यानङ्गीकारे केवलान्वयिनो व्यभिचारित्वमङ्गीकृतं स्यादित्याह । हन्त किमिति । व्यभिचारत्वं नाङ्गीक्रियत इति शङ्कते । तदपि नास्तीति । अ-

नास्तीति चेत्तर्हि तावदेवानुमानाङ्गमित्युक्तम् । तदभावेऽपि तद्वृत्तिलक्षणविशिष्टस्यासिद्धेरिति । एतेन केवलान्वयि नानु-

---

व्यभिचारित्वमेव हि विपक्षवृत्तित्वाभावः । अव्यभिचारः केवलान्वयिन्यङ्गीक्रियते विपक्षवृत्तित्वाभावरूपं पञ्चमरूपं तु नाङ्गीक्रियते इत्येतदुपहास्यमिति परिहरति । तर्हि तावदेवेति । विपक्षवृत्तित्वाभावो विशिष्टाभावः स च क्वचित्सति विपक्षे तद्वृत्तित्वरूपविशेष्याभावात् यथान्वयव्यतिरेकिणि क्वचिद्विपक्षरूपविशेषणाभावात् तद्वृत्तित्वाभावः यथा केवलान्वयिनीत्यभिप्रेत्याह । तदभावेऽपीति । विपक्षाभावेऽपीत्यर्थः । ननु केवलान्वयिनि विपक्षस्यात्यन्तासत्तया तदभावोऽप्यत्यन्तासन्नेवेति कथं तदभावायत्तो विशिष्टाभावः । तथा हि न्यायविदां सचेतसामत्र मूकतैवोचितेति तस्मात्केवलान्वयिनः पञ्चमं रूपं वक्तुमशक्यमिति चेन्न। अतिरिक्ताभाववादिनां मतेऽसत्प्रतियोगिकस्यासत्त्वेऽपि भावान्तराभाववादिनात्यन्तासत्प्रतियोगिकाभावस्य वक्तुं शक्यत्वात् । यत्र यद्ग्रहो यदारोपविरोधी तस्यैव तदभावत्वात् केवलान्वयित्वग्रहस्य विपक्षवृत्तित्वारोपविरोधित्वेन तस्य तदभावत्वाविरोधात् स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यकत्वस्य वा विपक्षवृत्तित्वाभावत्वेन विवक्षितत्वाच्च केवलान्वयिनः पञ्चमरूपबाधः असिद्धादिरूपदोषाभाव एव हि पक्षसत्त्वादिरूपतयाङ्गीक्रियते । तथा केवलान्वयिन्यपि व्यभिचाररूपदोषाभावात्मकस्य विपक्षवृत्तित्वाभावभस्याकामेनापि स्वीकार्यत्वादिति सङ्क्षेपः । केवलान्वयिनः पञ्चरूपाभावाच्च प्रमापकत्वमिति ये हैतुकापसदा वदन्ति ते अनेन पञ्चमरूपोपपादनेन निरस्ता इत्याह । एतेनेति । हैतुक एव दुर्दुरः वराकः "कुत्सितानि कुत्सनै"रिति समासः हैतुकापसद इत्यर्थः । लोके पुष्पपटलादिदूषिता दृष्टिर्हि शुक्लादिरूपग्रहणाशक्ता तथा केवलान्वयिनि विद्यमानस्य पञ्चमरूपस्य शुक्लादिवाचकरूपशब्दश्लिष्टस्याग्रहणात् हैतुकवराकस्य नयनवाचकदृष्टिशब्दश्लिष्टा धीर्दूषितेति ज्ञायत इत्यर्थः । ननु केवलान्वयिनः प्रमाणत्वे केवलान्वय्याभासानामपि प्रामाण्यं स्या-

मानं विपक्षरहितत्वात् । सर्वमनित्यं सत्त्वादित्यादिवदिति हेतुकदर्दुरदाष्टिर्दूषिता । ननु यदि केवलान्वयि प्रमाणम् अग्निरनुष्णः पदार्थत्वात् घटवदित्याद्यपि प्रसज्ज्येतेतिचेत् न बाधितत्वात् तर्हि धर्मादयः कस्य चिदिन्द्रियग्राह्याः प्रमेयत्वात् मीमांसकानामप्रत्यक्षत्वाद्वा अस्मत्सुखादिवदित्यादि स्यादिति चेन्न । विपक्षे बाधकाभावादेरुक्तत्वात् । अनुभूतेः स्वयंप्रकाशाया अप्यननुभाव्यत्वे अनुभूतिपदप्रयोगस्यैव निरर्थकत्वप्रसंगात् परस्यानुभूतिविषयानुभवसिध्यर्थमेव हि तत्प्रयोगः । एवं वाच्यत्वविपर्ययेऽपि बाधः । स्पष्टः तस्माद्व्याहतसाध्यविपर्ययं केवलान्वयि प्रमाणमिति संक्षेपः । अत एव महाविद्या-

---

दित्याशङ्काभासानाभासयोर्वैषम्यं दर्शयन्ननाभासस्यैव केवलान्वयिनः प्रामाण्यमित्याह । नन्वित्यादिना । अग्निरनुष्णः पदार्थत्वादित्यत्र उष्णत्वस्य तेजसि संदिग्धत्वस्यान्यत्राभावाच्च केवलान्वयित्वं सम्भवतीति शङ्कस्य हृदयम् । अबाधितं केवलान्वयिहेतुमाशङ्कते । तर्हीति । उक्तत्वादिति । प्रत्यक्षाध्याय इत्यर्थः । धर्मादयः कस्याचित्प्रत्यक्षा इत्यादिरपि तत्रैव व्याख्यातः । ननु त्वदभिमतकेवलान्वयिनोऽप्यप्रयोजकत्वं स्यादित्याशङ्क्य स्वानुमानेऽप्रयोजकत्वमुद्धरति । अनुभूतेरिति । बाधिताप्रयोजकरूपोभयविधकेवलान्वय्याभासव्यावृत्तं केवलान्वयिनः प्रामाण्यप्रयोजकत्वं दर्शयन् केवलान्वयिनिरूपणमुपसंहरति । तस्मादिति । यस्य केवलान्वयिनो हेतोः साध्यविपर्ययो व्याहतो भवति स प्रमाणं यथा ब्रह्म शब्दवाच्यं वस्तुत्वात् । द्रव्यत्वाद्वा घटादिवत् अनुभूतिरनुभाव्या वस्तुत्वात् घटादिवदित्यादि । यस्य तु साध्यविपर्य्ययो न व्याहतः स न प्रमाणं यथाग्निरनुष्णः पदार्थत्वात् धर्मादयः कस्य चिदिन्द्रियग्राह्याः मेयत्वादित्यादिः । तत्र साध्यविपर्यये व्याघाताभावादित्यर्थः । इति सङ्क्षेप इति । अनेन सर्वमनित्यं वस्तुत्वादित्याद्युदाहरणान्तरेष्वपि यथासम्भ-

दिरूपकेवलान्वयिनामप्यनवकाशः। अव्याहतसाध्यविपर्ययत्वा-

घम् बाधाप्रयोजकत्वे द्रष्टव्ये इति सूच्यते। अव्याहतसाध्य-विपर्ययत्वादेव कुदृष्टिभिः स्वाभिमतसाधनत्वेनोत्प्रेक्षितानि महा-विद्यानुमानानि आभासीकृतानीत्याह। अत एवेति। अतः शब्दार्थमाह। अव्याहतेति। अन्यथेति। तेषामपि व्याहतसा-ध्यविपर्ययत्वाङ्गीकारे साध्याभावसाधकत्वाभावेनाभिलषितसर्वप-दार्थसाधकत्वं भवद्भिरङ्गीकृतं भज्ज्येतेर्थः। एतदुक्तं भवति। अयं घटः एतद्घटाज्ञानान्यान्यभावान्यः मेयत्वात्पटवत् एतद्घटाज्ञा-नाभ्यां यदन्यत् पटादि सर्वं ततोऽन्य एतद्घटः अज्ञानं च ता-दृशाद्भावादन्यत्त्वं च एतद्घटरूपभावान्यत्त्वस्य तत्र बाधितत्वा-दज्ञानस्य भावत्वमादाय सिध्यति। एतद्घटान्यत्वमादाय प-क्षादतिरिक्ते साध्यसिद्धिः। अज्ञानं स्वस्वेतरवृत्तित्वरहितभा-ववृत्तिधर्माधिकरणमेव पदार्थत्वाद्घटवत् अज्ञानतादितरवृत्तित्वर-हितो धर्मः अज्ञानमात्रवृत्तिर्वा तदितरमात्रवृत्तिर्वा स्यात् तत्र तदितरमात्रभाववृत्तिधर्माधिकरणत्वसाधने बाधात् स्वमात्रवृत्ति-भाववृत्तिधर्ममादाय साध्यसिद्धावज्ञानस्य भावत्वसिद्धिः। अ-ज्ञानान्यत्वमादाय सर्वत्र भावेष्वभावेषु च साध्यसिद्धिः। अज्ञानत्वं स्वस्वेतरवृत्तित्वरहितभाववृत्तिवृत्तिधर्माधिकरणं मे-यत्वाद्घटवदज्ञानत्वेतरमात्रवृत्तिधर्मस्याज्ञानत्वे बाधितत्वादज्ञान-त्वमात्रवृत्ति भाववृत्ति धर्ममादाय साध्यपर्य्यवसानेऽज्ञानस्य भावत्वसिद्धिः। अज्ञानत्वान्यत्वस्य भाववृत्तिप्रमेयत्वादिभाववृ-त्तित्वात्तदाश्रयत्वात्सर्वत्रापि सपक्षे साध्यसिद्धिः। भावत्वं स्वस्वे-तरवृत्तित्वानधिकरणाज्ञानवृत्तिवृत्तिधर्मवत् मेयत्वाद्घटवत् भावत्वे-तरमात्रवृत्तिधर्मस्य भावत्वे बाधाद्भावत्वमात्रवृत्तिमज्ञानवृत्तिवृत्ति-धर्ममादाय साध्ये वाच्ये अज्ञानस्य भावत्वसिद्धिः। अज्ञानवृत्ति-प्रमेयत्वादिवृत्ति भावत्वान्यत्वमादाय सपक्षे साध्यसिद्धिरित्येवमा-दीनि भावरूपाज्ञानसाधककेवलान्वय्यनुमानानि महाविद्यानुमाना-नीति परैः परिभाषितानि च भावपदस्थानेऽभावपदप्रक्षेपेण विवक्षित-साध्यविपर्य्ययसाधनक्षमाणि तेषां व्याहतसाध्यविपर्यत्वाभावान्न प्रमाणत्वमिति भावरूपघटाद्यज्ञानाभावे तद्विषये वल्मीके घटभ्रमानुत्पा

त् । अन्यथा तेषां सर्वसाधकत्वसामर्थ्याभ्युपगमभङ्गप्रसङ्गात् । ननु न द्विविधं व्याप्यं केवलव्यतिरेकिणोऽपि भावात् । तथाहि अनुभूतिरननुभाव्या अनुभूतित्वात् । यदनुभाव्यं न सानुभूतिः यथा घटः । नचान्वयव्याप्त्यभावादस्याव्याप्तिरिति भाव्यम् व्यतिरेकव्याप्त्यभावात् केवलान्वयिनोऽप्यव्याप्तिप्रसङ्गात् । द्वयोरपि व्याप्त्योः प्रत्येकमन्वयव्यतिरेकिणि प्रदर्शनीयत्वाभ्युपगमाच्च । उक्तं च वरदविष्णुमिश्रैरपि । तत् पुनरन्वयव्यतिरेकिकेवलान्वयिकेवलव्यतिरेकीति त्रिविधमित्यादि । तत्त्वरत्नाकरेऽप्युक्तम् । अक्षपादस्त्रैधमसूत्रयदित्यादीतिचेत् । न तावदिह संप्रदायविरोधः । केवलव्यतिरेकि तु साधनदशामेव नासादयति सपक्षान्वयविरहात् असाधारणवदित्यादिना । आत्मसिद्धौ भगवद्यामुनमुनिभिः प्रपञ्चितत्वात् । उक्तं च न्यायकुलिशे स्वप्रकाशवादे श्रीमद्रामानुजार्यैः । नच सिद्धान्तिनोऽयं प्रसङ्गः केवलव्यतिरेकिप्रामाण्यानभ्युपगमादिति । अतो

---

दप्रसङ्गादिति तर्काणामाभासत्वं शतदूषण्यादिषु प्रपञ्चितमित्यस्माभिरुपरम्यते । केवलव्यतिरेकिप्रामाण्यवादिकुदृष्टिः शङ्कते । नन्विति । अव्याप्तिरिति । व्याप्यत्वं नास्तीत्यर्थः । अव्याप्तिप्रसङ्गादिति । व्याप्यत्वाभावप्रसङ्गादित्यर्थः । प्रदर्शनीयत्वाभ्युपगमाच्चेति । व्यतिरेकव्याप्तेरनुमानाप्रयोजकत्वेऽन्वयिनि तत्प्रदर्शनस्य वैयर्थ्यमेव स्यादित्यर्थः । केवलव्यतिरेक्यनभ्युपगमे सिद्धान्तविरोधमप्याह । उक्तञ्चेत्यादिना । अक्षपादस्त्रैधमसूत्रयदिति गौतमोऽन्वयव्यतिरेकिकेवलान्वयिकेवलव्यतिरेकिभेदादनुमानत्रैविध्यं सूत्रितवानित्यर्थः । उत्तरत्र विस्तरणे वस्तुविरोधं परिहरिष्यन् सूचीकटाहन्यायेन प्रथमं सम्प्रदायविरोधं परिहरति । न तावदिति । वरदविष्णुमिश्रग्रन्थविरोधं परिहरति । अत इति । तत्त्वरत्ना-

---

(१) शतदूषण्यामेकोनचत्वारिंशवादे अनुत्पत्तीति मतिकमादाय चण्डमारुतव्याख्याने नतु मूले इति ज्ञेयम् ।

वरदविष्णुमिश्रोक्तमेकदेशिमतं परमतानुसारेण वोक्तम् । तत्त्वरत्नाकरेऽपि अक्षपादसूत्रेधमसूत्रयदित्युपपक्रम्योक्तं नतु स्वमततया। यत्तु तत्रैव हेत्वाभासनिरूपणेऽप्युक्तम् । इयं ह्यनध्यवसितकेवलव्यतिरेकिणो भिदा विद्यमानसपक्षो विपक्षमात्रवृत्तिः प्रथमः । अन्यस्त्वविद्यमानपक्षो विपक्षाच्च व्यावृत्त इति तत्र दृष्टे साध्यवति सपक्षे साधनस्य ततो व्यावृत्तात्रन्वयबाधादाभासत्वं स्पष्टम् । अदृष्टे तु तस्मिन् साध्यान्वयाक्षेपकपूर्वोक्तप्रमाणावतारादनाभासत्वं सुवचमिति । तदप्यनादरभाषितमिति मन्यामहे । अन्यथा सपक्षैकदेशवृत्तेरप्याभासत्वप्रसङ्गात् । सा-

---

करग्रन्थे प्रदेशान्तरविरोधं परिहर्तुं तत्रत्यग्रन्थमनुवदति । यत्त्विति । इयं हीति । इयमसाधारणता अनध्यवसितेति । केवलव्यतिरेकी द्विविधः । अध्यवसितोऽनध्यवसितश्चेति पूर्वस्य साध्यनिश्चायकत्वेन सद्धेतुत्वादध्यवसितत्वम् । उत्तरस्य त्वसाधारणस्य साध्यनिश्चयाजनकत्वादाभासत्वं तथा चासाधारणतानध्यवसितकेवलव्यतिरेकिणो भिदा सद्धेतुव्यावर्तको धर्म इत्यर्थः । असाधारणस्य सद्धेतुव्यावृत्तिं दर्शयितुमाभासमनाभासं च केवलव्यतिरेकिणं निरूपयति । विद्यमानेति । प्रथमः असाधारणः । अन्यः सद्धेतुः तत्र प्रथमस्याभासत्वमुपपादयति । तत्रेति । अन्वयबाधादिति । साधनस्य साध्यसम्बन्धाभावग्रहादित्यर्थः । अदृष्टे त्विति । सपक्षेऽदृष्टे सति तत्रत्यसाध्यत्वबाधाभावात् प्रतिबन्धकाभावेन पक्षे साध्यान्वयाक्षेपककेवलव्यतिरेक्यवान्तरसम्भवात्तत्र साध्याध्यवसायहेतुत्वादनाभासत्वं वक्तुं शक्यमित्यर्थः । विरोधं परिहरति । तदपीति । अनादरभाषितमिति । भट्टपराशरपादानां तत्र केवलव्यतिरेकिनिरूपणे आदरो नास्ति अनास्थया नैयायिकमतानुसार एव कृत इति मन्यामह इत्यर्थः । अन्यथेति । साध्यान्वयबाधाबाधयोराभासानाभासताप्रयोजकत्वमादरेणोक्तमित्यङ्गीकारे इत्यर्थः । सपक्षैकदेशवृत्तेरपीति । पर्वतो वह्निमान्धूमादित्यत्र सपक्षैकदेशे महानसे वर्तमानस्य धूमस्यायोगो-

ध्यान्वयबाधस्य तावतापि सुवचत्वात्। लक्षणनिरूपणे चाभिप्रायव्यक्तेः। साध्यान्वयाक्षेपकाणां च सामान्यतोऽपि निराकरिष्यमाणत्वात्। ननु सपक्षैकदेशवर्तिनः साध्यान्वयोऽप्यस्तीति कथं साध्यान्वयबाधशङ्का सपक्षे सत्यपि पक्षमात्रवर्तिनो वा पक्ष एव साध्यान्वयसम्भवे कथं तद्बाधः। तथाप्यन्यत्र क्वचित् साध्यसम्बन्धो न दृष्ट इति चेत्तुल्यं केवल-

लके साध्यान्वयबाधादाभासत्वं स्यादित्यर्थः। ननु सर्वत्र साध्यान्वयबाध आभासत्वप्रयोजक इत्यत आह। साध्यान्वयेति। तावतापीति। असाधारणेऽपि केवलव्यतिरेकिवत्पक्ष एव साध्यान्वयसम्भवेन क्वाचित्कसाध्यान्वयबाधस्यैवाभासत्वप्रयोजकत्वादिति भावः। केवलव्यतिरेकिणो ऽप्याभासत्वमेव भट्टपराशरपादानामभिमतं ननु तस्य सद्धेतुत्वमित्ययमर्थोऽविद्यमानसपक्षो विपक्षाच्च व्यावृत्त इत्यत्र केवलव्यतिरेकिलक्षणवाक्येऽविद्यमानसपक्ष इत्यनेनैव व्यक्तः। सपक्षाभावेन साध्यान्वयासिद्धेराभासताप्रयोजकस्य प्रतिपादितप्रायत्वादित्याह। लक्षणनिरूपणे चेति। ननु साध्यान्वयाक्षेपकपूर्वोक्तप्रमाणान्तरादनाभासत्वं सुवचमित्यत्र पक्ष एव साध्यान्वयसिद्धेर्वक्तुं शक्यत्वात्। साध्यान्वयासिद्धिर्नास्तीति कथनात् कथं लक्षणवाक्येन साध्यान्वयसिद्धिः सूच्यते इत्युच्यते इत्याशङ्क्य तदप्यनादरभाषितमेव साध्यान्वयाक्षेपकानवतारस्योत्तरत्र प्रतिपादयिष्यमाणत्वादित्याह। साध्यान्वयेति। सामान्यतोऽपीति। अनुभूतिरननुभाव्या अनुभूतित्वात् जीवच्छरीरं सात्मकं प्राणादिमत्त्वादित्यादिहेतू विशिष्योपादाय साध्यान्वयाक्षेपकत्वं निराकृत्यान्येषामप्येवं जातीयकानां प्रसिद्धसाध्यकानां साध्यान्वयाक्षेपकत्वं न सम्भवतीति सामान्यतोऽपि निराकरणप्रकारो वक्ष्यते इत्यर्थः। सर्वसपक्षव्यावृत्तादसाधारणात् सपक्षैकदेशवर्तिनोऽन्वयव्यतिरेकिणः सद्धेतोर्विशेषमाशङ्कते। नन्विति। तर्ह्यसाधारणस्यापि पक्ष एव साध्यान्वयसंभवात् सद्धेतुत्वं स्यादिति प्रतिबन्द्या परिहरति। सपक्षे सत्यपीति। असाधारणस्याभासत्वे बीजमाशङ्कते। तथापीति। तर्हि बीजसाम्यात् केवल-

वलव्यतिरेकिण्यपि साध्यमपि क्वचित्तस्य न दृष्टमिति विशेष इति चेद्धन्त दोष एव गुणीभवत्यायुष्मतः। साध्यादर्शने साध्यासंबन्धोऽपि न दृष्टः स्यादितिचेत्तर्ह्यसंबन्धदर्शनं दोष इति सपक्षैकदेशवर्तिनोऽप्यसौ दुस्त्यजः। क्वचित्संबन्धदर्शनात्तस्य दोषपरिहार इति चेत् तर्हि क्वचिदपि संबन्धादर्शनात्केवलव्यतिरेकिणः साध्यसंबन्धप्रतीत्यनुत्पत्तिरेवेति किंबाधेन। तेनैव पक्षे संबन्धः प्रतीयत इतिचेन्न सिद्धे संबन्धे

---

व्यतिरेक्यप्याभास एवेत्याह। तुल्यं केवलव्यतिरेकिण्यपीति। केवलव्यतिरेकिणि विशेषमाशङ्कते। साध्यमपीति। साध्यान्वयादर्शनवत् साध्याप्रसिद्धिरप्यधिको हेतुराभासतायामिति न ततो नाभासत्वमिति सहर्षं परिहरति। हन्तेति। आयुष्मत इति। स्वापेक्षितकथनजनितहर्षप्रयुक्तोपचारोक्त्या पापी शतायुरितिरीत्याभाणकोक्तम्। तत्त्वावबोधप्रतिबन्धकपापाविलमनस्कत्वं गम्यते। ननु साध्यसम्बन्धादर्शनं न भवत्याभासताप्रयोजकम्। किन्तु साध्यासम्बन्धदर्शनम्। तच्च न केवलव्यतिरेकिणि सपक्षाभावात् तस्मादनाभास एव केवलव्यतिरेकीति शङ्कते। साध्यादर्शन इति। तर्हि सपक्षैकदेशवर्तिनोऽप्याभासता स्यादिति प्रतिबन्धान्न निर्मोक्ष इत्याह। तर्हीति। ननु हेतुसाध्यसम्बन्धदर्शनमनाभासत्वप्रयोजकं तदभाव आभासत्वप्रयोजकः। अतो ऽसाधारणान्वयव्यतिरेकिणोराभासानाभासत्वव्यवस्था सिध्यतीति शङ्कते। क्वचिदिति। तर्ह्यनाभासताप्रयोजकहेतुसाध्यसम्बन्धदर्शनस्याभावादेव केवलव्यतिरेकिणो हेतोराभासत्वं सिद्धमिति साध्यान्वयाबाधोपपादनमकिञ्चित्करमित्याह। तर्हीति। बाधो नेति पाठे तु साध्यान्वयबाधो न आभासत्वप्रयोजक इति भावः। ननु केवलव्यतिरेकिणि पक्ष एव हेतुसाध्यसम्बन्धदर्शनसम्भवान्न साध्यान्वयादर्शनमिति शङ्कते। तेनैवेति। केवलव्यतिरेकिहेतुनैवेत्यर्थः। तर्हि हेतुसाध्यसम्बन्धस्य दर्शनेन सद्धेतुत्वे सिद्धे ततोऽनुमितिः जातायां चानुमितौ

व्याप्याद्व्यापकधीर्व्यापकप्रतीतौ च संबन्धधीरित्यन्योऽन्याश्रयणात् । अथ साध्याभावः साधनाभावेन व्याप्तः साधनाभावश्च निवर्तमानः स्वव्याप्यं साध्याभावमपि निवर्तयन् साधनस्य साध्यव्याप्यतामुपादाय विश्राम्यतीति प्रतिबन्धसिद्धिः । अभावव्याप्तिवैपरीत्येन भावव्याप्तेः सार्वत्रिकत्वात् साध्यसाधनविरुद्धधर्मद्वयान्वयसमव्याप्तेश्च साध्यसाधनसमव्याप्यव्यभिचारित्वसिद्धेरिति चेन्मैवम् ।

व्याप्यानां व्यापकाभावव्यापकाभावयोगिता ।
कथं नाम नियन्तव्या केवलान्वयिवादिनः ॥
केवलान्वयिनि व्याप्ये न हि सर्वसपक्षगे ।

---

साध्यान्वयदर्शदनरूपसद्धेतुत्वप्रयोजकासिद्धौ सद्धेतुत्वमित्यन्योऽन्याश्रय इत्याह । सिद्ध इति । तथाच विद्यमानसपक्ष इत्युक्त्यैव केवलहेत्वाभास इति भट्टपराशरपादानामभिप्रायो व्यज्यत इति सुष्ठूक्तमिति भावः । ननु पक्षे व्यापकानुमितिमन्तरेणापि व्यतिरेकव्याप्त्या अन्वयव्याप्तिरनुमातुं शक्यते तेन नान्योऽन्याश्रयणमिति शङ्कते । अथेति । प्रतिबन्धसिद्धिरिति । हेतोः साध्यसम्बन्धसिद्धिरित्यर्थः । समव्याप्ते हेतौ व्यतिरेकव्याप्तेरन्वयव्याप्तिव्याप्यताप्रकारमाह । साध्यसाधनेति । साध्यसाधनविरुद्धधर्मद्वयान्वयसमव्याप्तेरिति साध्यसाधनाभावद्वयनिष्ठसमव्याप्तेरित्यर्थः । धर्मद्वयेऽन्वयः आधेयत्वं यस्या इति विग्रहः । ननु व्यतिरेकव्याप्त्यान्वयव्याप्तिः सिध्यतीति वदन् वादी प्रष्टव्यः किं व्यतिरेकव्याप्तिरन्वयव्याप्तिसमव्याप्ता उत व्याप्यमात्रा । आद्ये व्याप्यानां स्वव्यापकाभावव्यापकीभूताभावप्रतियोगित्वं नियतमित्युक्तं स्यात् तथाच केवलान्वयिसाध्यके केवलान्वयिनि च व्यभिचार इत्याह । व्याप्यानामितिश्लोकद्वयेन । नियन्तव्येति । व्याप्तिः सार्वत्रिकी ग्राह्या तत्र हेतुः केवलान्वयिवादिन इति । केवलान्वयिनां महाविद्यानुमानानां प्रामाण्यमभ्युपगच्छतस्तवेत्यर्थः । अनियन्तव्यत्वमेवोपपादयति । केवलान्वयिनीति । द्वितीये दोषमाह । अपि चेति

तद्व्यापके वा क्वापि स्यादभावप्रतियोगिता ॥

अपि चानध्यवसितेऽपि तथा व्याप्तिः सुवचा। नित्यत्वाभावो हि गन्धवत्त्वाभावेनाबादिषु व्याप्तः गन्धवत्त्वाभावश्च पृथिव्यां निवर्तमानः स्वव्याप्यं नित्यत्वाभावमपि निवर्तयन् गन्धवत्त्वस्य नित्यत्वव्याप्यतामुपादायैव विश्राम्यतीति। नन्वेवं नित्यत्वेनापि व्याप्तिस्तस्य ग्रहीतुं शक्यत इति चेत् तर्हि केवलव्यतिरेकिसाध्येन वस्त्वन्तरासाधारणस्वभावस्यापि व्याप्तिर्ग्रहीतुं शक्यत इति समो दोषः। तथाहि। घटः स्वयंप्रकाशः घटत्वात् न यदेवं न तदेवं यथा पट इति व्याप्तिः सुग्रहा। अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्ग इति केवलव्यतिरेकिणो विपक्षे बाधकमस्तीति

---

अनध्यवसितेऽपीति। असाधारणेऽपीत्यर्थः। ननु यद्यप्येवमसाधारणे व्यतिरेकव्याप्त्या साध्येनान्वयव्याप्तिः सिध्यति तद्वदेव साध्यविरुद्धधर्मेणापि व्याप्तिर्ग्रहीतुं शक्यत इति व्यतिरेक्यपेक्षया विशेषत्वात्तस्याभासत्वमिति शङ्कते। नन्वेवमिति। असाधारणे अविवक्षितेन साध्यविरुद्धधर्मेणेव व्यतिरेकिण्यविवक्षितस्य साधनव्यतिरिक्तधर्मस्यापि व्याप्तिसिद्धिः स्यादिति तस्याप्याभासत्वमेवोचितमित्याह। तर्हीति। वस्त्वन्तरासाधारणस्वभावस्यापीति। घटत्वादेरपीत्यर्थः। स्वयंप्रकाश इति। परोक्षमननुभाव्यत्वमनूद्यमानमपि व्याघातमावहतीति स्वयंप्रकाशपदेन साध्यनिर्देशः। ननु व्यतिरेकिणि हेतूच्छित्तिरूपाविपक्षे बाधकतर्कसत्त्वाद्व्याप्तिग्रहः सम्भवति। घटः स्वयंप्रकाशो घटत्वादित्यादिषु तु तर्काभावान्न व्याप्तिग्रह इति शङ्कते। अनुभूतेरिति। एतादृशतर्काभासस्य सर्वत्र सुलभत्वादन्यत्रापि व्याप्तिग्रहः सुवच इति परिहरति। नेति। तत्प्रतियोगिकत्वेन प्रवृत्ताया इति। साध्यप्रतियोगिकत्वेन ज्ञाताया इत्यर्थः। नन्वनुभूतिरननुभाव्या अनुभूतित्वादित्यत्र साध्यव्यतिरेकस्य भावरूपत्वात् न साध्यसिद्ध्यपेक्षे-

विशेष इति चेन्न घटस्यानुभाव्यत्वे पटवदघटत्वप्रसङ्ग इति सुवचत्वात्। किं च सपक्षवति असाधारणे साध्यं क्वाचित्प्रसिद्धमिति तद्व्यतिरेकव्याप्तिर्ग्रहीतुं शक्या। इह तु साध्यधर्मस्य पूर्वमप्रसिद्धतया तद्व्यतिरेकव्याप्तेस्तत्प्रतियोगिकत्वेन प्रवृत्ताया दुर्ग्रहत्वमेव। अथानुभाव्यत्वरूपतद्व्यतिरेकः सुग्रह इति चेत् न तथापि यदनुभाव्यं न सानुभूतिरिति व्याप्तिग्रहणदशायामेव प्रतियोगिभूतानुभूत्यनुभाव्यत्वदर्शनेन व्याघातात्। भावसाधककेवलव्यतिरेकिषु च यदि साध्यं पक्षे प्रसिद्धं तर्हि व्यर्थमनुमानम्। यद्यन्यत्र तदा सपक्षे सति केवलव्यतिरेकित्वं न स्यात्। न चोभयातिरिक्तमस्ति व्याघातात्। नहि भावाभावात्मना विकल्प्येऽपि कोट्यन्तरसंभवः। "परस्परविरोधे तु न प्रकारान्तरस्थिति"रिति न्यायात्। तुल्यं चेदमभावसाधकत्वेऽपि। विशिष्टसाध्यादिव्यतिरेकमुखेन व्याप्तेर्गृहीतत्वात्। अन्यथा कस्य केनैषा व्यतिरेकव्याप्तिः। स्वरूपतः प्रवृत्तापि हि व्यतिरेकव्याप्तिः सा प्रकृतव्यतिरेकपरामर्शाभावे कथं प्रकृतस्योपकरिष्यति। नच सामान्यतः क्वचिदिति वि-

---

ति शङ्कते। अथेति। किञ्च भावसाधककेवलव्यतिरेकिस्थले साध्यप्रसिद्ध्यभावे व्यतिरेकव्याप्तिर्दुर्ग्रहैव। तथा च साध्यप्रसिद्धिर्वक्तव्या तस्यां च न केवलव्यतिरेकिसिद्धिरित्याह। भावसाधककेवलव्यतिरेकिष्विति। भावसाधककेवलव्यतिरेकिण्युक्तदोषमभावसाधककेवलव्यतिरेकिण्यप्यतिदिशति। तुल्यं चेदमिति। तत्र साध्याभावस्य भावरूपत्वेन तज्ज्ञानेन साध्यज्ञानापेक्षाभावेऽपि साध्यव्यतिरेकत्वेन ज्ञात एव तस्मिन् हेतुव्यतिरेकव्याप्तिर्ग्राह्या अन्यथा तस्य व्याप्तेरन्यत्र प्रसिद्धान्वयव्याप्तिसदृशायाः प्रकृतोपकारिता न स्यात्तथा च साध्यप्रसिद्धिः पक्षे चेत्सिद्धसाधनम् अन्यत्रचेत् केवलव्यतिरेकित्वभङ्ग इत्यर्थः। सा-

दितसाध्यं केवलव्यतिरेकिणा पक्षरूपविशेषे व्यवस्थाप्यत इति वाच्यम् । तथाविधसामान्योपस्थापकप्रमाणाभावात् । वेद्यत्वं किंचिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वात् घटत्ववदित्याद्यस्तीति चेन्न स्ववचनविरोधात् । किञ्चिदिति निर्दिश्यमानस्य वेद्यत्वे तदभावाधिकरणत्वविरोधात् । अवेद्यत्वे तत्र किञ्चिच्छब्दप्रयोगस्यैवानुपपत्तेः । यत्किञ्चिद्धर्मात्यन्ताभावत्वलक्षणधर्मेण चानैकान्त्यात् । तस्य च सर्वत्र वृत्त्यनभ्युपगमे पुनर्व्याघातः । तथा सति हि कस्य चित् सर्वधर्मविशिष्टत्वमेष्ट-

---

मान्यत इति । पक्षत्वतदन्यत्वानुल्लेखेनेत्यर्थः सामान्यतः साध्योपस्थापकं प्रमाणमाशङ्कते । वेद्यत्वमिति । स्ववचनविरोधइति । अवेद्यस्य किंचिदिति स्ववचननिर्देशो विरुद्ध इत्यर्थः । किंचिदिति निर्दिश्यमानस्य वेद्यत्वमङ्गीक्रियते न वा आद्य आह । वेद्यत्व इति । अनुपपत्तेरिति । परप्रत्यायनार्थमेव हि शब्दप्रयोगः यदि तेन तदर्थप्रत्ययो न स्यात् तदा तदर्थप्रयोग एव न स्यादित्यर्थः । यत्किंचिदिति यस्य कस्यचिद्धर्मस्यात्यन्ताभावेनानैकान्त्यादित्यर्थः । तत्र हि धर्मत्वादिति हेतुर्वर्तते किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वं च साध्यं नास्ति तस्य सर्ववृत्तित्वादिति भावः । ननु यत्किंचिद्धर्मवत्त्वे वा प्रमेयत्वादिकेवलान्वयिधर्मे वा व्यभिचारो वक्तुं शक्य इति किमर्थमेतावद्दूरधावनमिति चेत्तन्मतेऽनुभूतेर्निर्धर्मकत्वेनावेद्यत्वेन तन्मतानुसारेण तत्र व्यभिचारस्य वक्तुमशक्यत्वात् । नन्वेवं यत्किंचिद्धर्मात्यन्ताभावलक्षणधर्मस्याप्यनुभूतौ निर्धर्मिकायामङ्गीकारः कथमुपपद्यते इति चेत् तस्याप्यनङ्गीकारे व्याघातेन तस्यावश्यमङ्गीकर्तव्यत्वात्तादिदमाह । तस्य च सर्वत्र वृत्त्यनभ्युपगमे पुनर्व्याघात इति । व्याघातमेवोपपादयति । तथा सतीत्यादिना । यत्किंचिद्धर्मात्यन्ताभावस्यावृत्तिः किमनुभूतेरन्यत्र उतानुभूतावेव आद्ये व्याघातमाह । तथा सतीति । यत्किञ्चिद्धर्मात्यन्ताभावस्यानुभूतेरन्यत्र कुत्रचिद्वृत्तेरनभ्युपगमे तस्य सर्वधर्माविशिष्टत्वमभ्युपगतं स्यात् तथा च सर्वेषां भावरूपाणामभावरूपाणां च धर्माणामेकत्र समुच्चयः

ष्यम्। तथा च तत्र तद्वत्त्वतदभाववत्त्वयोः समुच्चयः स्यात्। संविदोऽपि यत्किञ्चिद्धर्मात्यन्ताभावविरहे तन्निष्ठात्यन्ताभावसाधनविरोधः। तद्विरहेण पुनस्तात्सिद्धेश्च। यत्र यदत्यन्ताभावविरहस्तत्र तस्य सत्त्वावश्यंभावात्। नच स्वरूपमेवात्र तद्विरहस्तदारोपसहे तदयोगात्। एवं किञ्चिच्छब्दवाच्यत्वलक्षणधर्मेणाप्यनेकान्तो वाच्यः। यदि क्वचित्किञ्चित्त्वं न स्यात् अलीकतैव स्यात्। कथं च क्वचिदितिनिर्दिष्टे किंचित्त्वं न स्यादित्युच्येत। एवमिच्छादयोऽष्टद्रव्यातिरिक्तद्रव्याश्रिताः अष्टद्रव्याश्रितत्वायोगे सति गुणत्वादित्यत्राष्टद्रव्यातिरिक्तद्रव्यासिद्धौ व्यतिरेकिवैयर्थ्यमासिद्धौ स एव दोषः।

---

स्यात् तथाच भावाभावयोरेकत्र वृत्तौ व्याघातः स्यादित्यर्थः। द्वितीये ऽप्याह। सम्विदोऽपीति। अनुभूतौ यत्किञ्चिद्धर्मात्यन्ताभावस्याप्यनङ्गीकारे तन्निष्ठात्यन्ताभावप्रतियोगित्वस्य वेद्यत्वसाधनं व्याहन्येतेत्यर्थः। किञ्च इयता प्रयासेन साध्यमानमवेद्यत्वं न सिद्ध्यतीत्येतावदेव न प्रत्युत यत्किञ्चिद्धर्मात्यन्ताभावविरहमङ्गीकुर्वता त्वया यत्किञ्चिद्धर्मवत्त्वमेव साधितं स्यात् तदत्यन्ताभावविरहे तत्सत्त्वावश्यंभावादिति वेद्यत्वमेवानुभूतौ साधितमित्याह। तद्विरहेणेति। ननु संविदि यत्किञ्चिद्धर्मात्यन्ताभावस्य सत्त्वं नाङ्गीक्रियते येन व्यभिचारः स्यात् किन्तु सम्वित्स्वरूपमेव तद्विरहतयाङ्गीक्रियत इत्यत आह। नच स्वरूपमेवेति। तदारोपसह इति। स्वधर्मतयानुभूयमानधर्मात्मतायाः स्वस्मिन्न सम्भवात् धर्मतया प्रतीयमानस्य तद्धर्म्यभेदोऽनुपपन्न इति यावत्। ननु सम्विदःशब्दवाच्यत्वमेव नाङ्गीक्रियत इत्यत आह। यदीति। अलीकतैव स्यादिति। सम्विदस्तुच्छत्वं स्यादित्यर्थः। क्वचित्किञ्चिदित्युक्तिरपि व्याहता स्यादिति दोषान्तरमाह। कथं चेति। उक्तं दोषमुदाहरणान्तरेऽप्यतिदिशति एवमिति। उक्तदोषद्वयपरिहारहेतुं सम्भावनातः प्रसिद्धिमाशङ्कते

गुणत्वेन द्रव्याश्रितत्वेऽनुमिते अतिरेकानतिरेकविप्रतिपत्त्या च संशयेऽष्टद्रव्याश्रितत्वकोटावनिष्टप्रसङ्गेनाभिमतकोटिपक्षपातिनी शङ्का जायते । तद्बलेन तदेककोटिगोचरस्मृतिसन्ततिर्वा । इदमेव च सम्भावितत्वं वस्तुनः । अतः सम्भावनासिद्धत्वेनाप्रसिद्धविशेषणत्वव्यतिरेकासिद्ध्योरसिद्धेरिति चेन्न । सम्भावनायाः प्रमाणत्वे पूर्ववत्प्रमाणान्तरानपेक्षणात् । अप्रमाणत्वेऽनुपयोगित्वात् । साध्यमानस्य पक्षमात्रे हि शङ्का तु गुणाय

---

गुणत्वेनेति । इच्छादेरिति शेषः । अनिष्टप्रसंगेनेति । महीजलादावपीच्छाद्युपलम्भप्रसङ्गेनेत्यर्थः । अभिमतकोटिपक्षपातिनी शङ्केति । अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वकोटावुत्कटः संशय इत्यर्थः । निश्चयोपपादनायाह । तदेककोटिगोचरस्मृतिर्वेति । कोट्यन्तरमपहाय अभिमतकोटिमात्र विषयायाः स्मृतेः सम्भावनातः सम्भवादनुभूतानां स्मर्तव्यतानियमाभावेनानभिमतकोट्यंशे प्रमोषसम्भवादिति भावः । इदमेव चेति । पक्षे साध्यसम्भावनायाः प्रमाणप्रवृत्त्यङ्गत्वात्तदर्थमेव हि प्रसिद्धिरपेक्ष्यत इति भावः । ननु संशये साध्यप्रसिद्धिरत्रोच्यते स च न । प्रमाणं प्रवृत्त्यङ्गत्वं तु तस्याव्याहतमित्यत आह । साध्यमानस्येति । अन्यप्रमाणतः संप्रतिपन्नस्य पक्षे संशयोऽनुमानाङ्गं नतु सार्वत्रिकः स तु प्रमाणपरिपन्थी प्रकृते साध्यसंशयः सार्वत्रिक इति नानुमानप्रवृत्तिरित्यर्थः । नन्वष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं पक्षे इच्छादावेव संदिग्धं नतु रूपादावपि । रूपादेः पृथिव्याद्यष्टद्रव्यान्यतमद्रव्याश्रितत्वस्य निर्णीतत्वेन तदतिरिक्तद्रव्याश्रितत्वसंदेहाभावादिति चेन्न इच्छाद्याश्रयतया अतिरिक्तद्रव्यसिद्धौ तेन सह परिगणनेन पृथिव्यादीनामपि अष्टद्रव्यातिरिक्तत्वमेव स्यादिति रूपादावप्यष्टद्रव्यातिरिक्तद्रव्याश्रितत्वसंशयस्य नवमद्रव्यसंशयेनौचित्यवर्त्तित्वादिति भावः । ननु संभावनायाः अप्रमाणत्वेऽपि संभावनाविषयमष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं पक्षीकृत्य इदं प्रमाणयोग्यं स्वविपर्यये अनिष्टापादकत्वात् । यद्विपर्यये अनिष्टप्रसक्तिस्तत्प्रमाणयोग्यं यथा स्वविपर्ययेण

न सार्वत्रिकी । यद्विपर्यये अनिष्टप्रसक्तिस्तत्प्रमाणयोग्यमिति निश्चिते विप्रतिपत्तिवाक्यजनितसंशयाधीनसम्भावनापदम् इदं च तथेति सामान्यतः प्रमाणविषयत्वे सिद्धे विशेषापेक्षायां व्यतिरेकिसाफल्यमिति चेन्न इदं च तथेत्युपनयनस्य निराश्रयत्वात् । सिषाधयिषितानुमानेन तत्सिद्धावन्योऽन्याश्रयणात् । प्रमाणयोग्यमित्यनेनैव प्रामाणिकत्वसिद्धौ प्रमाणविशेषचिन्तायाश्च निष्प्रयोजनत्वात् । यच्च गुणत्वादिसामान्यतो दृष्टेन द्रव्याश्रितत्वे सिद्धे तत्र चान्वयव्यतिरेकव्याप्तिनिरूपणे अष्टद्रव्याश्रितत्वानुपपत्तिसाचिव्यात् तत एव हेतोरतिरिक्ताश्रयत्वं सिध्यतीति तदपि

---

धूमाभावलक्षणानिष्टप्रसञ्जको वह्निः । इदं च विप्रतिपत्तिजनितसंभावनापदं तथेति सामान्यतः प्रमाणविषयत्वमनुमातुं शक्यते प्राणिति च व्यतिरेकानुमानप्रवृत्तिरविरुद्धा । नच व्यतिरेकिवैयर्थ्यं तच्च प्रमाणं किमिति विशेषाकाङ्क्षापूरकत्वेन तस्य सार्थकत्वादिति शङ्कते । यद्विपर्यय इति । अत्र प्रमाणयोग्यत्वसिद्धेः प्रागप्रामाणिकस्य तस्य पक्षत्वं न सम्भवतीति प्रतिज्ञा न कृता एवंच सत्युपनयस्यापि निराश्रयत्वात्तादृशानुमानप्रवृत्तिरसम्भाविनीति दूषयति । इदं चेति । ननु प्रकृतव्यतिरेकिणि न परस्पराश्रयः स्यादित्यतआह । सिषाधयिषितेति । किञ्च वस्तुनः प्रामाणिकतासिद्ध्यर्थं हि प्रमाणापेक्षा सा च पूर्वोक्तान्वयव्यतिरेकेणैव सिद्धेति किं व्यतिरेक्यपेक्षयेत्याह । प्रमाणयोग्यमिति । एतच्चोपलक्षणम् । अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं प्रामाणिकमित्यस्यैव विशेषप्रमाणत्वाच्चेत्यपि द्रष्टव्यम् । यच्चेति । इच्छादिर्द्रव्याश्रितः गुणत्वादित्यत्र यत्र गुणत्वं तत्र द्रव्याश्रितत्वमित्यन्वयस्यापि ग्रहणदशायामिच्छादेः पृथिव्यादिष्वनुपलम्भेन रूपादिवत्तदाश्रितत्वमिच्छादेरनुपपन्नम् । यत्र द्रव्याश्रितत्वाभावः तत्र गुणत्वाभावः यथा गुणत्व इति व्यतिरेकव्याप्तिग्रहणदशायां गुणत्वेन प्रतिपन्नानामिच्छादीनां द्रव्याश्रितत्वमप्यनुपपन्नमित्यष्टद्रव्याश्रितत्वद्रव्याश्रितत्वयोरनुपपत्तौ प्रतीतायां तत्साहिताद्गुणत्वा-

न। तत्राप्यतिरिक्तविशेषाकारस्य क्वचिदप्यसिद्धेः। इच्छादयोऽनुपपन्नस्थलव्यतिरिक्ताश्रिता इति सामान्यसाधने तु यो यद्द्रव्याश्रितत्वानुपपत्तौ सत्यां द्रव्याश्रितः स ततोऽतिरिक्तद्रव्याश्रितः यथा गन्धादिरिच्छादयश्च तथेत्यन्वयस्यापि सिद्धौ न केवलव्यतिरेकिता। अस्त्वेवं तथापि पश्चात्केवलव्यतिरेकिणापि जीवितुं शक्यमिति चेन्न संदिग्धे न्यायः प्रवर्तत इति न्यायेनाशक्यत्वात्। अथ सामान्यतः सिद्धेच्छाद्याश्रयपक्षीकारेण विगीतोऽष्टद्रव्यव्यतिरिक्तः इच्छाद्याश्रयत्वादिति साध्यते तदा गुणादौ सपक्षे तिष्ठति त्वयैवाभासतेष्यते। गुणादिनिष्ठहेत्वन्तरप्रयोगे त्वन्वयित्वमेव। तत्र

---

दिति हेतोरेवाष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं सिध्यति यथा लाघवसहकृतात्कार्यत्वादेव हेतोः क्षित्यादिकर्तुरेकत्वं सिध्यतीत्यष्टद्रव्यातिरिक्तद्रव्याश्रितत्वसिद्धौ व्यतिरेकप्रवृत्तिरविरुद्धेति भावः। तत्रापीति। पक्षधर्मताबलात्साध्यस्य पक्षसम्बन्धमात्रमेव सिध्यतीति व्यापकतावच्छेदकाकारोऽन्यतः प्रसिद्धोऽपि नानुमानेनावगन्तुं शक्यते किं पुनरष्टद्रव्यातिरिक्तद्रव्याश्रितत्वस्याव्यापकतावच्छेदकस्य नानुमानतः सिद्धिरिति भावः विशेषाकारस्येति। अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वस्येत्यर्थः। नन्विच्छादयोऽनुपपन्नव्यतिरिक्ताश्रिता गुणत्वादिति साध्यते तत्र च रूपादावनुपपन्नवाय्वाद्यतिरिक्ताश्रितत्वं प्रसिद्धमिति नाप्रसिद्धिनिबन्धनो दोष इत्यत आह। इच्छादय इति। पलायमानः शङ्कते। अस्त्वेवमिति। अशक्यत्वादिति। सिद्धावनुमानप्रतिबन्धादिति भावः। अत्र जीवितुमित्यनुषज्यते एतच्चोपलक्षणम्। सिषाधयिषयानुमानप्रवृत्तावपि पक्ष एवान्वयव्याप्तेर्गृहीतत्वेन केवलव्यतिरेकित्वासिद्धेश्चेति द्रष्टव्यम्। साध्यं गुणादौ प्रसिद्धमिति हृदयम्। तर्ह्यसाधारण्यं स्यादिति दूषयति। तदेति। हेत्वन्तरप्रयोग इति। इच्छाद्याश्रयगुणाद्यन्यतमत्वादिरूपहेत्वन्तरप्रयोग इत्यर्थः। अन्वयित्वमेवेति। अन्वयित्वमप्य-

तु गुणादेरपि पक्षीकरणे अंशतः सिद्धसाध्यत्वं तदसिद्धौ पुनरप्रसिद्धविशेषणता । यच्चेच्छादेः कार्यत्वादिना सामान्यतः समवायिकारणसिद्धौ शरीरमिच्छासमवायिकारणवत् प्राणादिमत्त्वात् न यदेवं न तदेवमिति सर्वदोषपरिहार इति तदपि न । संबन्धमात्रसाधने घटादेः सपक्षत्वापातात् । शरीरत्वादिलक्षणसम्बन्धविशेषसाधने त्वप्रसिद्धविशेषणत्वात् । अन्यथा घट इच्छासमवायिकारणवान् घटत्वात् न यदेवं न तदेवमित्यपि प्रसङ्गात् । अन्यतो विशेषनिर्णये अस्य निरवकाशत्वात् । न च वह्न्यादिसम्बन्धसाधनेऽप्येवं सम्बन्धविकल्पप्रसङ्गः वन्हियोगित्वस्य स्वरूपतः सिद्धस्य पक्षधर्मताबलेन पर्वतनिष्ठत्वमात्रे विशेषलाभात् । अत्र त्विच्छासमवायिकारणसम्बन्धविशेषस्यैव साध्यधर्मस्य स्वरूपतः क्वचिदप्यसिद्धत्वेन तस्य शरीरनिष्ठत्वसाधनायोगादिति । यत्तु

---

स्त्येवेति न केवलव्यतिरेकित्वमित्यर्थः । तदसिद्धाविति । अष्टद्रव्यातिरिक्तद्रव्यत्वमेव साध्यं विवक्षित्वा तस्यासिद्धौ रूपादावुच्यमानायां पूर्वोक्ताप्रसिद्धविशेषणताया अनिर्मोक्ष इत्यर्थः । शरीरमिच्छासमवायिकारणवादित्यत्र मनुपा सम्बन्धमात्रमुच्यते उत शरीरत्वशेषत्वादिसम्बन्धविशेष उच्यते । नाद्य इत्याह । सम्बन्धमात्रेति । तथा चासाधारण्यं स्यादिति भावः । न द्वितीय इत्याह । शरीरत्वादीति । अन्यथेति । सामान्यविशेषानादरेण प्रयोग इत्यर्थः । ननु घटादाविच्छासमवायिकारणसम्बन्धः साधयितुं न शक्यते सामान्यतः सम्बन्धस्य सिद्धत्वात् विशेषतस्तस्यान्यतः सिद्धेः शरीरे तु सम्बन्धविशेषग्राहकमानान्तरसत्त्वात् तत्साधनं युज्यते इत्यत आह । अन्यत इति । अस्य निरवकाशत्वादिति । प्रकृतस्य व्यतिरेकिणो वैयर्थ्यादित्यर्थः । सम्बन्धविशेषस्येति । शरीरत्वादेरित्यर्थः । उदाहरणान्तराण्यपि दूषयितुमनुवदति । यत्त्विति । प्रत्येकव्युत्पन्नेति ।

सर्वं कार्यं सर्ववित्कर्तृपूर्वकं कादाचित्कत्वात् । वेदाः सर्वज्ञप्रणीताः वेदत्वादित्युदाहरणं तत्रापि सर्ववित्कर्तृपूर्वकत्वादेः क्वचिदप्यग्रहणात् । तद्व्यतिरेकस्य साधनव्यतिरेकेण व्याप्यत्वग्रहणमनुपपन्नम् । यदि प्रत्येकव्युत्पन्नसर्वविदादिपदसमुदायसमभिव्याहारमात्रेण साध्यसिद्धिरिति मन्यसे । तदा शशविषाणादिवद्योग्यपदसमभिव्याहारमात्रेण भ्रान्तिसिद्धं साध्यमित्युक्तं भवति । यदि बाधकाभावादत्रायोग्यत्वं नास्तीत्यभिप्रायस्तदप्यसारम् । सामान्यतः सिद्धस्यैव विरोधस्य साधकाभावे बाधकत्वात् । तस्यैवानुमानस्यैतत्साधकत्वेऽन्योऽन्याश्रयणात् । न चागमतया तानि पदानि तदर्थमुपस्थापयन्ति । अनभ्युपगमात् । आप्तत्वागमोक्तत्वयोरभावे तदनुपपत्तेश्च । अथागमसिद्धं सर्वज्ञमात्रमुपजीव्य तत्पूर्वकत्वं साध्यते तथापि तत्पूर्व-

---

सर्वपदस्य वित्पदस्य कर्तृपदस्य चान्यत्र व्युत्पन्नत्वात् तेषामेकत्र समभिव्याहारेण प्रयोगे समभिव्याहृतपदानां सम्भूयार्थप्रत्यायकत्वस्य च व्युत्पन्नत्वात्तद्वाक्यतः सर्ववित्कर्तृकत्वं साध्यं सिध्यतीति शङ्कार्थः । उक्तं भवतीति । तथायोग्यत्वात् न तद्वाक्यं बोधकमित्यर्थः । सामान्यतः सिद्धस्यैवेति । सर्वज्ञकर्तृकत्वस्य विशिष्यबाधाभावेऽपि सर्वेषामपि ज्ञानं न सर्वगोचरमिति सामान्यतः सिद्धस्यैव विरोधस्य क्षित्यादिषु सर्वज्ञकर्तृकत्वसाधकाभावे बाधकत्वादित्यर्थः । ननूक्तव्यतिरेकित एव सर्वज्ञत्वसिद्धेस्तद्वाक्यं नायोग्यमित्यत आह । तस्यैवेति । अन्योऽन्याश्रयणादिति । अनेनानुमानेन सर्वज्ञकर्तृसिद्धौ सर्वज्ञपूर्वकमिति वाक्यस्य योग्यतासिद्धिः सिद्धायां च तस्यामेतदनुमानप्रवृत्तिरित्यन्योऽन्याश्रय इत्यर्थः । अनभ्युपगमादिति । तस्य वाक्यस्य त्वयागमत्वानभ्युपगमादित्यर्थः । इदानीं तदङ्गीकारोऽप्यनुपपत्तिपराहत इत्याह । आप्तेति । पक्षविपक्षसपक्षेषु साध्यप्रसिद्धिरङ्गीकर्तुं न शक्यते । एतदतिरिक्तस्थानान्तरमप्यस-

कत्वस्यासिद्धिस्तदवस्थैव । तस्यापि चेत्प्रसिद्धिरागमतो गृह्यते सा चेत्पक्षे कृतमनुमानेन । विपक्षे चेद्व्याघातः । सपक्षस्तु नात्र त्वयेष्यते । तथा सत्यन्वयव्यतिरेकित्वापातादिति । एवं के-

भावितमित्याह । सा चेदित्यादिना । उक्तो दोषगणो व्यतिरेक्युदाहरणान्तरेष्वपि स्वयमुन्नेतुं शक्य इत्याह । एवमिति । एतदुक्तं भवति । इयं पृथिवी गन्धवत्त्वात् यन्न पृथिवी न तद्गन्धवदित्यत्र पृथिवीविशेषे घटादौ प्रत्यक्षेण पृथिवीत्वसिद्धेर्न साध्याप्रसिद्धिः । नच तदंशतः सिद्धसाधनम् तस्यापक्षत्वात् । नचैवं पृथिवीविशेषे प्रत्यक्षेण हेतुतदभावयोर्निश्चयेऽन्वयित्वासाधारणत्वयोः प्रसङ्ग इति वाच्यम् । तत्र हेतुतदभावयोरुभयोरप्यनिश्चयात् । औदासीन्यस्य दशाविशेषे दोषत्वासंभवात् अस्तु वा हेतुनिश्चयस्तथाप्यन्वयव्याप्तिघटकपदार्थानुपस्थितिदशायामन्वयित्वासम्भवात् । अस्तु वा हेत्वभावनिश्चयः तथापि नानुपपत्तिः । असाधारणस्य दशाविशेषे दोषत्वात् । एवं पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादावप्येकदेशे साध्यप्रसिद्ध्या व्याप्तिग्रहाद्युपपत्तिः । यद्वा इतरत्रयोदशानां प्रत्येकान्योऽन्याभावास्तत्र तत्र प्रत्येकं प्रसिद्धाः पृथिव्यां साध्यन्ते । साध्यतावच्छेदकं च प्रत्येकाभावत्वमेव । अनुमितिस्त्वभावसमुदायं समूहालम्बनरूपमवगाहते । अनुमितिविषयतावच्छेदकं च समुदितत्वमप्रसिद्धमित्यनुमितिविषयतावच्छेदकावच्छिन्नसाध्यव्याप्तिनिबन्धनमसाधारण्यमनुमिति विषयाभावसिद्धौ पर्यवसन्नं नावतरतीति । अत्रोच्यते । योऽर्थः क्लृप्तेन प्रमाणेन साधयितुं न शक्यते तत्सिद्धये हि प्रमाणान्तरं कल्पनीयं यस्तु क्लृप्तेन साधयितुं शक्यस्तत्सिद्धये न प्रमाणान्तरं कल्प्यमिति सर्वसम्प्रतिपन्नम् । प्रकृते च प्रत्यक्षेण पृथिवीविशेषे घटादौ पृथिवीत्वं कल्प्यम् अत एव तत्र हेतुतदभावयोरग्रहादित्यादिनिरस्तम् । तत्र हेतोरन्वयव्याप्तेश्चाग्रहे ततो व्यतिरेकव्याप्तिमात्रे साध्यानुमितेरसिद्धेः । अन्यथा पर्वतो वह्निमान्धूमवत्त्वादिति प्रसिद्धान्वयव्यतिरेकिण्येव महानसादौ साध्यतामात्रज्ञानदशायां तत्र हेतोरज्ञानेन व्यतिरेकव्याप्तिज्ञानमात्रादेवानुमितेर्वक्तुं शक्यत्वेन तस्यैवोदाहरणत्वसम्भवेनैतावद्दूरधावनवैयर्थ्यात् अ-

वलव्यतिरेक्युदाहरणान्तरेष्वपि दूषणमुन्नेयम् । सर्वत्र केवलव्यतिरेकिणि, सत्त्वादिभिः केवलान्वयिभिः सार्वत्रिकसाध्यदर्शनलब्धजीवितैः प्रतिरोधो बाधो वा ग्राह्यः । एवं केवलव्यतिरेकिणि साध्याप्रसिद्धेस्तद्व्यतिरेकव्याप्तिर्दुर्ग्रहा । अन्वय-

---

न्वयव्याप्तिग्रहसम्भवोपपादनाय ह्यसंकीर्णस्थलगवेषणमातीर्थकरादाचाद्यतनात् युष्माकं प्रयासः । यद्वेत्याद्यपि न पृथिवीविशेषे घटादौ तावतामभावानां प्रत्यक्षेण ग्रहसम्भवेन तन्निरूपितान्वयव्याप्तेर्गन्धवत्त्वे ग्रहीतुं शक्यत्वेन तेनान्वयव्यतिरेकिणान्यत्र तावदभावानुमितिसम्भवात् । पृथिवी जलाभिन्ना स्नेहाभावात्तेजोवदित्याद्यन्वयव्यतिरेकिभिरेव तावतामभावानां विवक्षितसिद्धेः सम्भवाच्च न तदर्थं केवलव्यतिरेकिप्रामाण्यमभ्युपगन्तव्यम् । नन्वेवं व्यतिरेकव्याप्तिरप्रयोजिकैव स्यादिति चेन्न । अन्वयव्याप्तिग्रहासम्भवे तस्यास्तथात्वस्येष्टत्वात् । तत्सम्भवे तु सापि प्रयोजिका । अत एवान्वयव्यतिरेकिप्रयोगे व्यतिरेकव्याप्तिमात्रप्रदर्शनम् अन्वयव्याप्तिसत्तया प्रयोजकत्वस्य वक्तुं शक्यत्वात् । तदिदं वक्ष्यति व्यतिरेकव्याप्तिरन्वयसिद्धप्रतियोगिलाभात् समीचीनेति । क्लृप्तप्रमाणसिद्धप्रयोजनतया अन्यथासिद्धत्वादेव ह्यर्थापत्त्यादीनां प्रमाणत्वं त्वया न कल्प्यते । तन्नास्मासु काकभक्षणमिति ग्रन्थविस्तरभयादुपरम्यत इति । सार्वत्रिकसाध्यदर्शनलब्धजीवितैरिति । केवलव्यतिरेकिणि क्वचिदपि साध्यस्यादर्शनेन सर्वत्राभावग्रहसम्भवात्तन्निरूपिता व्याप्तिः प्रमेयत्वादौ शक्यग्रहेति भावः । जीवितशब्देन व्याप्तिरुच्यते स्वप्रमाणस्यानुग्राहकतर्कसत्त्वेनाधिकबलत्वमभिप्रेत्याह । बाधो वेति । एवमिति । उक्तकेवलान्वयिवत् केवलव्यतिरेकिणि साध्यप्रसिद्धेरभावादित्यर्थः । नन्वेवमन्वयव्याप्तेरुपजीव्यत्वात्प्रथमोपस्थितत्वाच्च प्राधान्यं स्यादित्याशङ्क्येष्टापत्तिरित्याह । अन्वयव्यतिरेकिण्यपीति । तर्ह्यन्वयव्यतिरेकिणः प्रयोगे व्यतिरेकव्याप्तेः प्रदर्शनमेव न स्यादित्याशङ्क्य व्यतिरेकव्याप्तेरन्वयसत्त्वलब्धसामीचीन्यायाः पृथक्प्रदर्शनं न दोषाय तावतैव परार्थप्रयो-

व्यतिरेकिण्यप्यन्वयव्याप्तिरेव प्रधानभूता व्यतिरेकव्याप्तिरप्यन्वयसिद्धप्रतियोगिलाभात् मर्माची । तत्रान्यतरव्याप्त्युदाहरणमात्रेणापि परार्थप्रयोगोऽपि चरितार्थ इति । ननु यदि केवलव्यतिरेकि न प्रमाणं लक्षणमिति किमपि न स्यात् । तस्य तदात्मकत्वात् । तदभावे च कथं परस्परव्यावृत्तवस्तुव्यवस्था । ततश्च विलीनं लौकिकपरीक्षकवैदिकव्यवहारैरिति तन्न लक्षणस्य केवलव्यतिरेकित्वाभावात् । उक्तं हि तत्त्वरत्नाकरे

अर्थासाधारणाकारप्रतिपत्तिनिबन्धनम् ।
सजातीयविजातीयव्यवच्छेदेन लक्षणम् ।

इत्युक्त्वा स चायं जात्यादिराकारः प्रमेयं निष्कृष्य लक्षयतः

---

गस्य चरितार्थत्वात् सम्भवतोऽन्वयस्य प्रदर्शनं कर्तव्यमित्याह । तत्रेति । लक्षणमिति किमपि न स्यादिति । कस्याप्यसाधारणधर्मस्य लक्षणत्वं न स्यादित्यर्थः । तस्य तदात्मकत्वादिति । इतरभेदसाधककेवलव्यतिरेकिण एव लक्षणशब्दार्थत्वादित्यर्थः । इष्टापत्तिं निराकरोति । तदभावे चेति । केवलव्यतिरेकित्वानभ्युपगमेऽपि लक्षणत्वमव्याहतमेवेति परिहरति । तन्नेति । तर्हि किं तस्य लक्षणमित्याशङ्क्य भट्टपराशरपादैरुक्तं लक्षणनिर्वचनप्रकारमाह । उक्तं हीति । सजातीयव्यवच्छेदेनार्थासाधारणाकारप्रतिपत्तिनिबन्धनं लक्षणमित्यन्वयः । सजातीयविजातीयव्यवच्छेदकत्वं सदृशाविसदृशव्यावृत्तत्वमिति प्राञ्चः । वयं तु गोत्वस्य सजातीयः स्वाक्रान्तधर्मिनिष्ठो धर्मः तदेकदेशवृत्तिर्यथा खण्डत्वमुण्डत्वादिः । विजातीयः स्वानाक्रान्तधर्मिनिष्ठो धर्मः यथा अश्वत्वमाहिषत्वादिः तयोर्व्यवच्छेदो नाम तदुभयाभिन्नत्वम् । अव्याप्त्यतिव्याप्तिरहितत्वमिति यावत् । एवं चेत् स धर्मो धर्म्यसाधारणाकारधीहेतुर्भवति । अनेनासम्भवोऽपि निवृत्तः तथाचाव्याप्त्यादिरहितत्वं लक्षणलक्षणम् । तस्य च प्रयोजनं लक्ष्यासाधारणाकारज्ञानमित्युक्तं भवतीत्यर्थ इति ब्रूमः । तर्हि तस्य कथमसाधारणाकारधीहेतुत्वमित्यत आह । स चायमिति । उच्यते

प्रमाणस्य सजातीयविजातीयव्यवच्छेदांशे सहकारीति लक्षण-मुच्यत इति । एतेन तत्तत्प्रतिपादकं प्रमाणं तत्तन्निष्कर्षे शरण-मित्युक्तं भवति । एतेन लक्षणनिरुक्तिमात्रेण लक्ष्यमप-लपन्तो निराकृताः । नहि प्रतीतमिति सर्वं निर्देष्टुमपि शक्यम् सर्वलौकिकपरीक्षकव्यवहृतस्य घटस्यापि पृथुबुध्नादिमत्त्वा-ङ्गुलिनिर्देशविषयत्वादेः साधारणत्वात् । तद्विशेषस्य तु दुर्वच-त्वात् । उक्तं च दण्डिना ।

इक्षुक्षीरगुडादीनां माधुर्यं सान्तरं महत् ।
तथापि न तदाख्यातुं सरस्वत्यापि शक्यते इति ।

असाधारणधर्मोपस्थापनेन व्यवहारव्यवस्थापकमाप्तवा-क्यादिकमेव लक्षणम् । यथा गन्धवती पृथिवीति । यद्गन्धव-

---

इति । उक्तमित्यनेन पूर्वेणान्वयः । ननु तादृशं प्रमाणं व्य-तिरेकिणमन्तरेण नोपलभामहे येन तत्र लक्षणस्य सहका-रिता स्यादित्यत्राह । एतेनेति । तत्तत्प्रतिपादकमिति । तत्तद्वस्तु-ग्राहकं प्रत्यक्षादिकमेवेत्यर्थः । एतेनेति । इतरव्यावृत्तवस्तुसञ्ज्ञा-वबोधकप्रमाणकथनेनेत्यर्थः । पृथुबुध्नादिमत्त्वेति । बुध्नो मूलमाधार-देशः । मूलं बुध्नोऽङ्घ्रिनामक इत्यमरः । आदिपदेन कम्बुग्रीवा-दिपरिग्रहः । अङ्गुलीनिर्देशः पुरस्थघटसूचकः तर्जनीप्रसारस्त-स्यापीतरव्यावृत्तवस्तुबोधकत्वात्सल्लक्षणत्वं सम्भवतीति भावः । अत्रादिपदेन परिमाणाभिनयहेतुहस्तविस्तारणयोग्यपार्थिवत्वाद-यो गृह्यन्ते । तेषां साधारणत्वं च कुसूलहेरम्बकुष्माण्डादिगतत्वा-दङ्गुलिनिर्देशस्यापि पुरोवर्त्तिपदार्थान्तरगतत्वाच्चेति द्रष्टव्यम् । अ-न्तरं वैलक्षण्यं महदति स्फुटमित्यर्थः । किञ्चासाधारणधर्मो न लक्ष-णम् किन्तु तद्बोधकप्रमाणमेव तथाच न लक्षणस्य व्यतिरेकितेत्याह । असाधारणेति । ननु नैतद्वाक्यं लक्षणं लक्षणस्य हि व्यवहारव्यव-स्थापकत्वं स्वभावः इदं च वाक्यं व्यवहारबोधकमित्यत आह । यद्गन्धवत्तत्सर्वमिति । नन्वेवमपि अस्य वाकयस्य व्यावृत्तिप्रत्याय-

त्त्सर्वं पृथिवीशब्देन व्यवहर्तव्यम् नेतरदिति हि तदर्थः। प्रमाविषयः प्रमेयमित्यादिषु च लक्षणतया संमतेषु विपक्षशून्यत्वेन केवलव्यतिरेकित्वभङ्गप्रसङ्गः। यद्वा अन्वयव्यतिरेकिविशेष एव लक्षणम्। स च समव्याप्तः। असाधारणो व्यापको धर्मो लक्षणमिति लक्षणम्। तत एवेतरप्रतिक्षेपस्तत्त्वं च सिध्येदिति। यथा शरीरादेः पार्थिवत्वादिसंदेहे शरीरं पार्थिवं गन्धवत्त्वाद्घटवत्। शरीरमाप्यादिकं न भवति गन्धवत्त्वाद्घटवदित्यादि। तदेवं तत्त्वतदितरप्रतिक्षेपयोः साधनाल्लक्षणत्वं गन्धवत्त्वस्येति। नन्वनेकव्यक्तिसंग्राहकलक्षणे तथा स्यात् एकव्यक्तिलक्षणे कथं यथाकाशादेः शब्दमात्रवत्त्वादाविति चेन्न। आकाशादिशब्दानामपि जातिशब्दत्वात् कल्पादिभेदापेक्षया बहवो ह्या-

---

कत्वाभावान्न लक्षणत्वं स्यादित्याशङ्क्य व्यावृत्तिबोधकत्वं लक्षणत्वमित्यङ्गीकारे प्रमेयलक्षणस्य प्रमेयत्वस्यापि व्यतिरेकित्वं स्यादित्याह। प्रमाविषय इति। इष्टापत्तिं निवारयति। विपक्षशून्यत्वेनेति। असाधारणधर्मस्यैव लक्षणत्वाङ्गीकारेऽपि तस्य व्यावृत्तिव्यवहारप्रयोजनकत्वमन्वयव्यतिरेकिविधयैव सम्भवतीत्याह। यद्वेति। ननु तस्य व्यतिरेकित्वाभावे लक्षणत्वमेव न स्यादितरव्यावृत्तिसाधककेवलव्यतिरेकित्वमेव हि लक्षणत्वमित्यतः प्रकारान्तरेण लक्षणलक्षणमाह। असाधारण इति। साधारणधर्मेष्वतिव्याप्तिवारणायासाधारणपदम्। न्यूनवृत्तिधर्मेष्वतिव्याप्तिवारणाय व्यापकपदम्। सर्वलक्ष्यवृत्तीति तदर्थः। धर्मपदं स्वरूपकथनम्। तत्त्वतादितरप्रतिक्षेपयोरिति। लक्ष्यसाधारणाकारालक्ष्यभेदयोरित्यर्थः। तथा स्यादिति। अन्वयव्यतिरेकिविधया व्यावृत्त्यादिधीहेतुत्वं स्यादित्यर्थः। शब्दमात्राश्रयत्वादाविति। वाय्वादेरपि शब्दाश्रयत्वमस्तीति तद्व्यावृत्त्यर्थं मात्रपदं तेन स्पर्शादिर्व्यवच्छिद्यते। धर्मिग्राहकेणैवेति। "यतो वा

काशादयः । अस्तु तथा तेषु । ईश्वरादिलक्षणं तु कथम् । नहीश्वरस्य कल्पादिभेदेऽपि भेदोऽस्ति । सत्यम् । तत्र तु प्रागुक्तरीत्यैव धर्मिग्राहकेणैव लक्षणविशिष्टलक्ष्यसिद्धावसाधारणधर्मातिरिक्तव्यावृत्त्यभावात् न साध्यं किंचिदवशिष्यते । तथापि तत्रेश्वरादिलक्षणव्यतिरेकस्यानीश्वरत्वव्याप्तेर्ब्रह्मादिषु केषुचिदीश्वरतया शङ्क्यमानेषु तेनानीश्वरत्वं साध्यते । तत्र चान्वयव्यतिरेकित्वमेव । प्रतियोगिनः प्रमाणसिद्धेश्चाभावनिरूपणोपपत्तेः । प्रयोगश्च ब्रह्मादयोऽनीश्वराः सकलजगत्सृष्ट्याद्यकारणत्वाद्घटवत् कालो न प्रकृतिर्महदादिविकाररहितत्वात् चेतनवत् । त्रिगुणं कालातिरिक्तं कलादिविकाररहितत्वात् चेतनवत् । एवं तदात्मना शङ्क्यमानानां तद्व्यतिरेकसिद्धेस्तस्यापि तेभ्यो व्य-

---

इमानि भूतानि जायन्त इत्यागमेन" इत्यर्थः । न साध्यं किञ्चिदवशिष्यत इति । तथाचासाधारणधर्मव्यतिरिक्ताभावरूपव्यावृत्तेरप्रामाणिकत्वान्न तत्सिद्ध्यर्थं लक्षणस्य व्यतिरेकित्वमङ्गीकरणीयमिति भावः । असाधारणधर्मातिरिक्तव्यावृत्त्यभ्युपगमेऽप्येकव्यक्तिलक्षणस्येतरभेदसाधकत्वमन्वयव्यतिरेकिविधयैवेति दर्शयति । तथापीति । अतिरिक्ताभावाभ्युपगमेऽपीत्यर्थः । प्रमाणसिद्धेश्चेति । ईश्वरस्य श्रुतिसिद्धत्वान्न तत्प्रतियोगिकाभावज्ञानमनुपपन्नमित्यर्थः । लक्ष्यभेदमितरेषु प्रसाध्य एवमन्वयव्यतिरेकेणैव लक्ष्यस्यापि तेभ्यो भेदः सिध्यतीत्याह । एवमिति । व्यतिरेकः सिद्ध इति । इतरत्र लक्ष्यभेदे गृह्यमाणे लक्ष्येऽपि समानसंवित्संवेद्यतया इतरभेदोऽपि गृह्यत एवेत्यर्थः । यद्वा यो यद्भिन्नः स तद्भिन्न इति व्याप्तिबलेन लक्ष्येऽपि तद्भेदः सिध्यतीत्यर्थः । नन्वेवं सर्वत्र लक्षणव्यतिरेकेण इतरत्र लक्ष्यभेदे गृह्यमाणे लक्ष्येऽपीतरभेदप्रसिद्धिरस्तीति पश्चाद्व्यतिरेकिप्रवृत्तौ न विरोधः अप्रसिद्धविशेषणत्वस्य शङ्कितुमशक्यत्वादित्यभिप्रेत्य शः

तिरेकः सिद्ध इति लक्षणफलम् । अतः सर्वत्राप्यन्वयित्वमेव । एवं तर्हि सर्वस्मिन्नेव लक्षणे तदितरस्य तद्व्यतिरेको वक्तुं शक्यः । यथा गवयो न गौः सास्नादिरहितत्वात् महिषवदित्यादीतिचेत् अस्त्वेवं तावतापि न लक्षणस्य केवलव्यतिरेकित्वम् । अयं गौः सास्नादिमत्त्वात् यथा मदीयः । यो गोव्यतिरिक्तः नासौ सास्नादिमान् यथा महिष इत्यत्र नायं गौः सास्नादिरहितत्वात् यथा महिषः यो गौः स सास्नादिमान् यथा संमत इत्यत्र च अन्वयव्यतिरेकित्वमेव । ये पुनर्विप्रतिपन्नः सर्वो गौरिति व्यवहर्तव्यः अगोव्यावृत्तो वा गोत्वात् सास्नादिमत्त्वाद्वेति लक्षणस्य केवलव्यतिरेकित्वमाहुस्तेषामंशतः सिद्धसाधनत्वमपि । सकलव्यक्तिसंग्राहकप्रवृत्तिनिमित्तस्य सकलेतरप्रतियोगिकव्यावृत्तेश्चासिद्धतया नैवमिति चेन्न गौरिति व्यवहर्तव्य

---

ङ्क्ते । एवं तर्हीति । सर्वो गौरिति व्यवहर्तव्य इति । तथा च पक्षव्यतिरिक्तस्य सपक्षस्याभावान्नान्वयित्वशङ्केति भावः । अंशतः सिद्धसाधनत्वमिति । सम्प्रतिपन्नगोव्यवहारविषये गोव्यक्तिविशेषे साध्यस्य सिद्धत्वादिति भावः । सिद्धसाधनपरिहारमाशङ्कते । सकलेति । असाधारणस्येति । सम्प्रतिपन्नगोव्यवहारविषयवर्तिनो देशविशेषवृत्तित्वादेः प्रवृत्तिनिमित्तत्वसम्भवादिति भावः । तथाचांशतः सिद्धसाधनत्वं तदवस्थमेवेत्याशयः । ननु गोत्वस्य सामान्यतया लघुत्वात् तस्यैव प्रवृत्तिनिमित्तत्वं नतु न्यूनवृत्तेर्विशेषधर्मस्य गुरुत्वादिति चेन्न विशेषस्यापि स्वन्यूनवृत्तिधर्मापेक्षया सामान्यत्वात् । अन्यथा गोत्वापेक्षयापि सामान्यतया लघुत्वाद्द्रव्यत्वस्यैव प्रवृत्तिनिमित्तत्वं स्यात् न तद्विशेषस्य गोत्वस्येत्यपि तुल्यत्वात् सम्प्रतिपन्नव्यवहारविषयातिरिक्तवृत्तित्वान्न द्रव्यत्वस्य तथात्वमिति चेन्न । गोत्वस्यापि तथात्वेन प्रवृत्तिनिमित्तत्वाभावस्य वक्तुं शक्यत्वात् ।

इत्यत्रापि गोत्वमेव व्यवहारनिमित्तमिति नियन्तुमशक्यत्वात् । अन्यस्याप्यसाधारणस्य तन्निमित्तत्वाविरोधात् । लाघवादेश्च समत्वात् । गोत्वनिमित्तगोव्यवहारवानित्येव साध्यार्थे चाप्रसिद्धविशेषणत्वादिकं सकलेतरप्रतियोगिकव्यावृत्तिसाधने त्वपोहवादिन इवान्योऽन्याश्रयणम् । अपि च ।

लक्षणादधिके भेदे क्वावीतस्य संभवः ।
तस्यैव तत्त्वे किं केन किमर्थं साधयिष्यसि ॥

---

स्वादृष्टगोव्यक्तिविशेषे कतिपयव्यक्तिविशेषदर्शिनोऽन्यत्र व्यवहारसम्प्रतिपत्त्यभावस्य सुवचत्वादिति । एतत् सर्वमभिप्रेत्याह । लाघवादेश्च समत्वादिति । सिद्धसाधनदोषपरिहाराय प्रकारान्तरमाशङ्कते । गोत्वनिमित्तेति । द्वितीयसाध्येऽपि सिद्धसाधनपरिहाराय सकलासु गोव्यक्तिषु गवेतरत्वावच्छिन्नभेदः साध्यते पक्षतावच्छेदकैक्ये च नांशतः सिद्धसाधनम् । उद्देश्यसिद्धेरित्यत आह । सकलेतरेति । अपोहवादिन इवेति । अतद्व्यावृत्तिरेव गोत्वादि न पदार्थान्तरं भावरूपमिति वादिनः सौगतस्य मते यथा गोगवेतरयोर्ज्ञानयोरन्योऽन्याश्रयणं तथा गोत्वावच्छिन्न इतरत्वावच्छिन्नभेदज्ञानमन्यत्रेतरत्वज्ञानाधीनम् अन्यत्रेतरत्वज्ञानं च गोत्वावच्छिन्नस्येतरभेदज्ञानाधीनं गोत्वावच्छिन्नस्येतरभिन्नत्वज्ञानाभावेऽन्यत्रेतरत्वस्य दुर्ग्रहत्वादित्यन्योऽन्याश्रयणं स्यादित्यर्थः । किञ्च इतरभेदं साधयन् वक्तव्यः स भेदः किं हेतुभूतलक्षणात् भिन्नो लक्षणमेव वेति । आद्ये दोषमाह । लक्षणादधिके इति । साध्यमाने भेदे लक्षणादधिके सति क्व वा कुत्र वा अवीतस्येष्टस्य केवलव्यतिरेकिण इति यावत् । सम्भवः सत्ता न कुत्रापीत्यर्थः । पक्षे तस्य निश्चयाभावात् । पक्षादन्यत्र निश्चयेऽन्वयित्वासाधारण्ययोः प्रसङ्गादिति भावः । अवीतशब्दस्य केवलव्यतिरेकिपरत्वमाचार्यः शब्दाध्याये स्वयमेव वक्ष्यति । द्वितीये दोषमाह । तस्यैव तत्त्व इति । लक्षणस्यैव भेदत्वे तस्य पक्षे निश्चितत्वेन साध्यं किञ्चिदपि नावशिष्यत इत्यर्थः । पक्षतावच्छे-

किं च । महिषादिसमस्तव्यावृत्तेरेकस्मिन् गवि सिद्धत्वाद-परिहृतमेव सिद्धसाधनत्वम् । एतदेव चानूद्य तत्त्वरत्नाकरेऽप्युक्तम् । क्षोण्यादिलक्ष्यं प्रमाणसिद्धं न वा तदसिद्धावाश्रयासिद्धिर्लक्षणात्मनो हेतोः सिद्धौ च साधनं मुधा । स्वरूपासिद्धावपि व्यवच्छेदः साध्य इति चेत् तादृगेव तदपि । तथापि ह्यप्रसिद्धविशेषणः पक्षः स्यात् । इतरव्यवच्छेदस्य क्वचिदनालोचितचरत्वात् । सिद्धौ वा साधनवैयर्थ्यात् । किञ्च प्रमाणस्य स्वविषयव्यवस्थायां प्रमाणान्तरापेक्षणादनवस्थितिपरतः प्रामाण्ये प्रसज्ज्येयाताम् ।

तस्माद्धर्मः प्रमेयात्मा धर्मनिष्कर्षमाचरन् ।

---

दकैक्येऽप्यंशतः सिद्धसाधनस्य दोषत्वमनिवारणीयमित्याह । किञ्चेति । अनपहृतमेवेति । उद्देश्यप्रतीतेश्च पक्षैकदेशभूतसंप्रतिपन्नव्यक्तिविशेषसिद्धान्वयेन तेनैवान्वयव्यतिरेकिणा सम्भवान्न तदर्थं व्यतिरेकिसिद्धिरिति भावः । एतदेव चानूद्येति । तत्त्वरत्नाकरग्रन्थे भट्टपराशरपादैः सर्वा अपि गोव्यक्तय इतरव्यावृत्ताः सास्नादिमत्त्वादित्येतद्व्यतिरेक्यनुमानमनूद्य भेदो लक्षणानाधिको ऽधिको वेति विकल्पमभिप्रेत्य क्रमेण दूषणमुक्तमित्यर्थः । क्षोण्यादीत्यारभ्य दिशा गतिरित्येतदन्तस्तत्त्वरत्नाकरग्रन्थः । अनवस्थितिपरतः प्रामाण्ये प्रसज्ज्येयातामिति । धर्मिग्राहकप्रमाणेन सिद्धस्यासाधारणधर्मरूपस्येतरभेदस्य निश्चयार्थं व्यतिरेक्यपेक्षा तर्हि तद्विषयनिश्चयार्थमपि प्रमाणान्तरमन्वेषणीयमित्यनवस्था स्यात् । तथा स्वतो गृहीतस्यापि ज्ञानप्रामाण्यस्य निश्चयार्थं प्रमाणान्तरापेक्षायां परतः प्रामाण्यं स्यात् । नन्विष्टापत्तिः तत्प्रामाण्यस्यान्यतो ग्राह्यत्वेनानवस्थानादित्यर्थः । अयं च परतः प्रामाण्यप्रसङ्गः कुदृशां पक्षे सुगमः । नैयायिकमते त्वनवस्थापत्तिरिष्टापत्त्या परिहार्येति ध्येयम् । स्वयमुपसंहरति । तस्मादिति । निर्व्यूढस्य व्यतिरेकिभङ्गस्य फलमाह । एवमिति । अन्यथा प्रामाणिकेष्वर्थेषु तत्तदसाधारणाकारमालम्ब्य व्य-

लक्षणं न प्रमाणात्मेत्युक्तयैव दिशा गतिः इति ।

तस्माद्यथोक्त एव लक्षणप्रकारः । न पुनस्तस्य केवलव्यतिरेकित्वमिति । एवं केवलव्यतिरेकिणि निरस्ते प्रामाणिकानां हैतुकभङ्गभारस्य त्र्यंशोऽवरोपितः । केवलान्वयिन्यपि व्याहतसाध्यविपर्ययव्यतिरिक्ताः सर्वे विपक्षे बाधकाभावान्निरस्ताः । अन्वयव्यतिरेकिण्यपि अत्यन्तातीन्द्रियार्थगोचरा अप्यैन्द्रियकव्याप्त्युपजीवने प्रवर्तमानाः सपक्षानुगतव्याप्ताकारवैकल्यात् सोपाधिकत्वादिभिर्निराकृताः । चन्द्र-

---

तिरेकिप्रयोगेणाप्रामाणिकार्थं साधयितुमुत्सहमानानां हैतुकानामाहोपुरुषिका प्रत्यक्षादिप्रमाणैकशरणैरुन्मूलनीयेति भावः । हैतुकानां भङ्गो निरासस्तस्य दुर्वहत्वात् भारत्वरूपणम् । त्र्यंशोऽवरोपित इति । त्रित्वयुक्तोऽशः त्र्यंश इति मध्यमपदलोपिसमासः । सामान्येनैकत्वनिर्देशः । अतो द्विगोरिति न ङीप् महाविद्यासामान्यतो दृष्टानुमाननिरासाय पादभागः प्रामाणिकानां निर्वाह्योऽवशिष्यते सोऽप्यवरोपित इत्याह । केवलान्वयिनीति । सर्व इति । महाविद्याहेतुमुखा हेतव इत्यर्थः । विशेषतो दृष्टं सामान्यतो दृष्टमिति चास्य विधाद्वयं पूर्वं प्रत्यक्षयोग्यार्थं तदयोग्यार्थमुत्तरमिति । अतीन्द्रियार्थानुमापकहेतूनां सामान्यतो दृष्टत्वमिति नैयायिकैरुक्ता अतीन्द्रियेश्वराद्यनुमापकाश्च निराकृता इत्याह । अन्वयव्यतिरेकिणीति । अन्यथा ईश्वराद्यतीन्द्रियार्थानामनुमानत एव सिद्ध्यङ्गीकारे तद्बोधकानामागमानामनुवादकत्वं स्यादिति भावः । सोपाधिकत्वादीत्यादिपदेन सत्प्रतिपक्षितत्वं गृह्यते । एतदुपपादनप्रकारा ईश्वरपरमाण्वाद्यनुमानदूषणस्थले सर्वार्थसिद्धिन्यायसिद्धाञ्जनादौ विशदमनुसन्धेयाः । नन्वतीन्द्रियार्थानुमाननिराकरणे चन्द्रसूर्यबिम्बादिपरभागाद्यनुमानमपि न स्यादित्यत आह । चन्द्रबिम्बेति । तत्रेश्वरानुमानादाविव सपक्षानुगताकारवैकल्याभावेनोपाध्यादिप्रसक्तेरभावादिति भावः । सतोऽप्यनुपल-

विम्बपरभागादिकं तु नास्मदाद्यतीन्द्रियं पर्वतपरभागादिव-दिन्द्रियसंयोगाभावादेव तदग्रहणोपपत्तिरिति युक्तं तदनुमान-म् । सन्ति हि सतोऽप्यनुपलम्भहेतवो बहवः । यथोक्तं सांख्यैः ।

अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च इति
यत्तु ।
सौक्ष्म्यात्तदनुपलब्धिर्नाभावात्कार्यतस्तदुपलब्धेः ।
महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च इति ।
ईदृशविषयेऽनुमानं वार्यते नतु दृष्टसजातीयसूक्ष्मेषु यथो-

म्भहेतून् सांख्योक्ताननुवदति । अतिदूरादिति । अतिदूरादनुप-लम्भो मेर्वादेः । सामीप्यात्पक्ष्मणः सन्निहितलिप्यादेश्चइन्द्रियघातात् अङ्गुल्यवष्टम्भादिकृतात्तस्माच्चचन्द्रगतैकत्वादेः । मनोऽनवस्थानं व्यासङ्गस्तस्मादिन्द्रियसन्निकृष्टानामपि पुरोवर्तिनाम् यथोक्तम् ।

परिच्छेदव्यक्तिर्न भवति पुरस्थेऽपि विषये इति ।

सौक्ष्म्यादुष्णजलनिष्ठवह्न्यादेर्विसृत्वरेखादेश्च । व्यवधानाच्च-न्द्रविम्बादिपरभागादेः कुड्यादिव्यवहितघटादेश्च । स्वपृष्ठभागस्य च । अभिभवः पित्तेन चक्षुरावरणं तेन शङ्खादिगतश्वैत्यादेः । समा-नाभिहारात् क्षीरादिसंसृष्टतोयादेरिति द्रष्टव्यम् । ननु तर्हि सांख्यैरुक्तं प्रकृत्या महदादिकार्यैरनुमानमप्यङ्गीकार्यं स्यादित्यत आह । यत्त्विति । सौक्ष्म्यादिति । प्रकृतेः सूक्ष्मत्वादनुपलम्भः नतु तस्याः अभावात् कार्यावस्थायां तदुपलम्भसम्भवात् । म-हदादिकं तस्योपादानसदृशं विशदृशं पञ्चीकृतपृथिव्यादिकं तथा च पञ्चीकृतपृथिव्याद्यवस्थायामुपलब्धेः सत्त्वात् । प्रकृत्यवस्थायामनुपलम्भः सौक्ष्म्यकृत इति तस्यानुमेयत्वं युज्यत इत्यर्थः । ईदृशविषय इति । दृष्टविजातीयायाः प्रकृतेरत्यन्ता-तीन्द्रियत्वेन तादृशविषये अनुमानं नाभ्युपगम्यत इत्यर्थः । न-हि सूक्ष्मेष्वनुमानं नाभ्युपगम्यत इत्याह । नतु दृष्टजातीय-

ष्णजलादौ वन्ह्यादेः । यत्र तु शास्त्रेणैव व्याप्यव्यापकभावग्रहणं तत्रातीन्द्रियाणामप्यनुमानं वारयामः । यथा तत्तज्जातिगुणकर्मवर्णप्रज्ञामेधारोग्यादिषु दृष्टेषु तत्तत्कारणभूतादृष्टविशेषानुमानमिति । अतीन्द्रिये च सर्वत्र शास्त्रमेव प्रमाणमिति भाष्यमपि प्रत्यक्षसिद्धव्याप्त्युपजीवनेनात्यन्तातीन्द्रियार्थसाधनबाधनप्रतिक्षेपपरं नतु शास्त्रसिद्धव्याप्त्युपजीवनेनातीन्द्रियानुमाननिषेधार्थं तत्रापि शास्त्रमूलतया तस्मिन्नेव विश्रमात् शास्त्रमेव प्रमाणमिति वाचोयुक्तेरविरोधात् । एतेनास्मदादिप्रत्यक्षयोग्यार्थानुमापकं विशेषतो दृष्टं तदयोग्यार्थं

---

सूक्ष्मेष्विति । अनुमानं वार्यत इत्यनुषङ्गः । तथाचात्यन्तातीन्द्रियानुमानमस्माभिर्नाङ्गीक्रियते । दृष्टसजातीयेषु सूक्ष्मेषु त्वनुमानमभ्युपगम्यत एवेत्यर्थः । यथोष्णजलस्थवन्ह्यादेरिति । अस्य सूक्ष्मत्वमनुद्भूतरूपत्वं न त्वतीन्द्रियत्वम् । उद्भूतस्पर्शवत्त्वेन स्पार्शनप्रत्यक्षत्वात् । एतदुपलक्षणं जालकालोकविलोकनीयरेणूनामन्यत्र भवनोदरेऽनुमानं सूक्ष्मविषयानुमानमिति द्रष्टव्यम् । ननु तर्हि किमतीन्द्रियानुमानमात्रमेव निवार्यते नेत्याह । यत्रत्विति । जात्यादीनामदृष्टविशेषकारणकत्वं च स्मृतीतिहासपुराणेषु विशदमनुसन्धेयम् । जातिर्निषादपुस्कषत्वादिः । गुणस्तेजस्वित्वादिः । कर्म राजलक्षणशास्त्रजीवनादि । वर्णो ब्राह्मणत्वादिः । प्रज्ञा । कर्तव्यनिर्द्धारणानुगुणा धीः । मेधा धारणावती धीः गदो ज्वरातिसारार्शोमुखो व्याधिः । आदिपदेनाभिरामवनितागजाश्वविष्णुभक्त्यादिलाभो गृह्यते । नन्वतीन्द्रियार्थे शास्त्रमेव प्रमाणमिति भाष्ये एव कारेणातीन्द्रियार्थे अनुमानं निषिध्यते । तस्य कथमुपपत्तिरित्यत आह । अतीन्द्रियेति । साधनमीश्वरादीनामतीन्द्रियाणामनुमानम् । बाधनं शास्त्रसिद्धानां नित्याविभूत्यादीनामनुमानतो निराकरणम् । उपजीवनेनेति तृतीयायाः साधनबाधनयोरन्वयेऽपि तस्य सापेक्षत्वेऽपि गमकत्वात्समासः । एतेनेति । शास्त्रसिद्धव्याप्त्युपजीव्यातीन्द्रियार्था-

सामान्यतो दृष्टमिति परोक्तविभागस्यापि विषयः सिद्धो भवति । लौकिकेष्वेव सूक्ष्मासूक्ष्मविभागात्तत्सिद्धेः । किंचिज्जातीयात्तद्व्यापकजातीयस्यानुमानं सामान्यतो दृष्टं यथा धूमादग्नेः। व्याप्तिदशादृष्टयैव व्यक्त्या देशान्तरकालान्तरादौ व्यापकतया दृष्टव्यक्तेरेवानुमानं विशेषतो दृष्टं यथा कृत्तिकया रोहिण्यनुमानमिति केचित् । तत्रापि निष्कर्षे कृत्तिकोदयरोहिण्यासत्तिव्यक्तीनां भूयस्त्वात्तदातनेन कृत्तिकोदयेन तादात्विकी रोहिण्यासत्तिव्यक्तिरेवानुमीयते इति सामान्यत एव व्याप्तिग्रहः । अन्यथा व्याप्तिदशादृष्टमात्रविषयत्वे स्मृतिमात्रत्वप्रसङ्गात् । एवं स्वरविशेषात्पुत्राद्यनुमानेऽपि पूर्वस्वरवदद्यतनस्वरस्य पुत्रस्वरत्वानुमानात् सिद्धो

---

नुमानाभ्युपगमेनेत्यर्थः । सिद्धो भवतीति । तथा च शास्त्रैकसिद्धव्याप्त्युपजीवनेन प्रवृत्तमत्यन्तातीन्द्रियानुमानं सामान्यतो दृष्टम् । अन्यत्तु विशेषतो दृष्टमिति नैयायिकोक्तविभागस्य विषयव्यवस्था । नतु प्रत्यक्षसिद्धव्याप्त्युपजीवनेन प्रवृत्तमत्यन्तातीन्द्रियानुमानं सामान्यतो दृष्टमन्यत्तु विशेषतो दृष्टमिति व्यवस्थेति भावः । प्रकारान्तरेणापि तामाह । लौकिकेष्विति । सूक्ष्मभूरेणूष्णजलस्थवन्ह्याद्यनुमानं सामान्यतो दृष्टम् । असूक्ष्मवन्ह्याद्यनुमानं विशेषतो दृष्टमिति विभाग इत्यर्थः । कैश्चित्प्रकारान्तरेणोक्तमनुवदति । किञ्चिदित्यादिना । तत्र कृत्तिकया रोहिणी नानुमीयते किन्तु कृत्तिकोदयव्यक्तिविशेषेण पूर्वमदृष्टेन रोहिण्यासत्तिव्यक्तिविशेषः पूर्वमदृष्ट एवानुमीयत इति तदुक्तविभागोऽनुपपन्न इत्याह । तत्रापीति । ननु स्वरेण पुत्रानुमानं विशेषतो दृष्टं भवत्वित्याशङ्क्य तत्रापि पूर्वमश्रुते स्वरविशेषे श्रुतचरस्वरदृष्टान्तेन जातिविशेषेण पुत्रस्वरत्वमेवानुमीयते तथाज्ञातेन तेन स्वरविशेषेण पुत्रसन्निधानव्यक्तिविशेष एवानुमीयत इति तत्रापि सामान्यत एव व्याप्तिग्रह इत्याह । पुत्राद्यनु-

भेदः । तेनैव शैलशृङ्गेण तस्यैव शैलस्य कथमनुमानमिति चेन्न कथं चित्स्मृतिमात्रत्वात् तत्कालवर्तित्वाच्छैलार्जवाद्यातिरिक्तग्रहे तु कालादिव्यक्तिभेदसिद्धिरिति ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतौ न्यायपरिशुद्धावनुमानाध्याये प्रथमं प्रतिबन्धाद्याह्निकम् ॥ २ ॥ १ ॥

श्रीमते रामानुजाय नमः ।

तदिदमनुमानं स्वार्थं परार्थं चेति केचिद्विभजन्ते तदयुक्तम् । सर्वेषामप्यनुमानानां स्वप्रतिसन्धानादिबलेन प्रवृत्तत-

---

मानेऽपीति । ननु दूरस्थस्य पूर्वदृष्टेन शैलशृङ्गेण तस्यैव पर्वतस्यानुमानं विशेषतो दृष्टं भवत्वित्याशङ्क्य तत्रानुमितिरेव नास्ति येन विशेषदृष्टस्य विषयलाभः स्यादित्याह । तेनैवेति । ननु तत्राननुभूतचरस्य ऋजुत्वादेर्ग्रहणं कथं स्मरणं स्यात् सर्वतः अत्र प्रदेशेन ऋजुर्वर्तते अनुभूयमान ऋजुशृङ्गत्वादिति तत्रानुमानमित्यत आह । तत्कालवर्त्तित्वेति । तर्हि पूर्वापरदृष्टकालदेशव्यक्तिभेदाविषयत्वात्सामान्यतो दृष्टत्वं तस्य न हीयत इति भावः

*इति श्रीमद्वेदान्ताचार्य्य*चरणारविन्दानुभवानुसन्धानविशदप्रबोधेन भारद्वाजकुलजलधिकौस्तुभश्रीदेवराजाचार्य्यसूनुना श्रीनिवासदासेन विरचितायां न्यायपरिशुद्धिव्याख्यायां न्यायसारसमाख्यायामनुमानाध्याये प्रथमं व्याप्त्याद्याह्निकम् ॥ २ । १ ॥

श्रीमते रामानुजाय नमः ।

यदुपक्रममल्पधियामपि हैतुकनिग्रहः सुकरः ।
तस्य श्रुतिशिखरगुरोश्चरणौ शरणीकरोमितराम् ॥ १ ॥

स्वाभिमतं विभागं प्रमाणमात्रे प्रदर्शयिष्यन् नैयायिकैरुक्तमनुमानविभागं दूषयितुमनुवदति । तदिदमिति । परार्थमित्यत्र परस्यार्थः प्रयोजनं यस्येति बहुव्रीहिर्वा परस्यार्थ इति तत्पुरुषो वा स्यात् उभयथापि परव्याप्त्यादिज्ञानजन्यत्वं परव्यवहारे हेतुत्वं वोक्तं स्यात् तत्र नाद्य इत्याह । स्वप्रतिसंन्धानादिबलेन प्रवृत्ततयेति ।

था स्वव्यवहारमात्रहेतुत्वेन च स्वार्थत्वात् । वाक्यप्रतिपन्नेऽपि नतु वाक्यबलादर्थसिद्धिः । किन्तु वाक्यार्थोपस्थापितव्याप्तिप्रतिसन्धानादिनैव । नच प्रतिवादिवाक्यं व्युत्थितस्य प्रमाणम् । आप्तश्चेद्ब्रूयात् तत्रापि व्याप्तिमात्रे तेनोपदिष्टे श्रोता स्वयमेवानुमिनुयात् । नतु साध्यार्थज्ञानेऽप्युपदेशमपेक्षते । यदि च वाक्यप्रतिपादितत्वमात्रेणानुमानस्य परार्थत्वं तदा प्रत्यक्षागमयोरपि तथा विभागप्रसङ्गः । केषुचिदर्थेषु प्रमाणतया तयोरेवाभिधेयत्वात् । एतदुक्तं भवति । द्विविधानि प्रमाणानि । स्वयमेव सिद्धानि परवाक्यपूर्वाणि चेति । सामान्यत एव विभागः कार्य इति । तदेव ह्युक्तं त-

---

प्रतिसन्धानं व्याप्तिस्मृतिः आदिपदेन पक्षधर्मताज्ञानं गृह्यते बलशब्दस्तन्निष्ठकारणतापर्यायशक्तिपरः नान्त्य इत्याह । स्वव्यवहारमात्रहेतुत्वेन चेति । तत्रानुमितेः परवाक्यजन्यत्वात् तस्याः परार्थता युक्तेत्यत आह । वाक्यप्रतिपन्नेऽपीति । परवाक्यतः सहेतुसाध्योपस्थितिरेव जायते न ततः साध्योपस्थितिः परवाक्यप्रयोज्यव्याप्तिपक्षधर्मताज्ञानेनैव जायत इति फलितार्थः । ननु परवाक्येनैव साध्यस्य प्रतिपन्नत्वात्तत्र किं व्याप्त्यादिज्ञानापेक्षयेत्याशङ्क्य ततः साध्यप्रतिपत्तिः किं प्रतिवादिन उच्यते उत शिष्यादेर्वा आद्य आह । नचेति । द्वितीय आह । आप्तश्चेदिति । उपदेशमपेक्षत इति । अन्यथा गुर्वादयः प्रतिज्ञामात्रमेव ब्रूयुः नतु समग्रप्रयोगमिति भावः। वाक्यप्रतिपादितत्वमात्रेणेति। अनुमानसामग्रीभूतव्याप्त्यादेरिति शेषः । अन्यथानुमितेर्वाक्यप्रतिपाद्यत्वाभावेन यथाश्रुतेऽनन्वयादिति ध्येयम् । तर्हि प्रमाणमात्रे तथा विभागोऽस्तु तथाप्यस्मदुक्तमनुमानद्वैविध्यं स्यादित्याशङ्क्य प्रमाणमात्रे विभागमकृत्वा अनुमानमात्रे विभागकरणं युष्माकं दोष एवेत्याशयेन स्वाभिमतं विभागं दर्शयति । एतदुक्तं भवतीति । स्वोक्तार्थे भट्टपराशरपादानामुक्तिं प्रमाणयति । एतदेव हीति । प्रत्यक्षागमसामग्र्योरिति । प्रत्यक्षशब्दज्ञानयोः सामग्र्योः प्रतिपादके परवाक्ये पूर्वे

स्वरत्नाकरेऽपि ।

सर्वं प्रमाणं सामग्र्या स्वत एव प्रवृत्तया ।
जन्यते परवाक्येन वृत्तया चेति हि द्विधा ॥
अतोऽनुमानं द्विविधं स्वपरार्थत्वभेदतः ।
प्रत्यक्षागमसामग्र्योः परवाक्ये प्रदर्शिते ॥
वक्ष्यते व्यवहाराध्वन्यनुमानस्य तूच्यते ।
अनुमोद्बोधकं वाक्यं प्रयोगः साधनं च तत् ॥

इत्यादि । तदेवमनुमोद्बोधकं वाक्यं प्रतिज्ञादिपञ्चावयवम् । तत्र परं प्रति प्रतिपिपादयिषया पक्षवचनं प्रतिज्ञा ।

---

प्रदर्शिते अभूताम् अनुमानस्य परवाक्यमिदानीमुच्यते । प्रत्यक्षादीनां सर्वेषां प्रमाणानां परवाक्यं व्यवहाराध्वन्युत्तरत्र तत्तदर्थविचारात्मकवादमार्गे तत्तत्प्रमाणप्रयोगकाले वक्ष्यते चेत्यर्थः । तुश्चार्थे भिन्नक्रमश्च । अनुमोद्बोधकमिति । परानुमितीच्छया वादिप्रतिवादिनोरन्यतरेण प्रयुज्यमानवाक्यत्वं प्रयोगलक्षणमित्युक्तं भवति । प्रत्यक्षादिवाक्येऽतिव्याप्तिनिरासायानुमितीच्छयेत्युक्तम् । धूमाद्वह्निं जानीहीत्येवंरूप आप्तवाक्येऽतिव्याप्तिनिरासाय वादिप्रतिवादिनोरन्यतरेण प्रयुज्यमानेत्युक्तम् । अवयवेष्वतिव्याप्तिवारणाय वाक्यपदम् । तदर्थश्च वाक्यान्तरानपेक्षवाक्यत्वं तेन नावयवेष्वतिव्याप्तिः । नन्वेवमुदाहरणादिवाक्यत्रयप्रयोगादीनामपि प्रयोगत्वेनाचार्यैः सिद्धान्तयिष्यमाणत्वात्तत्रातिव्याप्तिरिति चेन्न वाक्यान्तरानपेक्षतयाभिमतपदत्वस्यैव विवक्षितत्वेन तत्रापि लक्षणसत्त्वात् । न्यूनप्रयोगेऽपि वादिनः पूर्णत्वाभिमानसत्त्वादिति । अवयवलक्षणं च प्रयोगघटकवाक्यत्वमिति सुगममिति । परप्रतिपिपादयिषयेति । परानुमितीच्छया साध्यविशिष्टधर्मिनिर्देशः प्रतिज्ञेत्यर्थः । उदासीनवाक्येऽतिव्याप्तिवारणाय परानुमितीच्छयेत्युक्तम् । हेत्वादिष्वतिव्याप्तिवारणाय साध्यविशिष्टधर्मिनिर्देश इत्युक्तम् । प्रतिज्ञावयवेऽतिव्याप्तिवारणाय साध्यविशिष्टपदम् । नन्वेवमपि पक्षनिर्देशात्मकेषूदाहरणाद्येकदेशेष्वतिव्या-

यथा पर्वतोऽग्निमानिति। तत्र धर्मिणमुद्दिश्य साध्यधर्मो विधीयत इति वृद्धाः। साधकत्वप्रकाशकविभक्तिपदान्तरसमभिव्याहारादियुक्तं लिङ्गस्य वचनं हेतुः। यथा धूमवत्त्वात् धूमवत्त्वेन धूमोऽत्र विद्यते यत इत्यादि। प्रसङ्गद्वारेण वा

---

प्तिः स्यादित्यत आह। तत्र धर्मिणमुद्दिश्येति। तत्र न धर्मिमात्रमुद्दिश्य साध्यं विधीयते किन्तु हेतुविशिष्टं पक्षमुद्दिश्येति नातिव्याप्तिरिति भावः। एतेन वह्निमान् पर्वत इति विपरीतनिर्देशोऽपि वारितः। तत्र साध्यस्य प्रथमनिर्देशेन तस्य विधीयमानत्वायोगात्।

यच्छब्दयोगः प्राथम्यमित्याद्युद्देशलक्षणम्।
तच्छब्द एवकारश्च स्यादुपादेयलक्षणम्॥

इति ह्युच्यत इति। साधकत्वप्रकाशकेति। ज्ञापकत्वबोधकविभक्तिपदान्तरसमभिव्याहारविपर्ययप्रसङ्गान्यतमयुक्तहेतुनिर्देशत्वं हेत्ववयवलक्षणमित्यर्थः। प्रतिज्ञादिष्वतिव्याप्तिवारणाय हेत्वन्तम्। धूमवत्त्वात् धूमवत्त्वेनेत्यत्राव्याप्तिवारणाय ज्ञापकत्वबोधकपदान्तरसमभिव्याहारेत्युक्तम्। अन्यथा निर्धूमत्वप्रसङ्ग इत्यत्राव्याप्तिवारणाय विपर्ययप्रसङ्गयुक्तत्वम्। अन्यतमत्वेन क्रोडीकाराच्चाननुगमः। ननु तृतीयापञ्चम्योर्हेतुत्वार्थकत्वान्न ज्ञापकत्वबोधकत्वं न वा लक्षणया तद्बोधकत्वं सुब्विभक्तौ लक्षणानङ्गीकारादिति चेन्न। हेताविति सूत्रे हेतुपदेनोत्पादकज्ञापकयोरपि हेतुत्वेन विवक्षितत्वात्। तृतीयाज्ञापकताया बोधकत्वसम्भवात्। अत एव वृत्तिकारैः फलमपि हेतुरित्युक्त्वा अध्ययनेन वसतीत्युदाहृतम्। एवं "विभाषा गुणे ऽस्त्रिया"मित्यत्र विभाषेति योगविभागात् अगुणे स्त्रियां च हेतौ पञ्चमीं विधाय हेतुत्वं च ज्ञापकत्वमित्यभिप्रेत्योदाहृतं धूमाद्वह्निमान् नास्ति घटोऽनुपलब्धेरिति। अतः पञ्चम्या अपि ज्ञापकत्वार्थकत्वसम्भवः। उत्पादकत्वमात्रहेतुत्वविवक्षायामुक्तोदाहरणानुपपत्तेः। न च धूमादित्यत्र धूमपदस्य धूमज्ञानलक्षकत्वात्पञ्चम्योत्पादकत्वं बोध्यत इति वाच्यम्। अत्रैवंभावेऽपि नास्ति

अन्यथा निर्धूमत्वप्रसङ्गादित्यादि । सम्यग्व्याप्तिनिर्देशपूर्वकदृष्टान्तवचनमुदाहरणम् । तच्च व्याप्तेर्दृष्टान्तस्य च शैलीमनुरुध्यान्वयोदाहरणं व्यतिरेकोदाहरणमिति भिद्यते । तत्र यो धूमवान् सोऽग्निमान् यथा महानस इत्यन्वयोदाहरणम् । योऽनग्निः स निर्धूमः यथा महा ह्रद इति व्यतिरेकोदाहरणम् । यदुक्तसाधनं तदुक्तसाध्यम् । यदुक्तसाध्यं न भवति तदु-

घटोऽनुपलब्धेरित्यत्र ज्ञानलक्षणायोगात् स्वरूपसत्या एवानुपलब्धेरभावज्ञप्तिहेतुत्वेन तज्ज्ञानस्य तत्र हेतुत्वाभावात् । घटो रूपी तथा प्रत्यक्षत्वादित्यादिष्वगतेश्च । एतेन पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरशब्दत्वंहेत्ववयवलक्षणमिति नवीनोक्तं परास्तम् । ननु हेतुत्वशक्तयोः तृतीयापञ्चम्योः ज्ञापकतायामपि शक्तिकल्पनेन तयोर्नानार्थता स्यात्, । अन्याय्यं चानेकार्थत्वमिति न्यायाप्रवृत्तेः । यत्र तु व्यवहाराल्पत्वमनुशासनाभावश्च तत्रैवास्य न्यायस्य प्रवृत्तेः । यथा गङ्गाशब्दस्य प्रवाहे शक्तस्य तीरे । अन्यथा नानार्थोच्छित्तिप्रसङ्गात् । प्रकृते च करणत्वापादानत्वशक्तयोस्तृतीयापञ्चम्योरुत्पादकतार्थकत्वस्याप्यभावप्रसङ्गादिति । एतेन प्रत्ययलक्षणापेक्षया प्रकृतिलक्षणैव लघीयसी दृष्टचरीयं धन्येत्यादाविति नवीनापसद्भाषितममूलकमित्यास्तां तावत् । ग्रन्थविस्तरभीरूणामयुक्तोक्तिरनुचितेत्युपरम्यते । सम्यगिति अनुपदर्शितव्याप्तिके घटवत्पटवादित्यादावतिव्याप्तिवारणाय व्याप्तिनिर्देशपूर्वकमित्युक्तम् । वैपरीत्येनोपदर्शितव्याप्तिके योऽग्निमान् स धूमवान् यथा महानसः यो निर्धूमः स निरग्निः यथा ह्रद इत्यादावतिव्याप्तिवारणाय सम्यगिति । ननु ब्रह्म मिथ्या ज्ञानविषयत्वात्प्रपञ्चवदित्यादि भाष्ये व्यवहृतम् । तत्र व्याप्तिनिर्देशाभावादुदाहरणत्वं न स्यादितिचेन्न व्याप्तितात्पर्यकत्वस्य विवक्षितत्वात् तत्रापि व्याप्तिपरत्वसत्त्वात् उपनयादावपि व्याप्तिनिर्देशसम्भवात् तत्रातिव्याप्तिनिरासाय दृष्टान्तवचनमित्युक्तम् । शैली । विधिमुखत्वादिस्वभावः । उदाहरणस्य सामान्यतः प्रवृत्तिरूपम् प्रकारान्तरमपि दर्शयति । यदुक्तसाधनमि-

क्तसाधनं न भवति यथा संप्रतिपन्नमिति सामान्यतोऽप्युदाहरन्ति। अत्र च यदित्थं तत्तथेति साधारणप्रयोगादेव सर्वोपसंहारः सिध्यति। यथा गौर्न पदा स्प्रष्टव्येत्यादावतो यद्यदिति वीप्सानपेक्षा। कस्यचित्तु सा स्पष्टार्था। दृष्टान्तनिदर्शनेन व्याप्ततया पक्षे हेतुमुपसंहरद्वाक्यमुपनयः। सोऽपि पूर्ववद्द्विविधः। अयं च तथा धूमवानित्यन्वयोपनयः। अयं न तथा निर्धूम इति व्यतिरेकोपनयः। हेतुपूर्वं पक्षे साध्यमुपसंहरद्वाक्यं निगमनम्। तत्रापि पूर्वतुल्यन्यायतया द्वैविध्यमनुसंधेयम्। यथा तस्मादसावग्निमानिति। अयं निरग्निर्न भवतीति च। एते पञ्चाप्यवयवाः प्रयोक्तव्या इति नैयायिकाः। उदाहरणान्तं तदाद्यं वा प्रयोक्तव्यं त्रितयमिति मीमांसकाः। उदाहरणोपनयावेवेति तु सौगताः। वयं त्वनियमं ब्रूमः। नियमवदनियमस्याप्याभिमानिकतया सि-

---

त्यादिना। उदाहरणे वीप्सा नियमेन प्रयोक्तव्या अन्यथा सर्वत्र व्याप्यवर्तिव्यापकसत्त्वस्याप्रतीत्या व्याप्तिरूपदर्शनं न स्यादिति केचित् तन्मतं निराकरोति। साधारणप्रयोगादेवेति। यथा गौर्न पदा स्प्रष्टव्येति सामान्यप्रयोगे सर्वासां गोव्यक्तीनां पदास्पर्शनिषेधो ज्ञायते तथा यो धूमवान् सोऽग्निमानित्यनादृतव्यक्तिविशेषात्सामान्यप्रयोगादेव सर्वत्र धूमवति वह्निसत्त्वप्रतीतेः सम्भवाद्व्याप्त्युपदर्शनमव्याहतमिति वीप्सा व्यर्था मन्दबुद्ध्यनुग्रहाय वीप्साप्रयोगं न वारयाम इति भावः। एतेन वीप्सा च यत्पदे न तु तत्पद इत्याद्युपपादनमपि मन्दबुद्ध्यनुग्रहार्थमित्युक्तं भवति। दृष्टान्तनिदर्शनेनेति। निगमनैकदेशेऽतिव्याप्तिवारणाय दृष्टान्तनिदर्शनेनेत्युक्तम्। उदाहरणे तद्वारणाय पक्ष इति। अन्यत् स्पष्टम्। हेतुपूर्वमिति। प्रतिज्ञायामतिव्याप्तिवारणाय हेतुपूर्वमित्युक्तम्। उपनये तद्वारणाय साध्यमिति। स्वसिद्धान्तं वक्तुं परसिद्धान्ताननुवदति। एत इति। तदाद्यम्। उदाहरणाद्यं निगमनान्त-

द्धान्तत्वोपपत्तेः। दृष्टश्चानियमेन भाष्यादिषु प्रयोगः। क्वचित्पञ्चावयवः। क्वचित्त्र्यवयवः। क्वचिदवयवकल्पनारहितः। क्वचिदेकव्याप्तिकः। क्वचिद्व्याप्तिद्वयविशिष्ट इत्यादि। इदं च वादिनोः परस्परसंवादानुरूपम्। यथाभिमतव्यवहाराभ्यनुज्ञालिङ्गं प्रतिवाद्यभिमतप्रस्थानेन व्यवहारमन्येऽपि केचिदिच्छन्ति। पिशाचानां पिशाचभाषयैवोत्तरं देयमिति न्यायात्। अतोऽप्यनियतावयव एव प्रयोगः। उपपन्नश्च मृदुमध्यकठोरधियां विस्तरसङ्ग्रहाभ्यां व्यवहारः। यद्यप्युदाहरणोपनयाभ्यामेव व्याप्तिपक्षधर्मतयोः सिद्धत्वात्तावदेव तत्त्वतो वक्तुमुचितं तथापि विवक्षितस्फौट्याय प्रतिज्ञाहेतूदाहरणानि उदाहरणोपनयनिगमनानि वा वाच्यानि। अन्यथा विवादवि-

---

मित्यर्थः। अनियमे न कोऽपि सिद्धान्तः स्यादित्यत आह। नियमवदिति। अभ्युपगमस्यैव सिद्धान्तत्वप्रयोजकत्वात्तस्यानियमे ऽपि भावादिति भावः। अनियमाभ्युपगमे पूर्वप्रयोग एव मूलमित्याह। दृष्टश्चेति। क्वचिदवयवकल्पनारहित इति। हेतुसाध्यमात्रनिर्देशः उदाहरणोपनयमात्रनिर्देशः सौगताभ्युपगतो ऽप्यनेनोपलक्ष्यते इदं चेति। अनियतावयवाङ्गीकरणमित्यर्थः। प्रतिपक्षिसम्बन्धादत एव व्यवहारहेतुरिति पक्षान्तरं दर्शयति। प्रतिवादीति। अतोऽपीति। नैयायिकादीनां सर्वेषामपि कदाचित्प्रतिवादित्वसम्भवेनानियतावयवाभ्युपगमस्यैव युक्तत्वादिति भावः। मृदुमध्यकठोरधियामिति मन्दमध्यतीक्ष्णधियामित्यर्थः। मन्दबुद्धीनां पञ्चावयवप्रयोगरूपातिविस्तरः। मध्यधियां तु त्र्यवयवप्रयोगरूपं विस्तरमात्रम्। तीक्ष्णबुद्धीनां त्ववयवद्वयप्रयोगरूपसङ्ग्रह इति विवेचनीयम्। विस्तरसङ्ग्रहाभ्यामित्यत्र विस्तरशब्देन विस्तरातिविस्तरयोरेकीकारेण ग्रहणमिति बोध्यम्। ननु अनुमित्युपयुक्तयोर्व्याप्तिपक्षधर्मत्वयोः प्रतिपादनं यावता सम्भाव्यते तावदेव प्रयोक्तुमुचितं नाधिकं वैयर्थ्यादिति शङ्कते। यद्यपीति। स्फौट्यायेति। स्पष्टत्वा-

षयस्य साध्यार्थस्य व्यक्तप्रतिपादनानुपपत्तेः। ये तु प्रतिज्ञादित्रयानन्तरं हेतोरसिद्ध्यन्यथासिद्धिपरिहारार्थं उपनयः। निगमने हेत्वंशः सिद्धसाधनतापरिहाराय। साध्यांशस्तु बाधपरिहारायेति वर्णयन्ति तैर्नूनं तत्तद्दोषपरिहाराय मन्त्रपाठोऽयमिष्टः। प्रतिज्ञाहेतुभ्यामेव तदर्थाभिधानसिद्धेः। अन्यथा नायमसिद्धो नापि बाधित इति व्यक्तमेव वक्तव्यत्वात्। आभासोद्धारनिर्बन्धः पुनरुक्तिश्चेति। भगवद्यामुनमुनि-

---

येत्यर्थः। विवादविषयस्येति। पक्षे साध्यसत्त्वस्येत्यर्थः। तथा च प्रतिज्ञानिगमनयोः पक्षे साध्यसम्बन्धप्रतिपादकत्वात्तदुपादानं युक्तमेवेति भावः। असिद्ध्यादिपरिहारार्थमुपनयनिगमनयोरुपादानमिति नैयायिका वदन्ति तन्मतं दूषयितुमनुवदति। ये त्विति। अन्यथासिद्धिरप्रयोजकत्वं व्यभिचार इति केचित्। उपनय इति। उपनये हेत्ववयवसिद्धस्य व्याप्यस्य पक्षे प्रतिपादनेनासिद्ध्यन्यथासिद्धिविरहतात्पर्यकत्वमवगन्तुं शक्यत इति भावः। निगमन इति। तस्मादिति हेत्वंशे हेतुतयोपनयसिद्धस्य पक्षे व्याप्यसत्त्वस्य प्रतिपादनेन साध्याभावग्राहकरूपस्य बाध्यस्याभावोऽवगन्तुं शक्यत इति भावः। अन्यावयवद्वयेनासिद्ध्यादिपरिहारं वदन् वक्तव्यः। अनेनावयवद्वयेनासिद्ध्यादिपरिहारः क्रियते वा ज्ञाप्यते वा नाद्य इत्याह। तैर्नूनमिति। तदा हि पिशाचनिवर्तकमन्त्रवदन्त्यावयवद्वये ऽसिद्ध्यादिनिवर्तकतायां शक्तिरभ्युपगन्तव्येत्यर्थः। न द्वितीय इत्याह। प्रतिज्ञाहेतुभ्यामिति। अन्त्यावयवद्वयज्ञाप्यस्यासिद्ध्यभावादेस्तत्समानविषयकाभ्यां प्रतिज्ञाहेतुभ्यामेव ज्ञापनसम्भवाद्व्यर्थं तदित्यर्थः। ननु पुनरुक्तिपरिहाराय किल तद्बोधकत्वमन्त्यावयवद्वये कल्प्यते तच्च प्रथमतो न स्फुरतीति न प्रतिज्ञाहेतुभ्यां तदर्थाभिधानसिद्धिरित्यत आह। अन्यथेति। प्रतिज्ञाहेतुभ्यामसिद्ध्यभावादिबोधनासम्भव इत्यर्थः। व्यक्तमेव वक्तव्यत्वादिति। तात्पर्यतः प्रतिपत्तेर्विलम्बितत्वेनाव्यक्तत्वादिति भावः। तथास्तु वादं वारयति। आभासोद्धारेति

भाष्यकारादिभिश्च पञ्चावयवा अपि हेतवः प्रयुक्ता इति चेत् सत्यम्। अत एव ह्यनियमः सिद्धान्तितः। नच ग्रन्थेषु दृष्टं निबन्धनमिति व्यवहारेऽपि तथेति नियमः। स च प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते स्वस्मै प्रकाशमानत्वात्। इत्यादावन्वयव्यतिरेकौ द्वावप्युक्ताविति तावता तयोर्द्वयोरप्यवश्यपठनीयत्वापातात्। यच्चेदं प्रयोगसंस्थानं वर्णितं न तत्राप्यस्माकं निर्बन्धः। अत्र पर्वतेऽग्निरस्ति यदत्र धूमो विद्यते दृष्टं च धूमवतां सर्वेषामग्निमत्त्वमित्यादिनापि तदर्थप्रतिपादनोपपत्तेः। दृश्यन्ते चैवं वि-

---

नायमाभासस्तल्लक्षणरहितत्वादिति कण्टकोद्धारवाक्यैनैवाशेषदोषनिवृत्तिबोधसिद्धेः। तदर्थं वाक्यान्तरप्रयोगः तेन पुनरुक्तः स्यादित्यर्थः। ननु भवदीयैः पूर्वैरपि कृतस्य पञ्चावयवप्रयोगस्य युष्माभिर्दूषणं कथं सङ्गच्छत इत्यभिप्रेत्य नैयायिकः शङ्कते। भगवदिति। प्रतिवादिसंवादानुगुण्येन तथा प्रयोगोऽस्माभिरङ्गीकृत एव किन्तु पञ्चावयवतयैव प्रयोगः कर्तव्य इति नियमं नाभ्युपगच्छाम इत्यर्द्धाङ्गीकारेण परिहरति। सत्यमिति। क्वाचित्कग्रन्थनिबन्धानुगुणतया सर्वदा व्यवहर्तव्यमिति नियमाङ्गीकारे भाष्ये अहमर्थात्मसमर्थनप्रकरणेऽन्वयव्यतिरेकव्याप्त्योः समुच्चित्य प्रदर्शितत्वात्सर्वत्र व्याप्तिद्वयसमुच्चितप्रयोगः स्यादिति वक्ष्यंस्तद्भाष्यमनुवदति। स च प्रत्यगात्मेति। पर्वतो वह्निमान् धूमवत्त्वादित्यादि प्रतिपादितसन्निवेशविशिष्टस्यैव न्यायशब्दार्थत्वात् तेनैव व्यवहारः कर्तव्यः नतु पर्वते वह्निर्यतो धूम इत्यादिनापि तस्यासाम्प्रदायिकत्वेन प्रयोगानर्हत्वादिति नैयायिका वर्णयन्ति तदभिमतप्रयोगात् नियमनिर्बन्धो नास्माकमित्याह। यच्चेदमिति। एवमनियमाभ्युपगमे सर्वसैद्धान्तिकग्रन्थशैलीदर्शनमेव प्रमाणयति। दृश्यन्ते चेति। वाक्यप्रयोगस्यान्वयबोधमात्रफलकत्वात्तदनुपयुक्तांशनियमस्य तत्रानपेक्षितत्वात्प्रतिज्ञाहेत्वादिपौर्वापर्यनियमोऽपि नास्माभिरङ्गीक्रियत इति हृदि

धानि चित्राणि प्रयोगवाक्यानि सर्वसैद्धान्तिकानां ग्रन्थेषु । एवमेव च पदानामन्वयमात्रं प्रधानयित्वा लौकिकवैदिकव्यवहाराः प्रवर्तन्ते । तत्त्वरत्नाकरेऽपि चैवंविधेऽपि पञ्चानामप्यवयवानां पृथक् प्रयोजनान्यभिधायातश्च पञ्चावयवं वाक्यमाद्रियन्ते वेदाचार्यादयः । "पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित्" इत्यादावित्यभिधायैव पुनरनियमः प्रतिपादितः । नच सर्वदा सर्वेऽवयवाः प्रयोज्याः न न्यूना नाधिका इति निर्वन्धानियमः वक्तृप्रतिवक्तृसंप्रतिपत्तौ लघूपायोपादानेऽपि दोषाभावात् । लोकेऽपि तथा व्यवहाराच्चेति । साधर्म्यवैधर्म्यवचनप्रयोगे चोक्तम् । यथायोगं प्रतिपत्त्रपेक्षया विकल्पसमुच्चयावेवाविरोधादिति । अन्यच्चोक्तम् । प्रतिज्ञायाः परं हेतूदाहरणयोर्न क्रमनिर्बन्धः व्याप्तहेतुप्रदर्शने विशेषाभावादि-

---

निधाय तत्र चान्वयप्रबोधमात्रप्रयोजनकलौकिकवैदिकव्यवहार एव प्रमाणमित्याह । एवमिति ।

निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः ।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥

इत्याद्यनुमानालङ्कारोदाहरणानि लौकिकव्यवहारः । "तत्पुरुषस्य पुरुषत्वं तद्वामदेवस्य वामदेवत्वं तस्मादुत्तरोऽर्द्धस्तेजस्वितर" इत्यादिर्वैदिकव्यवहारः एषु च हेतोः पूर्वभावोऽवगन्तव्यः । ननु तत्त्वरत्नाकरे भट्टपराशरपादैः पञ्चानामवयवानां प्रयोजनाभिधानपूर्वकं न्यायस्य पञ्चावयवतायां प्रमाणोपन्यासादनियमः कथं सिद्धान्तयितुं शक्य इत्याशङ्क्य तैरप्युत्तरत्र नियम एवाभ्युपगत इत्याह । तत्त्वरत्नाकरेऽपीति । वेदाचार्यो व्यासः आदिपदेन तदनुसारिणो वैशम्पायनादयः न्यायगुणदोषवित्त्वेन प्रसिद्धो नारदश्च गृह्यते । पञ्चावयवयुक्तस्येति । एतदर्धं भारते सभापर्वणि नारदवर्णने । साधर्म्यवैधर्म्यवचनप्रयो-

त्यादि । अत एव पक्षादिवचनदोषविशेषाणां केषांचित्तत्रैवोक्तानामपि नियमकथाविषयत्वं सूचितम् । उपमानान्तर्भावदशायां चोक्तम् । सोऽयं गवयपदाभिधेयः गोसदृशत्वात् । य इत्थं स तथा यथोक्तमाप्तेनायं गोसदृशः ततस्तत्पद्वाच्य इत्युक्त्वा ।

व्याप्तौ दृष्टान्तदृश्यायामवश्यं स निदर्श्यते ।
आगमाद्व्याप्तिसिद्धौ न व्याप्तिस्मृत्यर्थमीयते ॥
धूमवानग्निमानेवेत्याप्तोक्तायां तथा गतिः ।

इत्यादि । प्रज्ञापरित्राणे तु वरदविष्णुमिश्रोक्तानुसारेणैवमुक्तम् ।

परार्थमनुमानस्य प्रयोगेऽवयवास्त्रयः ।
प्रतिज्ञा चापि हेतुश्च तथोदाहरणं मतम् ।

इत्यादि । अतो व्याप्तिपक्षधर्मताप्रतिपादनोपयुक्तेन केनापि

---

गे चेति । अन्वयव्यतिरेकव्याप्त्योः प्रयोगे चेत्यर्थः । पक्षादिवचनदोषविशेषाणामिति । वन्हिमान्पर्वतः अनित्यं विप्रतिपन्नम् अस्ति वान्हिरत्रेत्यादिनिर्देशविपर्य्यासादयः पक्षादिवचनदोषाः । नियमकथाविषयत्वमिति । अनियमकथायां तु प्रकरणवशेनान्वयबोधस्य सम्भवाद्यथायथं प्रयोगोऽप्युपपद्यत इति भावः । उदाहरणदृष्टान्तप्रदर्शननियमोऽपि क्वचिन्नास्तीत्याह । व्याप्तौ दृष्टान्तदृश्यायामिति । न व्याप्तिस्मृत्यर्थमीयत इति । व्याप्तिस्मृत्यर्थं दृष्टान्तो न बोध्यत इत्यर्थः । ईयत इति । इण्गताविति धातोः कर्मणि लटि रूपम् । गत्यर्थत्वाज्ज्ञानार्थता । आप्तोक्तायामिति । पूर्वमागमशब्देन जातिगुणकर्मादीनामदृष्टविशेषानिरूपितव्याप्तिप्रतिपादकानि धर्मशास्त्राण्युक्तानि अत्राप्तोक्तिलौकिकवाक्यमिति विवेकः । अवयवादिप्रयोगे अनियमाङ्गीकारेऽपि नियमकथायां नियमोऽनियमकथायां त्वनियम इत्येष नियमोऽवश्यमङ्गीकार्य इत्याह । अत इति । रहस्यमिति । उपदेशार्हमि-

प्रकारेण व्यवहरेत्। नियमकथायां तु यथानियममिति रहस्यम्। विचारविषयगोचरो वादि प्रतिवादिवाक्यसन्ततिविशेषः कथा। सा च द्विविधा। वीतरागकथा विजिगीषुकथा चेति। पूर्वो वाद इति सामान्यशब्देनैव विशेषतोऽपि निर्दिश्यते। सा चैवं न्यायतत्त्वे संयोगाधिकरणे लक्षिता। परस्य स्वोपदेशो न्यायनिश्चितार्थो व्यवहारो वाद इति शिष्याचार्यव्यवहारवत्। प्रमाणतर्काभिमानास्पदसाधननिश्चितार्थविषयो व्यवहारो वाद इत्यर्थः। तत्र स्वपक्षस्थापनं परपक्षदूषणमित्यवयवद्वयम्। केचित्तु साधनसमर्थनदूषणसमर्थनादिभिः सह प-

---

त्यर्थः। प्रसङ्गाद्वादजल्पवितण्डा निरूपयिष्यन् कथासामान्यलक्षणमाह। विचारविषयेति। वादिप्रतिवादिभ्यां क्रियमाणलौकिकवाक्यविशेषनिरासाय विचारविषयेति। लौकिकपुरुषविवादनिरासाय वादिप्रतिवादीति। ताभ्यामेव क्रियमाणे वादबहिर्भूते मयैवं साधितं मयैवं प्रतिक्षिप्तमित्यादिविवादपदगोचरे वाक्यसंदर्भेऽतिव्याप्तिवारणाय विशेषपदम्। वाक्यसन्ततौ विशेषश्च प्रमाणतर्कोपन्यासात्मकत्वम्। ननु वादशब्दस्य कथासामान्यवाचित्वात्तेन कथं विशेषाभिधानमित्यत आह। सामान्यशब्देनैवेति। तथा च वादशब्दोऽयमनेकार्थ इति नानुपपत्तिरिति भावः। ननु भगवन्नाथमुनिनिरुक्तस्य वादलक्षणस्य जल्पवितण्डादिसाधारणत्वमेव प्रतीयते तयोरपि निश्चितार्थत्वाविशेषात्। नचात्रोपदेशन्यायो नास्ति विजिगीषया प्रवृत्तत्वादिति वाच्यम्। विजिगीषाविजिगीषयोः पुरुषव्यावर्तकत्वेऽपि कथासु विशेषाभावादित्यतस्तदर्थमाह। प्रमाणेत्यादिना। वादे प्रयुज्यमाने साधने वादिप्रतिवादिनोः प्रमाणत्वाभिमानोऽस्ति जल्पवितण्डयोस्तु स नास्तीति विशेषसत्त्वाद्वादलक्षणस्य न तत्साधारण्यमिति भावः। अत्र वस्तुनो द्वैरूप्यासम्भवेन वादिप्रतिवादिसाधनयोर्वस्तुतः प्रामाण्यासम्भवादभिमानपर्यन्तधावनमिति ध्येयम्। साधनसमर्थनं स्वपक्षसाधकप्रमाणस्योद्धलनं दूषणसमर्थनं परपक्षबाधकहेतोरु-

ञ्चावयवतामाहुः । तदयुक्तम् । स्वपक्षे दूषणोद्धारतत्समर्थनादेरप्यवयवान्तरत्वप्रसङ्गात् । यदि स्वपक्षसाधनादौ तदन्तर्भाव इति न पृथग्ग्रहणाद्गणना तदा स्वपक्षस्थापनपरपक्षप्रतिक्षेपयोरेव सर्वान्तर्भाव इति तावत्येव गणनोचिता । अत्र च बुद्धिपूर्वकदुष्टवचनानि न सम्भवन्ति अन्यानि तदुद्भाविताम्यभ्युपगन्तव्यानि । तत्त्वनिर्णयाय प्रवृत्तत्वात् । विजिगीषुकथायान्तु गत्यन्तरमलभमानस्य परव्यामोहनेनापि पाक्षिकविजयः समत्वं वा सम्भवेदिति बुद्धिपूर्वकदुष्टप्रयोगसम्भवः । सा च द्विधा । जल्पो वितण्डेति । तत्रोभयपक्षोपन्याससतत्प्रतिक्षेपवती कथा जल्पः । वादिपक्षोपन्याससतत्प्रतिक्षेपमात्रवती वितण्डा । केचित्तु वितण्डायामपि वीतरागविजिगीषुभेदाद्भेदमाहुः । तदयुक्तम् । वीतरागस्य परपक्षप्रतिक्षेपपर्यन्त-

---

पोद्वलनम् । आदिपदेन परपक्षदोषोद्धारानिराकरणं गृह्यते । पूर्वोक्तस्वपक्षस्थापनापरपक्षप्रतिक्षेपाभ्यां सह पञ्चावयवतामाहुरित्यर्थः । ननु वादे वादिप्रतिवादिनोः साधने प्रमाणत्वाभिमानोऽपेक्षित इत्युक्तं तत्कुतः तथाभिमानविरहेऽपि दोषाभावादित्यत आह । अत्र चेति । तथाभिमानाभावे बुद्धिपूर्वकदुष्टवचनप्रयोगस्यापि सम्भवेन तत्त्वनिर्णयलक्षणफलस्यासिद्धिः स्यादिति भावः । एतेन पुरुषधर्मभूताभिमानव्यतिरेकेण वादकथायां स्वरूपतो वैलक्षण्यमप्युक्तमिति ध्येयम् । सा चेति । विजिगीषुकथा चेत्यर्थः । वितण्डानिरासाय प्रतिक्षेपवतीत्यन्तम् । वादनिवृत्तये तत्रेति । विजिगीषुकथयोरित्यर्थः । तथा च वादस्य विजिगीषुकथात्वाभावात्तत्र नातिप्रसङ्ग इति भावः । वादिपक्षोपन्यासेति । जल्पव्यावर्तनाय मात्रपदम् । वादिप्रतिवादिनोरुभयोरपि वैतण्डिकत्वे कथाया एवानुत्थानात् प्रतिवादिन एव वैतण्डिकत्वमित्यभिप्रेत्य वादिपक्षोपन्यासेत्याद्युक्तिरिति ध्येयम् । तदयुक्तमिति । वीतरागस्य तत्त्वजिज्ञासुतया परपक्षनिरास-

व्यापाराभवे तत्त्वनिर्णयासिद्धेः । विजयस्तु तावतापि सम्भवत्येव अभ्युपगमनियतत्वात् । वादे परपक्षस्य कालात्ययापदेशनिर्वाहे तु न पुनः स्वपक्षनिरूपणं तेनैव तत्फलस्यापि सिद्धेः । नहि पुनस्तस्यैव प्रमाणस्य पाठे प्रयोजनम् । नच स्थापितस्वरूपादिमत्प्रमाणमनादृत्य मानान्तरमन्वेषणीयम् । नच नैरपेक्ष्येणोपरमाद्वितण्डात्वम् । अपेक्षायां सत्यां प्रतिवादिपक्षस्थापनस्यापि कर्तव्यत्वेन वैषम्यात् । जल्पे तू-

---

मात्रप्रयोजनाभावात्तस्य वैतण्डिकत्वं न संभवतीत्यर्थः । ननु तर्हि वीतरागस्य वादे परपक्षप्रतिक्षेपो व्यर्थः स्यात् स्वपक्षस्थापनमात्रस्यैव तत्त्वनिर्णयोपयुक्तत्वादित्यत आह । वीतरागस्येति । यावत्परमतं न निराक्रियते तावत् स्वमतमप्रतिष्ठितं भवतीति भावः वैतण्डिकस्य विजयमात्रापेक्षितत्वात्तदपेक्षितो विजयः स्वपक्षस्थापनाभावेऽपि परपक्षनिरासमात्रेणापि भवतीत्याह । विजयस्त्विति । अभ्युपगमनियतत्वादिति । परपक्षं प्रतिक्षिपामि तावतैव मम विजय इति वैतण्डिकाभ्युपगमात्तथैव फलस्य वक्तव्यत्वादित्यर्थः । जल्पेऽपि तत्त्वनिर्णयाभावेऽपि जल्पकाभ्युपगमानुरूपस्यैव परस्य वक्तव्यत्वादिति भावः । ननु वीतरागकथायां यत्र वादिना परपक्षे कालात्ययापदेशो निरुह्यते तत्र परपक्षे बाधकप्रमाणस्यैव स्वपक्षसाधकत्वात्तत्र परपक्षेबाधनेनैव कथापर्यवसानसंभवाद्वीतरागकथाया अपि वितण्डात्वमवर्जनीयम् ।परपक्षनिरासमात्रेणैव कथापर्यवसानमेव हि सम्प्रतिपन्नवितण्डाया अपि वितण्डात्वम् । अन्यथा कालात्ययापदेशनिर्वाहानन्तरं तस्यैव प्रमाणस्य स्वपक्षस्थापनपर्यवसानाय पुनः पाठप्रसङ्गादित्यत आह । वादे परपक्षस्येत्यादिना । अपेक्षायां सत्यामिति । यदि मृदुबुद्धिः कश्चिन्मत्पक्षे प्रमाणं बाधितं भवतु त्वत्पक्षे किं प्रमाणमित्यपेक्ष्येत तदा स्वपक्षस्थापनप्रमाणस्यापि प्रयोक्तव्यत्वाद्वादस्य वितण्डातो भेदः स्फुट इत्यर्थः । ननु जल्पेऽपि परपक्षस्य कालात्ययापदेशनिर्वाहेऽपि पुनः स्वपक्षस्थापननैयत्यं न स्यादित्यत आह । जल्पे त्विति । उक्तिगुणदोषाभ्यामपीति । पुनः पाठेऽनु-

क्तिगुणदोषाभ्यामपि जयापजयौ स्यातामिति कालात्ययापदेशायोपन्यस्तस्यापि प्रमाणस्य पुनः पाठानुपपत्तेः । आगमसिद्धा चेयं कथात्रयव्यवस्था । "वादजल्पवितण्डाभि"रित्यादिवचनात् । केचित्तु वितण्डाद्वयमेव व्यत्यस्तं जल्प इति वदन्ति । तथापि तथैव नियमात् कथात्रयगणनं नानुपपन्नम् । उक्तं च जल्पवितण्डयोरपि लक्षणं संयोगाधिकरणे स्वपक्षप्रामाण्यप्रतिपक्षाप्रामाण्यमात्रनिश्चयार्थो व्यवहारो जल्पः । प्रतिपक्षाप्रमाण्यमात्र निश्चयार्थो व्यवहारो वितण्डेति । श्रीमद्गीताभाष्येऽपि वादः प्रवदतामहमित्यत्र जल्पवितण्डादिकुर्वतां तत्त्वनिर्णयाय प्रवृत्तो वादो यः सोऽहमिति व्याख्यानात्कथात्रयं दर्शितम् । एतेन "विप्रं निर्जित्य वादतः, न वि-

---

क्तिविपरीतोक्त्याधिकोक्तिसम्भवात्तावत् स्वस्य विजयः स्यादिति प्रतिवादिना कालात्ययापदेशायोपन्यस्तापि पुनः पाठमपेक्ष्येत अत स्तत्र नियमतः स्वपक्षस्थापनं कर्तव्यमिति भावः । ये तु वादिनोर्द्वयोरपि पर्यायेण वैतण्डिकत्वे यदा वादिनः स्थापकता तदानीं प्रतिवादिनस्तत्प्रतिक्षेपकत्वं यदा तु वादिनो दूषकता तदा प्रतिवादिनः स्थापकतेति वितण्डाया डोलावेगवत्पर्य्यायतो भागद्वयवृत्तेः सा वितण्डा पुरुषभेदेन द्वयी व्यत्यस्ता च जातेत्येकवितण्डापेक्षया भिन्ना भवतीति सैव जल्पशब्दार्थ इति न जल्पो वितण्डाया व्यतिरिच्यते इति कथात्रयपरिगणनमयुक्तमिति वर्णयन्ति तन्मतमनुवदति । केचित्त्विति । वितण्डायास्त्वदुक्तप्रकारेण द्वैविध्याद्वादेन सह कथात्रयपरिगणनमस्माकमव्याहतमेवेति परिहरति । तथापीति । एवं कथात्रयव्यवस्था भगवन्नाथमुनिभिरप्यभ्युपगतेत्याह । उक्तं चेति । न्यायतत्त्वशास्त्र इति शेषः । उक्तार्थे भाष्यकारभाषितमपि प्रमाणयति । श्रीमद्गीताभाष्येऽपीति । एतेनेति । भगवन्नाथमुनिभाष्यकारोक्तिभ्यां कृतेन कथात्रयव्यवस्थापनेनेत्यर्थः । विप्रि-

गृह्य कथां कुर्यादि"त्यादिभिर्जल्पवितण्डयोर्निषेधोऽपि शिष्टविषय इति दर्शितम्। कदाचिद्बाह्यकुदृष्टिदर्पभङ्गाय तयोरपि कार्यत्वात् तथा चाक्षपादसूत्रम्। "तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणव"दिति। अथ कथाङ्गानि। सभ्यानुविधेयसंवरणम्। वादिप्रतिवादिनियमः कथाविशेषव्यवस्था निरूप्यनिर्णय इति चत्वार्येव। वरदविष्णुमिश्रैर्जल्पश्चतुरङ्गः। अङ्गानि वादिप्रतिवादिसभापतिप्रा·

---

ष्टविषय इति। विशिष्टैः साकं जल्पावितण्डे न कर्तव्ये इति निषेधस्य विषयो दर्शितः। नतु विशिष्टस्य केनापि ते न कर्तव्ये इति निषेधविषय इति भावः। विशिष्टस्यापि बाह्यकुदृष्टिभिस्ते कर्तव्ये एवेत्यत्र हेतुमाह। कदाचिदिति। बाह्याः सौगताः कुदृष्टयः प्रच्छन्नसौगताः। कण्टकशाखावरणवदिति। अरिमेदबर्बूरादिशाखावृतेर्बीजप्ररोहानुपयोगेऽपि कङ्करीयादिनिवारणेन बीजप्ररोहोपमर्दप्रतिबन्धवज्जल्पावितण्डयोरपि शास्त्रजन्यतत्त्वाध्यवसाय वैयाकुलीजनकबाह्यकुदृष्टिकृतक्षोभभञ्जकतया तदुपादेयता न विरुद्धेति भावः कथाङ्गेषु।

केचित्तस्याः षडङ्गानि प्राहुश्चत्वारि केचनेति।

वादिभेदेन संख्याविवाददर्शनात्स्वाभिमतया संख्यया कथाङ्गानि निरूपयति। अथ कथाङ्गानीति। सभ्याः

रागद्वेषविनिर्मुक्ताः सप्त पञ्च त्रयोऽपि वा।
यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा इति।

स्मृत्युक्तलक्षणाः। अनु पश्चाद्वादसमाप्तौ विधेयङ्कर्तव्यं जयपराजयफलं यस्येत्यनुविधेयशब्देन सभापतिर्विवक्षितः। तेषां सम्यक् वरणम्। एते सभ्याः अयं सभापतिरिति परिग्रहः। वादिप्रतिवादिनियमः। अयमस्य प्रमेयस्य साधको वादी अयन्तु तद्दूषकः प्रतिवादीति व्यवस्था। कथाविशेषव्यवस्था वादजल्पावितण्डानामन्यतमपरिग्रहः। निरूप्यं प्रपञ्चसत्यत्वादि तस्य निर्धा·

श्निका इत्युक्तम्। वादे तु सभ्यादिसंवरणानिर्बन्धो नास्ति। अपलापादीनां प्रायशस्तत्रासम्भवात्। वीतरागाः शिष्यगुरुसब्रह्मचारिशिष्टश्रोत्रियश्रेयोऽर्थिनो हि तदधिकारिणः। सभ्यानां दैवादागतानां त्ववर्जनम्। अनुविधेयसंवरणन्तु सर्वदानपेक्षितमेव विजयफलप्रतिपादनार्थत्वादनुविधेयस्य रागद्वेषरहितास्त्र्यवरा विषमसंख्याः सभ्याः स्युः। द्वैधेऽधिकानां वचनस्य ग्राह्यत्वात्। एकोऽपि वा प्राज्ञतमः। ननु

रणं निरूप्यनिर्णयः। उक्तमिति। अत्र पक्षे वादिप्रतिवादिव्यवस्थायामेव कथाव्यवस्थानिरूप्यनिर्णययोरन्तर्भावः। अन्यथा वादिप्रतिवादिवादस्यैवासम्भवादिति वरदविष्णुमिश्राशयः। प्राश्निकाः। सभ्याः। अपलापादीनामिति। अपलापादिनिराकरणमेव हि सभ्यानां कार्यमिति भावः। प्रायश इति। बुद्धिपूर्वकापलापादीनामसम्भावितत्वादबुद्धिपूर्वककरणात्तु तत्त्वनिर्णयाविरोधित्वेनादोषत्वादिति भावः। शिष्टाः।

धर्मे(१) णाधिगतो यैस्तु वेदः सपरिबृंहणः।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः इति।

मनूक्ताः श्रोत्रियाश्च ते श्रेयोऽर्थिन इति समासः। श्रोत्रिया एकां शाखामधीत्य श्रोत्रियो भवतीति प्रसिद्धाः। श्रेयोऽर्थिनः। शास्त्रार्थजन्यफलार्थिनः श्रोत्रियश्रेयोर्थिनो हि स्वानुष्ठेयनिर्णयाय शिष्टैर्वादमाद्रियन्ते। तदुक्तमक्षपादेन। "तं शिष्यगुरुसब्रह्मचारिशिष्टश्रोत्रियश्रेयोऽर्थिभिरनुसूयुभिरभ्युपेया"दिति तं वादमित्यर्थः। शिष्यगुरुभ्यां क्रियमाणस्य वादस्य शिष्यगतं ज्ञानं फलम्। सब्रह्मचारिभ्यां क्रियमाणस्य तज्ज्ञानस्थिरीकरणमुभयगतं प्रयोजनम् शिष्टश्रोत्रियश्रेयोर्थिभ्यां क्रियमाणस्य तत्त्वसंशयनिवर्तनमुभयगतं प्रयोजनमिति त्रिधा तत्त्वाध्यवसाय इति विवेचनीयम्। त्र्यवरा इति। त्रिभ्यो न्यूनाः सभ्या न कार्या इत्यर्थः। विषमसंख्याकरणस्य प्रयोजनमाह। द्वैध इति। उपसर्गेण तमपा चाप्रति-

(१) मनुस्मृतौ २ अध्याये।

सिद्धान्तनियमोऽप्यवश्यापेक्षितस्ततकथं चतुष्टयम्। सत्यं निरूप्यनियम एव तस्यान्तर्भावादनुक्तिः। नहि तमन्तरेण स उपपद्यते। यत्र तु नानासिद्धान्तानुमतोऽर्थो निरूप्यते तत्र व्यवहारविशेषनियमार्थं सिद्धान्तविशेषनियमोऽप्यस्तु। केचित्तु वादे निग्रहसामस्त्यासामस्त्योद्भावनप्रतिज्ञातकथापर्यवसाननियमाभ्यां सह षडङ्गान्याहुः। तदयुक्तम्। इच्छाकल्पितत्वेनावश्यापेक्षितत्वाभावात्। अनियतस्य चाङ्गत्वायोगात्। अन्यथातिप्रसङ्गात्। वादे तावत्कथा हि तत्त्वनिर्णयपर्यन्ता वा स्यात् अशक्तिपर्यन्ता वा। न तत्र नियमकृत्यम्। द्वयोः संप्रतिपत्तेरेव पर्यवसानमित्युक्तम्भवति। जल्पवितण्डयोरपि निग्रहपर्यन्ता।

---

पस्याद्यभावोऽपक्षपातित्वं च द्योत्यते। यथाह याज्ञवल्क्यः।

च(१)त्वारो वेदधर्मज्ञाः परिषत्त्रैधमेव वा।
सा ब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तम इति।

उक्तान्तर्भावेन परिहरति। निरूप्यनियम एवेति। तमन्तरेणेति। सिद्धान्तनियममन्तरेण निरूप्यनियमस्योपपादयितुमशक्यत्वादित्यर्थः। ननु नानासिद्धान्तानुमतेषु वेदप्रामाण्यप्रपञ्चसत्यत्वादिषु निरूप्येषु सिद्धान्तनियमः स्यात् तत्र शब्दस्य नित्यत्वे मीमांसकसिद्धान्तावलम्बनेनोक्ते प्रतिवादिना कादाचित्कत्वेन दूषिते तर्हि नैयायिकमतेनानित्योऽस्त्वित्यादिव्यवहारेण कथापर्य्यवसानमेव न स्यादित्यत आह। यत्र त्विति। इच्छाकल्पितत्वेनेति। निग्रहसामस्त्यासामस्त्योद्भावनप्रतिज्ञाया वादिप्रतिवादिनोरिच्छाधीनत्वेन कथापर्यवसाननियमस्य च तयोः सभ्यानां चेच्छाधीनत्वेन चेत्यर्थः। अन्यथातिप्रसङ्गादिति। गोदोहनेन पशुकामस्य प्रणयेदित्यादाविच्छाधीनस्य गोदोहनादेरपि क्रत्वर्थत्वप्रसङ्गादित्यर्थः। कथापर्य्यवसाननियमस्य कथाङ्गत्वं वदन् वक्तव्यः तस्य वादाङ्गत्वमङ्गीक्रियते उत जल्पवितण्डाङ्गत्वम आद्य आह। वादे तावदिति। द्वितीय आह। जल्पवितण्डयोरपीति। स्याद्य

(१) याज्ञवल्क्यस्मृतौ १ अध्याये।

अतस्तत्रापि किं नियमेन उक्तं हि प्रज्ञापरित्राणे ।

निग्रहस्थानपर्यन्ता विजिगीषुकथा मता ।
तत्त्वनिर्णयपर्यन्तो वादः स्याच्च पुनः पुनः इति ॥
हेत्वाभासापसिद्धान्ताननुयोज्यानुयुक्तयः ।
दृश्यन्ते यत्र वा तत्र वादोऽवसितिमान् भवेत् इति ॥

यदि त्वेतस्मिन्नेव निग्रहस्थाने कथापर्यवसानमिति नियमो जल्पवितण्डाङ्गमङ्गीक्रियते । तर्ह्येतयैव भाषया भाषितव्यं गद्यादिनियमेनाभिधेयम् । एतत्प्रमाणजातीयं वाच्यम् । महाविद्यारीतिरपि ग्राह्या । लिखित्वैव निरूप्यम् । गगनसूचनभूतलविलेखनादिविकाराः परिहार्याः । मध्येनान्येन

---

पुनः पुनरित्यनेन मध्ये कथापर्य्यवसानं सूच्यते कथासामान्यपर्यवसानहेतुं स्वयमाह । हेत्वाभासेति । वादः । कथासामान्यम् । अवसितिः । पर्यवसानम् । महाविद्यादिरीतिः । अव्याहतसाध्यविपर्य्ययाणां महाविद्यानुमानानां प्रयोग आदिपदेन सामान्यतो दृष्टादिगृह्यते । वादे तावदित्यादि । तदुक्तम् ।

चतुर्धा निग्रहगतिर्वादसम्भववर्जिता ।
अनुद्भाव्यास्तथोद्भाव्याः कथाविच्छेदका इति ॥

तत्रासम्भाविनः ।

अर्थान्तरमविज्ञातं हानिर्न्यासो निरर्थकम् ।
अपार्थकमिति प्रायः षट्कं वादेष्वसम्भवि ॥

एतेषामर्थादीनां स्वाज्ञानसम्वरणपराज्ञानप्रकाशनमात्रफलकत्वेन प्रवृत्तेर्वादे च तद्द्वयासम्भवात् असम्भवित्वम् प्रमादादिना तत्रापि कथञ्चित्सम्भवमाशङ्क्योक्तं प्राय इति । अनुद्भावनीयाः ।

विक्षेपोऽप्रतिभा ज्ञानं हेत्वन्तरमुपेक्षणम् ।
साध्यान्तरं मतानुज्ञा वादे उद्भाव्य सप्तकम् ।
साध्यान्तरमिति प्रतिज्ञान्तरमुच्यते
न्यूनाधिकापसिद्धाता विरोधाननुभाषणम् ।
पुनरुक्तिविपर्य्यासौ वादे तूद्भाव्य सप्तकम् ॥

संलपनीयमित्यादिनियमानामप्यङ्गत्वप्रसङ्गः । स्वारसिकस्तु कथासु निग्रहस्थाननियम उच्यते । वादे तावदपलापादिकं प्रायेण न सम्भवि । सम्भवदपि वा प्रतिज्ञान्तराज्ञानादिकमुद्भाव्यम् । उद्भाव्यमप्यवाचकादि न कथाविच्छेदकम् । सम्प्रतिपत्त्यानेकहेतुदृष्टान्तदूषणाद्यभिधानेऽपि न दोष इति । जल्पवितण्डयोस्तु यथाभ्युपगमं तदेवमङ्गेषु चतुर्षु पञ्चसु वा सिद्धेषु यथावलेपं नियमान्तरेषु च कृतेष्ववहितेषु च सभ्यप्रतिवादिषु तदभ्यनुज्ञातेन वादिना प्रथमं स्वसाध्यमुद्दिश्य तत्र विवक्षितः प्रत्यक्षादिरूपप्रमाणविशेषो वाच्यः ।

---

न्यूनत्वादिदूषितस्य साधनस्य तत्त्वावसायहेतुत्वाय न्यूनत्वादिकमुद्भाव्यम् । तत्समाधानेन कथा प्रवर्तनीया न त्वेते कथाविच्छेदकाः ॥

वादे कथावसानस्य हेत्वाभासो हि कारणम् ।
तथा निरनुयोज्यानामनुयोग इति द्वयम् ।

हेत्वाभासेन साध्यस्यासिध्या तत्परित्यागेन समये हेतूपादानावश्यम्भावात् पूर्वोपक्रान्तकथा विच्छिद्यत एव । निरनुयोज्यानुयोगश्च तत्त्वावसायानङ्गं कथापर्य्यवसानहेतुश्च भवतीति । केचित्त्वपसिद्धान्तो न्यूनमधिकं कथाविच्छेदनिमित्तमित्याचक्षत इति । न दोष इति । उक्तेभ्योऽन्ये हेत्वाभासापसिद्धान्तादयो वादे निग्रहस्थानानि तत्र कथापर्य्यवसानमिति भावः । अङ्गान्युक्त्वाङ्गीभूतं कथास्वरूपं विविच्य दर्शयति । तदेवमित्यादिना । पञ्चसु वेति । नानासिद्धान्तानुमते निरूप्ये सिद्धान्तनियमस्याङ्गीकृतत्वादिति भावः । यथावलेपमिति । स्वाहंकारानुगुण्येनेत्यर्थः । नियमान्तरेषु । भाषापद्यादिनियमेषु । तदभ्यनुज्ञातेनेति । अन्यथा अपृष्टोत्तरत्वप्रसङ्गादिति भावः । ये पुनराभासादिप्रसङ्गमन्तरेणैव वादिना विवक्षितप्रमाणोपन्यासानन्तरं नायमाभास इति वा नायमसिद्धो नाप्यनैकान्तिक इत्यादिप्रकारेण वाक्यमाभासोद्धारः कर्तव्यः । तथा साध्यविपर्ययेऽनिष्टं स्यादिति

प्रतिवाद्यापादितश्चाभास उद्धरणीयः । विपक्षे बाधकाभावादिप्रसङ्गे च तर्को वाच्यः । ये पुनः सङ्क्षेपतो विस्तरतो वाभासोद्धारं तर्कप्रयोगं चावश्यम्भाविनमाहुः । तैर्नूनमस्मदपवरकेऽवकरे कांस्यं नास्तीति लोकवादोऽनुसृतः । अनिष्टप्रसङ्गश्च । आभासोद्धारतर्कप्रयोगवाक्ययोरपि स्वयमेव दूषणोद्धारादेः कर्तव्यत्वप्रसङ्गात् । एवं तदुपर्यपीत्यनवस्था । प्रतिवादिनापि तत्तदनुभाषणपूर्वकं तत्र दूषणं वाच्यम् । ततश्चैवं परस्परं वाक्यानुभाषणप्रतिक्षेपाभ्यामुक्तिप्रत्युक्तिपरंपरासिद्धेरत्रत्यव्यवहारस्य प्रतिज्ञासाधनदूषणनिर्णयरूपेण चतुष्पात्त्वम् । प्रथमद्वितीययोर्वादिनिष्पाद्यत्वम् । तृतीयस्यापि प्रतिवादिनिष्पाद्यत्वम् । तस्य च कदाचित्सम्प्रतिपत्त्यात्मकत्वम् । चतुर्थस्यापि वादिभ्यां सभ्यैर्वा कार्यत्वं प्रतिज्ञातविषये प्रत्यक्षानुमानागमेषु मनीषितस्य यथोचितमुपन्यासप्रकारः । प्रत्यक्षस्यासिद्ध्या दूषणे सदस्यैरेव निर्णेतव्यत्वं लौकिकस्यासिद्ध्या दूषणे तस्याप्यंशस्य प्रतिज्ञापूर्वकं साध्यत्वम् ।

---

वा हेतूच्छित्त्यादिकं स्यादिति वा तर्कश्च प्रयोक्तव्य इत्याहुस्तन्मतमनुवदति । ये पुनरिति । सापहासं दूषयति । तैर्नूनमिति । अवकरे । सङ्करोऽवकरस्तथेत्यमरः । लोकवादोऽनुसृत इति । तथा च प्रसक्तप्रतिषेधस्य परावकाशसम्पादकस्य साधकत्वेन परिग्रह उपहास्य इति भावः । अयं च लोकवादो द्राविडभाषायां प्रसिद्धः । किञ्च तत्र तत्र स्वयमेव दोषोद्धारस्य कर्तव्यत्वप्रसङ्गेनानवस्थारूपमनिष्टं स्यादित्याह । अनिष्टप्रसङ्गश्चेति । चतुष्पात्त्वम् भागचतुष्टयवत्त्वम् । प्रथमद्वितीययोरिति । प्रतिज्ञासाधनयोरित्यर्थः । तृतीयस्य दूषणस्य चतुर्थस्य निर्णयस्य सर्वत्र पादशब्दो विशेष्यत्वेन द्रष्टव्यः । वादिभ्यामिति । वीतरागकथापेक्षया सभ्यैरिति । जल्पवितण्डापेक्षया वाशब्दश्च व्यवस्थितविकल्पार्थः । वै-

प्रतिवादिना वादिना वानैकान्तिकत्वाद्युद्भावने कृते तेनैव तत्साध्यत्वं प्रत्यनुमानसमबलतया निरूपिते सति द्वयोरपि विजयाभावः। वैतण्डिकस्य तु तावतापि विजयः। प्रतिकक्षं च वादिप्रतिवादिवचनयोर्लेखनीयत्वम्। छलजात्योरेकान्तविजयाभावेन त्याज्यत्वम्। कदाचिदवष्टम्भकविजयावहत्वमात्रेण तत्त्वाध्यवसायसंरक्षकत्वम्। अन्यदपि विस्तरेण तत्त्वरत्नाकरे प्रतिपादितम्। एवं विधेऽस्मिन् व्यवहारे निग्रहस्थानानि यथासम्भवमाविर्भवन्ति। तानि च स्वनामधेयेनार्थतो वा यथानियममुद्भाव्यानि। कथायां स्वाश्रयस्य पराजयनिमित्तं निग्रहस्थानम्। तस्य तन्निमित्तत्वं तत्त्वाप्रतिपत्तिसूचनेन। तत्त्वाप्रतिपत्तिश्चाप्रतिपत्तिविप्रतिपत्तिप्रकाराप्रतिपत्त्यभावे विपरीतप्रतिपत्तौ च तत्त्वाप्र-

---

तण्डिकस्य त्विति। तस्य स्थाप्यपक्षाभावेन स्थापनस्याकर्तव्यत्वादिति भावः। लेखनीयत्वमिति। अन्यथापलापादिसम्भवेन सदस्यानामप्युक्त्यनुक्त्योःसंदेहेन जयपराजयानिर्णयाभावप्रसङ्गादिति भावः। एकान्तविजयाभावेनेति। परस्यच्छलत्वजातित्वपरिज्ञाने प्रयोक्तुरपजयप्रसङ्गादिति भावः। अवष्टम्भविजयावहत्वमात्रेणेति। परस्यच्छलत्वजातित्वापरिज्ञानस्यापि संभवात्। मया जातिः प्रयुक्ता छलं त्वयानूदित मित्यज्ञानापादनसम्भवेन तदवष्टम्भेन जयोऽपि स्यादिति च्छलजातिप्रयोगोऽपि सम्भवति। तेन तत्त्वक्षोभोऽपि निवारितः स्यादिति भावः। अन्यदपीति। अवष्टम्भविजयावहतयावाचकानन्वितप्रयोगादिरूपपराज्ञानापादनोपयुक्तमन्यदित्युच्यते। स्वनामधेयेनोक्तहान्यादिपदेनार्थतः पक्षादिगतविशेषत्यागादिवाक्येन वेत्यर्थः। निग्रहस्थानसामान्यलक्षणमाह। कथायामिति। निग्राहकप्रयुक्ताया अबाधितप्रमाणाद्युक्तेरपि परपराजयनिमित्तत्वात्तद्वारणाय स्वाश्रयस्येत्युक्तम्। कथाबहिर्भूतानामपकर्षहेतूनामवाचकानन्वितादी-

तिपत्तेरविशिष्टत्वात् । ततश्च तदुभयसूचनान्निग्रहस्थानद्वैविध्यम् । कर्तव्याकरणमकर्तव्यकरणमिति वा । त्रेधा च कश्चित्सङ्ग्रहः । वक्तव्यानुक्तिरुक्तिदूषणमुक्तार्थदूषणश्चेति । एतदवान्तरभेदान्निग्रहस्थानवैचित्र्यम् । तथाहि । उक्तहानिरुक्तविशेषणमुक्तापलाप उक्तविरोधोऽपसिद्धान्तोऽवाचकमनन्वितमप्राप्तकालमविज्ञातार्थमर्थान्तरं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगः प्रमाणाभासाश्च बहुविधाः प्रत्येकं निग्रहस्थानानीति । कथायां स्वोक्ते परेण दूषिते तत्परित्याग उक्तहानिः । सा द्विविधा शब्दतोऽर्थतश्च । यद्येतद्दुष्टमन्यत्तर्हीत्युक्तमितीदं प्रतिज्ञाहेतुदृष्टान्तप्रत्यक्षागमादिभेदेनानन्तभेदं भजते । तत्र प्रतिज्ञाहानिर्यथा । नित्यः शब्द इति कैवल्यकथकेनोक्ते प्रतिवादिना अपसिद्धान्तेन दूषिते तर्ह्यनित्यो वास्त्विति । हेतुहानिर्यथा । अनित्यः शब्दः प्र-

---

नां निग्रहस्थानत्ववारणाय कथायामित्युक्तम् । अन्यत्सुगमम् । स्वपदेनोक्तहानित्वादिना लक्ष्यपरिग्रहान्तात्माश्रयादिप्रसक्तिरिति बोध्यम् । तस्य तन्निमित्तत्वमिति । निग्रहस्थानस्य पराजयनिमित्तत्वमित्यर्थः । अप्रतिपत्तिविप्रतिपत्तिप्रकारेति । अप्रतिपत्तित्वविपरीतप्रतिपत्तित्वरूपप्रकारवतीत्यर्थः । सामान्यतो निग्रहस्थानद्वैविध्यं दर्शयति । ततश्चेति । त्रेधा चेति । वक्तव्यानुक्तिः कर्तव्याकरणम् उक्तिदूषणोक्तार्थदूषणे तु अकर्तव्यकरणमिति विभावनीयम् । अतो न द्वेधा विभागविरोधः । प्रत्येकं निग्रहस्थानानीति । अत एव समासो न कृत इति भावः । उद्दिष्टानां निग्रहस्थानानां क्रमेण लक्षणं वक्ष्यन् प्रथमोद्दिष्टाया उक्तहानेर्लक्षणमाह । स्वोक्त इति । अन्यत्तर्हीति । अन्योपादानादेवोक्तत्यागोऽर्थसिद्ध इति भावः । आगमादीत्यादिपदेन तद्वाद्यभ्युपगतार्थापत्त्यादिप्रमाणभेदा गृह्यन्ते । कैवल्यकथकेनेति । योग-

त्यक्षत्वादित्युक्ते अनैकान्तिकेन प्रत्युक्ते तर्हि त्यक्तमस्तु कृतकत्वादित्यादि । तत्रैवास्तु सामान्यतोऽपि अन्यव्यापकं साधनमित्यादिवचने प्रतिज्ञाहान्यादि । दृष्टान्तहानिर्यथा । तत्रैव सामान्यवदित्युक्ते साध्यसाधनविकलतया दूषिते तर्हि घटो दृष्टान्त इत्यादि । एवं धर्मिविशेषणहेतुविशेषणदृष्टान्तविशेषणादेरपि हानिरूह्या । प्रत्यक्षहानिर्यथा स्थिरः शब्दः प्रत्यभिज्ञानादित्युक्ते भ्रान्ततुल्यत्वेन प्रत्युक्ते अस्तु तर्ह्यनुमानेनागमेन वेत्यादि । आगमहानिर्यथा । सर्वं क्षणिकं सर्वज्ञेन तथाभिधानादिति सौगतेन उक्ते बुद्धस्यानाप्तत्वेन प्रत्युक्ते अस्तु तर्हि सत्त्वानुमानादित्यादि । एवं हान्यन्तराण्यपि चिन्तनीयानि । वादे तु सदुक्तं निर्वाह्यमसदुक्तं तु त्याज्यमेव । तन्निर्वहणस्य तत्त्वनिर्णयानङ्गत्वात् । तद्विपर्ययस्य तु तादर्थ्यादिति ।

---

पातञ्जलमतस्थेनेत्यर्थः । तथाहि योगानुशासनं पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः । कैवल्यं स्वरूपप्रतिष्ठावाचिचितिशक्तिरिति । साध्यसाधनविकलतयेति । कृतकत्वहेत्वभिप्रायेण । ऊह्येति । धर्मिविशेषणहानिर्यथा । ऐन्द्रियकः शब्दोऽनित्यः कार्यत्वादित्युक्ते ऐन्द्रियकत्वविशेषणं व्यर्थमिति दूषिते शब्द इत्येवास्त्विति । हेतुविशेषणहानिर्यथा । अनित्यः शब्दः प्रयत्नकार्यत्वादित्युक्ते विशेषणवैयर्थ्योक्तौ तत्परित्यागः । दृष्टान्तविशेषणहानिर्यथा शब्दो नित्यः कार्यत्वात् यथा स्थूलो घट इत्युक्ते स्थूलपदार्थत्वोद्भावने तत्त्यागः । आदिपदेन साध्यादिविशेषणहानिर्गृह्यते । यथा क्षित्यादिकं बुद्धिमत्कर्तृपूर्वकमित्युक्ते उपादानगोचरज्ञानादिमत एव कर्तृत्वाद्बुद्धिमदिति विशेषणं व्यर्थमित्युक्ते तत्त्यागः । अनुमानहानिर्यथा शब्दोऽनित्यो जन्यत्वादित्युक्ते नैयायिकेन ध्वंसे व्यभिचार इति दूषिते तर्हि प्रत्यक्षेणैव तस्यानित्यत्वमित्यादि । अन्यत्तु शक्योहमित्युपेक्ष्यते । तद्विपर्ययस्येति । असदुक्त्या निर्वहणस्येत्यर्थः । तादर्थ्यादिति ।

दुष्टस्य त्यागान्निर्दोषः स्यामिति संकल्पादुक्तहानिसंभवः। निर्वा-ह्यमेव वदेत् जल्पवितण्डयोस्तु उक्तं च निर्वहेदिति रहस्यम् ।

अविशेषितपूर्वोक्ते दूषिते तद्विशेषणनिक्षेप उक्तविशेषणम् । अविशिष्टपरित्यागादेतदपि हानिरेवेति चेन्न विशिष्टत्वस्यानुक्त-मात्रस्य चापरित्यागात् । साध्यसाधकविशेषणभेदादेतत् प्रतिज्ञा-न्तरहेत्वन्तरसंज्ञं निग्रहस्थानद्वयमक्षपादेन पठितम् । तदयुक्तम् । सामान्यसंग्रहस्य दृष्टत्वात् । अन्यथा हानिरपि तथैव प्रतिज्ञाहा-निर्हेतुहानिरिति निग्रहस्थानद्वयं स्यात् अविशेषात् । उक्तं च हे-त्वन्तरं पृथगभिदर्शनैरपि वरदविष्णुमिश्रैः ।

पक्षदृष्टान्तहेत्वादिदूषणे कथिते सति ।
पुनर्विशेषणादानं प्रतिज्ञान्तरमुच्यते इति ॥

द्विधा चैतत् सामान्यतो विशेषतश्चेति । यथा अनित्यः शब्दः

---

तत्त्वनिर्णयार्थत्वादित्यर्थः । ननु तृप्तस्य वादिन उक्तनिर्वाहसमर्थ-मन्यतया कथमस्याः सम्भव इत्यत आह । दुष्टस्य त्यागा-दिति । रहस्यमिति । उक्तहानिरूपनिग्रहस्थाननिरूपणग्रन्थस्य गुप्तं तात्पर्यमित्यर्थः । अन्यथा दोषमात्रनिरूपणवैयर्थ्यादिति भावः । सङ्ग्रहश्च ।

कथायां स्वोक्तपक्षाध्यक्षादावन्येन दूषिते।
स्वेनैव तत्परित्याग उक्तहानिरितीष्यत इति ॥

उक्तविशेषणस्योक्तहानावन्तर्भावमाशङ्कते । अविशिष्टपरित्या-गादिति । अपरित्यागादिति । अक्षपादेन पठितमिति । तथा च सूत्र-म् । "प्रतिज्ञातार्थ प्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम्" इति "अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्"इति च सामान्यसङ्ग्रहस्य दृष्टत्वादिति । गौतमेनैव "प्रतिदृष्टान्तधर्मानुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः"इति हेतुहान्यादीनामपि हानित्वेन सा-मान्येन विभागस्य कृतस्य दृष्टत्वादत्राप्यवैषम्याय सामान्यवि-भागस्यैव युक्तत्वादित्यर्थः । सामान्यादिभिरित्यादिपदेन योगि-

प्रत्यक्षत्वादिति वैशेषिकेण प्रत्युक्ते सामान्यादिभिरनैकान्तिकत्वे मीमांसकेनोद्भाविते अस्तु तर्हि यत्किञ्चिद्विपक्षव्यावर्तकं विशेषणमिति सामान्यतः। अस्तु तर्हि जातिमत्त्वे सत्यस्मदादिप्रत्यक्षत्वादिति विशेषतः। इदमपि पक्षसाध्यहेतुदृष्टान्तप्रत्यक्षागमादिरूपविशेष्यभेदाद्बहुविधम्। तत्र पक्षविशेषणं यथा अनित्यः शब्द इत्युक्ते मीमांसकेनांशतः सिद्धसाधनत्वाभिधाने तर्हि वर्णात्मकः शब्द इत्यादि। साध्यविशेषणं यथा। क्षित्यादिकं प्रयत्नवत्पूर्वकमित्युक्ते प्राचीनादृष्टसाधकप्रयत्नवज्जीवपूर्वकमात्रेण सिद्धसाधनत्वेऽभिहिते। अस्तु तर्हि साक्षादुपादानादिगोचरज्ञानचिकीर्षाप्रयत्नवत्पूर्वकमिति। हेतुविशेषणं प्रागुदाहृतम्। दृष्टान्तविशेषणं यथा। यत्सत्तत्क्षणिकं यथा घट इति बौद्धेनोक्ते साध्यविकलतया प्रत्युक्ते अस्तु तर्हि कुर्वत्क्षणावच्छिन्नो घट इति। प्रत्यक्षविशेषणं यथा। भावरूपाज्ञानमन्धकारादिवत् सर्वलोकप्रत्यक्षसिद्धमित्युक्ते द्वैतिना बाह्यान्तरप्रत्यक्षविकल्पानुपपत्त्या दूषिते। अस्तु तर्हि साक्षिप्रत्यक्षमन्यदेव तत्र प्रमाणमित्यादि। एवमुदाहरणान्तराण्यपि चिन्त्यानि। निर्विशेषणस्य दोषो वि-

प्रत्यक्षगम्या नित्याः कालादयो गृह्यन्ते। अत एवोत्तरत्रास्मदादिपदं हेतुर्दीयते इति। मीमांसकेनेति। तस्य ध्वनेरनित्यत्वादिति भावः। प्रागुदाहृतमिति। जातिमत्त्वे सतीत्यादि। कुर्वत्क्षणावच्छिन्नो घट इति। उत्पत्तिक्षणावच्छिन्नो घट इत्यर्थः। तस्य क्षणस्य क्षणिकत्वात्तद्विशिष्टघटस्यापि क्षणिकत्वमिति बौद्धस्याभिमानः। साक्षिप्रत्यक्षमन्यदेवेति। अन्तः करणोपहितचैतन्यस्य साक्षितया अज्ञानस्य तद्विषयतायास्तेनाभ्युपगमादिति भावः। चिन्त्यानीति। अनुमानविशेषणं यथानुभूतेरननुभाव्यत्वमनुमानसिद्धमित्यद्वैतिनाभिहिते साध्याप्रसिद्ध्या अन्वयव्यतिरेकिकेवलान्वयिविकल्पानुपपत्त्या दूषिते अस्तु तर्ह्यप्रसिद्ध-

शिष्टे नापततीति व्यवसायादुक्ताविशेषणसम्भवः । प्रागेव पुष्कलं वदेत् अपुष्कलोक्तं तु जल्पवितण्डयोस्तात्पर्यभेदादिना निर्वहेत् न तु विशेषयेदिति रहस्यम् । सतो हानौ विशेषणे च पर्यनुयोज्योपेक्षणसध्रीचीनमिदं निग्रहस्थानद्वयमुद्भाव्यम् । नच तथा स्वदोषोद्भावनदोषः । व्यामोहनार्थं प्रयुक्तमसदप्यनेन न ज्ञातमित्यवष्टम्भविजयावहत्वात् । दूषणाधिक्यं तु सर्वदा न दोष

---

साध्यककेवलव्यतिरेकि तत्रानुमानमित्यादि । अस्य सम्भवे हेतुमाह । निर्विशेषणस्येति । तात्पर्यभेदादिनेति । आदिपदेनान्वयभेदकल्पनाभेदौ गृह्येते । तथा चोक्तेनैवाधिकमन्तर्भाव्यं निर्वहेन्नाधिकं विशेषयेदिति भावः । ननु वस्तुतो दुष्टस्य पक्षहेत्वादेस्त्यागे विशेषणे च उक्तहान्युक्ताविशेषणयोर्निग्रहस्थानत्वमस्तु । अदुष्टस्य पक्षादेर्दोषे परेणाभिहिते तस्य दुष्टत्वभ्रमेण वादिना त्यागे विशेषणे वा कुतोऽस्य पराजयः कथं वा दोषमभिदधानस्य जय इत्यत आह । सतो हानौ विशेषणे चेति । तथा चादुष्टपक्षे दोषस्त्वया कथमुक्त इति पर्यनुयोक्तव्ये प्रतिवादिनि तत्रोपेक्षां कुर्वतो वादिन उक्तहान्युक्तविशेषणयोः पर्यनुयोज्योपेक्षणस्य च सत्त्वेन दूषणाधिक्यादुक्तहान्यादिकृतः पराजय इति भावः । सध्रीचीनमिति । सहितमित्यर्थः । नन्वदुष्टे त्वत्पक्षे दोषो मयाऽभिहितः तत्र त्वया पर्यनुयोगो न कृत इति पर्यनुयोज्योपेक्षणोद्भावने क्रियमाणे स्वदोषोद्भावनस्यापि कर्तव्यतया तदुद्भावनमनुपपन्नमिति शङ्कते । नचेति । व्यामोहनार्थं प्रयुक्तमसदप्यनेन न ज्ञातमित्यवष्टम्भेन स्वाज्ञानाच्छादनसम्भवादिति परिहरति । व्यामोहनार्थमिति । ननूक्तहान्याद्युद्भावनादेव परस्य निगृहीतत्वात्पुनः पर्यनुयोज्योपेक्षणोद्भावनस्याधिकत्वादस्याधिक्यं नाम निग्रहस्थानं स्यादित्यत आह । दूषणाधिक्यं त्विति । सर्वदेति । दूषणाधिक्यं न वक्तव्यमिति नियमकथायां तु तद्दोष एवेति हृदयम् । संग्रहः ।

अविशेषितपूर्वोक्तिदूषिते तद्विशेषणे ।
स्वेनैव दत्तेऽभिज्ञास्तत्प्राहुरुक्ताविशेषणम् इति ॥

इति स्वयमुक्तस्य सभ्यादिविदितस्य परेण दूषितस्य निगूहनमुक्तापलापः। स च बहुविधः। न मयैवमुक्तमिति वान्यदेव मयोक्तमिति वा त्वमेवोक्त्वा मय्यारोपयसीति वा त्वदुक्तमन्योक्तं वा मयानूदितमिति वा पार्श्वस्थेनैवमुक्तमिति वानुक्तमेव प्रक्रान्तमेव त्वया भ्रान्तिवशादवगतमिति वा अशरीरिवाक्यमिदमिति वा ईदृशस्यापलापस्य सम्भवहेतुः पश्यतोहरेषु शिक्षणीयः। प्रतिज्ञाहेतुदृष्टान्तप्रत्यक्षागमाद्यपलपनीयभेदादयमपि बहुविषयः पूर्ववदुदाहरणीयः। नियमपरिहरणीयहस्तचेष्टाद्यपह्नवसंग्रहाय कृतापलाप इति लक्ष्यलक्षणासिद्धिः। स्पष्टानिष्ठितनिह्नवे च समर्थनीयान्तराभावात् परिषदनुविधेयावेव स्थेयतया शरणम् विश्वसाक्षिणां चतुर्दशानामपि तूष्णींभावात्। एवं सार्व-

---

सभ्यादिविदितस्येति। सभ्याद्यविदितस्य त्वपह्नवो न निग्रहस्थानमिति भावः। पश्यतोहरेष्विति। पार्श्वस्थेषु पश्यत्स्वेव यश्चोरः परकीयं धनं मुष्णाति स पश्यतोहरः। तेष्वभ्यसनीय इत्यर्थः। तत्राभ्यसनीयं च धाष्ट्र्यमित्यवगन्तव्यम्। कृतापलाप इति। हस्तचेष्टादीनां वाग्व्यापारत्वाभावेऽपि कृतिजन्यत्वादिति भावः। लक्ष्यलक्षणासिद्धिरिति। लक्ष्याणां चापलापादीनां तत्संग्राहकलक्षणस्य च सिद्धिरित्यर्थः। तथा च तेषामपि लक्ष्यत्वं सिद्धम्। लक्षणस्य च तत्सङ्ग्राहकत्वं सिद्धमिति भावः। स्पष्टानिष्ठितेति। स्पष्टं व्यक्तं दोषत्वं तस्यानिष्ठिते ऽपर्यवसिते निह्नवे ऽपलापे सतीत्यर्थः। स्पष्टस्य दोषत्वस्यापलापस्त्वया क्रियत इति परेणापलापे उद्भाविते वादिदोषोऽपि न मया कृतः अत एवापलापश्च न क्रियत इति यदि ब्रूयात् तदापलापो ऽपर्यवसितः स्यादिति निगर्वः। समर्थनीयान्तराभावादिति। तदोद्भावितापलापादन्यस्य स्वेनाशक्यसमर्थनत्वादित्यर्थः। स्थेयतया विवादपदनिर्णेतृतया। शरणं रक्षितारौ। ननु परिषदनुविधेयावेवेत्यवधारणमनुपपन्नं जगत्साक्षिणां चतुर्दशानामपि सम्भवादित्यत आह। विश्वसाक्षिणामिति। अत्र मनुः ८।

लौकिकप्रतीत्यपह्नवेऽपि । उक्तं च नारायणार्यैः भगवद्गीताभाष्येऽपि ।

प्रसिद्धमपि विज्ञानं वादे यो नाम निह्नुते ।
स सदस्यैर्नियन्तव्यो व्यवस्था नान्यथा यत इति ॥

सभ्यादिविदितमुक्तं कृतं वा नापलपेदिति रहस्यम् । अपलापमेव प्रतिज्ञासन्न्यासशब्देन लक्षणयोपचारतः व्यवहरन्ति । तदिह—हानिसन्न्यासशब्दयोरैकार्थ्यभ्रमहेतुतया नाद्रियामहे । अत्रापि सदपलापे पूर्ववत् पर्य-

---

मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः ।
तांश्च देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः ॥
द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः ।
रात्रिः संध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम् इति ॥

तूष्णींभावादिति । तदुक्त्यधीनाविवादपदनिर्णयस्य लोकेऽदर्शनेन न ते स्थैर्यतया शरणीकरणीया इति भावः । उपचारत इति । अपलापे प्रतिज्ञासंन्यासशब्दप्रयोगो गौतमस्य लाक्षणिकः । तथा च सूत्रम् । "पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यास" इति । न हि त्यागापरपर्यायः सन्न्यासशब्दोऽपलापे मुख्य इति भावः । ननु लाक्षणिकोऽपि पूर्वप्रयोगः कुतो नादृत इत्यत आह । तदिहेति । तथा च प्रतिज्ञाहानिप्रतिज्ञासन्न्यासयोरैक्यभ्रमो माभूदित्यपलाप इति शक्तं शब्दान्तरं प्रयुक्तमिति भावः । नन्वत्रादुष्टस्य पदस्य परापादितेन सता दोषेण दुष्टत्वभ्रमादपलापेन निग्रहः स्यादित्यत आह । अत्रापीति । परापादितेन पर्यनुयोज्योपेक्षणसहितेनापलापेन निग्रहः स्यादिति भावः । तृतीयकक्षा भाविनीति । प्रथमद्वितीयकक्षयोर्वादिनः प्रतिवादिनश्च इदं प्रथमकक्षात्वेन तयोरुक्तहान्युक्तविशेषणोक्तापलापानामसम्भवादिति भावः । सङ्ग्रहः ।

स्वयं कृतस्य सभ्यादिविदितस्यान्यदूषणे ।
निगूहनं स्यादुक्तापलापः स बहुधा मत इति ।

परवाक्यविरोधनिवर्तनाय स्वेनेत्युक्तम् । यावज्जीवमहं मौनी

नुयोज्योपेक्षणसध्रीचीनता। एतानि त्रीण्यपि निग्रहस्थानानि तृतीयादिकक्षाभावीनि तदुत्तरकक्षोद्भाव्यानि। स्वोक्तस्य स्वेनैव विरुद्धकरणमुक्ताविरोधः। स द्विधा पदवाक्यभेदात् पदविरोधो यथा। ईश्वरोऽनीश्वर इत्यादि। वाक्यविरोधो यथा ईश्वरः सर्वज्ञ एव तथापि स्वाज्ञानमेकं न जानातीत्यादि। स चायमवान्तरभेदाद्बहुविधः। तत्र प्रतिज्ञापदद्वयविरोधो यथा ईश्वरो न सर्वज्ञ इत्यादि। पक्षहेतुविरोधो यथा। ईश्वरः कर्मवश्यो जीवत्वादित्यादि। साध्यहेतुविरोधो यथा। क्षित्यादि सकर्तृकमकर्तृकत्वादित्यादि। स्ववचनविरोधो यथा। यावज्जीवमहं मौनी मूको वेत्यादि। स्वक्रियाविरोधो यथा। सर्वदा निर्व्यापारोऽहमित्यादि। एवं न किञ्चिदहं याचे अतो मेऽर्था दीयन्ताम्। अमृतं पीतवानहं तथापि मे तद्वर्णतः पलितमासीत्। न काश्चिन्मे सिद्धान्तः तथापि शून्यं चिन्मात्रं तत्त्वम्। अवेद्यं ब्रह्म तथापि तज्ज्ञानान्मोक्षः। न किञ्चित्कारणं कार्यं वा तथापि भूतपरिणातिविशेषाच्चैतन्यमित्यादीनि तत्तत्सैद्धान्तिकानां व्याहतभाषितान्यवगन्तव्यानि। एषु चोक्तस्य क्वचिच्छाब्दो विरोधः

---

मूको वेत्यस्यैव वाक्यस्य यावज्जीवमौनित्वमूकत्वयोर्विरोधादिति भावः। ननु पूर्वोदाहरणेष्वपि वचनविरोधोऽस्त्येवेति न विशेष इति चेन्न पूर्वोदाहरणेषु वचनयोर्विरोधः। इह तु वचनस्य तदर्थस्य च विरोध इति विशेषसत्त्वात्। सर्वदा निर्व्यापारोऽहमिति। अस्यैव वचनस्य व्यापारतया सर्वदा निर्व्यापारत्वमसम्भवीति भावः। तद्वर्णतः पलितमासीदिति। अमृतस्य श्वेततया अमृतवर्णेन मम पलितं जरसा श्रौक्ल्यमासीदित्यर्थः। अमृतपानस्य निर्जरत्वहेतुत्वात्पीतामृतस्य जरोद्गमो विरुद्ध इति भावः। माध्यमिकस्योक्तविरोधमाह। न कश्चिन्मे सिद्धान्त इत्यादिना। अद्वैतिनस्तमाह। अवेद्यमित्यादिना। सौत्रान्तिकादेस्तमाह। न किञ्चिदित्यादिना।

क्वचिदार्थः । अभ्युपगतनियमविरोधाचरणमप्यत्रैवान्तर्भवति । तद्यथा संस्कृतमभ्युपगम्यापभ्रंशेन भाषणं कृत्स्नानुभाषणाद्यभ्युपगमे तु दूष्यमात्रानुभाषणादिकम् हस्तचेष्टादिवर्जनमभ्युपगम्य तत्करणमित्यादि । एवं शास्त्रान्तरपठितानि विसन्धियतिभङ्गभिन्नवृत्तनेयार्थत्वादीन्यपि तत्तन्नियमापेक्षया दूषणान्यत्रैवा-

---

क्वचिच्छाब्द इति । ईश्वरो नेश्वर इत्यादौ अवेद्यं ब्रह्मेत्यादौ च । क्वचिदार्थ इति । ईश्वरः कर्मवश्य इत्यादौ । शास्त्रान्तरपठितानीति । अलङ्कारशास्त्रपठितानि काव्यप्रकाशे । ७ ।

दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।
निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम् ॥
संदिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम् ।
अविमृष्टविधेयांशं विरुद्धमतिकृत्समासगतमेव इति ॥

पददूषणानि पठितानि । अथ वाक्यदूषणानि ।

प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसन्धि हतवृत्तम् ।
न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥
अर्थान्तरैकवाचकमभवन् मतयोगमनभिहितवाच्यम् ।
अपदस्थपदसमासं संकीर्णं गर्भितं प्रसिद्धिहतम् ।
भग्नप्रक्रममक्रमममतपरार्थं च वाक्यमेव तथा इति ।

तत्र विसन्धिर्यथा ।

राजन् ! विभान्ति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्त इति ॥

यतिभङ्गेन हतवृत्तं यथा “वदतु यदिहान्यत्स्वादुस्यात्प्रियारदनच्छदात्” इति । अत्र “रसयुगहयैर्न्सौम्रौ स्लौ गो यदा कथितो हरिः” इति वृत्तलक्षणानुसारेण षट्सु यतिर्न कृता । यतिषु भिन्नछन्दस्कतया हतवृत्तं भिन्नवृत्तं यथा ।

क्षीराम्भोधित्रिदशतटिनीकुन्दमन्दारपुष्प
हाराहारप्रविमलयशः पूरसंपूरिताशाः ॥

न्तर्भवन्ति । जैनकौमारिलादिनयेन विरोधतिरस्कारादनवधानादेश्चास्य सम्भवः । स्ववचनस्वाभ्युपगमाविरुद्धमेवाचरेदिति रहस्यम् । अयं प्रथमादिकक्षाभावी । तदनन्तरकक्षोद्भाव्यः । स्वाभ्युपगतविरुद्धाभ्युपगमोऽपसिद्धान्तः । यथा सांख्यस्यात्मा कर्तेति । वैशेषिकस्यात्मा चिद्रूप इत्यादि । एवं सर्वसैद्धान्तिकानभ्युपगतं प्रमाणं पुरस्कुर्वन्नपि वस्तुतस्तत्प्रामाण्ये तदभावेऽपि अनेनैव निग्राह्यः । तत्प्रमाणत्वे वक्तव्यदूषणान्तराभावात् । तदप्रमाणत्वे तद्धेतुसमर्थनप्रयासतोऽप्युद्भटस्याभ्युपगमनियतस्यैवोद्भावयितुमुचितत्वात् । यस्त्वनुमानादिकमर्थापत्तिशब्दमा-

---

श्रीमान् राजति सुपर्वद्रुमत्यागलीलावलोकः
राजा राजेन्द्रचूडामणिकिरणगणोद्भासितस्वाङ्घ्रिपाद इति ॥
नेयार्थं यथा शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति तन्वि ते वक्त्रं चपेटापातनातिथिम इति ।

अत्र चन्द्रपराजयस्य नेयत्वान्नेयार्थता । अन्येषां तूदाहरणानि तत्रैव द्रष्टव्यानि । अस्य सम्भवे हेतुमाह । जैनकौमारिलादिनयेनेति । जैना हि सप्तभङ्गीं वदन्तः सत्त्वासत्त्वादीनां वस्तुतो विरुद्धानामप्यविरोधमङ्गीकुर्वते । तथा कौमारिलाः भट्टमतानुसारिणो जातिव्यक्त्योर्विरुद्धयोर्भेदाभेदयोरविरोधमङ्गीकुर्वन्ति । तथा भास्करमतानुसारिणः प्रपञ्चब्रह्मणोर्भेदाभेदयोरविरोधमङ्गीकुर्वते । तन्न्यायेन विरोधशान्तिः कर्तुं शक्यत इत्यभिमानादिति भावः । सङ्ग्रहः

स्ववाचः स्वाङ्गीकृतेर्वा स्वकृतिश्चेद्विरोधिनी ।
तदा ह्युक्तिविरोधः स्यात् स च नैकविधः स्मृत इति ।

सांख्यस्यात्मा कर्तेति । सांख्येनात्मनोऽकर्तृत्वाभ्युपगमादिति भावः । आत्मा चिद्रूप इति । वैशेषिकेणात्मनो ज्ञानात्मकताया अनङ्गीकारादिति भावः । तदभावेऽपीति । तस्य प्रमाणत्वाभावेऽपीत्यर्थः । तस्य प्रमाणतायामपसिद्धान्तस्यैव प्रयोज्यतेत्यत्र हेतुमाह । तत्प्रमाणत्व इति । उद्भटस्येति । प्रथमोपस्थितिकस्येत्यर्थः । यस्त्विति । नैया-

त्रेण व्यपदिशति न स निग्रहीतव्यः । अभ्युपगततदैवक्यस्य पर्यायपाठे विरोधाभावेन निरपराधत्वात् । अन्यथातिसङ्गात् । अथ चेत्स एवावष्टम्भेन दृष्टपृथक्त्वं प्रतिब्रूयात् तथाप्यपसिद्धान्तावतारः । एवं कौमारिलादेरप्यभ्युपगतबाहिर्भावस्यार्थापत्त्यादेरन्तर्भावानुज्ञानेऽपि पूर्ववत्तथाथार्थ्यायाथार्थ्ययोरयमेव निग्रहः । अत्र स्वाभ्युपगतसिद्धान्तविरुद्धकरणमात्रस्य व्यवच्छेदायाभ्युपगमशब्दः । समस्ति हि वस्तुतो निग्रहस्थानान्तरेष्वपि स्वसिद्धान्तविरुद्धाचरणम् । परिहृतसर्वापराधेन कथा प्रवर्तनीयेति सर्वसैद्धान्तिकसंमतत्वात् । न चैतावता सर्वेषामपि निग्रहस्थानानामपसिद्धान्ततेति । नन्वेवमप्यपसिद्धान्त उक्तविरोधेऽन्तर्भावनीयः । एतत्सिद्धान्तवर्त्मना व्यवहरिष्यामीति कथारम्भे प्रतिज्ञाय तत्पर्यवसानात् । पूर्वं तद्विरुद्धभाषणात् । सत्यं त्वत्परिगृहीतसिद्धान्तविरुद्धोऽयमर्थस्त्वयाभ्युपगम्यते । अतः पूर्वोक्तसिद्धान्ताभ्युपगमवाक्यविरोध इति वक्तव्यम् । तत्र

---

यिकादिरित्यर्थः । अतिप्रसङ्गादिति । प्रत्यक्षागमयोरध्यक्षशब्दादिपर्य्यायप्रयोगेऽपि निग्रहापत्तेरित्यर्थः । अवष्टम्भः पाक्षिकाविजिगीषा । कौमारिलादेरित्यादिपदेनाद्वैतिपरिग्रहः । अपसिद्धान्तलक्षणे कथितस्याभ्युपगमपदस्य स्वयमेव प्रयोजनमाह । अत्रेति । नन्वेवमपीति । सर्वनिग्रहस्थानानामपसिद्धान्तेऽन्तर्भावाभावेऽपीत्यर्थः । अन्तर्भावमेवोपपादयति । एतदित्यादिना । अपसिद्धान्तस्योक्तविरोधव्याप्यत्वमङ्गीक्रियते । उक्तविरोधस्यैवोद्भावनं नाङ्गीक्रियत इत्यर्धाङ्गीकारेण परिहरति । सत्यमिति । तीर्थकरस्तन्त्रप्रवर्तकस्तद्भिन्नोऽतीर्थकरः । वार्तिकादिसृष्टिरिति तत्रोक्तस्य प्रतिक्षेपादनुक्तस्याङ्गीकाराच्चेति भावः । स्वतन्त्रस्यासत इति । मूलग्रन्थः परतन्त्रस्येत्यर्थः । एतत्पारतन्त्र्यं चाभ्युपगतैकदेशे बोध्यम् । अंशतस्तीर्थकरत्वादिति । तदनभ्युपगतांशे तन्त्रप्रवर्तकत्वादित्यर्थः । सङ्ग्रहः ।

प्रथमपर्वणि स्थितस्योपजीव्यस्योद्भटस्य सिद्धान्तविरोधस्यैवो-द्भाव्यत्वमुचितमिति पृथग्व्यपदेशः । स्वस्यापि तत्तच्छास्त्र-कर्तृसाम्याभिमानात् । प्रमादादेश्चास्य सम्भवः । अत्र तीर्थकरस्वस्वाभ्युपगतसिद्धान्तविरुद्धं नाङ्गीकुर्यादिति रहस्यम् । कथं तर्ह्येकस्मिन् दर्शने मतभेदप्रवृत्तिरिति चेत् तीर्थक-रवाक्यानां तत्परत्वाभिमानात् । कथं तर्हि वार्तिकादिसृष्टिरिति चेत् स्वतन्त्रस्यासतोऽभ्युपगमैकदेशस्य स्वयमंशत-स्तीर्थकरत्वात् । अस्त्वेवमपसिद्धान्तोऽपीति चेत् न पूर्वमेव तथाभ्युपगमाभावात् । अभ्युपगमे वा को नाम तत्रापसिद्धा-न्तमुद्भावयेत् इति कस्य प्रायशो द्वितीयादिकक्षासु सम्भवः । पृथग्व्यवहारेषु प्रथमकक्षायामपि । द्वितीयकक्षायां तु स्वसिद्धान्त-विरुद्धसाधनेऽपि सिद्धसाधनत्वोद्भाटनादावस्त्येव तत्संभवः । अथ कः सिद्धान्तः । प्रामाणिक इत्यभ्युपगतोऽर्थः ।

अभिमानैकमूलत्वादन्योऽन्यं च विरोधतः ।

---

आदौ सिद्धान्तमेकं तु समालम्ब्य ततः परम् ।
तद्विरुद्धाभ्युपगमेऽपसिद्धान्तं प्रचक्षते इति ॥

प्रसङ्गात्सिद्धान्तनिरूपणाय प्रश्नमुपक्षिपति । अथेति । सिद्धान्तलक्षणमाह । प्रामाणिक इति । एकस्मिन् वस्तुनि तत्तद्वादिभेदेन नानाविधाभ्युपगमदर्शनाद्वस्तुतस्तेषां प्रकाराणां प्रामाणिकत्वे वस्तुविरोधः स्यादिति प्रामाणिक इत्यभ्युपगतार्थ इत्युक्तम् । ननु तर्हि कुत्रापि वास्तविकं सिद्धान्तत्वं नास्तीत्यायातम् । अभिमानस्य वस्तुव्यवस्थापकत्वाभावात् । वादिभेदेन एकत्र विरुद्धाभिमानदर्शनात्तथा च सिद्धान्तत्वासिद्धान्तत्वयोरेकत्र समावेशप्रसङ्ग इति न कश्चित्कस्यचित्सिद्धान्त इत्येव तत्त्वमिति स्वव्याघातमजानानः शून्यवादी प्रत्यवतिष्ठते । अभिमानैकमूलत्वादिति । अभिमानैकमूलकत्वादन्योऽन्यं विरोधतश्च कश्चिदपि सिद्धान्तो नेति यदीत्य-

न कश्चिद्यदि सिद्धान्तो नैवं तत्सिद्ध्यसिद्धितः॥
सिद्धान्ताभाव एवायं प्रामाणिक इतीष्यते।
नेष्यते वा द्विधाप्येवं सिद्धः सिद्धान्तसंग्रहः॥

स त्रिविधः। सर्वतन्त्रप्रतितन्त्राभ्युपगमसिद्धान्तभेदात्। यमन्तरेण वादव्यवहारोऽपि न घटते स सर्वाभ्युपगतः सर्वतन्त्रसिद्धान्तः। यथा प्रमाणात्प्रमेयसिद्धिरित्यादि। अभ्युपगतो

---

न्वयः। व्याघातमेव प्रदर्शयन् परिहरति। नैवमिति। तस्य सिद्धान्तस्य सिद्धावसिद्धौ च एवं सिद्धान्ताभावो न सिध्यतीत्यन्वयार्थः। एतदुक्तं भवति। सिद्धान्तः सिद्धो ऽसिद्धो वा। आद्ये न किञ्चिद्वक्तव्यम्। अन्त्ये नास्ति सिद्धान्त इत्यस्यैव त्वया प्रामाणिकतयाभिमतस्य सिद्धान्तत्वेन तन्निषेधायोगात्। उभयथापि त्वदभिमतं न सिद्ध्यतीति। ननु न मया नास्ति सिद्धान्त इत्ययमर्थोऽपि प्रामाणिकतयाङ्गीक्रियते येन विरोधः स्यादित्यत आह। सिद्धान्ताभाव एवायमिति। सिद्धान्ताभावः प्रामाणिकत्वेन त्वयाभ्युपगम्यते वा न वा। आद्ये सिद्धान्ताभावस्यैव प्रामाणिकतयाभ्युपगतत्वात् स एव सिद्धान्त इति सिद्धान्तासिद्धिः। अन्त्ये सिद्धान्ताभावस्याप्रामाणिकतया सिद्धान्तः प्रामाणिकः स्यादिति सिद्धान्तसिद्धिरिति कारिकार्थः। ननूभयत्रापि प्रामाणिकतासन्देहादन्यतरत्रापि प्रामाणिकतानिश्चयाभावात् सिद्धान्तस्तदभावो वा प्रामाणिकतया नाभ्युपगम्यते ऽतो न पूर्वोक्तविकल्पावकाश इति चेन्न। एवमपि तत्र प्रामाणिकतयाभ्युपगन्तव्यत्वेन तस्यैव सिद्धान्तत्वात्। न सिद्धान्तनिराकरणं शक्यकरणमिति भावः। प्रमाणात्प्रमेयसिद्धिरित्यादीत्यादिपदेन सम्भवादिज्ञानस्य प्रमाणत्वं प्रतिपक्षनिराकरणं स्वपक्षप्रतिष्ठापनमित्यादि गृह्यते। ननु सर्वशून्यत्वप्रपञ्चमिथ्यात्ववादिमाध्यमिककुदृष्टितन्त्राव्यापकत्वात्प्रमाणात् प्रमेयसिद्धिरित्यादेर्न सर्वतन्त्रसिद्धान्ततेत्यत आह। अभ्युपगतो हीति। माध्यमिकादिभिरित्यादिपदेन कुदृशो गृह्यन्ते। सम्वृ-

हि माध्यमिकादिभिरपि संवृतादिसंज्ञातः प्रमाणप्रमेयव्यवहारः। स्वतन्त्र एव सिद्धः परतन्त्रैर्निषिद्धः प्रतितन्त्रसिद्धान्तः। यथा वैयाकरणस्य स्फोटः। सौगतस्य क्षणभङ्गः॥ दिगम्बरस्य सप्तभङ्गी। कौमारिलादेः शब्दभावनादिलिङर्थता। त्रय्यन्तविदामीशितुः सर्वशरीरत्वादि। अमी च सिद्धान्तान्तरानभ्युपगमप्रसिद्धिदशायामेव प्रतितन्त्राः। यदि कश्चिदन्योऽपि तीर्थकरस्तानेवार्थानभ्युपगच्छेत्तदा तेषामभ्युपगमसिद्धान्तत्वम्। न चापूर्वास्तीर्थकरा न भवन्तीति नियमः। तथात्वे प्राथमिकैकसिद्धान्तपरिशेषप्रसङ्गात्। न च तैस्तेर्था नाभ्युपगन्तव्या इति वाच्यम्। आवापोद्वापभेदानामिदानीमपि दर्श-

---

तादिसंज्ञात इति। संवृतसत्त्वव्यावहारिकसत्त्वशब्दाभ्यामित्यर्थः स्फोट इति। ताल्वादिव्यापारव्यङ्ग्यो वर्णपदादिशब्दवाच्यो नित्यः पदार्थः स्फोट इति वैयाकरणाः। दिगम्बरस्य। जैनस्य सप्तभङ्गी। सर्वे पदार्थाः स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च स्यादवक्तव्यं स्यादस्तिचावक्तव्यं च स्यान्नास्ति चावक्तव्यं स्यादस्ति च नास्ति चावक्तव्यमित्येवं सत्त्वासत्त्वसदसत्त्वसदसद्विलक्षणत्वसत्त्वविशिष्टसदसद्विलक्षणत्वसदसत्त्वविशिष्टसदसद्विलक्षणत्वसदसत्त्वविशिष्टसदसद्विलक्षणत्वरूपसप्तभङ्गीपरिवृताः। स्यात् शब्दोऽयं तिङन्तप्रतिरूपको नैकान्तद्योत्यव्ययभेद इति जैनाः। तत्र सप्तानां सत्त्वादिरूपाणां भङ्गानां प्रकाराणां समाहारः सप्तभङ्गी। शब्दभावनादिलिङर्थतेति। लिङोऽभिधा सैव शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः। सम्बन्धबोधः करणं तदीया प्ररोचना चाङ्गतयोपयुज्यते इति हि तान्त्रिकाः। अमी चेति। प्रतितन्त्रसिद्धान्ता इत्यर्थः। प्रसङ्गादिति। पूर्वानन्तरतीर्थकराणां प्रथमतीर्थकरापेक्षया अपूर्वत्वादिति भावः। तैरिति। अनन्तरतीर्थकरैरित्यर्थः। तेऽर्थाः। पूर्वाभ्युपगततीर्थार्था इत्यर्थः। आवापोद्वापभेदानामिति। आवापः। अतिरिक्तार्थप्रतिक्षेपः।

नात् । अभिमानमूलत्वाच्च सिद्धान्तानामिति । अव्यापकः स्वतन्त्रस्य तन्त्रान्तरस्य च साधारणोऽभ्युपगमसिद्धान्तः । यथा नैयायिकादीनां सामान्यविशेषसमवायादिः । सांख्यादीनां भेदाभेदादिः । सौगतादीनां प्रपञ्चमिथ्यात्वादिः । परतन्त्रे साधिते स्वतन्त्रे च समाश्रित इति वा । तन्त्रान्तरसद्भावस्य वस्तुनो विशेषपरीक्षणमिति वा केचिदाहुः । अत्र स्वतन्त्रपरतन्त्रसाधारणमेव निष्कृष्टलक्षणं भवति । केचित्तु कस्यचित्साधनेऽनुषङ्गसिद्धोऽन्य आधारसिद्धान्त इति चतुर्धा विभागमाहुः । यथा क्षित्यादेः सकर्तृकत्वासिद्धावीश्वरसिद्धिरित्यादि ।

---

उद्वापः । उक्तार्थप्रतिक्षेपः । तयोर्भेदाः । तद्विषयभेदायत्ताः विचित्राः प्रकाराः तेषामाधुनिकतीर्थकरेष्वपि दर्शनादित्यर्थः । ननु प्रतितन्त्रसिद्धान्तत्वाभ्युपगमसिद्धान्तत्वयोर्विरोधादेकत्र कथं सम्भव इत्यत आह । अभिमानमूलत्वाच्चेति । सिद्धान्तानामिति । सिद्धान्ततत्त्वानामित्यर्थः । तथा चान्यानभ्युपगमकाले प्रतितन्त्रस्यापि तदभ्युपगमकाले तत्त्वाभावान्न विरोध इति भावः । अव्यापक इति । तत्रैकदेशिभिरनङ्गीकृत इत्यर्थः । समवायादिरिति । सामान्यादेः काणादतन्त्राभ्युपगमस्य गौतमीयैश्च कैश्चिदङ्गीकारादित्याशयः । भेदाभेदादिरिति । भेदाभेदादेर्जैनाङ्गीकृतस्यैव सांख्यैरप्याश्रयणादिति भावः । प्रपञ्चमिथ्यात्वादिरिति । सौगताङ्गीकृतस्य प्रपञ्चमिथ्यात्वस्य कुदृष्टिभिरप्यङ्गीकारादिति हृदयम् । ननु प्रपञ्चमिथ्यात्वादेः कुदृष्ट्यादिमतव्यापकत्वात्तदेकदेशिभिः कैश्चिदपि तस्याप्रतिक्षेपात् पूर्वोक्तं लक्षणमव्याप्तमित्यतो लक्षणान्तरमाह । परतन्त्रे साधित इति । विशेषपरीक्षणमिति । तस्यैवातिरिक्ताकारान्तराभ्युपगम इत्यर्थः । अत्र पक्षे पराभ्युपगतमर्यादयैवाभ्युपगतेषु अभ्युपगतसिद्धान्तेषु अव्याप्तिरित्यस्वरसो बोध्यः । ईश्वरसिद्धिरिति । नित्यज्ञानेच्छायत्नवत्सिद्धिरित्यर्थः । अधिकरणसिद्धान्ततया गौतमादिभिरभ्युपगतस्य उक्तेष्वेवान्तर्भावं सर्वाभ्युपगमस्वमात्रा-

अक्षपादस्य सिद्धान्तचातुर्विध्यं प्रक्रम्याह। "यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्त" इति तदयुक्तम्। तस्य सर्वैरभ्युपगमे सर्वतन्त्रसिद्धान्तत्वात्। स्वतन्त्रमात्रसिद्धौ प्रतितन्त्रत्वात्। परैरपि कैश्चिदभ्युपगमेऽभ्युपगमसिद्धान्तत्वात्। केवलं त्वयमस्य सिद्धान्त इति निर्णयेऽनुषङ्गसिद्धिर्लिङ्गं भवतीत्येतावता यदि पृथगभिधानं काममभिधीयतामिति। शब्दशास्त्रविरुद्धस्वरूपमवाचकम्। यथा कृत्तद्धितसमासाख्यातलकारात्मनेपदपरस्मैपदसकर्मकाकर्मकलिङ्गवचनविभक्तिवर्णादेशागमप्रभृतीनां विपर्यासन्यूनातिरेकादयः। उदाहरणानि त्वशिक्षितानां वचनान्येव द्रष्टव्यानि। अपशब्दा-

---

भ्युपगमसाधारणाभ्युपगमविकल्पपूर्वकमाह। तस्येति। नन्वधिकरणसिद्धान्तस्योक्तप्रकारेण सिद्धान्तत्रयान्तर्भावसत्त्वेऽपि अनङ्गीकृतत्वरूपविशेषसत्त्वाद्गौतमेन पृथगभिधानं युज्यत इत्याशङ्क्येष्टापत्त्या परिहरति। केवलं त्विति। लिङ्गम्। ज्ञापकमित्यर्थः। काममभिधीयतामिति। एतेन गौतमोक्तेरविरोधो दर्शित इति बोध्यम्।

प्रामाणिकतयाभीष्टः सिद्धान्तः स त्रिधा मतः।
तत्र सर्वाभ्युपगतः सर्वतन्त्रः प्रकीर्तितः॥
स्वतन्त्रमात्रसिद्धस्तु प्रतितन्त्रोऽभिधीयते।
तन्त्रद्वयस्य सामान्येऽभ्युपेतो हि निगद्यत इति॥

सङ्ग्रहः। आख्यातम्। "लः कर्मणि च भावे चाकर्मकेभ्य" इति विहितं लकारसामान्यम्। लकारः वर्तमाने लडित्यादिना विहितो विशेषः। प्रथमादिर्विभक्तिः। प्रभृतिपदेन कारकस्त्रीप्रत्ययसन्धीडनिडादयो गृह्यन्ते। विपर्य्यासोऽन्यथाकरणम्। आदिपदेन समासप्रत्ययादीनां स्वरत्यागो गृह्यते। कुम्भकारादिपदेषु समासादित्यागस्यापि दोषत्वात्। अशिक्षितानामिति। अनभ्यस्तव्याकरणानामित्यर्थः। तेषु प्रायशोऽपभ्रंशसम्भव इत्यव-

न सुशब्दयिष्यामीति वैयाकरणत्वगर्वादशिक्षितत्वानवधानादि-भिश्चास्योक्तिसंभवः । वक्तव्यतयाभ्युपगतभाषामूलव्याकरण-सिद्धमेव नियमकथायां भाषितव्यमिति । उक्तं च प्रज्ञाप-रित्राणे ।

साधुगीर्वाणवाण्यैव प्रयोगनियमे कृते ।
अपभ्रंशान्यभाषाभिर्भाषणं चापि दूषणम् ॥
अकृते नियमे सर्वभाषाभिरपि भाषणम् ।
स्खलने च पुनः साधुशब्दग्रहणमिष्यत इति ॥

एवं सत्ययमपि नियमविरोध इति चेत् । सत्यं त-थापि स्वतोऽपशब्दस्य दूषणत्वसम्भवादुपजीव्यत्वाच्चास्यापि पृथग्व्यपदेशः । सर्वभाषाभिरपीत्युभयाभ्युपेतैकापभ्रंशभाषावि-षयं न पुनस्तदा तदा पथेच्छमव्यवस्थितभाषाभिप्रायम् । तथा सति परानभ्यस्तभाषयापि भाषणप्रसङ्गे परस्परवार्तानभिज्ञ-तया वादिनोर्निष्फलपरिश्रमत्वप्रसङ्गात् । अत उभयाभ्यस्तया नियमपरिगृहीतयैव भाषया व्यवहरेदित्यर्थः । इदं च नि-ग्रहस्थानं सर्वकक्षासम्भवि तदैवोद्भाव्यं च । उचितान्वयशू-न्यमनन्वितम् । तद्द्विधा । पदवाक्यभेदात् । यथा स्तम्भः कुम्भः कुड्यं कुसूलमित्यादि । यथा च पर्वतोऽग्निमान् महाह्रदो-

---

गन्तव्यम् । अवाचकस्योक्तविरोधेऽन्तर्भावमाशङ्कते । एवं स-तीति । अयमपीति । अवाचकोऽपीत्यर्थः । अपभ्रंशभाषा प्राकृता-दिः । अर्थ इति । अवाचकनिग्रहस्थाननिरूपणग्रन्थस्य तात्पर्य्यार्थ इत्यर्थः ।

शब्दशास्त्रविरुद्धं यत्तदवाचकमुच्यते ।
तत्तद्भाषाव्याकरणं शब्दशास्त्रमिहेष्यत इति ॥

सङ्ग्रहः । वाक्यानन्वयमुदाहरति । यथा चेति । अत्र वा-क्ययोः परस्परमसम्बन्धादनन्वितत्वम् । वकोटो वकः "वकोऽव-

ऽवकोटवान् इत्यादि। व्यवहितान्वयप्रतीत्यभावाविशेषात्। न चास्य विपर्याससंकरः। पद्यादिनियमकथायां विपर्यासस्य क्षन्तव्यत्वेऽपि व्यवहितान्वयस्य दूषणत्वात्। विपर्यासे व्यवहितान्वयत्वाभावात्। सम्भावितसमस्तान्वयप्रकाराविकल्पे तदनभ्युपगन्तुर्विकल्पविषयाशेषोऽनन्वय इत्याहुः। नन्वा-

कोटः कम्बश्च बलाका बिसकण्ठिका" इति यादवः। आदिपदेन गिरिर्भुक्तं वह्निमान् देवदत्तेनेत्यनासन्नं वाक्यं गृह्यते। तत्र पदस्य व्यवहितत्वेऽप्यन्वययोग्यत्वात्कथमनन्वितत्वमित्यत आह। व्यवहितान्वयप्रतीत्यभावाविशेषादिति। व्यवहितान्वयः प्रतीत्यभावश्चेति द्वन्द्वः। तयोरविशेषादिति तत्पुरुषः। तथा चानासन्नेऽनाकाङ्क्षे चान्वयप्रतीत्यभावस्याविशिष्टत्वात् अन्वयप्रतीत्यभावरूपमनन्वितत्वमुभयसाधारणमिति भावः। अनन्वितस्य विवक्षितक्रमविपर्य्यासरूपाप्राप्तकालसाङ्कर्य्यमाशङ्क्य परिहरति। नचेत्यादिना। अनन्वयस्य विपर्य्याससाङ्कर्य्यं वदन् वक्तव्यः। किं विपर्य्यासेऽनन्वयस्यान्तर्भावात्तदेकपरिशेषापत्तिरुच्यते। उत विपर्य्यासस्यानन्वये ऽन्तर्भावात्तदेकपरिशेषापत्तिरिति। आद्य आह। पद्यादिनियमकथायामिति। पद्यनियमकथायां पदविपर्यासस्य निग्रहस्थानत्वं स्यान्न स्याच्च व्यवहितान्वयस्य निग्रहस्थानत्वं न चैतदुभयमिष्टम् अतो न प्रथमपक्ष इति भावः। द्वितीय आह। विपर्य्यासे व्यवहितान्वयाभावादिति। तथा च सभ्यानुविधेयसम्बरणमकृत्वा प्रयोगमारभमाणस्य क्रमविपर्यासतो निग्रहो न स्यात्। तत्रानन्वितनिग्रहस्थानाभावादिति भावः। एतदुक्तं भवति। अनन्वितविपर्य्यासयोरुभयोरसंकीर्णस्थलसत्त्वात्पृथगेव निग्रहस्थानमिति। नैयायिकास्तु विकल्पविशेषो ऽनन्वय इत्यनन्वितस्य तृतीयं प्रकारमाहुस्तमनुवदति। सम्भावितस्य समस्तेति। आहुरित्यस्वरसोद्भावनं तन्मूलं तु तत्र विकल्पितान्वयेष्वन्यतमस्याभ्युपगमे ऽनन्वयाभावादनभ्युपगमे पूर्वोक्ताकारानन्वयस्यैव दोषत्वेनास्य पृथग्विभागवैयर्थ्यादिति। योग्यताव्यतिरेकाधीनानन्वयस्योक्तविरोधे ऽन्तर्भावमाशङ्कते। नन्विति। पृथग्विषयलाभादिति।

कांक्षासत्तियोग्यताविरहादनन्वयः। तासामेकैकाभावेऽप्यनन्वय इति सिद्धम्। ततश्च येषु वाक्येष्वाकांक्षासत्त्योरभावस्तत्रानन्वितनिग्रहस्थानावकाशः। यत्र तु योग्यताविरहादनन्वयस्तत्र विरोधनिग्रहस्थानमेव स्यात्। विरोधमन्तरेणायोग्यत्वस्यापादयितुमशक्यत्वादिति चेदस्त्वेवं तथापि पृथग्विषयलाभान्निग्रहस्थानद्वयं सिद्धम्। नन्वनन्वितस्याप्यस्ति पृथग्विषयः। तथापि विरोधस्य सर्वत्रायोग्यतयैव क्रोडीकारान्न पृथग्विषयलाभ इति चेत्। सत्यम्। तथाप्यन्वयायोग्यतानिमित्तस्य विरोधस्यैवोद्भटत्वात्तस्यैवोद्भाव्यत्वम्। नचैवमाकांक्षासत्तिविरहयोरपि पृथग्भाव्यत्वं तयोर्द्वयोरप्यन्वयप्रतीतेरेवानुदयात्। इह तु शब्दस्वरसतो जातस्यान्वयबो-

---

आकांक्षासत्तिविरहाधीनानन्वयस्यानन्वयोदाहरणत्वेन तत्रोक्तविरोधाभावेन तदसाङ्कर्यादिति भावः। अयोग्यताधीनानन्वयोक्तविरोधस्य शक्यान्तर्भावत्वान्न निग्रहस्थानद्वयसिद्धिरिति शङ्कते। नन्विति। पृथग्विषयलाभाभावे ऽप्ययोग्यतापेक्षया ऽप्युपजीव्यत्वात्तस्यैवोद्भावनमुचितमिति पृथक् परिगणनं कृतमित्याशयेन परिहरति। सत्यमिति। एवं सत्यन्वयबोधाभावे आकांक्षासत्तिविरहयोरुभयोरुपजीव्यत्वात्पृथगेवोद्भावनमुचितमिति पृथक्परिगणनं स्यादिति शङ्कते। नचेति। अन्वयबोधाजनकत्वेन तयोः क्रोडीकारसम्भवेन लाघवेन च पृथक् परिगणनं कृतमित्याशयेन परिहरति। तयोरिति। तर्ह्ययोग्यताया अपि तेनैवोपाधिना क्रोडीकारोऽस्त्वित्याशङ्क्याह। इह त्विति। असत्यां स्वरूपयोग्यतायाम्। "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इति न्यायेनायोग्ये अन्वयबोधसम्भवेनान्वयबोधाभावेन क्रोडीकारासम्भवात्। जातान्वयबोधबाधकस्य विरोधस्यैवोद्भावनमुचितमिति तस्य पृथक् परिगणनं युज्यत इति भावः। एवं सत्युक्तविरोधरूपनिग्रहस्थानस्य बाधहेत्वाभाससाङ्कर्यं स्यादित्याशङ्क्य बाधस्यासङ्कीर्णस्थल-

धस्य विरोधेन बाधादिति । यत्र तु विप्रलम्भकादिवाक्ये प्रतिवादिवाक्ये च सामान्यतस्तत्तद्वस्तुस्वभावप्रयुक्तविरोधाभावेन दृढोदितेऽप्यन्वयबोधे प्रमाणान्तरपरामर्शाद्बाधस्तत्र तु तत्त्त्प्रमाणबलाद्विशेषतः सत्यपि विरोधे तत्प्रमाणबाध एवोद्भाव्यः । तस्यैव तत्रोपजीव्यत्वादिति । विवक्षितक्रमस्य विपर्यस्तकरणमप्राप्तकालम् । सभ्यानुविधेयसंवरणादिकमकृत्वा प्रयोगे वादारम्भो विपर्यासः । प्रतिज्ञाहेतुदृष्टान्तादेर्विपर्यासेन वचनेऽवयवविपर्यासः । अनित्यः शब्द इत्यादावयवांशविपर्यासः । तर्कमभिधाय प्रयोगेऽङ्गाङ्गिविपर्यासः । वाद्युक्तमशेषमदूषयित्वा प्रतिवादिनः स्वपक्षसाधने वादविपर्यास इत्यादि । वाक्यस्य परप्रत्यायनार्थत्वाद्विपर्यासेऽपि परप्रत्ययसम्भवाभिमानात्तदुक्तिसम्भवः । नियमकथायामभ्युपगतक्रमातिक्रमेण न कुर्यादिति रहस्यम् । अनित्यः शब्द इत्यादिप्रयोगस्तु विपर्यासेऽपि शीघ्रान्वयप्रतिपत्ते

---

माह । यत्र त्विति । तथा च वस्तुस्वरूपप्रयुक्तो विरोधो यत्र शब्दतः स्फुटतया प्रतीयते तत्रोक्तविरोधः । यत्र तु शब्दतो विरोधेऽप्रतीते पश्चात्प्रवृत्तप्रमाणबलेन विरोधो ज्ञायते तत्र बाधस्योपजीव्यत्वादुद्भाव्यत्वमिति व्यवस्थेति भावः ।

आकाङ्क्षासत्तिविरहाद्यत्र नान्वयसम्भवः ।
अनन्वितं तद्बाधः स्यात्पदवाक्यप्रभेदत इति सङ्ग्रहः ।

अनित्यः शब्द इत्यादिविपर्यासस्यानियमकथायां सोढव्यत्वेन तद्व्यावृत्त्यर्थमाह । विवक्षितेति । संवरणादीत्यादिपदेन तदभ्यनुज्ञारूपप्रत्युक्तिर्गृह्यते । वादविपर्यास इत्यादिपदेन वाद्युक्तक्रमविपर्यासेनानुवादेन वादविपर्यास इत्यादि गृह्यते । सोढव्य इत्यादिपदेनानुवादविपर्यासादिकमप्यनियमकथायां सोढव्यमित्यादिरुच्यते ।

रनियमकथायां वादे च सोढव्य इत्यादि । त्रिभङ्ग्यन्तराभिधानेऽपि प्राश्निकप्रतिवादिष्वन्यतमेनाप्यज्ञातार्थं वचनमविज्ञातार्थं तच्चाप्रसिद्धप्रयोगस्वसिद्धान्तमात्रप्रयोगार्थान्तरसाधारणप्रयोगादिभेदाद्बहुविधम् । तत्राप्रसिद्धप्रयोगो यथा । अहार्यो वीतिहोत्रवानित्यादि । स्वसिद्धान्तमात्रप्रसिद्धप्रयोगो यथा । पञ्चस्कन्धद्वादशायतनादिप्रयोगः सौगतानाम् । अस्तिकायपर्यायपुद्ग-

---

विवक्षितक्रमो यत्र विपर्यासम्प्रपद्यते ।
अप्राप्तकालता तत्र सेयं बहुविधा मता इति सङ्ग्रहः ।

त्रिभङ्ग्यन्तराभिधानेऽपीति । त्रयाणां भङ्ग्यन्तराणामभिधानेऽपीति । भङ्ग्यन्तरेण त्रिरभिधानेऽपीत्यर्थः । प्रथमाभिधानत एवाविज्ञातार्थतोद्भावनवारणाय त्रित्वमुक्तम् । यद्यपि भङ्ग्यन्तरेण द्वितीयाभिधानत एवाविज्ञातार्थत्वमुद्भावयितुमुचितम् तथापि दयाशीलायाः परिषद आनृशंस्येनाभ्यनुज्ञासम्भवात्तृतीयस्यापि सम्भवः । तदुपर्यभिधानं त्वनवस्थावहमिति तृतीयाभिधान एवाविज्ञातार्थत्वमुद्भाव्यमिति भावः । परिषदभ्यनुज्ञाभावे द्वितीयाभिधानेऽप्यविज्ञातार्थत्वमुद्भावयितुं शक्यमित्यभिप्रायेणापीत्युक्तम् । अन्यतमेनापीति । तेष्वन्यतमस्यार्थपरिज्ञानेऽपि स एवान्येभ्यो व्याख्यास्यतीति नाविज्ञातार्थतोद्भावनावसर इति भावः । अहार्यो वीतिहोत्रवानिति । अहार्यधरपर्वताः वीतिहोत्रो धनंजय इति पर्वताग्निपर्यायपाठमन्तरेणाहार्यवीतिहोत्रपदयोर्न लौकिकव्यवहारप्रसिद्धिरिति भावः । आदिपदेन बेलवलिदुश्चयवनादिघटिताः प्रयोगा गृह्यन्ते । पञ्चस्कन्धद्वादशायतनादिप्रयोग इति । रूपवेदनाविज्ञानसंज्ञासंस्काराः पञ्च स्कन्धाः । पञ्चेन्द्रियाणि पञ्च विषयाश्च रूपस्कन्धः । सुखदुःखानुभवो वेदनास्कन्धः । अहमित्यालयप्रत्ययप्रवाहो विज्ञानस्कन्धः । सविकल्पकप्रत्ययः संज्ञास्कन्धः । रागद्वेषमोहादयः संस्कारस्कन्धः । तथा पञ्चेन्द्रियाणि पञ्चविषया मनो धर्मश्चेति द्वादशायतनानि । आदिपदेन चित्तचैत्तादिप्रयोगो गृह्यते । चित्तं ज्ञानसन्तानं चैत्तं रागादिकम् । अस्तिकायपर्यायपुद्गलादिप्रयोग इति । जैना हि अ-

लादिप्रयोगो दिगम्बराणाम्। यतमानव्यतिरेकैकेन्द्रियवशीकार-संज्ञादिप्रयोगः पातञ्जलानाम्। स्फ्यकपालादि मीमांसकानाम्। सुतेजा विश्वरूपः पृथग्वर्त्मा बहुलो रयिः प्रतिष्ठेति त्रय्यन्तवि-

---

स्तिकायाः पञ्च अस्तिकायः जीवपुद्गलास्तिकायो धर्मास्तिकायोऽध-र्मास्तिकायःआकाशास्तिकायश्चेति। अस्तीति कायतेशब्दने इत्यस्ति-कायः। जीव एवास्तिकायो जीवास्तिकायः। एवं सर्वत्र समासः जीवा-स्तिकायस्त्रिविधः। बद्धो मुक्तो नित्यसिद्धश्च। नित्यसिद्ध आर्हत इतरौ द्वौ प्रसिद्धौ। पूर्यते गलामिति उपचितापचितं वस्तु पुद्गलश-ब्देनोच्यते। पुद्गलास्तिकायश्च षोढा। पृथिव्यादिभूतचतुष्टयं स्थावरं जङ्गमं चेति। सर्वं वस्तुजातं द्रव्यपर्य्यायात्मकमिति द्रव्यात्मना सत्त्वै-कत्वानित्यत्वाद्युपपादयन्ति पर्यायात्मना च तद्विपरीतम्। पर्य्यायाश्च द्रव्यस्यावस्थाविशेषाः। आदिपदेन सप्तभङ्गी प्रयोगो गृह्यते। यत-मानव्यतिरेकेन्द्रियवशीकारसंज्ञाप्रयोगः पातञ्जलानामिति। पात-ञ्जलाः योगानुशासनानुसारिणः ते ह्येवं वर्णयन्ति। "दृष्टानुश्रविक-विषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" इति सूत्रे यतमानव्यति-रेकेन्द्रियवशीकारसंज्ञाश्चतस्रः तत्र रागादीनां चित्तस्थानां कषायाणां विषयेष्विन्द्रियप्रवर्तकाणां पाकाय प्रयत्नो यतमानसंज्ञा वैराग्यम्। ततः पक्वाना कषायांश्चेत्कषायाणां वक्ष्यमाणभ्यो विभागावधारण व्य-तिरेकसंज्ञा वैदराग्यम्। ततः पक्वानां सर्वेषामिन्द्रियप्रवर्तनाशक्तानां मनस्यौत्सुक्यरूपेणावस्थानमेकेन्द्रियसंज्ञावैराग्यम्। स्त्रियोऽन्नं पानमित्यादिषु दृष्टेष्वानुश्राविकेषु वेदोक्तेषु स्वर्गादिदिव्यविषयेषु प्रा-प्तेषु विनाशपरितापसातिशयत्वासूयादिदोषाणामभ्यासेन साक्षा-त्काराद्वितृष्णस्योपेक्षा वशीकारसंज्ञावैराग्यमित्यर्थ इति। स्फ्य-कपालादीति। खड्गसमानाकृतिः षड्त्रिंशदङ्गुलायामः दारुवि-विशेषः स्फ्यः। पुरोडाशश्रपणकाले तदाधारभूतः पक्वघटावय-वखण्डः कपालः। आदिपदेन दशापवित्रद्रोणकलशकुशाहवनी-यचसालचत्वालादि गृह्यते। सुतेजा विश्वरूपः पृथग्वर्त्मा बहुलो रयिः प्रतिष्ठेति त्रय्यन्तविदामिति। छान्दोग्ये पञ्चमाध्याये वैश्वानरविद्यायामश्वपतिप्रश्ने औपमन्यवादीनां प्रतिवचनेष्व-

दामित्यादि । साधारणप्रयोगो यथा । महीभृल्लोहिताश्ववानित्यादि । केवलयोगमूलप्रयोगो यथा । पयःपयोधिसम्भवाकान्तपदवैशेषिकगुण उत्तरावध्योपलक्षितवस्तुसत्तावान् पूर्वान्तोपलक्षितवस्तुसत्तायोगित्वात् । दण्डादिव्यापारनिष्पाद्यावयवसंयोगासमवायिकारणद्रव्यवदित्यादि । स्वोक्तिदोषतिरस्करणश्रद्धया प्रतिवादिव्याकुलीकरणाद्यभिसन्धेर्वा सम्भवोऽस्य । सभाप्रसिद्धैर्विवक्षितासाधारणैरङ्गमितयोगै-

---

श्वपतेः पुनः प्रतिवचनेषु "एष वै सुतेजा आत्मेति द्यौः एष वै विश्वरूप आत्मेत्यादित्यः एव वै पृथग्वर्त्मेति वायुः एष वै बहुल आत्मेत्याकाशः एष वै रयिरात्मेत्यापः एष वै प्रतिष्ठात्मेति" पृथिवी चोच्यन्ते इत्यादिपदेन वैयाकरणानां टिघुभादिप्रयोगः । ज्यौतिषिकाणां क्रियतावुरिप्रभृतिप्रयोग इत्याद्यास्तत्तत्सिद्धान्तमात्रसिद्धाः प्रयोगा गृह्यन्ते । क्रियो मेषः तावुरिर्वृषभः । महीभृल्लोहिताश्ववानिति । महीभृच्छब्दस्य नृपपर्वतसाधारणत्वात् लोहिताश्वशब्दस्य रक्तवर्णानुरागादिसाधारणत्वाच्च प्रकरणादिसाचिव्याभावेनाविज्ञातार्थत्वमिति भावः ।

पयः पयोधिः क्षीरोधिस्तत्र यस्यास्तु सम्भवः ।
सा श्रीर्मुकुन्दस्तत्कान्तस्तत्पदं व्योम गृह्यते ॥
वियद्विष्णुपदं वा तु पुंसीत्येतान्निघण्टुना ।
तद्विशेषगुणः शब्द इति योगेन पक्षधीः ॥
उत्तरावधिसम्भिन्नवस्तुसत्ता ह्यनित्यता ।
पूर्वावधिमती सा तु जन्यता गृह्यते तथा ॥
साध्यतेऽनित्यता शब्दे तत्र दृष्टान्त उच्यते ।
दण्डक्रियोऽस्यावयवसंयोगसमवायिकम् ॥
द्रव्यं घटस्तद्वदिति तेन शब्दस्य नाशिता ।
प्रसाध्यते जन्यतया घटस्तत्र निदर्शनम् ॥
योगतोऽस्याभिधानं तदविज्ञातार्थमुच्यत इति ।

निरस्तग्रस्तादिदोषैः पदैर्व्यवहरेदिति सारः। प्रतिवाद्यभ्युपगमे तु प्रहेलिकाप्राया अपि व्यवहाराः प्रवर्त्तन्ते। अत एव हि दृष्टैर्महाविद्यादिरीतीनां प्रयोगोऽभ्युपगम्यत इति। प्रकृतानुपयुक्तवचनमर्थान्तरम्। यथा क्षित्यादिकं सकर्तृकं प्रमेयत्वादित्युक्त्वा स्वयमेव दूषणप्रतिभासे प्रमाणविषयः प्रमेयं तत्रत्वप्रत्ययान्तं प्रमेयत्वपदमित्यादि। एवं कुशकाशावलम्बनेन प्रकृतान्वितराजवार्तावतरणादिकमपीदृशानाम्। स्वाज्ञानसंवरणार्थं परव्यमोहनार्थं च प्रयोगसम्भवः। अन्व-

---

निरस्तग्रस्तादिदोषैरिति। परिहृतलुप्तवर्णत्वादिदोषैरित्यर्थः। "लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितम्" इत्यमरः। सारः। एवं निग्रहस्थाननिरूपणग्रन्थस्य निष्कृष्टार्थ इत्यर्थः। प्रहेलिकाग्रन्थः। सुवन्ततिङन्तादिश्लोकाः।

क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे।

परव्यामोहने वापि सोपयोगाः प्रहेलिकाः

इत्यारभ्य कर्तृकर्मादिगोपनप्रकारा बहुधा दण्डिनोपपादिताः। आचार्यैश्चित्रपद्धत्यां प्रतिभायाः परतत्वं यामाश्रयतीति श्लोकाभ्यामुदाहृता विवृताश्च तत्र पादुकासहस्रपरीक्षायामस्माभिरिति। महाविद्यादिरीतीनामिति। महाविद्यादिरीतयश्च प्रतिबन्धाद्याह्निके ऽस्माभिः प्रपञ्चितास्तत्र द्रष्टव्याः।

भङ्गीभेदातिरेकेऽपि प्राश्निकप्रतिवादिषु।

उक्तेऽप्यज्ञायमानार्थमविज्ञातार्थमुच्यत इति सङ्ग्रहः।

दूषणप्रतिभास इति। व्यभिचारज्ञान इत्यर्थः। कुशकाशावलम्बनेनेति। द्रुतनदीप्रवाहाकृष्यमाणस्य तीरस्थकुशकाशावलम्बनवत् प्रकृतानुपयुक्तराजादिस्तुतिरपि न निस्तारहेतुरिति भावः।

प्रकृतानुपयुक्तानामुक्तिरर्थान्तरं मतम्।

अयं राजा महान्गुण्य इत्यादिकमुदाहृतिः इति सङ्ग्रहः।

स्वसिद्धान्तनिर्णीतस्येत्यनेन परसिद्धान्तापेक्षया न्यूनता व्यावर्त्यते। स्वसिद्धान्तसिद्धानामपि प्रकृते अवक्तव्यानामुक्तौ

तमप्युपयुक्तमेव वदेदित्युपदेशः । वक्तव्यत्वेन स्वसिद्धान्तनिर्णीतस्यैकदेशकथनं न्यूनम् । यथा पञ्चावयववादिनो नैयायिकस्य त्र्यवयवप्रयोगः । कौमारिलादेर्द्व्यवयवप्रयोग इत्याद्यवयवन्यूनम् । वादिनः स्वपक्षसाधनमनादृत्य परपक्षं दूषयितुमिच्छतो वादन्यूनम् । सभ्यसंवरणादिकमकृत्वा स्वपक्षं साधयतः कथारम्भन्यूनम् । नचात्र विपर्यासः । तस्य क्रमत्यागात्मकत्वात् । अत्र तु क्रमिण एव त्यागात् । यदि न्यूनत्वोद्भावने पश्चात्करिष्यामीति ब्रूयात्तदास्तु विपर्यास इति । एवं यावत्संभवं विकल्पयतोऽपि सम्भावितकोट्यन्तरानुक्तौ विकल्पन्यूनत्वमाहुः । स्तम्भादलंबुद्ध्या वास्य सम्भवः । आत्मसिद्धान्तसिद्धं पूर्णं च वदेदित्यादेशः । अन्वितमुपयुक्तं पुनरु-

न्यूनतां व्यावर्तयति । वक्तव्यत्वेनेति । न चात्रेति । साध्यादिसंवरणमकृत्वा स्वपक्षसाधन इत्यर्थः । नन्वनन्तरं तस्य करणसम्भवात् कथं क्रमिणस्त्यागो निर्णीयते इत्यत आह । यदीति । आहुरित्यस्वरसोद्भावनम् । तद्बीजं तु कोट्यन्तरस्यासम्भावितत्वाध्यवसायेनैवानुक्तिसम्भवात्प्रतिवादिना कोट्यन्तरसम्भवोद्भावने तु प्रमाणान्तरेण तस्यासम्भावितत्वसमर्थनसम्भवात्तत्रापि दोषोद्भावने तस्यैव निग्राहकत्वादिति । स्तम्भादालस्यात् अलम्बुद्ध्या पर्याप्तताप्रतीत्या । आदेश इति । नियमनमित्यर्थः । एतन्निग्रहस्थाननिरूपणमिति शेषः । एवमुपदेश इत्यादिष्वपि द्रष्टव्यम् ।

वक्तव्यस्य स्वसिद्धान्तसिद्धस्यैकांशकीर्तनम् ॥
न्यूनं स्यात्तत्प्रभेदस्तु बाधावयवभेदत इति सङ्ग्रहः ।

अनन्वितस्य कथितस्यानन्वयेऽनुपयुक्तस्यार्थान्तरे पुनरुक्ते चान्तर्भावसम्भवान्न पृथक् निग्रहस्थानत्वं स्यादित्याशङ्कासाङ्कर्यप्रदर्शनायान्वितादिपदान्युक्तानि । अकृतकरणस्य अधिकस्य व्यावर्तनाय कृतकरणतयेति परसिद्धान्तरीत्या कृतकरणस्य उपनयादेर्नैयायिकोक्तौ निग्रहस्थानत्वव्यावर्तनाय

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् ( वेदान्तः ) ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । ( वेदान्तः ) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीब्रजनाथभट्टकृता ( वेदान्तः ) ... २

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्यो व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... ३

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित–योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्मामृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः ।

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्योः–प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः ।

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्म्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च ।

(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्य-व्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ४

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणिता । रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्याख्यव्याख्यया सहिता तर्कपाद । ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य बालम्भट्टाभ्यां विरचितकुञ्चिकाकलाद्वटीकाद्वयसंवलिता । १०

(४७) व्याकरणसिद्धान्तसुधानिधीः । पर्वतीय विश्वेश्वरसूरिविरचितः । ६

(४८) विरमित्रोदयः । लक्षणप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ७

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचितः । महेश्वरतीर्थ महाख्यया टीकया समलंकृतः । ६

(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ५

(५१) पूर्वमीमांसा अधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यधीरचिता परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृत । १

(५२) प्रशस्तपादभाष्यटीकासंग्रहः । तत्र कणादरहस्यम् । श्रीशंकरमिश्रविरचितम् १

(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेत २

(५४) वीरमित्रोदयः । तीर्थप्रकाशः । महामहोपाध्याय श्रीमित्रमिश्रविरचितः । ६

(५५) सांख्यसंग्रहः । तत्र सांख्यतत्त्वविवेचनम् श्रीषिमानन्द ( क्षेमेन्द्र ) विरचितम् । सांख्यतत्त्वयाथार्थ्यदीपनम् भावागणेशविरचितम् । समाससूत्रव्याख्या सर्वोपकारिणी च । १

(५६) न्यायपरिशुद्धिः । श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यप्रसादिता । श्रीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकय युता । २

पत्त्रादिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा बनारस सिटी

*September* *1919.*

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A COLLECTIONO F RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 261

# न्यायपरिशुद्धिः ।

श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यप्रसादिता ।

श्रीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकया युताः ।

वृन्दावननिवासि सर्वविद्याभूषणलक्ष्मणाचार्येण

टिप्पणीनिवेशन पुरःसरम्

संशोधिता ।

NAYÂYAPARISHUDDHI,

By

SRI VENKATNATH SRI VEDÂNTÂCHÂRYA

With a Commentary called Nyayasar,

By

SRI NIWÂSACHÂRYA,

Edited with Notes by Vidyàbhushan

Lakshmanàchàrya of Brindàban.

BENARES.

FASCICULUS III—३.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.

AGENTS: OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press, Benares.*

1918

*Price Rupee one.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२६१

१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमाग्रिमं मूल्यम्-मुद्राः७आनका ८

५ अन्यैर्देयं प्रतिस्तबकं ... ... ... ... " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति। ... ... ... ... ... ... ...

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला। गोपीनाथभट्टकृता खण्डे ... ... ... ... ... २
(२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः १२
(३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया-व्याख्यया सहितम्। सम्पूर्णम्। १०
(४) भाष्योपबृंहितं तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २
(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः १
(६) भाट्टचिन्तामणिः। महामहोपाध्यायश्रीगागाभट्टविरचिता। तर्कपादः(मीमांसा) २
(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्रविरचिता संपूर्णा (मीमांसा) ... २
(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम्। सम्पूर्णम्। (वेदान्तः) ६
(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा २
(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री६श्रीयामुनमुनिभिर्विरचितम्। सम्पूर्णम् वेदान्तः १
(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः। आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः) ४
(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः। सम्पूर्णः (न्यायः) ... ... ... ... ५
(१३) विधिरसायनम्। श्रीअप्पयदीक्षितकृतम्। सम्पूर्णम् (मीमांसा) ... २
(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। (मीमांसा) १४

क्तम्। कृतकरणतया स्वसिद्धान्तनिर्णीतमधिकम्। तत्र हेत्वधिकं यथा। धूमवत्त्वादालोकवत्त्वादित्यादि। दृष्टान्ताधिकं यथा। मठवन्महानसवदित्यादि। व्याप्त्यधिकं यथा। अन्वयव्यतिरेकयोर्द्वयोरप्यभिधानम्। तर्काधिकं यथा। एकविषयेऽनेकानिष्टप्रसञ्जनम्। दूषणाधिकं यथा। असिद्धोऽयं हेतुर्विरुद्धश्चेत्यादि। सामान्यत आदिशब्दोपादानेऽप्यधिकत्वमेव। यथा धूमवत्त्वादेर्महानसादिवदित्यादि। एवमधिकतया स्वसिद्धान्तनिर्णीतानामपि कथनं संगृहीतम्। यथा सौगतादेस्त्र्यवयवप्रयोगादि पुनरुक्तिर्वा तत्र तथैव तत्सिद्धान्तादिति। हेतुदृष्टान्तव्याप्तितर्काद्यधिकं तु वादे वस्तुतो न दूषणम्। येन केनापि तत्त्वनिर्णयाभिसन्धेः। जल्पादौ यावत्प्रतिभासमनेकाभिधाननियमे तु भूषणमपि। यावत्सम्भवमनेकाभिधानं चा सर्वज्ञेनाशक्यमिति प्रायशो न तथा नियमः संभवति। अनयोश्च न्यूनाधिकयोरुद्भावितयोरभ्युपगमे त्वपसि-

स्वसिद्धान्तेत्युक्तम्। आलोकवत्त्वादिति। धूमवत्त्वादिति हेतुना कृतस्य वह्निसाधनस्यैवानेनापि करणात्कृतकरणता द्रष्टव्या। एवमुत्तरत्रापि। ननु भाष्यादिग्रन्थेषु तत्तत्सैद्धान्तिकग्रन्थेषु चानेकहेतुकतर्काद्यभिधानदर्शनात् कथमधिकस्य दोषत्वमित्यत आह। हेत्विति। तथा च भाष्यादिग्रन्थानां वादात्मकत्वादधिकं तत्र न दोषः किं तु गुण एवेति भावः। येन केनापीति। एकस्यादुष्टत्वेऽपि अन्यस्यादुष्टत्वसम्भवादित्यभिप्रायत्वादित्यर्थः। ननु यावत्सम्भवमनेकाभिधानानियमेऽधिकस्यापि न्यूनतया दोषत्वं स्यादित्यत आह। यावत्सम्भवमिति। प्रायश इति। अतिदक्षैस्तथा नियमाङ्गीकारे प्रतिवादिना वाद्युक्ताधिकस्यापि अधिकतादेः सम्भवोपपादने न्यूनतेष्टैवेति भावः। उद्भावितयोरभ्युपगम इति। मया न्यूनमधिकं चोक्तमेव ततः को विरोध इत्युक्तावित्यर्थः। अपसिद्धान्तो वाच्य इति। जल्पवितण्डयोर्न तथा वक्तव्यमि-

द्धान्तो वाच्यः । अवयवाधिकादौ नित्यमपसिद्धान्तत्वं केचिदाहुस्तदसत् । अवयवन्यूनादावपि प्रसङ्गात् । न्यूने विरुद्धं नोक्तमिति चेन्न । अनैकान्तिकादिप्रयोगेऽप्यपसिद्धान्तप्रसङ्गात् । तत्र विरुद्धं नाभ्युपगम्यत इति चेन्नाधिकावयवप्रयोगेऽपि समत्वात् । वचनलिङ्गादिवक्तुरभिप्राय इत्यभ्युपगमः कल्प्यत इति चेन्न । परामर्शादिनापि प्रयोगसम्भवात् । पूर्वोक्तप्रसङ्गाच्च । सर्वतोमुखी साध्यसिद्धिः स्थेयसी स्यादिति संप्लवादेरधिक-

---

त्येष सिद्धान्तो विरुध्येतेति वक्तव्यम् । तेन तर्हि तन्निग्रहः स्यादित्यर्थः । जरन्नैयायिकास्तु अधिकनिग्रहस्थानस्यापसिद्धान्तानतिरेकमाहुः । तन्मतं दूषयितुमनुवदति । अवयवन्यूनतादावपि प्रसङ्गादिति । न्यूनस्याप्यपसिद्धान्तप्रसङ्गादित्यर्थः । ननु स्वसिद्धान्तविरुद्धाङ्गीकारो ह्यपसिद्धान्तः स च न्यूने नास्ति विरुद्धस्यानङ्गीकारात् परं तु स्वसिद्धान्तैकदेशत्याग एव अधिके तु स्वसिद्धान्तविरुद्धाङ्गीकारोऽस्तीति वैषम्यमाशङ्कते । न्यूने विरुद्धं नोक्तमिति चेदिति । अनैकान्तिकादिप्रयोगेऽपीति । तत्रापि स्वसिद्धान्तविरुद्धस्य व्यभिचार्य्यादिहेतोः कथनादिति भावः । तत्र विरुद्धव्यभिचार्य्यादिकथनेऽपि विरुद्धाङ्गीकरणं नास्ति अज्ञानादेव तु तत्प्रयोगः । विरुद्धाङ्गीकारे एवापसिद्धान्तः । न तु विरुद्धकथनमात्रमित्यभिप्रेत्य शङ्कते । तत्र विरुद्धं नाभ्युपगम्यत इति चेदिति । समत्वादिति । अधिकेऽपि विरुद्धाङ्गीकाराभावादिति भावः । प्रयोगसम्भवादिति । तथा च न वचनमात्रेणाभ्युपगमोऽनुमातुं शक्यते व्यभिचारादिति भावः । तदभिप्रायेण विना तद्वचनमेव न सम्भवतिचेत्तर्हि न्यूनेऽपि तदङ्गीकारानुमानसम्भवात् पूर्वोक्तप्रतिबन्धा न निर्मोक्ष इत्याह । पूर्वोक्तप्रसङ्गाच्चेति । सर्वतो मुखीति । सब्रह्मचारिभिर्वादकरणकाले निषिद्धानां बहूनां हेतुतर्काणां सर्वतो मुखसाध्यनिर्णयस्थैर्याय प्रयोगाभ्यासात् । तैः सकलवादकरणेन जातो यः संस्कारस्तस्मादधिकस्य सम्भव इत्यर्थः । आदिपदेन चित्तक्षोभपूर्वोक्तविस्मरणादि गृह्यते ।

स्योत्थानसाध्यसिद्ध्यपेक्षितमात्रसाधकमुपाददीतेति समयः। स्वोक्तिवशात् परेण शब्दतोऽर्थतो वा प्रतिपन्नस्यैव निष्प्रयोजनं वचनं पुनरुक्तम्। तद्द्विधा। अर्थपुनरुक्तमाक्षेपपुनरुक्तं चेति। प्रथमस्त्वनित्यः शब्दः विनाशी ध्वनिरित्यादि। द्वितीयस्तु विवादपदं क्षित्यादिकं सकर्तृकमित्यादि। विवादपदमिति हि धर्मनिर्देशेऽपि वादस्यानेकप्रकारत्वेऽपि साध्यविशेषनिर्देशाद्धर्मिविशेषो ऽप्यर्थसिद्ध एव। देवदत्तो गृहे ऽस्ति बहिर्नास्तीत्याद्यपि नियमकथायामेवास्य दोषत्वम्। अन्यदा विशेषप्रतीत्यर्थमुपयोगात्। अन्ये तु शब्दपुनरुक्तमित्यपि भेदमाहुः। यथा शब्दो नित्यः शब्दो नित्य इति। तदसत्। एकार्थत्वे अर्थपुनरुक्तत्वात्। भिन्नार्थत्वे त्वदोषत्वात्। भिन्नार्थोऽपि स शब्दो वाच्य इति नियमकथायामस्यावकाश इति

---

अन्वितस्योपयुक्तस्य पौनरुक्त्यमागच्छतः।
कृतकार्यतया स्वाङ्गीकृतस्योक्तिरिहाधिकम् इति सङ्ग्रहः।

सभ्यादिवाक्यवशात्प्रतिपन्नार्थस्य उक्तौ पुनरुक्तिं वारयति स्वोक्तिवशादिति। परस्याप्रतिपत्तौ पुनर्वचनस्य पुनरुक्तिं वारयति। परेणेति। आक्षेपपुनरुक्तिमपि दोषतया संगृह्णाति। अर्थतो वेति। सभ्यानुयोगेन पुनर्वचनस्य पुनरुक्तितां वारयति। निष्प्रयोजनमिति। तत्र सभ्याकाङ्क्षापूरणस्यैव प्रयोजनत्वान्न निष्प्रयोजनत्वमिति भावः। अस्येति। आक्षेपे पुनरुक्तस्येत्यर्थः। शब्दपुनरुक्तौ अर्थभेदोऽस्ति न वा अन्त्य आह। एकार्थत्व इति। आद्य आह। भिन्नार्थत्व इति। वर्णाः। व्यञ्जनानि। स्वरा अचः। आदिशब्देन तात्वादिस्थानपुनरुक्तं वृत्तपुनरुक्तमित्यादि गृह्यते। तथा नियमो लोके न दृष्टचरो दुष्करत्वादित्यत आह। तत्रापीति। वचनदोषादेरेवेति। अविज्ञातार्थत्वानन्वितत्वादेरित्यर्थः। वक्त्रनुमानादीति। पार्थिवपदार्थरूपान्यथाभावहेतुस्पर्शवत्पदार्थविशेषवानयं पर्वतः मेघपरि-

चेत् हन्त तर्हि वर्णस्वरादिपुनरुक्तमपि भेदेन पठनीयम् । तत्रापि दृष्टानां नियमसम्भवादिति । सकृदुक्तौ परेण सभ्यैर्वा यदप्रतिपन्नं तत्र तदपेक्षया पुनरभिधानं युक्तम् । तात्रापि त्रिरभिधानमित्येव नियमः । आत्मीयानवधानमतिमान्द्यादिशङ्कया तावन्मात्रस्य सभ्यै रपेक्षणोपपत्तेः । ततः परं तु वचनदोषादेरेव सभ्यैरवधारणात् न वस्तुतस्तदपेक्षा । यत्र तु प्रतिवादिना वक्रानुमानादिप्रयोगस्तत्र वचनद्राघीयस्त्ववक्रिमादिभिरेव दुरवधारार्थतया यदि भूयोऽपि सभ्याकांक्षा तदा यावत्तदाकांक्षाशमनमस्त्वभिधानम् । अत एव परिषदनुज्ञोपलक्षणं त्रिरभिधानमिति केचित् । अचातुर्यविशदीकरणाभिसंध्यादिभिरस्योत्थानम् । निष्प्रयोजनं न पुनर्वदेदिति रहस्यम् । त्रिभग्यन्तरोक्तस्य प्राश्निकविदितस्यार्थस्यानुच्चारितस्वाज्ञानेन यथोचितानुभाषणाभावो ऽननुभाषणनिग्रहस्थानमित्येके । दूषणमात्रस्यैव

---

णामहेतुपदार्थविशेषवत्त्वादित्याद्यनुमानानि वक्रानुमानानि । महाविद्यानुमानानि च । आदिपदेन रूपादिव्यवस्थाप्रतीतिहेतुर्वैकारिकपदार्थाः साधारणकारणका इन्द्रियजन्यानुभवात् इत्यादिप्रत्यक्षादिप्रयोगो गृह्यते । वचनद्राघीयस्त्वं वचनस्यातिदीर्घत्वम् । ननु तदानीं त्रिरिति नियमो भज्येतेत्यत आह । अत एवेति । यतः परिषदाकाङ्क्षाशान्तिपर्यन्तमभिधानमत एवेत्यर्थः ।

स्वोक्त्या शब्दादर्थतो वा योऽर्थोऽन्यस्य धियं गतः ।
तस्योक्तिरर्थरहिता पुनरुक्तिर्निगद्यत इति सङ्ग्रहः ।

प्राथमिकादुक्त्यनन्तरमेवाननुभाषाणस्य दोषतां व्यावर्तयति । त्रिभङ्ग्यन्तरोक्तस्येति । प्राश्निकाविदितस्याननुभाषणे न दोष इति दर्शयितुं प्राश्निकविदितस्येत्युक्तम् । स्वाज्ञानोद्भावनेनाननुभाषणेऽज्ञानमेव निग्रहस्थानं स्यादित्यसंकीर्णस्थलं दर्शयितुमनुच्चारितस्वाज्ञानेनेत्युक्तम् । अधिकन्यूनाद्यनुभा-

परतिरस्कारार्थत्वाभिमानात् अप्रतिभानाद्वास्योत्थानम् । दूष्यमंशमेव तेनैव शब्देन शब्दान्तरेण वा वदेद्यथानियमं नियमकथायामिति संग्रहः । वादिना त्रिभङ्ग्यन्तराभिहिते सभ्येष्वन्यतमेनापि विदितार्थे वचने मया न ज्ञायत इति वाद्यन्तरवचनं तस्याज्ञानम् । वैशद्याय तस्यैवार्थस्य वचनव्यक्त्यन्तरेण प्रतिपादनं युक्तमिति सूचयितुं त्रिभङ्ग्यन्तरोक्तिः । वादे तु स्वाज्ञानाविष्करणं न दोषः । अत एव यावत्प्रतिवादिबोधं तत्राभिधेयम् । परस्याविज्ञातार्थारोपहेतुत्वादार्जवादेव स्वाज्ञानाविष्करणम् । जल्पवितण्डयोः स्वाज्ञानं नाविष्कुर्यादिति संक्षेपः । कथां प्रविष्टस्य साधनदूषणाद्यप्रतिपत्तिरप्रतिभा ।

---

षणानामननुभाषणत्वेन सङ्ग्रहाय यथोचितपदम् । एक इत्यस्वरसोद्भावनम् । तद्बीजतं तु एवं सति न्यूनाननुभाषणस्यापि न्यूनाख्यनिग्रहस्थानतैव स्याद्यदि वक्तव्यत्वेन स्वसिद्धान्तसिद्धैकदेशकथनरूपत्वाभावान्न न्यूनान्तर्भावस्तदा वक्तव्यत्वेन स्वसिद्धान्तनिर्णीतार्थापेक्षयाधिक्यस्याभावान्नाधिकान्तर्भाव इति पश्यतु भवानिति ।

त्रिरुक्त्या सभ्यविदितस्यानुक्तस्याप्रतीतिना ।
योग्यानुवादाभावोऽननुभाषणमिहोच्यत इति सङ्ग्रहः ।

प्राथमिकाद्यभिधानेऽज्ञानस्यादोषतां दर्शयितुं त्रिभङ्ग्यन्तराभिहित इत्युक्तम् । सभ्यानामप्यज्ञाने वाद्यज्ञानस्यादोषतां दर्शयितुं सभ्येष्वित्यादि । अप्रतिभाव्यावृत्त्यर्थं मया न ज्ञायत इति वचनपर्यन्तत्वमुक्तम् । जैत्रव्यावृत्त्यर्थमाह । वाद्यन्तरेति । भङ्ग्यन्तरपदस्य प्रयोजनं स्वयमेव दर्शयति । वैशद्यायेति। सङ्क्षेप इति । विस्तरतः कृतस्याज्ञाननिग्रहस्थाननिरूपणस्येति गम्यते । एवं सङ्ग्रह इत्याद्युक्तावपि द्रष्टव्यम् ।

त्रिरुक्तेऽर्थे सदस्येषु केनापि विदिते सति ।
न मया ज्ञायत इति वचो ऽज्ञानमिदं कृतम् इति सङ्ग्रहः ।

एतद्वाक्यप्रयोक्तुरित्यर्थः । गन्तुरुदासीनस्य व्यावृत्त्यर्थमाह ।

उत्तरस्याप्रतिपत्तिरप्रतिभेति प्राचामुपदेशः साधनाप्रतिपत्तेरप्युपलक्षणार्थः विशेषाभावात् । अस्य प्रथमपर्वण्यपि सम्भवात् । अनुभाषितेऽप्युत्तराभावस्याप्यवचनोपपत्तेरननुभाषणादेर्भेदः । गगनसूचनभूतलविलेखनकेशविरचनसाध्वसखेदादीनामप्येतन्निग्रहस्थानभेदत्वं केचिदाहुः । तदयुक्तम् । सदभिधानदशायां तेषां विद्यमानानामप्यनिग्रहत्वादसदभिधानदशायां च तयोरेव दूषणत्वात् । तत्तद्वर्जननियमकथायां तु तेषां भवत्येव निग्रहस्थानता । तथा चा-

---

कथां प्रविष्टस्येति । "उत्तरस्याप्रतिपत्तिरप्रतिभा" इति गौतमसूत्रस्य साधनाप्रतिपत्त्यव्यापकतां परिहरति । उत्तरस्येति । ननु साधनस्याप्युत्तरत्वं न विहन्यते तस्य पूर्वकक्षापेक्षया उत्तरत्वसम्भवादित्यत आह । अस्य प्रथमपर्वण्यपि सम्भवादिति । कथामभ्युपगम्य सभाक्षोभादिना तूष्णीकस्याप्यप्रतिभानिग्राह्यत्वात्तत्रोत्तराप्रतिपत्तेरभावादिति भावः । ननु तर्ह्यननुभाषणादस्य को भेद इत्यत आह । अनुभाषितेऽपीति । उत्तराभावस्यापीति । उत्तराभासवचने उत्तरदोषस्यैवोद्भाव्यतया अप्रतिभाया अभावादिति भावः । केशविरचनम् । शिखासमीकरणबन्धनादि । साध्वसपदेन वेपथुर्गृह्यते । भयस्यान्तर्धर्मत्वेनाप्रत्यक्षत्वात् । आदिपदेनोक्तिस्खलनवस्त्रयज्ञोपवीतादिसमीकरणम् । पिपीलिकादिदंशवेदनाभिनयनतदपनयनयत्नादयो गृह्यन्ते । अदुष्टाभिधानदशायामुद्भवतां गगनसूचनादीनां दोषतयोद्भावनमुच्यते उक्तव्यभिचारोक्तहान्यादि दुष्टाभिधानदशायां वा आहोस्विदवचनदशायाम् । आद्य आह । सदभिधानदशायामिति । अन्त्ययोराह । असदभिधानेत्यादि । तयोरिति । व्यभिचारादेरवचनस्य चेत्यर्थः । ननु तर्हि गगनसूचनादेरप्रतिभायामन्तर्भावादस्मदुक्तेन विरोध इत्यत आह । तथा चेति । अन्यत्रेति । उक्तविरोध इत्यर्थः । प्रत्युतावचनसमकालभाविनो गगनसूचना-

न्यत्रैव तेषामन्तर्भावः। अवचनसमकालभाविनस्त्वेते केवला-प्रतिभामूलव्यथालिङ्गत्वादनृशंसबुद्धीनां प्रतिभानिग्रहस्थानाभि-योगं निरुन्धते। तैरेव च सभ्यानां तत्पराजयसंमतेः। तदहङ्कार-खण्डनं च तैरेव प्रदर्शितैः। वचनावसरे वादी तूष्णीको न भवेदिति मर्यादा। अप्रतिभामहेतुरनेकविधो द्रष्टव्यः। क-थामवगाह्यैतद्विच्छेदमिच्छतो ऽनावश्यकापसरणव्याजवचनं वि-क्षेपः। महदिदानीं मे कृत्यमतिवर्तत इत्यादि। आवश्यका-नां तु लौकिकवैदिकानामनलीकानां विच्छेदाभिसन्धिलिङ्ग-त्वाभावादनिग्रहत्वम्। यथा युयुत्सूनामेव मध्ये विश्रमार्थं निवृ-त्तिः। व्याजमभिधायापि कथाकरणे तु नैतन्निग्रहस्थानं

---

दयस्तदातनाः प्रतिभाया अप्युद्भावनं निरुन्धत इत्याह। अवच-नसमकालभाविनस्त्विति। अनृशंसबुद्धीनामिति। अवचनेन ग-गनसूचनादिना च सभ्यैरवगते प्रतिपक्षिपराजये तान् प्रति बो-धनार्थमप्रतिभोद्भावनं प्रति तस्योपरि प्रहारवन्नैर्घृण्यमेवावहेदिति भावः। कथं तर्हि सभ्यानां तत्पराजयव्यक्तिरित्यत आह। तैरेवेति। गगनसूचनादिभिरेवेत्यर्थः। पराहङ्कारखण्डनार्थं सोद्भाव्ये-त्यत आह। तदहङ्कारखण्डनं च तैरेव प्रदर्शितैरिति। तैरिति सभ्या उच्यन्ते। अनेकविध इति। बहुधा परिश्रममतिमान्द्यसभादर्श-नजनितमनःक्षोभपराजयभीत्यादिभिरित्यर्थः।

यदाङ्गीकृतवादः सन् कथनाय न कल्पते।
अतिप्रतीत्यादयोद्भाव्या सेयमप्रतिभा मता इति सङ्ग्रहः।

कथायामप्रवेशदशायां विक्षेपस्य दोषताव्यावर्तनाय कथाम-वगाह्येत्युक्तम्। अनावश्यकपदकृत्यं दर्शयति। आवश्यकानां त्वि-ति। लौकिकास्ताम्बूलोद्गिरणमूत्रोत्सरणाद्यवस्था व्यापाराः वै-दिकाः सन्ध्यावन्दनदेवसेवाद्याः। अनलीकानामिति। वास्तवि-कानामित्यर्थः। अलीकानां तेषां वचनस्यापसरणाभिप्रायलिङ्ग-त्वान्निग्रहस्थानत्वमेवेति भावः। तद्विच्छेदमिच्छत इत्यस्य कृत्यं दर्शयति। व्याजमभिधायापीति। तर्हि तदुक्तेरर्थान्तरता स्या-

विच्छेदार्थत्वाभावात् । तदानीं तदभिधानस्य प्रकृतानुपयोगादर्थान्तरत्वं तु तत्र स्यादेव । अपजयादेरपसरणसम्भवः । वाक्शूरगर्हितवादाहवादपसरणं न कुर्यादिति समयः । स्वदोषमभ्युपेत्य परदोषप्रसञ्जनं मतानुज्ञा । यथा त्वद्वचनं दुष्टमित्युक्ते तवापि वचनं दुष्टमित्यादि । त्वं चोर इत्युक्ते त्वमपि चोर इतिवत् । अत्र परदोषे सत्यपि हि स्वदोषाभ्युपगमोऽनुचित एवेति तेनांशेन निग्रहवत्त्वं न तु परदोषाभिधानांशेन । तर्हि तस्यांशस्य किमर्थं लक्षणे निवेश इति चेत् न स्वदोषमभ्युपेत्य तूष्णीकस्याप्रतिभाग्रस्ततया निग्रहान्तरकृत्याभावात् । अतूष्णीकस्य तु प्रतिभावतोऽप्यनेनैव निवर्तनीयत्वादिति । प्रतिवन्द्या हि प्रायेण समीकरणाशया मतानुज्ञोदयः । परापादितदोषानभ्युपगमेन तदुद्धारेणैव वा परपक्षे दोषं ब्रूयादिति शासनम् । अवश्योद्भाव्यस्य निग्रह-

---

दित्याशङ्क्येष्टापत्त्या परिहरति । तदानीमिति ।

वादाहवावतीर्णस्तद्विच्छेदेच्छावशाद्यदि ।
आवश्यकेतरद्ब्रूयात्तदा विक्षेपसम्भव इति सङ्ग्रहः ॥
वादस्थस्तद्रूपविच्छेदादनावश्यकमेव चेत् ।
वदेत्पलायने व्याजं तदा विक्षेपसम्भव इति ॥

वादविच्छेदाद्विच्छेदमुद्दिश्येति ल्यब्लोपे पञ्चमी । ननु परदोषोद्भावनस्य गुणतया कथमस्य दोषत्वमित्यत आह । अत्रेति ।

स्वदोषमभ्युपेत्यैव परदोषप्रसञ्जनम् ।
मतानुज्ञा स्वदोषाङ्गीकारांशेनेह दूषणम् इति सङ्ग्रहः ।

अवश्योद्भाव्यस्येत्यनेनापर्यनुयोज्योपेक्षणं व्यावर्त्यते । तस्योद्भावने तु स्वदोषप्रकाशप्रसङ्गेन तदुपेक्षणस्यैवोचितत्वात् । अवसरेऽपीति । अनवसरे तदुद्भावनस्य निरनुयोज्यानुयोगत्वप्रसङ्गेन तदा तदुपेक्षणस्यैव गुणत्वात्तदवसरेऽप्युपेक्षणं दोष इति भावः । ननु न तावदिदं वादिनोद्भाव्यं पर्यनुयोज्यं मामुपेक्षितवानिति स्वयमेव

स्थानस्यावसरेऽप्यनुद्भावनं पर्यनुयोज्योपेक्षणम् । एतत् सदस्योद्भाव्यमित्येके । एतत्परीक्षार्थमसदेव मयोक्तं तदप्यनेन मन्दमतिना न विदितमिति स्वेनापि सावष्टम्भेनोद्भाव्यमित्यपरे । सदस्यप्रतियोगिकपराजयाभावात् वादिनश्च पाक्षिकापजयहेतौ बुद्धिपूर्वप्रवृत्त्ययोगात् स्वदोषोद्भावनेन परनिरसनस्य च पतितं मामयं न जानातीति दोषास्पृष्ट्यन्तरोद्भावनवदपरिहास्यत्वादनिग्रहस्थानमेवेदमित्यन्ये । इदमत्र तत्त्वम् । जल्पवितण्डयोर्नैतत् सर्वदा निग्रहस्थानम् केवलं सभ्यानुविधेयानामुभयमतिमान्द्यनिरूपणायोपयुक्तम् । षट्पक्षीसहनसमनन्तरोद्भावनं तु निग्रहस्थानान्तरस्यापि तुल्यम् । वादे तु

---

स्वदोषोद्भावनानौचित्यात् । नापि प्रतिवादिना स्वयमेव स्वस्य निग्रहायोगात् । नापि च सभ्यैः सभ्यानां विजिगीषाभावेन तैस्तदुद्भावनायोगादित्यत्र स्वयमेव निर्णयं वक्ष्यन्नैयायिकैकदेशिनां मतान्याह । एतदित्यादिना । पूर्वोक्तमतद्वयोपमर्दपूर्वकं मतान्तरमाह । सदस्येति । पाक्षिकेति । स्वदोषस्य परेणाज्ञातत्वे पराजयस्यैव प्रसङ्गेन विजयस्यैकान्तत्वाभावादिति भावः । पतितमिति । पातकिनमित्यर्थः । स्पृष्ट्यन्तरोद्भावनवदिति । परेण तात्कालिकपतितसंसर्गरूपस्पृष्ट्यामापादितायामपि नैसर्गिकं पातित्यमयं न जानातीति स्वस्मिन्नैसर्गिकपातित्यरूपस्पृष्ट्यन्तरोद्भावनवदित्यर्थः । ननु षट्पक्षीसहनानन्तरं जल्पवितण्डयोरपि सभ्यैरुद्भावयितुं शक्यत्वात्तयोरप्येतस्य निग्रहस्थानत्वमस्त्वित्यत आह । षट्पक्षीति । षट्पक्षीसहनप्रकारश्चोत्तरत्र वक्ष्यते । तुल्यमिति । तथा च निग्रहस्थानान्तरस्योद्भाव्यत्वसम्भवेन नैतस्य तत्र निग्रहस्थानत्वमसङ्कीर्णस्थलाभावादिति भावः । वादे त्वेतस्य निग्रहस्थानत्वमस्ति समस्ति च सर्वैरुद्भाव्यत्वमित्याह । वादे त्विति । ननु पर्य्यनुयोज्योपेक्षणस्य तन्मात्रसम्भवदशायामुद्भावनस्य स्वदोषावहत्वेन दोषत्वेऽपि नि-

सभ्यैः स्वेन च यथाज्ञानमुद्भाव्यम् उभयथापि तत्त्वनिर्णयोपयोगात् । तादर्थ्येन च स्वदोषोद्भावनस्याप्यदोषत्वात् । अस्य चानेकनिग्रहस्थानसन्निपातेऽन्यतममुद्भावयतोऽन्यतमानुद्भावनेऽपि न दोषत्वम् । सर्वोद्भावननियमे त्वन्यतमोद्भावनेऽपि नियमभङ्गेऽन्तर्भावः । तदा तु जल्पवितण्डयोः स्वेनाप्युद्भावनीयम् परस्य निग्रहस्थानद्वयापत्तेः । तदनुद्भावनेन नियमभङ्गाभियोगस्याशक्यत्वाच्च । एवमन्यत्रापि परस्य निग्रहस्थानद्वयापत्तिदशायां स्वस्यावष्टम्भेन विजयावहत्वान्निग्रहस्थानान्तरोपसर्जनतयेदमुद्भाव्यमस्तु पिहितस्वच्छिद्रोऽपि परच्छिद्रं नोपेक्षेतेति नीतिरि-

ग्रहान्तरसंन्निपातदशायामनुद्भावनेऽन्यतममुद्भाव्यान्यतममनुद्भावयतः स्वस्य पर्य्यनुयोज्योपेक्षणस्य दोषत्वप्रसङ्गेनावश्यमुद्भाव्यत्वाज्जल्पवितण्डयोरपि निग्रहस्थानत्वं स्यादित्यत आह। अस्य चानेकनिग्रहसन्निपात इति । न दोषत्वमिति । उद्भावितेन पर्य्युनुयोज्योपेक्षणव्यतिरिक्तेनैकेनैव परस्य पराजयसिद्धेः कृतकरत्वेनास्यानुद्भावनं न दोषाय प्रत्युत तदुद्भावनमधिकतया दोष एवेति भावः । सम्भावितसर्वोद्भावननियमाङ्गीकारे तस्यानुद्भावनं स्वस्य पर्य्यनुयोज्योपेक्षणं स्यादित्युभयथापि तस्य निग्रहस्थानत्वमवर्जनीयमित्यत आह । सर्वोद्भावननियमे त्विति । तदा स्वस्य नियमभङ्ग एव तु दोषः । नतु पर्य्यनुयोज्योपेक्षणमिति भावः । ननु तदा स्वस्य नियमभङ्गपरिहारार्थं पर्य्यनुयोज्योपेक्षणमुद्भाव्यमेव स्यादित्याशङ्क्येष्टापत्त्या परिहरति । तदा त्विति । स्वदोषोद्भावनं स्वापकर्षमावहेदित्यत्राह । परस्येति । स्वदोषप्रकाशनभयेन तदनुद्भावने तु नियमभङ्गाक्षेपो ऽशक्यपरिहारः स्यादित्याह । तदनुद्भावनेनेति । अशक्यत्वादिति । परिहर्तुमिति शेषः । अन्यत्रापीति । सम्भावितसर्वनिग्रहोद्भावननियमरहितयोर्जल्पवितण्डयोरपीत्यर्थः । एतन्निग्रहस्थाननिरूपणेन

ति । क्षुद्रस्खलितत्वभ्रमादेरुपेक्षासंभवः ।

इतिश्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतौ न्यायपरिशुद्धावनुमानाध्याये द्वितीयं प्रयोगाद्याह्निकम् ॥ २ ॥ २ ॥



तन्निग्रहस्थानाभावे तन्निग्रहस्थानाभियोगो निरनुयोज्यानुयो-

तात्पर्यतः प्रदर्शितमर्थमाह । पिहितस्वाच्छिद्रोऽपीति । क्षुद्रस्खलितत्वभ्रमादेरिति । स्वल्पदोषत्वभ्रमादेरित्यर्थः । आदिपदेनानवधाननिग्रहनिरूपणापरिज्ञानादिकं गृह्यते ।

अवश्योद्भावनीयस्यावसरे सत्युपेक्षणम् ।
तज्ज्ञः पर्य्यनुयोज्योपेक्षणमित्याभिधीयत इति सङ्ग्रहः ॥

इति श्रीमद्वेदान्ताचार्य्यचरणारविन्दानुलब्धानविशदप्रबोधेन भारद्वाजकुलजलधिकौस्तुभश्रीदेवराजाचार्य्यसूनुना श्रीनिवासदासेन विरचितायां न्यायपरिशुद्धिव्याख्यायां न्यायसारसमाख्यायामनुमानाध्याये द्वितीयं प्रयोगाद्याह्निकम् २ । २ ।

श्रीमते रामानुजाय नमः ।

यदनुग्रहेण नृहरेर्निग्रहविषयाः परिग्रहं यान्ति ।
तस्य कवितार्किकहरेः करुणानिरवग्रहास्तु मयि ॥ १ ॥
प्रवृत्ता भक्तिश्चेद्भवति परमाचार्यपदयो
र्वयं तद्भक्तत्वाद्बहुमतिपदं वा यदि मताः ।
तदा दोषादर्शिप्रणयरससारेण मनसा
परिग्राह्येयं स्यात् कृतिरनघभावात्सुमनसः ॥ २ ॥
उक्तस्य हानिरुक्ताविशेषणमुक्तापलाप उक्तविरोधः ।
अपसिद्धान्तो ऽवाचकमनन्वितमप्राप्तकालभिन्नमपि ॥ ३ ॥

गः। एतदेव सर्वमसदुत्तरम्। उत्तररूपतया सर्वस्य च निरनुयो-ज्यानुयोगभेदस्य द्वितीयादिकक्षास्ववसरस्तदनन्तरकक्षायामेवो-द्भावनम्। तद्द्विविधम्। दूषणव्याप्तमप्यसिद्धं सिद्धमपि दूषण-व्याप्तिरहितं चेति । पूर्वमपि द्विधा । सिद्धदूष्यं कल्पितदूष्यं चेति। सिद्धदूष्यमपि द्विधा । अनवसरग्रहणं निग्रहस्थाना-भासवचनं चेति । तत्रानवसरग्रहणं यथा । चतुर्थकक्षायां स्थितः प्रतिवादी वदति प्रथमकक्षायां त्वयापशब्दितमिति । यद्वा। सन्तमसन्तं वा कश्चिदनैकान्त्यादिदोषमुद्भाव्य स्वयमेवा-

---

अज्ञातार्थकमर्थान्तरमूनमर्थादिकं पुनः कथितम्।
अननूदितमज्ञातं प्रतिभावितं रहश्च विक्षेपः ॥ ४ ॥
मतान्युज्ञा पर्यनुयोज्योपेक्षणमननुयोज्यपृच्छा च ।
मानाभासाश्च तथा प्रत्येकं भवति निग्रहस्थानम् ॥ ५ ॥
एतान्यासन्नविंशानि समासात्कथितानि तु प्रत्येकम्।
निग्रहस्थानान्याहुर्बहुविधान्यपीति संक्षेपः ॥ ६ ॥
यत्पादाश्रयधन्येषु चातिचिन्ता निषिध्यते ।
तं नत्वा निगमान्तार्यं व्याकुर्वे जातिरूपणम् ॥ ७ ॥

तन्निग्रहस्थानाभाव इति । एतत्सदुत्तररूपनिग्रहस्थानाभियो-गवारणाय । अभियोग आक्षेपः। निरनुयोज्यः। अप्रष्टव्यः। तस्या-नुयोगः प्रश्न इति। असदुत्तरेष्वन्वर्थसंज्ञामुखेन लक्षणमाह। नि-रनुयोज्यानुयोग इति ।एतदेवेति । असदुत्तरमिति विधेयापे-क्षया नपुंसकत्वम्। अत्रोक्तविभागपर्यालोचनया अनवसरग्रहणं नि-ग्रहस्थानाभासवचनं कल्पितदूष्यं दूषणव्याप्तिरहितमिति च-तुर्द्धा असदुत्तरप्रकाराः पर्य्यवसिताः । तत्राद्यास्त्रयो दूषणव्या-प्तिमन्तोऽप्यसिद्धाः । चतुर्थस्तु दूषणव्याप्तिरहितः सिद्धः इति विवेकः। तत्र प्रथममुदाहरति । अनवसरग्रहणं यथेति। सन्तमिति । सद्दोषाभिधानेऽपि परोक्तस्य विशेषणस्य त्यागस्य वावलम्बनेन उक्तविशेषणत्वोक्तहान्योरभिधाने सदुत्तरत्वं परा-नुक्तयोरेतयोः स्वयमेव प्रथममभिधानेऽसदुत्तरत्वमेव । उक्तमव-

ह यदि हेतुं विशेषयिष्यसि तदा हेत्वन्तरेण निगृहीतोऽसि । यदि त्यक्ष्यसि तदोक्तहान्यैव इत्यादि । वादे तु हेत्वाभासादिकं तत्त्वनिर्णयपरिपन्थित्वादतिक्रान्तकालमप्युद्भाव्यम् । अन्यथा तन्मूलचिन्तासन्ततेर्निष्फलपरिश्रमत्वप्रसङ्गादिति । नचानवसरग्रहणस्य विपर्यस्तेऽन्तर्भावः शङ्क्यः अवश्यंभाविनियतक्रमविषयत्वाद्विपर्यासस्य । अनवसरे क्रियमाणस्य ग्रहणस्य त्ववश्यंभावित्वाभावात् तस्यैव तत्पूर्ववाक्यस्य चाकांक्षादिक्रमनियामकाभावाच्च । यदा चासतो दोषस्यानवसरे प्रतिपादनं तदा तु व्यक्त एवास्यावश्यंभावित्वाभावः । नन्वसिद्धत्वे सति दूषणव्याप्तस्यासदुत्तरस्य विभागोऽयमुदाह्रियते । अत्र च सतो दोषस्यानवसरोद्भावने तस्य स्वपर्वणि सिद्धत्वात् कथमसिद्धत्वम् । उच्यते अतिक्रान्तस्यैष्यतो वा पर्वणस्त-

---

लभ्य दूषणमुद्भाव्यं तच्च तस्यामेव कक्षायां कक्षान्तरे तु उपस्थितमुपेक्ष्यमवेति रहस्यम । हेत्वन्तरेणेति । उक्तविशेषणेनेत्यर्थः । अतिक्रान्तकालोद्भावनस्य जल्पवितण्डयोरेव दोषत्वं न वादे इति व्यवस्थां दर्शयति । वादे त्विति । विपर्य्यस्त इति । विवक्षितक्रमविपर्य्यस्तकरणरूपेऽप्राप्तकाल इत्यर्थः । तत्र हि वादारम्भविपर्य्यासावयवविपर्य्यासादिषु अवश्यभाविनोः क्रमनैयत्यविपर्य्यासो ऽप्राप्तकालत्वेन विवक्षितः प्रकृते चानवसरे क्रियमाणस्य निग्रहणस्य नावश्यंभाविता अग्रहणस्यापि सम्भवात् । अतो न तत्रान्तर्भाव इत्याशयेन परिहरति । अवश्यंभावीति । किंच तत्रावयवेषु क्रमनियामिकापरत्र पूर्वाकाङ्क्षास्तीति क्रमस्यावश्यकत्वात्तद्विपर्य्यासो दोष इति । इह त्वनवसरग्रहणविषयस्य निग्रहस्य तत्पूर्ववाक्यस्य चाकाङ्क्षाभावात् क्रमस्य निर्मूलत्वेन क्रमविपर्य्यासस्यैवाभावात् । अस्य पृथगेव दोषत्वं वाच्यमित्यभिप्रायेणाह । तस्येति । व्यक्त एवेति । असतो दोषस्यानवसरे उद्भावनमूह्यं तर्कितं क्वाचित्कश्चेति भावः । स्वपर्वणीति । स्वो-

दानीमदूष्यत्वात् । स्वपर्वणि सिद्धस्यापि दूष्यतयासन्निहिते तदानींतने पर्वण्यसिद्धत्वाद्युक्त एवायं विभागः । असतस्तु दोषस्यानवसरोद्भावितस्य स्वपर्वण्यप्यसिद्धिर्विशेष इति । निग्रहस्थानाभासवचनमपि बहुविधम् । तन्निग्रहस्थानाभावे तदारोपणं, निग्रहस्थानान्तरे तदन्यनिग्रहस्थानवचनं, स्वसमये निग्रहस्थानत्वेनापरिसंख्यातस्य निग्रहस्थानतया प्रसञ्जनम्, क्षन्तव्यतयाभ्युपगतस्योद्भावनमित्यादि । तत्राद्यं यथा । सम्भावितानेककल्पसाधारणोक्तौ विकल्पितायां विवक्षितविकल्पत्यागेनोक्तहानिः । प्रकरणाद्यापन्नस्य स्वयमेव पूर्वोक्तस्य वा विशेषणस्य प्रकाशनेनोक्तविशेषणं पार्श्वस्थाद्युक्तस्यारोपितस्य वानभ्युपगमेनोक्तापलापः । एवमुत्तरेष्वपि भाव्यम् । द्वितीयं यथा । हा-

---

त्पत्तिहेतुभूतायां कक्षायामित्यर्थः । तदानीमदूष्यत्वादिति । असन्निहितत्वादिति भावः । अत एवाह । असन्निहित इति । एतच्च सतो दोषस्यानवसरग्रहणेऽसिद्धतोपपादनं नासतो दोषस्यानवसरग्रहणे तस्य स्वपर्वण्यप्यसिद्धत्वादित्याह । असतस्त्विति । उद्भावनमित्यादीत्यादिपदेनासत्येव तस्मिन् निग्रहस्थाने तदुद्भावनं गृह्यते । साधारणोक्ताविति । वादिन इति शेषः । विकल्पितायामिति । प्रतिवादिनेति शेषः । विवक्षितविकल्पत्यागेनेति । वादिन इत्येतदनुषज्यते । प्रकरणादीत्यादिपदेनार्थलिङ्गौचित्यानि गृह्यन्ते । एवमुत्तरेष्वपि भाव्यमिति । वार्त्तिककाराद्येकदेशतीर्थकरानुसारेणापसिद्धान्तः । अपवादशास्त्रानुसारेण शब्दप्रयोगेणावाचकम् । स्वयमन्वयाप्रतिसन्धानेनानन्वितम् । स्वस्यानवधानेन विपर्यासभ्रमेणाप्राप्तकालम् । आत्मनः परिषदेकदेशस्य वानवबोधेनाविज्ञातार्थकम् । प्रस्तुतानुगुणस्याप्यापाततयानध्यवसायेनार्थान्तरम् । स्वस्यान्यव्यासङ्गादश्रवणेन न्यूनम् । पार्श्वस्थाद्युक्तेन हेत्वादिनाप्यधिकम् । श्रुतिसामान्यमात्रेण पुनरुक्तम् । तदप्रसिद्धप-

न्यादावपलापादि छले जातिर्जातौ छलं तदवान्तरविशेषेष्व-पि विशेषान्तरवचनमित्यादि । तृतीयं यथा । कण्डूयन-केशविरचनताम्बूलचर्वणादिभिर्निगृहीतोऽसीति । चतुर्थं यथा । तत्त्वनिर्णयाविरोधिनामुक्तविशेषणमतानुज्ञादीनां वादे प्रकाशनम् । जल्पवितण्डयोश्च नियमविशेषवशादनुद्भावनीयानामुद्भावनम् । तत्र च नियमभङ्गसध्रीचीनमिति विशेष इति । यत्तत्कल्पि-तदूष्यमसदुत्तरं तच्छलम् । वक्तुरविवक्षितमर्थमारोप्य तद्दूषणं छलमित्यर्थः । ननु साधनवाक्येऽपि छलं संभवति । तथाहि

---

दैरनुवादेऽननुभाषणम् । अवबोधितायां परिषदि स्वावष्टम्भमात्रेणा-ज्ञानम् । उत्तरं वदतोऽपि वचनान्तरापेक्षणेनाप्रतिभा । आवश्यक-कार्येण विक्षेपः । सिद्धसाधनेन मतानुज्ञा । स्वदोषोद्भावनेन पर्य्य-नुयोज्योपेक्षणम् । अच्छलजात्योः छलजात्युद्भावनेन निरनुयो-ज्यानुयोग इत्यादिः प्रकार एवंशब्दार्थः । तदवान्तरविशेषे-ष्विति । उक्तहान्यादिनिग्रहस्थानानां छलजात्योश्चावान्तरवि-शेषेषु प्रतिज्ञाहानिवाक्छलप्रतिप्रमाणसमादिष्वित्यर्थः । विशेषान्त-रवचनमिति । हेतुहान्युपचारच्छलप्रतितर्कसमादिवचनमित्यर्थः । ताम्बूलचर्वणादिभिरिति । तेषामावश्यकत्वेन निग्रहस्थानत्वेनाप-रिसंख्यातत्वादिति भावः । ननु नियमविशेषवशादनुद्भावनी-यत्वेनोभयवादिसम्मतानामुद्भावने नियमविरह एव दोषः स्या-दित्यत आह । तत्र चेति । तथा च दोषान्तरसत्त्वेऽप्येतस्य निरनुयोज्यानुयोगस्य दोषत्वं नापैति किंतु तत्र दोषाधिक्यमे-व स्यादिति भावः । पार्श्वस्थाद्युक्तस्य वाद्युक्ततयारोपितस्यान-भ्युपगमेन प्रयुक्ते ऽपलापाभासेऽतिव्याप्तेः कल्पितदूष्यमसदुत्तरं छलमिति च्छललक्षणं दुष्टमित्यतस्तदर्थमाह । वक्तुरिति । उक्ता-पलापाभासे तु वचनमेव वादिन्यारोप्यते न तु वक्तुरविवक्षि-तार्थ इति नातिव्याप्तिरिति भावः । साधनेऽपि छलसम्भवा-दुत्तरपदघटितलक्षणं तत्राव्याप्तमित्याशयेनाक्षिपति । नन्विति । पाथः पार्थिवमिति प्रतिज्ञायामसाङ्गत्यं वारयितुं भूतचतुष्टयैक-

भूतचतुष्टयैकद्रव्यत्ववादी जैनः प्राह । पाथः पार्थिवं पयस्त्वात् । यत् पयस्तत्पार्थिवं यथा क्षीरमिति । पशुः स्वर्गसाधनं न भवति सत्त्वात् यत् स्वर्गसाधनं तत् सत्त्वहीनं यथा हविरन्तरमिति । अत्र पयःशब्दसत्त्वशब्दयोः स्वयमेवार्थान्तरकल्पनायुक्तं छलत्वम् । यथा जातित्वं महाविद्यादौ साधनेऽपि कैश्चिदुच्यते तथा स्ववाक्यस्थशब्दस्यापि स्वयमेव वृत्त्यन्तरकल्पनेन प्रयोगाच्छलत्वं सिद्धम् । नचात्र पयः सत्त्वादिशब्दार्थविकल्पेनासिद्धिसाधनविकलत्वादिदूषणसंभवे किं छलत्वोक्त्येति वाच्यम् । नवकम्बलादिच्छलेऽपि नूतनत्वसंख्याविशेषविकल्पेन प्रत्यक्षविरोधप्रस्तुतासङ्गतत्वादिदूष-

---

द्रव्यत्ववादी जैन इति वादिविशेषोपादानम् । पयस्त्वादिति । नीरक्षीरयोः पयः शब्दवाच्यत्वान्नीरत्वमादाय पक्षे हेतुसत्ता क्षीरत्वमादाय दृष्टान्ते हेतुसत्ता चोपपादनीया । एकशब्दवाच्यत्वात्तयोरेकत्वमित्यभिमानः । सत्त्वादिति । सतो भावः सत्त्वमिति सत्त्वशब्दवाच्यं विद्यमानत्वं हेतुः । पक्षधर्मत्वं तत्सत्त्वहीनमित्यत्र सत्त्वशब्देन प्राणा विवक्षिताः तदभावो दृष्टान्तवर्ती पूर्ववदैक्याभिमानः।

सन् प्रशस्ते विद्यमाने इति । द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुष्विति च नैघण्टुकाः

पयः सत्त्वादिशब्दार्थविकल्पेनेति । पयः शब्देन क्षीरत्वं विवक्षितं वा नीरत्वं विवक्षितं वेति विकल्प्य आद्ये ऽसिद्धिः पाथसि पक्षे क्षीरत्वाभावात् । अन्त्ये दृष्टान्तस्य साधनविकलतेत्यादिदूषणसम्भवात् न छलस्य तत्र दोषत्वमिति भावः । आदिपदेनानुक्तोदाहरणान्तरसम्भावितदूषणपरिग्रहः । नूतनत्वसंख्याविशेषविकल्पेनेति । नवकम्बलोऽयमित्यत्रापि नवशब्देन नूतनत्वं विवक्षितं दूष्यते वा अविवक्षितसंख्याविशेषो दूष्यते वा । आद्ये नूतनत्वस्य प्रत्यक्षसिद्धत्वात्तेन विरोधः । अन्त्ये प्रस्तुतासङ्गतत्वमिति

णप्रसङ्गस्य तुल्यत्वादिति । सत्यं निरनुयोज्यानुयोगभेदभूतोत्तररूपच्छलविवक्षयात्र लक्षणमिति न विरोधः । अथवा संख्याविशेषरूपार्थस्य वक्तुर्विवक्षितत्वं प्रकाश्य तत्कथनद्वारैव प्रकृतासङ्गतिर्वाच्या । तत्र चाविवक्षितार्थविषयत्वं वचनस्वभावादेव व्यक्तम् । पयस्त्वादिहेतावुभयत्र विवक्षान्तरसद्भावे प्रमाणाभावाद्विकल्पमुखेनैव दूषणं साधीयः । पयःशब्दवाच्यत्वमात्रविवक्षायां न छलत्वम् । यदि तु वृत्तिद्वयविवक्षां स्वयमेवोद्भाव्य हेत्वसिद्धिं साधनविकलतां च परिजिहीर्षति तदापि साधकतयोपन्यस्तहेतोर्दृष्टान्तेऽनुदाहृ-

---

दोषान्तरस्य शक्योद्भावनत्वेनाच्छलत्वप्रसङ्गस्योत्तरच्छले ऽपि तुल्यत्वादित्यर्थः । तत्र साधने ऽपि छलत्वमङ्गीक्रियते तत्रोक्तलक्षणस्याव्याप्तिस्तु नाङ्गीक्रियते । अत्रोत्तररूपच्छलस्यैव लक्ष्यत्वादित्यभिप्रेत्य परिहरति । सत्यमिति । न विविरोध इति । नास्य तल्लक्षणत्वविरोध इत्यर्थः । ननु तर्ह्यत्र साधनच्छलस्य पृथङ्निरूपणं स्यादित्यत्रान्तर्भावाद्विकल्पपूर्वकोक्तदोषान्तर्भावस्य उत्तरच्छले ऽपि तुल्यत्वादित्यस्वरसात्साधनोत्तरच्छलयोर्वैषम्यं दर्शयति । अथवेति । प्रकाश्येति । अन्यथा प्रकृतासङ्गतेर्वक्तुमशक्यत्वादिति भावः । व्यक्तमिति । तथा चाविवक्षितार्थदोषत्वस्यावश्यकत्वादुपजीव्यत्वाच्च तदेवच्छलत्वं तत्रोद्भाव्यमिति भावः । न छलत्वमिति । अन्यतरार्थस्याविवक्षितत्वग्राहकाभावादिति भावः । ननु पक्षदृष्टान्तयोर्हेतूपपादनदशयोरन्यतरस्य पाक्षिकमविवक्षितत्वमस्तीति च्छलत्वं स्यादित्यत आह । यदि चेति । परिजिहीर्षतीति । तथा च पाक्षिकाविवक्षामुद्भाव्य उभयविवक्षोद्भावनैव पक्षदृष्टान्तयोर्हेतूपपादनम् तस्य शक्यकरणमिति भावः । तर्हि तस्यादुष्टत्वमेव स्यादित्यत आह । तदापीति । नन्वर्थद्वयविवक्षायामपि दशाभेदेनान्यतरस्याविवक्षितत्वमस्त्येवेति स्थापकेन गोपने ऽपि दूषकेणोद्भावयितुं शक्यत्वादविवक्षितार्थकथनत्वरूपं छलत्वं तत्र वक्तुं शक्यमेवेत्याशयेन

रणादुदाहृतस्य प्रकृतानुपयोगादर्थान्तरनिग्रहस्थानता । अ-
थार्थद्वयविवक्षामात्रेण छलत्ववाचोयुक्तिमिच्छसि इष्यतां स्वै-
रमिति । तत् त्रिधा । वाक्छलमुपचारच्छलं सामान्यच्छल-
मिति। तत्र नानार्थेषु शब्देष्वभिधेयान्तरारोपणेन तद्दूषणं वा-
क्छलम्। यथा नूतनकम्बलवत्त्वविवक्षया नवकम्बलोऽयमि-
त्युक्ते संख्याविशेषमर्थमारोप्य कुतोऽस्य नवकम्बला एक एव
हि कम्बलो दृश्यत इति । एवं दूषयतो वादिविवक्षि-
ताप्रतिपत्तेस्तदुत्तराप्रतिपत्तेश्चाप्रतिपत्तिः । अदूषणे दूषण-
बुद्धेश्चान्यथाप्रतिपत्तिरिति। अभिधोपचारविपर्ययारोपणेन तद्दू-
षणमुपचारच्छलम् । यथा गङ्गायां घोष इत्यादौ कथं-
प्रवाहे घोषवास इति । अग्निर्माणवक इत्यत्र कथमनु-
ष्णो ज्वलन इति। उभयथा लोकवेदयोः प्रयोगात्तत्प्रतिपत्त्य-
भावादेव चात्र निग्रहः । उपचारप्रयोगे मुख्यार्थासम्भवाद्वा-

---

शङ्कते। अथेति। अस्तु तथा छलत्वव्यवहारस्तथापि न तद्दोषा-
योद्भाव्यम् । असिद्ध्यादिकमप्रतीत्याविवक्षितत्वं पाक्षिकमप्य-
वगन्तुं न शक्यमित्यसिद्ध्यादेरेवोपजीव्यत्वात्तदुद्भावनमुचित-
मित्याशयेन परिहरति । इष्यतां स्वैरमितीति । नानार्थेष्वित्यने-
न सामान्यच्छलं व्यावर्त्यते । अभिधेयान्तरेत्यनेन चोपचारच्छलं
व्यावर्त्यते । यद्वा नानार्थेष्वित्यनेनाग्निर्माणवक इत्यभिधेयारोप-
रूपमुपचारच्छलं व्यावर्त्यते। तत्राग्निशब्दस्य नानावाचकत्वाभा-
वादर्थशब्देन वृत्तिविषयमात्रविवक्षायां तु पूर्वोक्तव्यावर्त्यमप्यनव-
द्यमिति बोध्यम्। एतस्य निग्रहस्थानस्य त्वप्रयोजकामप्रतिपत्तिं
विप्रतिपत्तिं च दर्शयति । एवं दूषयत इति । अभावादेरि-
त्यादिपदेन विपरीतप्रतिपत्तिर्गृह्यते नैयायिकैरुक्तमुपचारच्छलल-
क्षणमव्याप्त्या दूषयितुमनुवदति । उपचारप्रयोग इति । सुक्षेत्रे
शालिसम्पत्तिवदिति । सुक्षेत्रस्यापि कृषीवलापरिग्रहदशायां शा-

ध उपचारच्छलमित्यन्ये । तत्र मुख्यप्रयोगेऽपि कस्यचिदौपचारिकार्थासम्भवेन प्रत्यवस्थानोपपत्तेः । अस्य चौपचारिकार्थे मुख्यार्थताभ्रमेण वा गत्यन्तराभावादेवमपि किमयं व्याकुलीभवेदिति वा प्रयोगसम्भवः । यथा पर्वतो वह्निमानित्युक्तेऽग्निर्माणवक इति प्रसिद्धम् । नचात्रेदानीं माणवक इति कालात्ययापदिष्टो हेतुरिति । नचैतद्दूषणान्तरान्तर्गतम् । तस्माद्यथोक्तमेव लक्षणम् । तात्पर्यान्तरारोपणेन तद्दूषणं सामान्यच्छलम् । यथायमहो ब्राह्मणोऽनूचान इत्यत्र सुक्षेत्रे शालिसपत्तिवत् सम्भावि तत्त्वविवक्षया किमाश्चर्यमित्युक्ते ब्राह्मणत्वसामान्ये व्याप्यत्वमारोप्यानूचानत्वे च व्यापकत्वमविवक्षितमारोप्य ब्राह्मणत्वहेतोर्व्रात्यैरनैकान्तिकत्वकथनमिति । अत्र सामान्यच्छलमित्युपलक्षणसंज्ञा । अन्वर्थसंज्ञा तु तात्पर्यच्छलमित्येवेति ।

---

लिसम्पत्त्यभावात्सम्भावितत्वमात्रमेव तत्र विवक्षार्हमिति । किमाश्चर्यमिति । अत्यन्तासम्भावितत्वे किल विस्मयसम्भव इति भावः । व्रात्यैरिति । निराकृतिभिरित्यर्थः । व्रात्यो निराकृतिः अस्वाध्याय इति पर्य्यायाः । नन्वत्र तात्पर्यस्यैव च्छलनं न तु सामान्यस्य अतस्तात्पर्यच्छलमित्येव संज्ञा युक्ता ननु ब्राह्मणत्वसामान्यस्य तात्पर्यान्तरारोपे कारणत्वात्तेन व्यपदेशे को दोष इति चेत् । अयं कुशल इत्यादावयमेव कुशल इति तात्पर्यान्तरारोपेणान्यस्यापि कुशलत्वाद्बाध इत्यादिदूषणस्थले सामान्यस्याहेतुत्वेनाव्यापकत्वं स्यादित्यत आह । अत्रेति । ननु सर्वत्रापि तात्पर्यान्तरारोपात्सर्वमपि तात्पर्यच्छलं स्यादिति चेत्तत्राप्युपजीव्यत्वादभिधोपचारयोस्ताभ्यां व्यपदेशस्य युक्तत्वादिति

वक्तुर्विवक्षितादन्यदारोप्यैतस्य दूषणम् ।
छलं त्रिधाभिधाभक्तितात्पर्याणां विपर्य्ययात् इति सङ्ग्रहः ॥

यत् सिद्धमपि दूषणव्याप्तिरहितमसदुत्तरं तज्जातिः । व्याप्तिपक्षधर्मताविशिष्टेनैव हि हेतुना स्थापनं दूषणं वा तयोरन्यतराभावे प्रतिषेधहेतुरपि दुष्यत्येव । तत्र यथा च्छलस्य केवलानिरनुयोज्यानुयोगस्य वा पक्षीकृते वादिवाक्ये स्वयमसिद्धस्य पक्षधर्मत्वविरहान्न दूषकत्वसिद्धिः । एवं पक्षधर्मस्यापि जात्युत्तरान्तर्गतस्य हेतोर्दूषणव्याप्तिविरहान्न दूषकत्वम् । तथाहि । नेदं स्वसाध्यसाधकं युक्ताङ्गानपेक्षप्रतिप्रमाणादिप्रतिरुद्धत्वादित्यादिषु जातिप्रयोगेषु प्रतिषेधहेतोः पक्षधर्मत्वे सत्यप्यसाधकत्वेन व्याप्तिर्नास्ति । अन्ततः स्वस्मिन्नेव व्यभिचारात् । तदेतदीदृशमसामर्थ्यविशेषं विवक्षित्वा प्रतिषेधसामर्थ्यं जातिलक्षणमुक्तं न्यायवार्तिके तादृशसामर्थ्यमूलभूतं स्वव्याघातकत्वमेव न्यायाचार्येण लक्षणीकृतम् ।

---

जातेर्व्याप्तिराहित्येनादूषकत्वादसदुत्तरतां व्याप्तिराहित्यप्रकारं च प्रतिपादयितुं प्रस्तौति । व्याप्तिपक्षधर्मताविशिष्टेनेति । केवलनिरनुयोगस्येति । छलजातिभ्यां भिन्नस्य निग्रहस्थानानामाभासवचनस्येत्यर्थः । नेदं साध्यसाधकमित्यत्रेदंपदेन स्थापनप्रमाणमुच्यते । सदुत्तरप्रकरणसमकालात्ययापदिष्टप्रयोगव्यावर्तनाय युक्ताङ्गानपेक्षत्वमुक्तम् । इत्यादिष्वित्यादिपदेन तथाविधप्रातितर्कप्रतिरुद्धत्वं गृह्यते । अप्रमाणादिपदेनाभिमानिकं प्रमाणत्वादिकं विवक्षितम् । आभासेषु तेषु वस्तुतः प्रमाणत्वतर्कत्वयोरभावादिति बोध्यम् । अन्ततः स्वस्मिन्निति स्थापनप्रमाणे व्यभिचारोक्तौ तस्यासाधकत्वमभिमन्यमानो वादी न संमन्यते स्वीयजात्युत्तरस्य तु स्वबुद्ध्या स्वसाध्यसाधकत्वात् तत्र युक्ताङ्गानपेक्षप्रतिप्रमाणप्रतिरुद्धत्वे सत्यपि स्वसाधकत्वविरहस्य स्वेनानङ्गीकारात्तत्रैव व्यभिचारः स्यादित्यर्थः । ईदृशमसामर्थ्यविशेषमिति । दूषणव्याप्तिराहित्यमित्यर्थः । तादृशसामर्थ्यमूलभूतमिति । दू-

तच्च युक्ततमम् । साधारणस्य दूषणविशेषस्य स्फुटप्रतीतेः । किं च सूत्रकारस्य "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः" इति जातिसामान्यलक्षणं ब्रुवाणस्य न तदेव लक्षणं विवक्षितम् । सर्वजातिसंग्राहकत्वाभावात् । असदुत्तरप्रकरणसमातीतकालोद्भावनयोरतिव्याप्तेश्च । अतो जातिविभागसूत्रे निग्रहस्थानवत् परस्परानिरपेक्षास्वपि जातिषु प्रयोगलाघवाय द्वन्द्वात् परतया सर्वजात्यन्वितं समशब्दं प्रयुञ्जानस्य तदेव लक्षणतया विवक्षितमिति भाष्यकारादिभिः सर्वैरास्थितम् । तत्र यथावदुक्तं साधर्म्यं वैधर्म्यं

---

षणव्याप्त्यभावमूलमित्यर्थः । न्यायाचार्य उदयनः । साधारणदूषणविशेषस्येति । सर्वजातिसाधारणदुष्टत्वमूलस्येत्यर्थः । स्फुटप्रतीतेरिति । अनेन न्यायवार्तिकपक्षेऽसामर्थ्यविशेषेण जातिलक्षणेन दुष्टत्वमूलस्य स्वव्यावर्तकत्वस्य न स्फुटप्रतीतिरिति व्यज्यते । भाष्यवार्तिकटीकाकारपक्षाणामयुक्तत्वान्न्यायाचार्यपक्ष एव युक्तोऽङ्गीकर्तुमित्याभिप्रायेण भाष्यादिपक्षेष्वनुवादपूर्वकं दोषानुदाहरति । किञ्चेत्यादिना लाभोऽभ्यधिक इत्यन्तेन । सर्वजातिसंग्राहकत्वाभावादिति । उत्कर्षसमाद्यव्याप्तेरिति भावः । निग्रहस्थानवदिति । यथा दूषकतायां परस्परनिरपेक्षेषु निग्रहस्थानेषु सूत्रकारेण द्वन्द्वसमासो न कृतस्तथा दूषकतायां परस्परनिरपेक्षास्वपि जातिषु द्वन्द्वो न कर्तव्य एव तथाप्येकयत्नेन समशब्दस्य सर्वजातिष्वन्वयसिद्धये सूत्रकारेण द्वन्द्वः कृतः तस्य सर्वत्रान्वितस्य समशब्दस्य सर्वजातिव्यापकलक्षणे तात्पर्यमिति व्याचक्रुरित्यास्थितमित्यन्तस्य वाक्यस्यार्थः । तत्र यत्साधर्म्येण प्रत्यवस्थानमवशिष्यमाणमिति भाष्यफक्किकामादाय तस्याभिप्रायमाहुः । अत्र साधर्म्यग्रहणमुपलक्षणार्थम् । ततश्च यथा त्वदुक्तं साधर्म्यं वा सहचरितं तदस्मदुक्तमपि न हि त्वदुक्तमेव साधकं नास्मदुक्तमित्यत्र विशेषहेतुरस्तीत्यादिनाकारेण व्याप्त्यादियुक्तानपेक्षया साधर्म्याभिमानमात्राद्विशेषहेत्वभावेन प्रत्यवस्थानं जातिरिति भाष्याभिप्राय इति तदनूद्य दूषयति । तत्रेत्यादिना । सहचरि-

सहचरितं वा तथासमदुक्तमपि इत्यादिनाकारेण जातिवादिनाभिधीयमाने स्वपरसाधनयोर्विशेषहेत्वभावे समशब्दार्थतया विवक्षिते वस्तुतो विशेषहेतुसद्भावान्न समशब्दार्थसिद्धिः । आरोपितं तु साम्यमस्तीति गत्यन्तराभावे स्वीका सत्यसति वोत्तरे प्रत्यवस्थानस्वरूपदोषमात्रे तु भाष्योक्तोपयोगात् । वार्त्तिकोक्तं प्रतिषेधासामर्थ्यं न साक्षात्समशब्दार्थः । सममनुत्कृष्टमपकृष्टमुत्तरं जातिरिति च जातिवादिसमः साधारणो नोत्कृष्टः अपकृष्ट इत्यर्थः । स च साधर्म्यमुत्तरद्वारेणैवोन्नीयत इत्युत्तरमेव सममपकृष्टमित्यर्थ इति वा क्रमेणापकर्षविशेषे लक्षणीयेऽपि क्लिष्टा गतिः । कुशकाशावलम्बनेन तु लक्षणसिद्धिः स्यात् । स्वस्य प्रतिवादिनश्च समीकरणाभिप्रायपूर्वकत्वात् । समीकरणार्थत्वाद्वा जात्युत्तरं सममित्युच्यत इति टीकापक्षोऽपि तथैव । ईदृशः शङ्कापक्षोऽपि तथैव

---

तं चेति उत्कर्षसमादिसङ्ख्यायोक्तम् । गत्यन्तराभाव इति । गत्यन्तरस्य वक्ष्यमाणत्वादिति भावः । तर्हि भाष्यस्य कोऽभिप्राय इत्यत आह । सत्यसति वेति । अनुत्कृष्टत्वस्य सदुत्तरप्रकरणसाधारणत्वादाह । अपकृष्ट इत्यर्थ इति । समशब्दस्य पुल्लिङ्गतां सूत्रनिर्दिष्टामुपपादयितुं व्याख्यानान्तरमाह । जातिवादीति । तर्ह्यसदुत्तररूपायां जातौ लक्षणं नोक्तमित्यत आह । स चेति । क्लिष्टा गतिरिति । समशब्देन पूर्वमनुत्कर्षं विवक्षित्वा अनन्तरमपकर्षो लक्षणीय इति लक्षितलक्षणाङ्गीकारादत्यन्तक्लेश इत्यर्थः । कुशकाशावलम्बनेन त्विति । अपकृष्टत्वमात्रस्य च्छलादिसाधारणत्वान्न समशब्देन लक्षणसिद्धिः । दूषणव्याप्तिरहितत्वस्याप्यपेक्षणे तु समशब्दे लक्षणसिद्धिरित्येतत्कुशकाशावलम्बनेन नदीतरणप्रायमित्यर्थः । टीकापक्षमनुवदति । स्वस्येति । तथैवेति । समीकरणाभिप्रायपूर्वकत्वस्य वा समीक-

नच तावता लक्षणसिद्धिः। छलादेरपि समीकरणाभिप्रायपूर्वकत्वादिसम्भवात् तथा सदुत्तरमपि कश्चिन्मन्दः समीकरणाभिप्रायेण प्रयुञ्जीत। समीकरणार्थत्वं च वास्तवं न व्यापकं तत्साधने जातिवादिनो वास्तवसमीकरणस्य दुर्लभत्वात्। अपि च कश्चिज्जातौ सदुत्तरत्वभ्रान्त्या स्वोत्कर्षाभिप्रायेणापि जातिं गृह्णीयात्। अतोऽस्मिन्नर्थेऽपि न लक्षणसिद्धिः। बुद्धिपूर्वता तु जातिकार्य इत्युच्यते। प्रतिषेधरूपस्य जात्युत्तरस्य स्वपरसाम्ये समशब्दार्थे येनाकारेण परस्य प्रतिषेधकं तेनाकारेण स्वस्यापि प्रतिषेधकं भवतीति स्वव्याघातकत्वमेव विवक्षितं स्यात्। न चात्रातिव्याप्तिरव्याप्तिर्वा

---

रणप्रयोजनत्वस्य वा समशब्दार्थत्वाभावेन लक्षणया समशब्देन तद्बोधनं स्यादिति। अयमपि पक्षः क्लिष्ट एवेत्यर्थः। काशकुशावलम्बनेनापि लक्षणासिद्धिरधिको दोष इत्याह। नचेत्यादिना। समीकरणार्थत्वं समशब्दार्थ इति द्वितीयपक्षे दोषमाह। समीकरणार्थत्वं चेति। दुर्लभत्वादिति। तथाभिमानिकमेव समीकरणार्थत्वं विवक्षणीयं तदा तु पूर्वपक्षाविशेष इत्यभिप्रेत्य तत्र पक्षे दोषान्तरमाह। अपि चेति। ननु जातौ जातित्वमप्रतीत्य तत्प्रयोग एव न सम्भवति भाष्यकारादिभिर्जातिप्रयोगस्य बुद्धिपूर्वकत्वाभिधानादित्याशङ्क्याह। बुद्धिपूर्वता तु जातिकार्य इत्युच्यत इति। एतदुक्तम्भवति। भाष्यकारादिभिः पाक्षिकविजयरूपजातिकार्यार्थं एव जातिप्रयोगे बुद्धिपूर्वतोच्यते। सदुत्तरत्वभ्रान्त्या नियतविजयाशया जातिप्रयोगेऽपि नैतैर्बुद्धिपूर्वतोच्यते अतोऽबुद्धिपूर्वकोऽपि जातिप्रयोगः सम्भवतीति। न्यायाचार्यपक्षे तु समशब्दस्य क्लिष्टार्थता नास्ति जातिलक्षणासिद्धिरप्यस्ति सर्वजातिसाधारणं दुष्टत्वमूलमप्यधिकमवश्यापेक्षितं च सिध्यतीति स एव पक्षो युक्ततम इति सुष्ठूक्तमित्याह। प्रतिषेधरूपस्येत्यादिना। ननु स्वव्याघातकत्वमपि न लक्षणं

ततश्च लक्षणसिद्धिः साधारणदुष्टत्वमूलसूचनं चेति लाभो-ऽप्यधिकः । ननु च्छलेऽपि व्याघातकत्वं सम्भवति तथाहि । अढ्योऽयं नवकम्बलत्वादिति नूतनकम्बलत्वविवक्षयोक्ते कुतो-ऽस्य नवकम्बला इति प्रत्युक्ते वादिना च पुनश्छलत्वोद्भावने यदि च्छलवाद्याह विवक्षितमविवक्षितं वेति किमनेन विभागेन । त्वदुक्तशब्दप्रतिपन्नं तावद्दूषितमिति तदास्य सिद्धिः स्वव्याघातः । अविवक्षितार्थदूषणेनापि परस्य भङ्गे छलवादिवाक्ये ऽपि अविवक्षितयत्किञ्चिदर्थदूषणेन भङ्गप्रसङ्गस्य दुर्वारत्वात् । अतः स्वव्याघातकत्वमातिव्याप्तमिति । मैवं कुतो नव कम्बला इत्यस्यां कक्षायामविवक्षितदूषणाभिमानस्यानभिव्यक्तेः । तथाविधानुयोगस्य च तदर्थविवक्षाभ्रमादपि सम्भवात् । यस्यां तु कक्षायामविवक्षितदूषणेनापि परपराजयाभिमानो व्यज्ज्येत तदा जातित्वमेव । अविवक्षितस्य विवक्षितत्वारोपाभावेन च्छललक्षणासिद्धेः । एवं केवलानिरनुयोज्यानुयोगे जा-

---

तस्य च्छलेऽपि सत्त्वेनातिप्रसक्तत्वादिति शङ्कते । नन्विति । अस्ति छलस्यापि स्वव्याघातकत्वं तत्तु कक्षान्तरोद्भाव्यं न तस्यामेव कक्षायामुद्भावयितुं शक्यत इति तदा च्छलत्वमेवोद्भाव्यमिति न च्छलसङ्कर इत्यभिप्रेत्य परिहरति । नैवमिति । यस्यां तु कक्षायां स्वव्याघातकत्वमुद्भावयितुं शक्यते तदाच्छललक्षणाभावात्स्वव्याघातकत्वरूपजातिलक्षणत्वाच्च जातित्वमिष्टमेवेत्याह । यस्यां त्विति । उक्तमर्थं निग्रहस्थानाभासवचनेऽप्यतिदिशति । एवमिति । अयं भावः । निग्रहस्थानाभासवचने ऽपि स्वव्याघातकत्वमस्ति वादिनः सम्भावितानेककल्पसाधारणोक्तौ विकल्पितायामविवक्षितकल्पत्यागे परेणोक्तहानौ प्रयुक्तायां वादिना निरनुयोज्यानुयोगोद्भावने प्रतिवाद्याहविकल्पो विवक्षितोऽविवक्षितो वास्तु किमनेन विभागेन त्वदुक्तशब्दप्रतिपन्नं तावद्दूषितमिति तदा सिद्धः स्वव्याघातः । अविवक्षितकल्पत्यागेन वादि-

तिसङ्करः परिहर्तव्यः । अतः सुष्ठूक्तं व्याघातकत्वं जातिलक्षणम् । ये तु साधनेष्वपि केषुचिज्जातित्वमिच्छन्ति तेषां स्वसमानन्यायप्रसञ्जनेन स्वव्याघातकं जातिरिति सामान्यतो लक्षणम् । तत्र स्वव्याघातकसाधनजातिसाधनं यथा । महाविद्यादि स्वव्याघातकमुत्तरं तु जात्युत्तरम् । यथा तत्त्वोपप्लवखण्डनादिगतिरिति विभागः । स्वव्याघातिप्रसङ्गो जातिरिति वरदविष्णुमिश्रोक्तिरुत्तररूपजात्यभिप्रायेण । अक्षपादीयेषु च जातिविशेषलक्षणसूत्रेषु पुल्लिङ्गान्तसमशब्दनिर्देशश्च स्वपक्षस्थापनपरपक्षप्रतिक्षेपरूपेण तद्विभागे प्रत्यवस्थाने प्रतिषेधभागेनात्र जातित्वं विवक्षितमि-

---

साधनभङ्गेष्वस्यापि तादृशाविवक्षितत्यागेन तादृशोक्तहानिप्रसङ्गादिति । तथापि तस्य कक्षान्तरोद्भाव्यत्वेन प्रथमं केवलनिरनुयोज्यानुयोगस्यैवोद्भाव्यत्वात् कक्षान्तरं तु जातित्वं छलवदिष्टमेवेति न जातिलक्षणसाङ्कर्यम् । तत्रापि साधनस्यापि जातित्वमस्तीति पक्षे उत्तरशब्दोद्वापेन स्वव्याघातकत्वं जातिसामान्यलक्षणम् । तत्रैव साधनोत्तरपदयोरावापेन विशेषलक्षणद्वयसिद्धिरित्याह । ये त्विति । महाविद्यादीति । पूर्वोक्तासु महाविद्यासु निवक्षितविरुद्धार्थपदान्तरप्रक्षेपेण स्वव्याघातकत्वं सुगमम् । आदिपदेन केवलव्यतिरेकि गृह्यते । तस्य च स्वव्याघातकत्वं केवलव्यतिरेकिनिराकरणे विशदमुपपादितम् । तत्त्वोपप्लवशब्देन चित्सुखादिकुदृष्टिग्रन्था गृह्यन्ते । खण्डनपदेन श्रीहर्षोऽभिधीयते । आदिपदेन लङ्कारावतारादिमाध्यमिकग्रन्था गृह्यन्ते । नन्वसदुत्तरवाचकस्य समशब्दस्य पुल्लिङ्गतानुपपत्तिः । उत्तरशब्दस्य नपुंसकत्वात् । गुणवचनानामाश्रयतो लिङ्गवचनादीत्यनुशासनादित्याशङ्क्य प्रतिषेधभागापेक्षया पुल्लिङ्गता नैयायिकैरुपपादितेत्याह । अक्षपादियेषु चेति । समशब्दस्य क्लेशः लक्षणासिद्धिः साधारणदुष्टत्वमूलसूचनं बाधिकं येन प्रकारेण सि-

त्युत्तररूपजातिविशेषाभिप्राय इत्याहुः । अथायमपरो जातिसंग्रहः । मर्यादालङ्घनाभ्युपगमपूर्वकमुत्तरं जातिः । मर्यादा च प्रतिष्ठिता प्रमाणसरणिः । स्वव्याघातकत्वमपि तल्लङ्घनाभ्युपगमादेव । स च द्विधा । परिकरनियमानभ्युपगमो विषयनियमानभ्युगमश्चेति । प्रथमो द्विविधः । युक्ताङ्गत्यागः । अयुक्ताङ्गपरिग्रहश्चेति अयुक्ताङ्गपरिग्रहोऽपि ह्यन्यूनानतिरिक्तविषयपरिकरानियमानभ्युपगम एव । द्वितीयोऽपि द्विधा । ग्राह्यविषयत्वत्यागस्तदन्यविषयत्वाभ्युपगमश्चेति । एतेन लक्ष्यं लक्षणमुत्थितिस्थितिपदं मूलं फलं पातनमिति पठितेषु सदुत्तरेण जातीनामुद्धाराय प्रतिजातिप्रतिसन्धानीयेषु सदुत्तरापरिस्फूर्तौ जातिप्रसङ्गे

---

ध्यति स्वोन्नीतजातिसङ्ग्रहप्रकारं प्रदर्शयितुं प्रस्तौति । अथेति । सदुत्तरेष्वतिव्याप्तिवारणाय मर्यादालङ्घनाभ्युपगमपूर्वकत्वमुक्तम् । वस्तुतो मर्यादारहितेषु तल्लङ्घनानभ्युपगमेनैव प्रयुक्तेषु प्रमाणाभासेषु जातित्ववारणाय तदभ्युपगमपर्यन्तग्रहणमिति बोध्यम् । एतेन छलकेवलनिरनुयोज्यानुयोगौ च व्यावृत्तौ तत्रापि मर्यादालङ्घनाभ्युपगमाभावात् । तदुद्भावनानन्तरकक्षायां मर्यादालङ्घनाभ्युपगमे तु जातित्वमिष्टमेवेत्युक्तम् । स्वव्याघातकत्वापेक्षयाप्युपजीव्यत्वादयमेव जातिसङ्ग्रहप्रकारोऽवश्याभ्युपगन्तव्य इत्याशयेनाह । स्वव्याघातकत्वमपीति । मर्यादालङ्घनाभ्युपगमस्वरूपे विविच्य परामृश्यमाने साधारणमसाधारणं च दुष्टत्वमूलं स्पष्टं भवतीत्याशयेन मर्यादालङ्घनाभ्युपगमं विभजते । स च द्विधेति । नन्वयुक्ताङ्गपरिग्रहे कथं परिकरनियमानभ्युपगमः अधिकं प्रविष्टं न तद्धानिरिति न्यायेन युक्ताङ्गभङ्गाभावादित्यत आह । अयुक्ताङ्गपरिग्रहोऽपीति । अतिरिक्ताभ्युपगमेनान्यूनानतिरिक्तविषयपरिकरनियमेऽनतिरिक्तत्वांशस्यानभ्युपगमावश्यभावादिति भावः । एतेनेति । शोधितेन मर्यादालङ्घनाभ्युपगमेनेत्यर्थः । पठितेष्विति ।

चोपयोक्ष्यमाणेषु जातीनां सप्तस्वङ्गेषु साधारणमसाधरणं च दुष्टत्वमूलं दर्शितं भवति । विशेषतश्च जातीनां लक्ष्यलक्षणे वक्ष्येते । प्रमादः प्रतिभाहानिर्वा तासामवसर इति पूर्वे । सभ्यानुमतिपूर्वकपरपरिचिक्षिषापीत्यवष्टम्भविजयाभिलाषिणः । एवं च सत्येव वादिसाधने जात्युदय इति न नियमः । उभयत्रापि प्रमादादिसम्भवात् । अत एव हि जात्यादेरुत्तरतया जात्यन्तराद्युदयः । फलं च प्रायशः परव्यामोहनं पाक्षिकविजयः साम्यं वा तत्त्वाज्ञानं साधारणमुत्थानबीजम् । तत्तदवान्तरस्वभावाज्ञानं तद्विपरीतज्ञानं चासाधारणमुत्थानकारणमिति च विभाव्यम् । वादिवाक्यस्य कस्मिंश्चिद्दूषणविशेषे निपातनमेव पातनम् । तच्चासाधारणदुष्टत्वमूलपुरस्कारेण साधार-

---

लक्ष्यं लक्षणमुत्स्थितिस्थितिपदं मूलं फलं पातनम् ।
जातीनां सविशेषमेतदखिलं सुव्यक्तमङ्ग रहः ॥

इत्युदयनाचार्य्येण गौतमसूत्रपठितानि जातीनां सप्ताङ्गानि विवृतानि तेष्वित्यर्थः । एतेषां सप्तानामङ्गानां प्रदर्शनस्य प्रयोजनं दर्शयति । विशेषतश्चेति । चकारेणोक्तं सामान्यलक्षणं समुच्चीयते । पूर्वे इति । गौतमोदयनादय इत्यर्थः । सभ्यानुमतिपूर्वकेति । सभ्यानुमत्यभावे स्वस्यैव तैः कथाभासदर्शनपूर्वकनिग्रहप्रसङ्गेनावष्टम्भविजयस्याप्यभावः स्यादिति भावः । परिचिक्षिषा परीक्षितुमिच्छाप्यवसर इत्यनुषज्यते । एवं चेति । प्रमादप्रतिभाहानिपरपरिक्षाणामवसरत्वे सिद्ध इत्यर्थः । प्रायः परव्यामोहनमिति । अत्र तत्त्वदर्शिविषये जातिसहस्रेणापि व्यामोहनासम्भवात् प्रायश इत्युक्तम् । परेण जात्युद्भावने स्वस्यापजयस्यैव सम्भवात् जयस्यैकान्तत्वाभावात् पाक्षिकविजय इत्युक्तम् । साम्यं वेति । उभाभ्यामपि जातिप्रयोग उभयोरपि पर्यनुयोज्योपेक्षणे वादिप्रतिवादिनोः साम्यं फलमित्यवगन्तव्यम् । पातनस्योपयोगं दर्शयति । तच्चेति । भाव्यमिति । अय-

णस्वव्याघातप्रदर्शनौपयिकमिति भाव्यम् । व्याघातपर्यवसितं हि सर्वं दूषणम् । उपलम्भपर्यवसितं च सर्वं साधनमिति रहस्यम् । ननु यत्पर्यवसायीनि जातीनां दूषणानि क एष स्वव्याघातः । न तावत्स्वेनैव स्वस्य विरोधः तस्य भेदापेक्षयात्माश्रयप्रसङ्गात् । स्वस्य

---

मत्र भावनाप्रकारः ःपातनेन स्थापनायामसिद्ध्यादावगते तेनैव प्रकारेण दूषणे ऽप्यसिद्ध्यादिप्रदर्शने शुक्ताङ्गानपेक्षात्मकासाधारणदुष्टत्वमूलप्रदर्शनेन साधारणदुष्टत्वमूलं स्वव्याघातकत्वमप्यवगम्यत एवेति । विशिष्य भावनां तु तत्तज्जातिनिरूपणावसरे प्रदर्शयिष्यामः । नन्वभ्युपगमस्यापि व्याघातं दूषणाभिधाने व्याघातप्रदर्शनं व्यर्थमेव स्यात् । मर्य्यादालङ्घनाभ्युपगमेन जातिं प्रयुञ्जानस्यानियन्त्रणत्वादित्यत आह । व्याघातपर्य्यवसितं हि सर्वं दूषणमिति । व्याघातावधिराशङ्केति न्यायेन ततः परं दूषणप्रवृत्तिरेव न सम्भवति । प्रवृत्तौ च सभ्या एव नियन्तार इति न वादिना तत्र यतितव्यमिति भावः । प्रसङ्गात्साधनपर्यवसानमप्युपदिशति । उपलम्भपर्यवसितं च सर्वसाधनमिति ।

परः शतपरिक्षोदात्परस्तादपि वादिभिः ।
उपलम्भबले स्थैर्यं तदादौ किं न गृह्यते ॥

इति न्यायेन प्रत्यक्षेऽपि विवदमानस्य सदस्यैरेव विग्रहसम्भवादिति भावः । इदं च दृष्टान्ततया प्रकृतोपयोगि । यथा प्रत्यक्षोपन्यासानन्तरं साधनप्रवृत्तिर्नास्ति तथा व्याघातानन्तरं दूषणप्रवृत्तिर्नास्तीति रहस्यम् । वादिप्रतिवादिनोरतःपरं प्रवृत्तिनिरोधायोपदेश्यमित्यर्थः । ननु स्वव्याघातस्य निरूपयितुमशक्यत्वादनिरूप्यमाणेन तेन दूषणपर्यवसानस्याशक्यकरत्वाद्व्याघातपर्य्यवसायिदूषणमित्युक्तमसम्भवीत्याक्षिपति । नन्विति । जातीनां दूषणानीत्यत्र जातीनामिति कर्मणि षष्ठी । ननु स्वव्याघात इत्यत्र स्वस्य स्वेनैव व्याघात इत्यर्थो विवक्षितः स्वस्यान्येनेति वा इति विकल्प्याद्यं दूषयति । न तावदिति । तत्रापि स्वयं सिद्धो वा नवेति विकल्प्याद्य आह ।

सिद्धत्वे विरोधस्यानवकाशात् । असिद्धौ तु कस्य केन वा विरोधः । एतेन यथा परं व्याहन्ति तथात्मानमपीति निरस्तम् । किञ्च परव्याहतिसिद्धौ समीकरणाकाङ्क्षी जातिवादी तावतैव चरितार्थः । तदसिद्धौ तु कथं तन्निदर्शनेन यथेत्युच्यते । एतेन परस्य स्वेनेव स्वस्यान्येन व्याघातापेक्षकत्वं स्वव्याघातकत्वमिति च प्रत्युक्तम् । आक्षेपकत्वं चात्र किमभिप्रेतं किमुत्पादकत्वमुत ज्ञापकत्वं यद्वान्यकर्तृकव्याघातप्रतियोगित्वेनावस्थानमात्रमिति । न प्रथमोऽसम्भवात् । न द्वितीयः परव्याहतिमात्रबोधनपरत्वात् । न तृतीयः असदुत्तरान्तराणामपि जातित्वप्रसङ्गादिति । अत्रोच्यते । या परप्रतिक्षेपार्था युक्तिः प्रसज्ज्यते तस्याः प्रयोजकाकारेण तत्सजातीयस्वविषययुक्त्यन्तरक्रोडीकारः स्वव्याघातः । तथा च सति तया युक्त्या

---

स्वस्य सिद्धत्व इति । द्वितीय आह । असिद्धौ त्विति । उक्तदोषं प्राचीनैरुक्ते स्वव्याघातनिर्वनेऽप्यतिदिशति । एतेनेति । प्राचीननिर्वचने परव्याघातसिद्ध्यसिद्धिभ्यां दोषान्तरं दर्शयति । किञ्चेति । उक्तान् दोषान् स्वस्यान्येन व्याघात इति परमप्रकृतद्वितीयनिर्वचनेऽप्यतिदिशति । एतेनेति । अयं च पक्षः आपेक्षिकत्वगर्भतया प्राचीनैरुक्तः । तत्राक्षेपकत्वं विकल्प्य दूषयति । आक्षेपकत्वं चेत्यादिना । असम्भवादिति । स्वस्य सिद्ध्यसिद्धिभ्यां स्वव्याघातस्य जनयितुमशक्यत्वादिति भावः । परव्याहतिमात्रबोधनपरत्वादिति । यत्परः शब्दः स एव शब्दार्थ इति न्यायेन जातिप्रयोगस्य परव्याहतिमात्रतात्पर्यकत्वेन स्वव्याघातज्ञापकत्वासम्भवादिति भावः । असदुत्तरान्तराणामपीति । छलादीनामपीत्यर्थः । जातित्वप्रसङ्गादिति । तथा च स्वव्याघातकत्वं जातिलक्षणं न स्यादिति भावः । येति । स्वसजातीययुक्त्यन्तरक्रोडीकृतत्वं स्वव्याघातकत्वं प्रमेयत्वादिना साजात्यव्यावर्तनायाप्रयोजकाकारेण साजात्यमात्रं विवक्ष्यते अप्रयोजका-

परपक्षस्य न दोषप्रसङ्गः स्वयमेव तथाविधयुक्त्या दुष्यतीति न परपक्षस्य दोषमापादयितुं शक्नोति । यदि च तथाविधयुक्तिदुष्टमेवाभिमतसाधकमित्यभ्युपगम्यते तथापि परपक्षस्याभिमतसाधकत्वान्न काचित् क्षतिरिति जात्युत्तरस्य दूषकत्वं न स्यात् । स्वयमपि दुष्टं परस्यापि दूषकं भवत्विति चेत् तथा सति सर्वं सर्वस्य दूषकं भवेदविशेषात् । ततश्च मौनं वा नित्यकलहो वा शरणं कथकानाम् । जात्युत्तरबाधकयुक्तेरपि युक्त्यन्तरबाधितत्वात् । प्रथमं निरुपद्रवमिति चेत् । न परस्तादपि प्रसङ्गेन द्वितीयस्यापि निरुपद्रवत्वात् । कुतस्तर्ह्यनवस्थानिवृत्तिरिति चेत् प्रथमस्य परित्यागेन यदभ्युपगम-

कारश्च तत्तज्जात्यसाधरणो मर्य्यादालङ्घनाभ्युपगमविशेषो युक्ताङ्गत्यागादिः । एतच्च युक्त्यन्तरक्रोडीकृतसदुत्तरव्यावर्तनाय स्वशब्दार्थप्रदर्शनाय वा परप्रतिक्षेपार्थं युक्तमित्युक्तम् । परपक्षप्रतिक्षेपत्वं चाभिमानिकमेव तेन परव्याहतिसिद्धौ समीकरणाकाङ्क्षी जातिवादी तावतैव चरितार्थ इति पूर्वोक्तदोषानवकाश इति बोध्यम् । एतदेवोपपादयति । तथा च सतीति । ननु दुष्टस्य साधकत्वमभ्युपगम्यते वा नवेति विकल्प्यान्त्ये पूर्वोक्तप्रकारेण स्थापनाया अक्षतत्वमभिप्रेत्याद्यमनूद्य परिहरति । यदि च तथेति । तथापीति । तथाविधयुक्तिदुष्टत्वेऽपीत्यर्थः । स्वव्याघातमजानानश्चोदयति । स्वयमपीति । व्याहतिमेव स्पष्टीकरोति । तथा सतीति । सर्वं सर्वस्येति । परपक्षोऽपि स्वपक्षं दूषयेदित्यर्थः । अविशेषादिति । दुष्टत्वादुत्वलक्षणविशेषानभ्युपगमादित्यर्थः । अत्रेष्टापत्तिं निवारयति । ततश्चेति । नन्वदुष्टमेव साधकमित्यभ्युपगम्यते इत्यभिप्रेत्य स्वीयस्य जात्युत्तरस्यादुष्टत्वे हेतुमालम्ब्य शङ्कते । जात्युत्तरबाधयुक्तेरपीति । प्रथममिति । स्वोक्तं जात्युत्तरमित्यर्थः । त्वदुक्तेन प्रकारेण द्वितीयस्यापि निरुपद्रवत्वात्प्रथमं दुष्टमेवेत्यभिप्रेत्य परिहरति । परस्तादपीति । अनवस्थापर्य्याकुलः सुहृद्भावेन पृच्छति । कुत इति । प्रथमसंर-

मूलोऽयं प्रवाह इति भाव्यम् । अन्यथा सर्वत्रानवस्थाप्रसङ्गे प्रथमसंरक्षणप्रसङ्गात् । समवायादित्वादिभिरिष्यत एवायमर्थ इति चेत् किं तदिष्टमात्रेण तथैव वस्तुस्थितिः अतिप्रसङ्गात् सूत्रितं च वैशेषिकाधिकरणे अनवस्थापकसर्वदूषणोपलक्षणतया समवायकल्पनेऽनवस्थानम् । "समवायाभ्युपगमाच्च साम्यादनवस्थितेः" इति । अतः साधने दूषणे वा यदभ्युपगमे तथाविधः प्रवाहः प्रसजति तदेवादौ त्याज्यं न चात्र कारणानवस्थावत् गुणत्वं तद्वैषम्यस्य स्वस्थाने वक्ष्यमा-

---

क्षणेन द्वितीयत्यागादेवानवस्था परिह्रियतामित्यत आह । अन्यथेति । प्रथमसंरक्षणप्रसङ्गादिति । जातिविशेषे समवायादेरप्यभ्युपगमप्रसङ्गादित्यर्थः । एतदुक्तं भवति । व्यावृत्त्यनुगतविशिष्टप्रत्ययान्यथानुपपत्त्या विशेषसामान्यसमवायानाङ्गीकारे तत्रापि व्यावृत्त्याद्यन्यथानुपपत्त्या विशेषाद्यन्तरस्वीकारेऽनवस्थाप्रसङ्गेन त एव त्यज्यन्ते । तथेहापि प्राथमिकजात्युत्तरमेव दुष्टत्वात्त्यज्यतामिति । अतिप्रसङ्गादिति । कस्य चिदन्यस्यापीदृशभ्रान्तस्य विशेषादावपि विशेषाद्यन्तरस्वीकारसम्भवेन तत्रापि प्रामाणिकत्वप्रसङ्गादित्यर्थः । अनवस्थापादकसर्वदूषणोपलक्षणतयेति । अनवस्थापादकाः सर्वे विशेषादयः तेषां दूषणं निराकरणे उपलक्षणतया सूचकतयेत्यर्थः । अनवस्थानमिति । सूत्रितमित्यनेनान्वयः । समवायाभ्युपगमाच्च साम्यादनवस्थितेरिति । समवायाभ्युपगमाच्चासमञ्जसं वैशेषिकमतम् विप्रतिषेधाच्चासमञ्जसमित्यतोऽसमञ्जसपदमनुवर्तते कुतः साम्यादनवस्थितेः समवायस्याप्यवयविजातिगुणवदुपपादकान्तरापेक्षासाम्यात् उपपादकस्यापि तथेत्यनवस्थितेरसमञ्जसमिति सूत्रार्थो भाषितः । उत्तररूपायां जातावुपपादितं साधनरूपायामपि जातौ उत्तरा जातीर्दृष्टान्तेनातिदिशन्नुपसंहरति । अत इति । बीजाङ्कुरन्यायेनानवस्थापरिहारमाशङ्क्य निराकरोति । नचात्रेति । स्वस्थान इति । तर्कनिरूपण इत्यर्थः सदुत्तरबाधप्रतिरोधयोर्व्यावर्तनायानभ्युपेतमर्यादेनेत्युक्तम्

णत्वादिति । जातिर्द्विधा । प्रतिप्रमाणसमा प्रतितर्कसमा चेति । तत्रानभ्युपतमर्यादेन प्रतिप्रमाणेनानिष्टापादनं प्रतिप्रमाणसमा। यथा चापकर्षसमादिष्वेकैकस्यां वा जातिविधायामसिद्ध्याद्यनेकदोषसंग्रहं व्याचख्युः । तथा प्रतिप्रमाणसमायामपि सर्वानिष्टसंग्रहे न कश्चिद्दोषः । तादृशेन प्रतितर्केणानिष्टापादनं प्रतितर्कसमा । नचायं विभागो नादेशिक इति वाच्यम् । यथा परैः सूत्रानुपदिष्टापि साधर्म्यवैधर्म्यसमादिसंग्राहिका प्रतिधर्मसमोन्नीता तद्वत् सर्वसंग्राहकविभागस्यात्यन्तोचितत्वात् । नच सूत्रोपदिष्टायां चतुर्विंशतौ सर्वजात्युदाहरणान्तर्भावः शङ्क्यः परैरपि कल्पितेनैव प्रतिधर्मसमेन प्रत्यक्षाभासादिमूलस्य प्रतिरोधस्य संग्रहोपलक्षणात् । तेनाप्यसंगृहीतस्य उदाहरणान्तरस्यास्माभिः प्रदर्शयिष्यमाणत्वाच्च । उक्तं च तत्त्वरत्नाकरे । अमूषां जातीनामानन्त्याच्चतुर्विंशतिरसौ

---

प्रतितर्कसमाया जातेर्व्यावर्तनाय प्रतिप्रमाणेनेति साधनजातिव्यावर्तनायापादनमिति । एकैकस्यां वा जातिविधायामिति । तत्तज्जात्यवान्तरप्रकारभेदेष्वित्यर्थः । सर्वानिष्टसंग्रह इति । प्रतितर्काद्यानिष्टव्यतिरिक्ताशेषानिष्टसङ्ग्रह इत्यर्थः । अन्यथा पूर्वोक्तद्वैविध्यं भज्येतेति ध्येयम् । न कश्चिद्दोष इति । अनेकासां जातीनामेकत्वप्रसङ्गरूपो दोषो नास्तीत्यर्थः । सामान्यतः क्रोडीकारेऽपि अवान्तरविधाभेदस्यानपह्नवादिति भावः । तादृशेनेति । तर्कमूलानिष्टापादनं व्यावर्त्यते तर्केणेति । तादृशप्रतिप्रमाणमूलानिष्टापादनम् । अनादेशिक इति । सूत्रकारेणानुपदिष्ट इत्यर्थः । ननु सूत्रकारेणानुपदिष्टानां जात्यन्तराणां सङ्ग्रहाय प्रतिधर्मसमोपात्ता प्रकृते च तादृशजात्यन्तरसङ्ग्रहरूपप्रयोजनाभावादस्ति वैषम्यमित्यत आह । न चेति । अन्यदन्यस्मादित्यादिनेति । इदं च सूत्रं शब्दपरीक्षायामक्षपादीयम् यथोक्तम् । "अन्यदन्यस्मादन्यादित्यन्यताभावो नियमे नियमान्नानियम" इति । शब्दस्य प्रत्युच्चारणमन्यत्वान्न नि-

प्रदर्शनार्था । अन्यदन्यस्मादित्यादिना जात्यन्तरसूचनादिति । प्रज्ञापरित्राणेऽप्युक्तम् ।

आनन्त्येऽपि च जातीनां जातयस्तु चतुर्दश ।
उक्तास्तदपृथग्भूता वर्ण्यावर्ण्यसमादय इति ।

अत्र चतुर्दशेति स्वग्रन्थोदाहृतकतिपयजातिमात्रपरिसंख्यानम् । नतु वस्तुतो न्यूनाधिकसंख्याव्यवच्छेदार्थम् । न्यायभूषणमतानुसारेणापि चतुर्विंशतेः प्रदर्शनार्थत्वमेवाभिमतम् । अस्मदुक्तं तु द्वैविध्यं सर्वजातिसंग्राहकम् । तयोरेव व्याप्यव्यापादकभेदभिन्नयोरवान्तरभेदाः सर्वजातयः । तथाहि द्वे अपि द्विविधे । सामान्यतो विशेषतश्चेति । अत्र प्रतिप्रमाणसमायां सामान्यतो यथा । त्वत्पक्षवदस्मत्पक्षेऽपि किंचित् प्रमाणं सम्भवेत् पक्षत्वाद्यविशेषादिति । सेयमुपपत्तिसमेति सूत्रिता । विशेषतो यथा । यं कञ्चित्प्रमाणाभासमुपक्षिप्य यथा त्वदुक्तं विवक्षितसाधकं तथेदमपि नचेदेवं त्वदुक्तमप्यसाधकं स्यादविशेषादिति । एतन्मुखभेदा एव प्रतिधर्मप्रतिदृष्टान्तप्रकरणसमादयः प्रतिप्रसङ्गसमायां सामान्यतो यथा । यथा पक्षान्तरेऽनिष्टप्रस-

---

त्यत्वमिति वादिना स्थापने सत्युच्यते अन्यदित्यादि अन्यस्मादिति । अन्यभूतात्स्वस्मादित्यर्थः । यथा घटादेः प्रतियोगिविशेषनैरपेक्ष्येण घटत्वादिकं सार्वत्रिकमेवमन्यत्वेनापि भवितव्यम् । इह तु श्रूयमाणस्य शब्दस्य स्वापेक्षयानन्यत्वादन्यत्वं दुर्घटमिति हेतोरसिद्धिरिति प्रथमसूत्रार्थः । प्रकृस्यानियमाद्वर्णविकाराणामिति पूर्वसूत्रे वादिना हेतुत्वेनोक्तमनियमं दूषयति । अनियम इत्यादिना द्वितीयसूत्रेण अनियमस्य स्वात्मनि वृत्त्यवृत्तिभ्यां ताद्रूप्यव्याघाताद्धेतोरसिद्धिरिति द्वितीयसूत्रार्थ इत्याह । नन्वनन्तानां जातीनां चतुर्दशेति परिसंख्यानमनुपपन्नमित्यत आह । अत्रेति । प्रतिबन्दिव्यवहितास्विति ।

ङ्गस्तथा त्वत्पक्षे ऽप्यनिष्टप्रसङ्गः कश्चित्स्यात् । निपुणाभ्यूहने सर्वत्र दूषणसम्भवात् । आपातरमणीयत्वस्य सर्वत्राविशेषादिति । विशेषतो यथा । एवं चेदनेन त्वयेदं साध्यते दूष्यते वा तथा सति मदुक्तेनानेन तर्केण त्वदुक्तिविपरीतं किं न स्यादविशेषादित्यादि । एतदवान्तरविशेषा उत्कर्षसमादयस्तत्रापि स्वरूपस्पर्शिन्यः काश्चित् । प्रतिबन्दिव्यवहितास्त्वविशेषसमादय इति भिदा ।

एवं विभागे शक्येऽपि विशेषानवधारणात् ।
विविच्य सूत्रयामास गौतमो जातिसन्ततिम् ॥
व्याघातमुखभेदादेरुत्थानादेश्च दर्शयन् ।
वैचित्र्यमन्तेवसतां तदानन्त्यं न्यदर्शयत् ॥
न चानन्त्येऽपि जातीनां दुर्विवेचाविशेषता ।

---

धर्मेणैकेन केषाञ्चिदविशेषप्रसञ्जनम् ।
साधनप्रतिबन्द्यायदविशेषसमो मतः ॥
साधर्म्यादेर्विपक्षाणां सपक्षत्वप्रसञ्जनम् ।
साधनप्रतिबन्द्या यत्स हि नित्यसमो मत इति ।

लक्षितयोरनयोर्जात्योः साक्षात्साध्यविपरीतापादकत्वाभावेन विपक्षादीनां सपक्षत्वादिप्रसञ्जनद्वारा साध्यविपरीतापादकत्वात् प्रतिबन्द्यव्यवधानेन साध्यविपरीतापादकत्वमुक्तम् । उत्कर्षसमादौ तु तथाविधप्रतिबन्दिव्यवधानाभावात्स्वरूपस्पर्शित्वमिति विवेकः । एतच्चोदाहरणेषु स्पष्टीभविष्यति । नन्वेवं विभागस्य शक्यत्वे गौतमः किमर्थं जातिं विविच्य सूत्रयामासेत्यत आह । एवमिति । विशेषानवधारणादिति । सामान्यविभागमात्रेण विशिष्यावधारणस्याभावादित्यर्थः । ननु तर्हि तदनुसारेण जातीनां चतुर्विंशतिविधत्वमेवायातम् । आनन्त्यं तत्र कुतोऽवगतमित्यत आह । व्याघातेति । व्याघातादेरुत्थानादेश्च वैचित्र्यं दर्शयन्नन्तेवसतां शिष्याणां तासां जातीनामानन्त्यं न्यदर्शयदित्यर्थः । ननु जातीनामा-

स्वव्यापि दूषणं जातिरिति सामान्यसंग्रहात् ॥
अवान्तरविधाभेदस्यानन्त्येऽपि च गृह्यते ।
अशेषसङ्ग्रहादेकमप्पृथिव्यादिलक्षणम् ॥
विशोधयिष्यमाणेषु विभागेषु च तत्त्वतः ।
विशेषलक्षणैस्तैस्तैः सङ्ग्रहो ऽपि भविष्यति ॥

वरदविष्णुमिश्रैस्तु स्वव्याघातिप्रसङ्गो जातिः । सा च चतुर्विंशतिविधेत्युक्त्वा साधर्म्यादिसूत्रमुपादाय यथोदयनं प्रायो लक्ष्यलक्षणादिकमुक्तम् । एवमन्यैरपि । वयं तु तदेवेदानीं प्रतिसंस्कारमदूरविप्रकर्षेण प्रब्रूमः । तत्र यदिदं सूत्रं "साध-

---

नन्त्येन तद्विशेषविवेचनं दुर्घटं स्यादित्यत आह । नचेति । अवान्तरप्रकाराणामनन्तत्वेऽपि सामान्यलक्षणे सर्वेषां शक्यग्रहत्वे दृष्टान्तमाह । अवान्तरेति । अप्पृथिव्यादिलक्षणमिति । जलावान्तरभेदानां पृथिव्यवान्तरभेदानामानन्त्ये स्वाभाविकं द्रवत्वगन्धवत्त्वाभ्यां तल्लक्षणाभ्यां जलत्वपृथिवीत्वग्रहः शक्यते तद्वत् प्रकृतेऽपीत्यर्थः । तत्रापि विभागेषु विविच्य कथ्यमानेषु विशेषैरपि लक्षणैर्विशेषितोऽपि ग्रहो न दुर्लभ इत्याह । विशोधयिष्यमाणेष्विति । यथोदयनमिति । उदयनोक्तप्रकारानतिक्रमेणेत्यर्थः । अन्यैरपीति । आधुनिकैर्नैयायिकैरित्यर्थः । वयं त्विति । तदेव वरदविष्णुमिश्रोदयनाद्युक्तमेव प्रतिसंस्कारमभिमुखीकृत्येत्यर्थः । लक्षणेनाभिप्रती आभिमुख्ये इत्यव्ययीभावः । संस्कारपदेन लक्ष्यलक्षणादिसह्याङ्गिविशदीकरणरूपं जातीनामतिशयाधानमुच्यते । अदूरविप्रकर्षेणात्यन्तातिक्रमरहितेन प्रकारेण प्रब्रूमः । अयं भावः । उदयनाद्यभिहिते जातिनिरूपणप्रकारे उक्तसंग्रहायुक्तनिराकरणाभ्यामनावश्यकांशोपेक्षणेन च जातीनां सप्ताङ्गीनिरूपणं कुर्म इति ।

अनभ्युपेतयुक्ताङ्गात् प्रमाणात् प्रतिरोधतः ।
प्रत्यवस्थानमाचख्युः प्रतिधर्मसमं बुधाः ।
साधर्म्यवैधर्म्यसमौ तद्भेदावेव सूत्रितौ इति ॥

म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाश्च" इति । अत्र द्वन्द्वात्परत्वात्समशब्दः प्रत्येकमन्वेतव्यः । सर्वानुगतस्तदर्थ एव च सामान्यलक्षणमिति प्रदर्शितम् । तत्र सूत्रकारोक्तयोः साधर्म्यवैधर्म्यसमयोरसूत्रितप्रतिधर्मसमावान्तरभेदतामन्ये व्याचख्युः । तत्कस्य हेतोः तथाविधमानाभासमुखेन प्रतिरोधोदाहरणान्तराणां दर्शनादन्यत्र तु छलादौ जात्यन्तरे वा तेषामनन्तर्भावाच्च । जात्यन्तरस्य कल्पनीयत्वे सत्युक्तेनोपलक्षणस्योचितत्वात् । अवान्तरभेदकथनस्य सर्वत्रावान्तरभेदसद्भावज्ञापनेन सप्रयोजनत्वाच्चेति चेत् । एवं यद्यनुक्तोदाहरणान्तराणि सम्भवन्ति तदा जात्यन्तरं वा तत्सङ्ग्रहलक्षणं वा कल्पनीयमेव । तदिहानभ्युपेतयुक्ताङ्गेन प्रतिप्रमाणेन प्रतिरोधः प्रतिधर्मसम इति परैः कल्पितम् । तत्र प्रतिरोधसम इति लक्षणसंज्ञाक-

---

नैयायिकैरुक्तम् दूषयितुमनुवदति । अत्रेति । तत्कस्य हेतोरिति । न कोऽपि तत्र हेतुस्तद्ज्ञानमन्तरेणेत्यर्थः ।

अवान्तराभिदाः सन्ति सर्वत्रेति प्रसिद्धये ।
तौ चेत्स्वतन्त्राभिमतौ प्रत्यक्षादेः प्रमाणतः ॥
एवं विधप्रसङ्गस्तज्जातित्वेन न सूत्रितम् ॥

परैरुक्तं हेतुमाशङ्कते । तथाविधेति । जात्यन्तरमिति । उक्ताभ्यश्चतुर्विंशतिज्जातिभ्यः पृथगित्यर्थः । तत्संग्रहलक्षणं वेति । उक्तलक्षणेष्वन्यतमस्य तत्संग्राहकत्वं वास्मदुक्तप्रकारेण सर्वसंग्राहकम् सामान्यलक्षणं वा कल्पनीयमिति भावः । ननु तर्ह्युक्तलक्षणमेव लक्षणान्तरतयाङ्गीकरणीयमित्याशङ्क्य तत्र लक्ष्यलक्षणक्लृप्तौ दोषं वक्तुं तदुक्तं प्रतिधर्मसमलक्षणं चानुवदति । तदिहेति । तत्र लक्षणसंज्ञाकल्पनमभ्युपगच्छति । तत्रेति । हेतुमाह ।

रूपनमुचितम् । अन्वर्थसमाख्यासिद्धावुपलक्षणसंज्ञानिवेशस्य निष्फलत्वात् । असूत्रितत्वेन सूत्रानुविधानव्यसनाभावाच्च । तादृशेनैव बाधो बाधसमः । तत्रापि प्रकरणसम इति समाख्या यौगिकी प्रक्रियमाणार्थसिध्यभिमानद्वारा कथञ्चिन्निवेशिता । अनयोस्तत्तत्प्रतिरोधकबाधकमर्यादालङ्घनाभ्युपगमपूर्वकत्वादसदुत्तरप्रकरणसमातीतकालोद्भावनाभ्यां केवलनिरनुयोज्यानुयोगाच्च व्यवच्छेदः । तादृशेनैवासिद्ध्यापादनमसिद्धिसमः । एवमनेकान्तसमादयो ऽपि ग्राह्याः । एषां सामान्यसङ्ग्रहस्तु प्रागुक्तप्रक्रिययानभ्युपेतमर्यादेन प्रतिप्रमाणेनानिष्टापादनं प्रतिप्रमाणसम इत्येव । अत्र साधर्म्यसमादिसूत्रेणैवासिद्धिसमादयोऽप्युपलक्षिताः । नच तासाम-

अन्वर्थेति । उपलक्षणसंज्ञानिवेशस्येति । साधर्म्यवैधर्म्यसमाशब्दयोरुपलक्षणसंज्ञत्वादिति भावः । नन्वनुपलब्धिसमादावुपलक्षणसंज्ञाया अभ्युपेतत्वादत्रापि तथा स्यादित्यत आह । असूत्रितत्वेनेति । तत्र सूत्रितत्वात्तदनुसारो युक्त इति भावः । एवं प्रकरणसमत्वेनाभिमते जातिविशेषे बाधसम इत्येव समाख्या यौगिकी युक्तेत्याह । तादृशेनैव बाध इति । उभयसाधर्म्यात्प्रक्रियासिद्धेः प्रकरणसम इति सूत्रव्याख्याने प्रक्रियासाध्योऽर्थ इति योगकथनात्तन्न्यायेन प्रकरणसमशब्दोऽपि यौगिक इति वक्तुं शक्य इत्याशङ्क्य तदानीं तादृशयोगकल्पनक्लेशो ऽधिक इत्याह । प्रक्रियमाणार्थेति । केवलनिरनुयोज्यानुयोगादिति । कालात्ययापदिष्टप्रकरणसमाभासवचनादित्यर्थः । अनेकान्तसमादय इत्यादिपदेन विरुद्धसमो गृह्यते। नैयायिकैरुक्तस्यानभ्युपेतयुक्ताङ्गेन प्रमाणेन प्रतिरोध इत्यस्यासिद्धिसमादिसङ्ग्राहकत्वाभावात्सर्वसङ्ग्राहकं लक्षणमाह । एषामिति । अनिष्टापादनमिति । प्रतिरोधबाधादीनां सर्वेषामापाद्यानामनिष्टत्वेन क्रोडीकारादनुगतलक्षणसिद्धिरिति भावः । नन्वसिद्धिसमादयो न सूत्रिता इत्यत आह । अत्रेति । असम्भव इति ।

सम्भवोऽन्यत्र वानुप्रवेशः । पृथगुदाहरिष्यमाणत्वात् । तत्र प्रतिरोधसमे तावत् सरूपं विरूपं चेति द्विविधं प्रत्यवस्थानम् । वादिना प्रत्यक्षादियज्जातीयेनार्थः साधितः तज्जातीयेन प्रत्यवस्थानं सरूपम् । तत्त्रिधा । प्रत्यक्षे प्रत्यक्षेणानुमानेऽनुमानेन शब्दे शब्देनेति । अतज्जातीयेन तु विरूपम् । तत्तु षोढा । यथा प्रत्यक्षे तदन्यभ्यां तथानुमाने शब्दे चेति । एवं बाधसमादिष्वपि विभागो भाव्यः । तत्र सरूपं यथा । प्रत्यक्षबलादेकश्चन्द्र इत्युक्ते अङ्गुल्यवष्टम्भादिसहकृतप्रत्यक्षेण अनेकः किं न स्यात् नह्येकं प्रत्यक्षं स्वार्थसाधकं प्रत्यक्षान्तरं तु नेति राजाज्ञा । नच सहकारिभेदो दोषः । प्रतिप्रत्यक्षं सहकारिवैचित्र्यात् । घृतादिष्वतीन्द्रियेषु च गन्धादिग्रहणा-

जातित्वासम्भव इत्यर्थः । अन्यत्र । छलादौ जात्यन्तरे वा । तथा चासिद्धिसमादीनां स्वव्याघातकत्वेन जातिलक्षणसत्त्वादन्यत्रानुप्रवेशाभावाच्च प्रतिप्रमाणसमायामेवान्तर्भावो युक्त इति भावः । तत्राद्यं प्रतिरोधसमं विभजते । तत्रेति । बाधसमादिष्वपीति । स्वरूपविरूपादिप्रत्यवस्थानभेदेन नवधा विभागो द्रष्टव्य इत्यर्थः । अङ्गुल्यवष्टम्भादीत्यादिपदेन तिमिरदोषो गृह्यते । अङ्गुल्यवष्टम्भादिसहकारिरूपदोषदुष्टत्वान्न तत्प्रत्यक्षं साधकमिति वैषम्यमाशङ्क्य निराकरोति । न च सहकारिभेदो दोष इति । वैचित्र्यादिति । तत्तदिन्द्रियव्यक्तिविषयसन्निकर्षादीनां प्रत्यक्षसहकारिणां तत्कालदेशव्यक्तीनां च विलक्षणत्वादित्यर्थः । ननु तत्र प्रत्यक्षसहकारिव्यक्तीनां भिन्नत्वेऽपि कारणतावच्छेदकं प्रत्यक्षसामान्यनिरूपितमिति न तत्र दोषत्वमित्यतो दूषणान्तरमाह । घृतादिष्विति । तैलादिव्यावृत्तघृतादिप्रत्यक्षे गन्धवर्णादिग्रहणं सहकारि । अतीन्द्रियपदार्थप्रत्यक्षे योगजादृष्टविशेषादिव्यचक्षुर्लाभादिकं सहकारि । तानि च न प्रत्यक्षसामान्यकारणानीति सदोषत्वात्तेषामपि स्वविषयसाधकत्वं न स्यादित्यर्थः । अनुमाने

योगादिसहकारिवैचित्र्याभ्युपगमादिति । अनुमाने तु साधर्म्येण वादिनोपसंहारे साधर्म्येण वैधर्म्येण द्वाभ्यां वा तथा वैधर्म्येण द्वाभ्यां वोपसंहारे तथैव त्रिधा त्रिधेति नवधा भेदः । तत्र त्रिधोपसंहारेऽपि साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः । वैधर्म्येण तु वैधर्म्यसमः । द्वाभ्यां तु साधर्म्यवैधर्म्यसम इति । आद्यो यथा । स्थावरशरीरं भोक्त्रधिष्ठितं जीवनिद्राप्रबोधादियोगित्वात् मनुष्यादिशरीरवदिति । साधर्म्येण वा, यन्न भोक्त्रधिष्ठितं न तन्निद्रादियोगि यथा घट इति । वैधर्म्येण वा द्वाभ्यां वा वादिना साध्योपसंहारे कृते जातिवाद्याह । यदि मनुष्यादिशरीरसाधर्म्यात् घटादिवैधर्म्यादुभाभ्यां वा स्थावरशरीरं भोक्त्रधिष्ठितमुच्येत तदा घटादिसाधर्म्यात् पाणिपादादिराहितत्वात् तन्निरात्मकमिति किं न स्यादिति । एवं तत्रैव मनुष्यशरीरवैधर्म्यादित्युक्ते वैधर्म्यसमः । समुच्चये तु साधर्म्यवैधर्म्यसम इति । आगमे यथा । अवैदिकहिंसा न धर्मः निषेधशास्त्रं हि तथाह इति नैगमिकेनोक्ते बाह्यो ज्वलति । नैवं नियन्तव्यम् आगमा-

---

स्वरूपप्रत्यवस्थानेन नवभेदान्विभागेनाह । अनुमाने त्विति । साधर्म्येणेति । अन्वयव्याप्तिपुरस्कारेणेत्यर्थः । वैधर्म्येण । व्यतिरेकव्याप्तिपुरस्कारेणेत्यर्थः । द्वाभ्यां वेति । अन्वयव्यतिरेकोभयव्याप्तिपुरस्कारेणेत्यर्थः । तथेति । प्रत्यवस्थान इत्यर्थः । त्रिधा त्रिधेति । वैधर्म्येणोपसंहारे त्रिधा द्वाभ्यामुपसंहारेऽपि त्रिधेति नव भेदा इत्यर्थः । तत्र नवानामपि भेदानां सामान्यक्रोडीकारेण त्रैविध्यमुदाहरणसौकर्याय दर्शयति । तत्र त्रिधोपसंहारेऽपीति । स्थावरशरीरमिति । वृक्षलतादिकमित्यर्थः । वृक्षादे रात्र्यां पर्णमुकुलभावेन दिवा तदुल्लासेन ग्लान्यग्लानिभ्यां च जीवनिद्राप्रबोधादिकमवगम्यते । जीवशब्दो जीवनपरः । नैगमिकेन । वैदिकेन

न्तरं हि तामपि धर्मयति श्रेयःसाधनतया तेन तद्विधानात् । न चागमत्वे विशेषं पश्यामः । परिग्रहस्त्वार्यैः कस्यचित् कस्यचित् पाषण्डिभिरिति कोऽयं विशेषः । यथारुचि सर्वत्र परिग्रहादिति । विरूपं यथा स्फटिकादीनामबाधितप्रत्यभिज्ञया स्थैर्यं वैनाशिकः प्रतिवक्ति । यत्सत्तत्क्षणिकं यथा उभयवादिसिद्धः क्षणोपाधिः । सन्तश्चामी भावाः । नहि प्रत्यक्षं प्रत्यक्षमित्येवानुमानेन न बाध्यते । ज्वालाभेदानुमानेन तदैक्यप्रत्यक्षस्याप्यबाधप्रसङ्गात् । अविशिष्टा हि तत्र चात्र च प्रत्यभिज्ञा । अनुमानं च भेदगोचरमविशिष्टमिति । एवमुदाहरणान्तराण्यपि पञ्च स्वयमेवो-

---

बाह्यो ज्वलति बौद्धस्तदमृष्यमाणः क्रुध्यतीत्यर्थः । आगमान्तरम् । बाह्याभ्युपेत आगमाभासः । तामपि । अवैदिकहिंसां धर्मयति । धर्ममाचष्ट इत्यर्थः । तत्करोति तदाचष्ट इति णिच् वैनाशिकः । क्षणध्वंसवादी । क्षणोपाधिरिति । क्षणोपाधेः क्षणिकत्वाभावे तस्य क्षणोपाधित्वं न स्यादित्यभिमानः । षट्प्रकारे विरूपप्रतिरोधसमे एकः प्रकार उक्तः । अनुक्ताः पञ्च प्रकाराः स्वयमेवोहितुं शक्या इत्याह । एवमिति । एवमत्रोहप्रकारः । घटादीनामबाधितप्रत्यभिज्ञया स्थैर्यं वैनाशिकः प्रतिवक्ति । घटादयः क्षणिकास्तथास्मदागमात् प्रमाणयोरविशिष्टत्वेन प्रत्यक्षेण बाधायोगादित्यागमेन प्रत्यवस्थानम् । अनुमानस्य प्रत्यक्षेण यथा । दीपस्य सदासम्पन्नसामग्रीकत्वेन प्रतिक्षणोत्पत्तावनुमितायां जडः प्रतिवक्ति । प्रत्यभिज्ञया स्थिरत्वावगमादिति । तत्रैवोपसंहारे तथा मदभ्युपगताप्तोक्तेरिति शब्देन प्रत्यवस्थानम् । शब्दस्य विरूपप्रत्यवस्थानं प्रत्यक्षानुमानाभ्यां यथा । आगमेन प्रपञ्चस्येश्वरशरीरत्वे उपसंहृते जडः प्रतिवक्ति प्रत्यक्षेण तदभावावधारणादिति । तथा प्रपञ्च ईश्वरशरीरं न भवति प्रमेयत्वादीश्वरवदिति । एषां च मर्यादातिलङ्घनगर्भतया केवलनिरनुयोज्यानुयोगाद्विशेषं वक्ष्यतीति । सद्विषया जातयः प्रतिपादिताः असद्विषयाश्च-

ह्नीयानि । असद्विषयाया अपि जातेरुक्तैव प्रक्रिया तत्र जातिवादिनः पर्यनुयोज्योपेक्षणमपि स्यादिति विशेषः । एवमनादृतप्रयोजकाकारतौल्येन प्रतिरोधे प्रतिरोधसम उदाहृतः । अथाङ्गीकृततुल्यभावेन तु बाधे बाधितसम उदाह्रियते । परशरीरमात्माधिष्ठितं वाक्यप्रयोगादिमत्त्वात् स्वशरीरवत् । इत्युक्ते प्रत्याह स्वशरीरव्यतिरिक्तत्वात् तृणादिवदनधिष्ठितमेव स्यात् । नह्यनुमानरूपेषु तस्य चास्य च विशेषं पश्यामः। तुल्यत्वे च तदेव साधकमिदं नेति को नियन्ता । ततश्चानेन स्वसाध्यसाधनात्पूर्वं बाध इति असिद्धिसमादीनां पुनरेवमुत्थानम् । अनित्यः शब्दः कृतकत्वादित्युक्ते प्रतिब्रूते स्वयं सिद्धो हि हेतुः स्वसाध्यं साधयेत् नचासौ सिद्धः प्रत्यभिज्ञयैक्यसिद्धेः सा चेदैक्यं न साधयेत् भेदमपि कः साधयिष्यति प्रमाणत्वप्रत्यक्षत्वादेरविशेषादिति । एवमनेकान्तो विरुद्धो वायं हेतुरित्युक्त्वाह । अनित्यत्वसाधकप्रमेयत्वहेतुः प्रमेयत्वप्रस्तुत-

---

जातय उक्तप्रक्रिययावगन्तव्या इत्याह । असद्विषयाया इति । ननु तत्र पर्यनुयोज्योपेक्षणस्य सत्त्वेन जातेर्दोषत्वं न स्यादित्यत आह । तत्रेति । अपि स्यादिति । तथा चान्यत्र दोषत्वेन सिद्धाया जातेरत्रापि दोषत्वं नियमितामिति भावः । प्रतिरोधसमापेक्षया बाधसमस्य भेदं दर्शयति । अङ्गीकृतेति । प्रत्यभिज्ञयेति । सोऽयं गकार इत्यादिप्रत्यभिज्ञयेत्यर्थः । भेदमपीति । पूर्वोत्तरशब्दयोर्भेदे सिद्धे हि कृत्यनन्तरभावित्वं कृतकत्वं सिध्यतीति भावः । अनित्यत्वसाधकप्रमेयत्वहेतुरिति । पक्षनिर्देशे प्रमेयत्वेऽनित्यत्वसाधकताभिमानमात्रं विवक्षितं वस्तुतस्तथाभावादिति ध्येयम् । प्रमेयत्वप्रस्तुतहेत्वन्यान्यानैकान्तिकान्य इति साध्यनिर्देशः । अस्यार्थः । प्रमेयत्वञ्च प्रस्तुतहेतुश्चेति द्वन्द्वः । प्रस्तुतहेतुशब्देन विवक्षितसाधका वागुक्ताः कृतकत्वादयो गृह्यन्ते, तयोरन्ये घटादयः तदन्यावुक्तौ प्रमेयत्वप्रस्तुतहेतू त-

हेत्वन्यान्यानैकान्तिकान्यः प्रमेयत्वादिति । एवमनैकान्तिकपद- स्थाने विरुद्धपदप्रक्षेपे विरुद्धता । तथान्यदन्यदपि । यद्यनेन हेतुनानैकातिकविरुद्धत्वादिकं न सिध्येद्वादिहेतुनापि कथं साध्यं सिध्येत् । न हि वाद्युक्त एव हेतुः स्वसाध्यं सा- धयिष्यति प्रतिवाद्युक्तस्तु नेति कथं नियमकल्पनमिति । तत्रापि प्रतिरोधबाधसमयोरिव मर्यादालङ्घनाशयगर्भतया केवल- निरनुयोज्यानुयोगात् विशेषः प्रतिसन्धानीय इति । अत्र सर्वत्र युक्ताङ्गहीनप्रतिकूलप्रमाणोपलम्भ उत्थानहेतुः दूषकमूलं न सा- धारणं व्याप्त्यादियुक्ताङ्गान्यतमहानिः । साधारणदूषकमूलप्रद- र्शनोपयुक्तं त्वेवं पातनं वादिसाधनमसाधकं युक्ताङ्गहीनप्रतिप्रमा- णापादितदोषत्वादिति हि जातिवाक्यार्थः । स एव स्वा- त्मानमपि व्याहन्ति । यथोक्तप्रक्रियया जातिवादिसाधनेऽपि येन केनापि युक्ताङ्गहीनप्रमाणेन तत्तद्दोषाणां तथा तथा

---

दुभयापेक्षया अनैकान्तिकान्यत्वं साध्यमानं स्वापेक्षया बाधात्प्रस्तु- तहेतावनैकान्तिकत्वमादाय तदन्यत्वं प्रमेयत्वे सिध्यतीति । विरु- द्धतेति । साध्येति शेषः । तथान्यदन्यदपीति । अप्रयोजकत्वाद्यवा- न्तरभेदा अपि तत्तदन्यपदप्रक्षेपेणानया महाविद्यया साधनीयाः इत्यर्थः । कथमनियमकल्पनमिति । वादारम्भे तथा नियमस्या- कृतत्वात् करणे वादासम्भवादित्यर्थः । प्रथमं नियमकल्पनं नहीत्य- न्वयः । ननूक्तानामसिद्धिसमादीनां केवलनिरनुयोज्यानुयोगाद्वि- शेषाभावान्न जातित्वं हेत्वाभासाभासवचनानां केवलनिरनु- योज्यानुयोगत्वस्य पूर्वमेवोक्तत्वादित्याशङ्क्याह । तत्रापीति । प्र- तिरोधबाधसमयोरिवेति । अन्यथा तयोरपि भवदभ्युपगतजा- त्योः केवलनिरनुयोज्यानुयोगतैव स्यादित्याशयः । उक्तासु जा- तिविधास्ववश्यं वक्तव्यायां सप्ताङ्ग्यां लक्ष्यलक्षणावसरफलानां चतुर्णां सुगमत्वादुत्थानमूलपातना निदर्शयति । अत्र सर्वत्रेति । प्रागेवेति । प्रतिबन्धाद्याह्निक एवेत्यर्थः । नियमरहितस्यापीति ।

दर्शयितुं शक्यत्वादिति । न च व्याप्त्यादियुक्ताङ्गमेव न भवतीति वक्तुं शक्यं प्रागेव तत्समर्थनात् । अन्यथा जातिवाक्यस्य दूषणव्याप्त्यनभ्युपगमे तत्प्रयोगनैष्फल्यप्रसङ्गात् । अतो नियमरहितस्यापि दूषकत्वनियममिच्छन् प्रतिक्षिपति स्वीकरोति च नियममिति सोऽयं वृषलविवाहमन्त्रन्यायः । अपि च हेतुसाध्ययोरन्यतरबलात्कस्य चिदनिष्टस्याव्याप्तधर्मस्य दृष्टान्तात् पक्षे पक्षाद्दृष्टान्ते वा समुत्कर्षप्रसञ्जनमुत्कर्षसमः । तत्र हेतुबलेन दृष्टान्तात् पक्षे समुत्कर्षो यथा । यदि कृतकत्वाद्घटवदनित्यः शब्दः तद्वदेव तत एव सावयवोऽपि किं न

साध्यव्याप्तिरहितस्यापि स्वसाधनस्येत्यर्थः । दूषकत्वनियममिच्छन्निति । तथा च व्याघाताज्जातिप्रयोगो वृषलोद्वाहमन्त्रायते । अमन्त्रकत्वेन विहिते शूद्रविवाहकर्मणि मन्त्रोच्चारणं हि व्याघातमावहति तथा जातिवादिनो जल्पनमिति भावः ।

अनभ्युपेतमर्यादमानेनानिष्टसाधनम् ।
प्रतिमानसमाजातिः प्रतिरोधादि तद्विदा इति सङ्ग्रहः ।
प्रतिसंस्कारमदूरात्प्रकर्षेण प्रब्रूम इत्युक्तोऽर्थः
अनभ्युपेतयुक्ताङ्गात्प्रमाणात्प्रतिरोधनः ।
प्रत्यवस्थानमाचख्युः प्रतिधर्मसमम्बुधा इति ।

लक्षितायां प्रतिधर्मसमायां लक्षणदोषप्रदर्शनेन लक्ष्याधिक्यप्रदर्शनेन च निर्व्यूढः । इदानीमुत्कर्षसमायामपि तं निर्वाहं दर्शयति । अपि चेति । तत्र नैयायिकैः

कस्याप्यनिष्टधर्मस्य वादिसाधनशक्तितः ।
दृष्टान्तात्पक्ष उत्कर्ष उत्कर्ष सम उच्यते ॥

इति लक्षणमुक्तम् ।

तत्राव्याप्तिमभिप्रेत्य स्वयं लक्षणान्तरं रचयति । हेतुसाध्ययोरिति । अविशेषसमातो भेदप्रदर्शनायोक्तं हेतुसाध्ययोरन्यतरबलादिति । तत्र हि सत्त्वादिना हेत्वन्तरेणोत्कर्षो वक्ष्यते । दृष्टार्थमुत्कर्षप्रकृतानुपदेशनार्थान्तरनिग्रहस्थानत्वं तद्व्यावर्तनायानिष्टस्ये-

स्यादिति । साध्यबलेन यथा । यदि घटवदनित्यत्वं शब्दस्येष्यते अनित्यत्वसहचरितं सावयवत्वमप्यस्य स्यादिति । नच साधनशक्त्यैवोत्कर्ष इति राजाज्ञा साध्यशक्त्यापि तदविरोधात् । अनिष्टत्वाद्यविशेषाच्च । एवमेव पक्षाद्दृष्टान्ते समुत्कर्षस्याप्यसम्भवशङ्का निरस्ता । यथा हि कृतकत्वाच्छब्दो नित्यश्चेत्तद्वदेव तत एव सावयवोऽपि स्यादित्युत्कृष्यते । तथा शब्दवदेव तेनैव घटोऽपि निरवयवः स्यादित्युत्कर्षः शक्यः समं चोभयत्रानिष्टत्वम् । अनतिप्रसक्तप्रसञ्जकविशेषयोगश्च शब्दघटयोः साधनाङ्गशक्योत्कर्षे इति लक्षणव्यवस्थितेश्च । ननु शब्दाद्घटे निरवयवोत्कर्षे शब्दानित्यत्वस्य किमायातमिति चेत् । घटाच्छब्दे सावयवोत्कर्षेऽपि तस्य किमायातमिति तुल्यम् । तत्र निरवयवत्वे सत्यनित्यत्वमभिमतं सावयवत्वेन व्याहन्यत इति हेतुदूषणपर्यवसायि विशेषविरोधश्चोदितः स्यादिति चेत् । तथापि साध्यमानस्यानित्यत्व-

---

त्युक्तम् । अनिष्टव्याप्त्यापादने सतर्कत्वेन जातित्वाभावात्तद्व्यावर्तनाय व्याप्तधर्मस्येति । वक्ष्यमाणसर्वलक्षणसङ्ग्रहेणाव्याप्तिपरिहाराय दृष्टान्तात्पक्ष इत्यादि । उभयत्रानिष्टत्वमिति । शब्दस्य सावयवत्वस्य घटस्य निरवयवत्वस्याप्यनिष्टत्वमस्तीत्यर्थः । अनतिप्रसक्तेति । विपक्षाद्व्यावृत्तकृतकत्वयोगो यथा शब्दे सावयवत्वप्रसञ्जकस्तथा स एव तथाभूतो घटे निरवयवत्वमपि प्रसञ्जयितुमीष्ट इत्यर्थः । व्यवस्थितजातिलक्षणसङ्ग्रहोऽप्यस्तीत्याह । शब्दघटयोरिति । ननु वाद्युक्तसाध्यप्रत्यवस्थानाय हि जातिप्रयोगस्तथा च साधनशक्त्या दृष्टान्ते ऽनिष्टसमुत्कर्षे साध्यप्रत्यवस्थानमेव नास्तीति स जातिरिति शङ्कते । नन्विति । परमुखेनोत्तरं वाचयितुं प्रतिबन्दिमाह । घटादिति । स्वपक्षे हेतुदोषपर्यवसानमाशङ्कते । तत्रेति । साध्याविरोधापादकं हेतुदोषं वाचयितुमाह । तथापीति । साध्यविरोधपर्यवसानमस्ति स्वपक्ष इति शङ्कते ।

मात्रस्य न किञ्चिद्धीनम् । प्रतिबन्ध्यभिप्रायेणोपाध्यभिप्रायेण वा तदुत्कर्ष इति चेत् तुल्यम् । घटस्य निरवयवत्वप्रसङ्गे कथमुपाधिव्यञ्जनमिति चेत् शब्दस्य सावयवत्वे कथं सावयवत्वमनित्यत्वप्रयोजकं ततश्च सावयवत्वप्रसङ्गो विपर्यये पर्यवस्यन् प्रयोजकाभावं व्यनक्तीति चेत् तर्हि प्रयोजकं सावयवत्वमन्तरेण यदि प्रयोज्यं शब्दे स्याद्घटेपि तथा स्यादिति प्रसङ्गे तात्पर्यात्तुल्यमुपाधिव्यञ्जनम् । अथ व्यापकसावयवत्वनिवृत्त्या व्याप्यानित्यत्वनिवृत्तिः पक्षे ऽभिप्रेता इह तु न तथेति तदप्यसत् । अपकर्षसमादविशेषप्रसङ्गात् । अत्रापि च घटे निरवयवत्वविपर्ययदर्शनेन पक्षेऽपि तत्समानयोगक्षेमतया साध्यनिवृत्तिसमर्थनाभिप्रायस्याविरोधादिति तिष्ठत्वेतत् । तदिह कस्यचित्साधनाङ्गस्य किञ्चि-

---

प्रतिबन्दीति । त्वदुक्तमेवास्माकं समाधानमिति स्वाशयमाविष्कृत्य परिहरति । तुल्यमिति । स्वपक्ष उपाधिव्यञ्जकत्वमुत्कर्षस्यास्ति न परपक्ष इति वैषम्यमाशङ्कते । घटस्येति । तत्राप्यवैषम्यं परमुखेन वाचयितुमुपाधिव्यञ्जनप्रकारं पृच्छति । शब्दस्य सावयवत्वे कथमिति । परिहर्तुराशयमजानानः स्वपक्ष उपाधिव्यञ्जनप्रकारमुपपादयति । सावयवत्वमिति । स्वाशयमुद्घाटयन् वैषम्यमपाकरोति । तर्हीति । पुनरपि प्रकारान्तरेण वैषम्यमाशङ्कते । अथेति । अविशेषप्रसङ्गादिति । साध्यनिवृत्तिपर्यन्तस्य जातिकार्यत्वेऽपकर्षसमाद्विशेष एवं स्यात् तथा चोपाधिसमर्थन एवास्या जातेः पर्यवसानं वक्तव्यमिति न वैषम्यमिति भावः । साध्यनिवृत्तेः सद्वारकत्वाद्वारकत्वकृत एवोत्कर्षापकर्षसमयोर्भेद इति यदि तदाप्यवैषम्यमाह । अत्रापि चेति । एतावतः शङ्कापरिहारप्रबन्धस्यात्यन्तानिपुणशिक्षात्मकत्वमभिप्रेत्याह । तिष्ठत्वेतदिति । एवमप्यवैषम्यमजानतः प्रत्युक्तिरनुवादानर्हेति भावः । अत्रापि लक्ष्यलक्षणावसराणामङ्गानां सुगमत्वात्तदतिरिक्तान्यङ्गानि दर्शयति ।

दनिष्टं प्रति व्याप्यत्वाभिमान उत्थानहेतुः । हेतुविपर्यय दूष्यप्रतिकूलतर्कयोगमुखेनाप्रयोजकत्वमारोप्यं विशेषविरुद्धत्वं वा तत् भ्रान्तिः फलं दुष्टत्वमूलं तु युक्ताङ्गहीनत्वम् । व्याप्तिलक्षणाङ्गस्य जातिसाधने हानेः । नहि यत्कृतकं तत्सावयवमित्यादि प्रक्रियया तदभिमतेषु व्याप्तिर्ग्रहीतुं शक्या । शब्दादिष्वेव बाधदर्शनात् । अतो यद्यव्याप्यमव्यापकं न साधयेत् कथं तन्निदर्शनेन व्याप्यस्य व्यापकसाधनं प्रतिरुध्येत । व्याप्तं च कृतकत्वमनित्यत्वेन । अनित्यावस्थान्तरातिरिक्तस्य प्रध्वंसस्याभावात् भावेऽपि भावत्वे सतीति विशेषणेन वा कृतकत्वलक्षणान्तरेण वा तद्व्यवच्छेदसिद्धेः । निवृत्तप्रतिबन्धस्वरूपप्राप्तमुक्तधीविकाशे च तदतिरिक्तागन्तुकसाध्यत्वलक्षणकृतकत्वस्याभावादिति । अयुक्ताङ्गाधिकत्वं वा । युक्ताङ्गहीनप्रतितर्कराहित्यस्यापि साधनाङ्गत्वेन स्वीकरणात् । अन्यथा जातिसाधनेऽपि तादृशाङ्गयोगस्य सत्त्वात्स्वव्याघातः । तथा हि नेदं साध्यसाधकमव्याप्तधर्मोत्कर्षमुखेन विरुद्धत्वात्

तदिहेति । साधारणदुष्टत्वमूलप्रदर्शनोपयुक्तं पातनं दर्शयितुमाह । अत इति । ननु ध्वंसे व्यभिचारात्कृतकत्वमनित्यत्वव्याप्तं न भवतीत्यत्राह । अनित्यावस्थान्तरातिरिक्तस्येति । नैयायिकमतेनाह । भावेऽपीति । कृतकत्वलक्षणान्तरेण वेति । कृत्यनन्तरभाविसत्तायोगित्वं कृतकत्वम् । इदं च ध्वंसे नास्ति ध्वंसे सत्ताया नैयायिकैरनङ्गीकारादतो न व्यभिचार इति भावः । नन्वेवमपि मुक्तधीविकाशे व्यभिचारस्तस्य कृतकत्वादनित्यत्वाभावाच्चेत्यत आह । निवृत्तप्रतिबन्धेति । प्रकृतिसंसर्गरूपप्रतिबन्धके निवृत्ते सति स्वेन रूपेणाभिनिष्पद्यते इति श्रुत्या प्रतिपादितः स्वरूपतः प्राप्तो मुक्तस्य धीविकाश आगन्तुकसाध्यतायोगी न भवतीति पूर्वमसतः कृत्यधीनस्वरूपकृतकत्वस्य न तत्र व्यभिचार इत्यर्थः । तादृशेति ।

सम्प्रतिपन्नविरुद्धवदिति हि जातिवाक्यार्थः। इदमपि साधनं न दूष्यं दूषयेत् तत्रापि तथाविधाव्याप्यधर्मोत्कर्षस्य सुशकत्वात् सन्ति हि धर्माः साध्यसाधनातिरेकिणस्तत्सहचरिताः संप्रतिपन्नविरुद्धवर्तिनः। अन्यथा पक्षदृष्टान्तवैषम्यासिद्धिप्रसङ्गात्। एवमुदाहरणान्तरेष्वपि प्रत्युत्तरं योज्यम्। नन्वेवमस्त्वव्याप्यधर्मोत्कर्षे स्वव्याघातः व्याप्योत्कर्षे तु कथम्। न कथंचित् इष्टव्याप्योत्कर्षे प्रकृतानुपमर्देनार्थान्तरनिग्रहस्थानत्वात्। अनिष्टव्याप्यापादने सत्तर्कत्वेन जातित्वाभावात्। अत एवेश्वरानुमानादिषु व्याप्योत्कर्षस्याजातित्वं स्थितम्। उक्तं चानुमानिकैरपि व्याप्तौ सत्यां नेदमनिष्टम् असत्यां तु न प्रसङ्ग इति। यद्यपि च कार्यत्वादिलक्षणहेत्वपेक्षया शरीर-

---

तथाविधेन तर्केण योगस्य सत्त्वात्तद्राहित्याभावाज्जातिसाधनमप्यसाधकं स्यादिति स्वव्याघात इत्यर्थः। अन्यथेति। सम्प्रतिपन्ने विरुद्धे तादृशधर्माङ्गीकारेऽसिद्धिप्रसङ्गादित्यन्ततः पक्षत्वदृष्टान्तत्वत्वयोरङ्गीकर्तव्यत्वेन तत उत्कर्षस्य सुलभत्वादिति व्याप्योत्कर्षस्य जातित्वं मन्वानः शङ्कते। नन्विति। तदभिमानं खण्डयति। न कथंचिदिति। व्याप्योत्कर्षस्य जातित्वमिष्टोत्कर्षे ऽनिष्टोत्कर्षे वेति विकल्प्याद्य आह। इष्टेति। एतेन क्षित्यादेः सकर्तृकत्वे शरीरजन्यत्वमपि स्यादिति वैदिकैः क्रियमाणमापादनमुत्कर्षसमा जातिरिति प्रलपन्तो हैतुकापसदा निरस्ता इत्यभिप्रेत्येश्वरानुमाने शरीरजन्यत्वापादनस्य सदुत्तरत्वं प्रतिष्ठितमित्याह। अत इति। आनुमानिकैः। नैयायिकै रित्यर्थः। शरीरजन्यत्वादेः साधनमुखेनोत्कर्षे जातित्वेऽपि साध्यमुखेनोत्कर्षेण तथात्वमिति दर्शयति। यद्यपीत्यादिना। समयकरणादिकम्। पदपदार्थसम्बन्धकल्पनादिकम्। आदिपदेन घटादिरचना प्रकारोपदेशः तदर्थानुष्ठाननिदर्शनं च गृह्यते। तत्र सशरीर एवेश्वरः धात्रे सर्वमुपदिशतीति भूतावेशन्यायेन शरीरपरिग्रहमा-

जन्यत्वादेर्व्यापकत्वं पक्षीकृतेष्वेव दुर्वादिषु बाधान्निरस्तम् । तथापि सिषाधयिषितसकर्तृकत्वाद्यपेक्षया तेषां व्यापकत्वस्य दुरपन्हवत्वात् साध्यमुखेन उत्कर्षे तस्य व्याप्यत्वान्न दोषः । वेदप्रणयनादिषु चेश्वरस्यापि सशरीरस्यैव कर्तृत्वं परेऽप्यनुजानते । तत्र चेद्व्याप्त्यैव शरीरपरिग्रहः तुल्यमन्यत्रापि । अथ तन्निरपेक्षं क्वचित्क्वचित् कर्तृत्वं तदा त्वशरीर एव प्रणयतां वेदम् । समयकरणादिकं च तस्याशक्याभावादिति । व्यापकाभासनिवृत्त्या कुतश्चित् कस्यचित् व्याप्याभासस्यापकर्षणमपकर्षसमः । स चानेकधा । पक्षात्सपक्षादुभयतो विपक्षाच्चेति । पक्षादपि हेतुसाध्ययोरन्यतरस्य द्वयोर्वा तथा

हुः । कर्तृत्वस्य शरीरव्याप्त्यभावे क्षित्यादिकरणवदशरीरस्यैव शक्तस्य वेदप्रणयनसङ्केतकल्पनाचारनिदर्शनसम्भवात्तत्र भूतावेशन्यायेन शरीरपरिग्रहो न कल्पनीयः स्यादिति भावः ।

हेतोः साध्यस्य वा शक्त्यानिष्टाव्याप्तप्रसञ्जनम् ।
पक्षाद्दृष्टान्ततो वात्र तत्रोत्कर्षसमो भवेत् इति सङ्ग्रहः ।

अत्र वा तत्र वेति वाकारोऽनुषञ्जनीयः । अत्र तत्र शब्दौ पक्षदृष्टान्तपरौ ।

व्यावृत्ते व्यापकाभासे पक्षतो लिङ्गसाध्ययोः ।
आकर्षोऽन्यत्र तत्र स्यादपकर्षसमः स्फुट इति ।

परोक्तमपकर्षसमलक्षणं वक्ष्यमाणोदाहारणान्तरासङ्ग्रहादव्याप्तिदुष्टमित्यभिप्रेत्य स्वयमपकर्षसमलक्षणमाह । व्यापकाभासनिवृत्त्येति । इष्टनिवृत्तिरूपानिष्टापादकतर्करूपसदुत्तरव्यावर्तनाय व्यापकाभासनिवृत्त्येत्यत्राभासपदमुक्तम् । उभयतोऽपि पक्षसपक्षाभ्यामित्यर्थः । एवमुभयत्रापि । उभयोर्वेति । हेत्वभावसाध्याभावयोरित्यर्थः । विपक्षमात्रादिति व्यतिरेकदृष्टान्तीकृताद्विपक्षादित्यर्थः । अत्र साध्याभावापकर्षस्य दूषणपर्यवसायित्वाभावात्सनोत्कृष्टव्यः । हेत्वभावापकर्षस्य तु दूषणपर्यवसायित्वं वक्ष्यति । मनुष्याशक्यक्रियत्वादिति । मनुष्यकृत्यसाध्यत्वादित्यर्थः । क्षि-

सपक्षात् उभयतोऽपि । विपक्षात्तु व्यतिरेकदृष्टान्ताद्धेत्वभाव-साध्याभावयोरन्यतरस्योभयोर्वा विपक्षमात्राद्धेत्वभावस्य इति विशेषः । तत्र पक्षादपकर्षो यथा । यदि घटादिवत् कार्यत्वात् क्षित्यादिसकर्तृकं साध्यते तदा आत्मादिवन्मनुष्याशक्यक्रिय-त्वात्कार्यत्वं सकर्तृकत्वमुभयं वा किंचन बाध्येत तच्चेत् साधयेत् इदमपि बाधेत न चेदिदं न तदपि अविशेषादिति । अत्र हेत्वपकर्षे स्वरूपासिद्धिः साध्यापकर्षे बाधः उभयापकर्षे तूभयमिति । असमीक्षितोदाहरणान्तराणि त्वेतावति विश्रान्ता-नि सपक्षादपि हि तयोरपकर्षे साध्यविकलत्वसाधनविकलत्वो-भयविकलत्वानि । व्यतिरेकदृष्टान्तीकृताद्विपक्षाद्धेत्वभावसा-ध्याभावयोरपकर्षे साधनाव्यावृत्तत्वसाध्याव्यावृत्तत्वोभयाव्या-वृत्तत्वानि । तत्रापि हेतुदोषचिन्तायामप्रयोजकत्वानैकान्त्यादि । अदृष्टान्तीकृताद्विपक्षमात्राद्धेत्वभावस्यापकर्षे तु विरोधः सा-धारण्यं वा । नचैवमपकर्षाणामसम्भव उत्थानहेत्वाद्यविशेषात् । नापि जात्यन्तरेऽन्तर्भावः तल्लक्षणानन्वयात् । अविशेषप्रसङ्गमा-त्राद्यविश्रान्तेश्च । नाप्यजातित्वं युक्ताङ्गहान्याद्यविशेषात् । अपकर्षसमसमाख्यानिरुक्तिमात्रेण संग्रहे सम्भवत्यनुक्तसमा-ख्यान्तरोन्नीतिश्चायुक्ता । नचापाद्यदोषभेदाज्जात्यन्तरता । पक्षा-

---

त्यादावसिद्धिवारणाय मनुष्यपदम् । किंचनेति । यत्किञ्चिदित्य-र्थः । साधनाव्यावृत्तत्वेति । तथा सति व्यतिरेकदृष्टान्तत्वं न स्यादित्याशयः । अप्रयोजकत्वानैकान्त्यादीति । साध्यव्यावृत्तौ व्याप्तिग्रहाभावेनाप्रयोजकता साधनाव्यावृत्तौ अनैकान्त्यम् । आदि-पदेन विरुद्धत्वं गृह्यते । साध्याभावसामानाधिकरण्यमेव साध-नस्य न नियतसामानाधिकरण्यं नियतसाध्याभावसामानाधिकर-ण्यमेव हि विरोध इति यदि कश्चिद् ब्रूयात्तं प्रत्याह । असाधारण्यं वेति । अविशेषसमादावन्तर्भावशङ्कां निराकरोति । दोषभेदा-

द्धेतुसाध्ययोरपकर्षेऽप्यसिद्धिबाधलक्षणापाद्यभेदेन तत्प्रसङ्गात् । तत्र सपक्षादपकर्षणं यथा । विगीतमीश्वरशरीरम् ईश्वरतज्ज्ञानेतरद्रव्यत्वात् संप्रतिपन्नरामकृष्णादिशरीरवत् इत्यत्रेश्वरेतरत्वं रामादिशरीरे दुर्वचं ईश्वरस्यैव सर्वत्र सर्वशब्दार्थत्वात् तद्व्यतिरेकव्यापकतया शशशृङ्गादिषु दृष्टस्यासत्त्वस्य संप्रतिपन्नशरीरे निवृत्तेरिति हेत्वपकर्षात् साधनविकलो दृष्टान्त इति । साध्यापकर्षणं यथा । रामकृष्णादिशरीरस्येश्वरशरीरत्वं नास्ति ईश्वरो ह्यशरीरः यच्छरीरं तच्छरीरिणः कर्मफलभोगायतनं यथा क्षेत्रज्ञशरीरम् इदमपि चेदीश्वरशरीरं स्यात् तत् कर्मफलभोगार्थत्वप्रसङ्गः । नच तदस्ति अतो न तच्छरीरमिति । उभयतोऽप्यपकर्षणमप्येतेनैवोदाहर्तव्यम् । विपक्षाद्धेत्वभावापकर्षणं यथा । धूमानुमाने कश्चिदाह यदि महानससाधर्म्यात् पर्वतो महानससाधर्म्यान्तरवान् तर्हि निर्धूमत्वव्यापकतया खपुष्पादिषु दृष्टस्यासत्त्वस्य व्यावृत्तौ निर्धूमत्वमपि व्यावर्त्तेत । नहि व्याप्याद्व्यापकः सिध्येत् व्यापकानिवृत्त्या तु व्याप्यभूत-

---

दिति । साधनविकलत्वादीनामुक्तानां स्वरूपासिद्ध्याद्यपेक्षया भिन्नत्वादित्यर्थः । विगीतमिति । पृथिव्यबादिकमित्यर्थः । व्यतिरेकव्यापकतयेति । ईश्वरेतरव्यापकतयेत्यर्थः । ईश्वरेतरत्वव्यापकतामेवोपपादयितुमीश्वरस्यैव सर्वशब्दवाच्यत्वादित्युक्तम् । अन्यथा घटादावेव व्यभिचारेणासत्त्वस्य हेतुव्यापकतैव न स्यादिति बोध्यम् । महानससाधर्म्यादिति । धूमवत्त्वादित्यर्थः । साधर्म्यान्तरवानिति । वह्निमानित्यर्थः । खपुष्पादिषु । गगनकुसुमादिष्वित्यर्थः । व्याप्तिभङ्गश्च यथायथं तत्रतत्र प्रत्यक्षानुमानागमैर्ग्राह्य इति । असत्त्वस्य निर्धूमत्वव्यापकता प्रत्यक्षतो भग्ना । ईश्वरेतरत्वव्यापकता त्वनुमानतः ईश्वरस्याप्रत्यक्षत्वेन तद्घटितव्यापकताया अप्रत्यक्षत्वात् भोगायतनत्वशरीरत्वव्यापकता च "यस्यात्मा शरीरं

या व्यापिकाव्याप्यनिवृत्तिर्न सिध्यतीति सुवचम् । ततश्च निरग्नौ महाह्रदे निर्धूमत्वानिवृत्त्या हेतुवृत्तेरनेकान्तः । एवं महाह्रदे व्यतिरेकदृष्टान्ततया निदर्शितेऽप्यसत्त्वनिवृत्त्या साधनाभावं साध्याभावमुभयाभावं वा व्यावर्त्य व्यतिरेकग्रहणं बाध्यमिति । अत्र व्यापकनिवृत्तिवद्व्यापकाभासनिवृत्तेरपि व्याप्यत्वाभिमान उत्थानहेतुः । यथायथं पक्षहेत्वादिसाधनाङ्गं दूष्यं बाधादिकमारोप्यं तद्भ्रमः फलम् दुष्टत्वमूलं त्वसाधारणं युक्ताङ्गहानिः । व्यापकत्वमनादृत्य सहचरितमात्रनिवृत्त्या व्याप्येतरनिवृत्त्युपन्यासात् । व्याप्तिभङ्गश्च यथायथं तत्र तत्र प्रत्यक्षानुमानागमैर्ग्राह्यः । अयुक्ताङ्गाधिकत्वं वा वस्तुसिद्धेः सहचरितसमस्तवस्त्वन्तरनिवृत्त्यभावापेक्षाङ्गीकारात् । अविषयवृत्तित्वं वा व्याप्यानिवर्तनानुगुणव्यापकनिवृत्तिशक्तेः सहचरितनिवृत्तावपि संचरणादिति । एवमपि चेत् किञ्चित् बाध्येत तदा बाधिताबाधितव्यवस्थैव न स्यात् सर्वत्र यत्किञ्चित्सहचरितनिवृत्तेः सुलभत्वात् । अत एव साधारणस्वव्याघातः जातिवादिसाध्यादिष्वप्यसाधकत्वादिषु सहचरितधर्मान्तरविरहस्यावश्यंभावात् । अन्यथा जातिसाधनेऽपि पक्षहेत्वादिविभागस्य दुर्वचत्वप्रसङ्गात् । वादिसाधनं स्वसाध्यसाधकं न भवति सहचरितनिवृत्त्यपहृतविषयत्वात् । निषिद्धत्वनिवृत्तिलुण्ठितसाध्यनै-

---

यस्य पृथिवी शरीरम् इच्छागृहीताभिमतोरुदेहः अनश्नन्नन्योऽभिचाकशीति" इत्याद्यागमैर्भङ्गेति विवेकः । पातनप्रदर्शनमुखेन साधारणदुष्टत्वमूलं स्वव्याघातं दर्शयति । एवमपि चेदिति । दुर्वचत्वप्रसङ्गादिति । पक्षे विद्यमानानां सर्वेषां धर्माणां सपक्षे विद्यमानानां च तेषां पक्षे विद्यमानत्वावश्यंभावादन्यथान्यतमनि-

गमिकालम्भाधर्मत्वसाधनवदित्यादि प्रक्रियया ह्यत्र जातिवाक्यविश्रान्तिः । अत्रासाधकत्वादिसहचरितदोषान्तरादिनिवृत्तेस्तद्बाधोऽपि दुर्वारः । नचास्तु सर्वं बाधितमिति शक्यं वक्तुं बाधस्याबाधे कस्यचिदबाधेन सर्वाबाधात् । तस्यापि बाधे बाधस्यैव बाधेन सर्वाबाधादिति । नचात्र प्रक्रियासमाख्यबाधसमेनसंकरः । तुल्यबलत्वाभ्युपगमपूर्वकत्वात् तत्र प्रत्यवस्थानस्य । इह तु तदभावात् हेतुबाधादिष्वसंकीर्णोदाहरणान्तरसम्भवाच्च । प्रतिप्रमाणसम्भेदतामात्रं तु भवतु वा मा वा उक्तप्रकारेण विवेकस्तावदुपपन्न इति । अथ वर्ण्यसमादेरुत्थानहेत्वादिव्यञ्जनायेदं तावद्ब्रूमः । पक्षदृष्टान्तौ प्रागेव लक्षितस्वरूपौ । हेतोश्च व्यक्तिभेदेऽपि सामान्याकारसंगृहीततया व्याप्तिश्च स्थापिता । तत्र पक्षवर्तिन्या हेतुव्यक्ते-

---

वृत्त्या तत्र साध्यसाधनयोरपकर्षप्रसङ्गादिति भावः । निषिद्धत्वनिवृत्तीति । निषिद्धरूपोपाधिनिवृत्त्या लुण्ठितं बाधितं साध्यधर्मत्वं यस्य साधनस्य तत्तथोक्तं तच्च तर्कनैगमिकालम्भस्य वैदिकपश्वालम्भस्याग्नीषोमीयादिहिंसायाः अधर्मत्वसाधनाद्धिंसात्वं तद्वदित्यर्थः । तत्रेष्टापत्तिमाशङ्कते । न चास्तु सर्वं बाधितमिति । तर्हि बाधो बाधितो न वेति विकल्प्यान्त्य आह । बाधस्याबाध इति । आद्य आह । तस्यापीति । भवतु वा मा वेति । प्रतिप्रमाणसमायां प्रतिप्रसङ्गसमायां वान्तर्भावावश्यंभावेन तदुभयानतिरेकान्न तद्विवारणीयमिति भावः । उक्तप्रकारेण विवेक इति । अपकर्षसमायाः सौत्रपरिगणितजात्यन्तरासांकार्यमित्यर्थः ।

कुतश्चिद्व्यापकाभासनिवृत्त्या कस्यचित्ततः ।
व्याप्याभासस्यापकर्षमपकर्षसमं विदुः इति सङ्ग्रहः ।

पक्षदृष्टान्तवर्तिन्योर्हेतुव्यक्त्योर्वक्ष्यमाणस्य पञ्चरूपस्यासङ्गतिं व्यावर्तयन् वक्ष्यमाणं प्रतिजानीते । अथेति । व्यक्तिभेदेऽपीति पाठः सुगमः । पाठान्तरं तु व्यावृत्तिभेदेऽपीति । साध्यसाधनव्यक्तीनां भि-

रसिद्धार्थत्वं साध्यज्ञापनाय प्रवृत्तत्वं व्याप्तिग्राहकप्रमाणेन विशेषतो नास्कान्दितत्वं नासाद्ग्धत्वं संदेहसमानविषयत्वं स्वरूपभेदश्चेति पञ्चरूपाणि सिद्धार्थत्वे पक्षस्वरूपव्याघातात् । साधननैरर्थक्याच्च । साध्यज्ञापनप्रवृत्त्यभावे हेतोरफलत्वात् हेतुत्वव्याघाताच्च । व्याप्तिग्राहकप्रमाणेन विशेषतो विषयीकृतत्वे विप्रतिपत्त्यभावप्रसङ्गात् । प्रयोगनैष्फल्याच्च । संदेहाभावस्त्वनुल्लेखेन निश्चयेन वा । पूर्वत्र किं साध्येत । उत्तरत्र सिद्धं किमर्थं साध्येत तथा सैव चेद्धेतुव्यक्तिस्तदा सिद्धार्थत्वादेरवश्यंभावात् उक्तदोषानतिवृत्तिः । कृत्तिकारोहिण्यादिषु चक्रप्रवाहवात्याविक्षेपादिवशात्तत्तदुदयादिव्यक्तिभेदा व्यवस्थिताः । अन्यथा तत्राप्यनुमेयपरिशेषाभावात् । एवं दृष्टान्तवर्तिहेतुव्यक्तेरुक्तरूपविपर्ययेण सिद्धार्थत्वादिरूपपञ्चकं शाश्वतिकं साध्यासिद्धौ सपक्षस्वरूपव्याघातात् । सम्प्रतिपत्त्यर्थं

न्नत्वे ऽपीत्यर्थः । संदेहसमानविषयत्वमिति । संदेहस्य यो विषयः साध्यं स एव हेतोर्विषयः ज्ञाप्यमित्यर्थः । हेतोः संदिह्यमानत्वं फलितार्थः । उक्तेषु पञ्चसु रूपेष्वन्यतमाभावेऽपि बाधकसत्त्वात् पञ्चापि तान्यङ्गीकार्याणीत्यभिप्रेत्य प्रथमादिरूपाविपर्ययक्रमेण बाधकान्याह । सिद्धार्थत्व इत्यादिना । पक्षस्वरूपव्याघातादिति । सिषाधयिषितधर्मविशिष्टधर्मिण एव पक्षत्वात् सिद्धार्थत्वे तदभावप्रसङ्गादित्यर्थः । हेतुत्वव्याघातादिति । साध्यज्ञापकस्यैव हेतुत्वेन साध्यज्ञापनौन्मुख्याभावे हेतुत्वाभावप्रसङ्गादित्यर्थः । अनुल्लखेनेति । साध्यापरिज्ञानेनेत्यर्थः । किमर्थमिति । साध्यस्य निश्चितत्वेन साधनवैयर्थ्यादित्यर्थः । ननु कृत्तिकादिभी रोहिण्याद्यनुमाने व्यक्तिभेदाभावाद्व्यतिरेकव्यभिचार इत्याशङ्क्य परिहरति । कृत्तिकारोहिण्यादिषु चेति । संतता राशिचक्रगतिरेव वात्या विषयत्वेन रूप्यते । आदिपदेन तत्तदाकारकर्मसंततिस्तदनुगुणभगवत्संकल्पश्च गृह्यते ।

व्याप्त्युदाहरणासम्भवाच्च। अत एव रूपान्तराणामपि विपर्यासः सिद्धः। अपि च स्वयं चेत्तत्र साध्यज्ञापनाय प्रवर्त्तेत ततो दृष्टान्तान्तरमन्वेषणीयम्। तत्रापि तथेत्यनवस्था अतस्तत्र साध्यमन्यतो वेदितव्यम्। व्याप्तिग्राहकप्रमाणाविषयत्वे संदिग्धार्थत्वे च पक्षदृष्टान्तयोरविशेषः। स्वरूपाभेदे चं पूर्वोक्ता दोषाः। नच पक्षो नास्तीति प्रतिज्ञातुं शक्यम्। एतत्प्रतिज्ञावाक्यार्थाभ्युपगमे पक्षाभ्युपगमात्। तदनभ्युपगमे पक्षप्रतिषेधासिद्धेः। एवं हि हेतुमात्रनिषेधोऽपि न शक्यः। कारकनिषेधे स्वकीयसर्वप्रवृत्तिविरोधात्। ज्ञापकनिषेधेऽपि परवाक्यात्त्स्वस्यार्थबोधमभ्युपगम्य परबोधार्थं वाक्यप्रयोगायोगात्। हेतुनिषेधे च सहेतुके व्याघातात्। अहेतुके

---

अत एवेति। सम्प्रतिपन्नत्वर्थव्याप्त्युदाहरणासम्भवादेवेत्यर्थः। विपर्य्यास इति। सिद्ध इति शेषः। प्रत्येकमपि विपक्षे बाधकमाह। अपि चेति। अन्यतो वेदितव्यमिति। प्रकृतानुमानव्यतिरिक्तैः प्रत्यक्षादिप्रमाणैरवधारणीयमित्यर्थः। अविशेष इति। सम्प्रतिपन्नत्वादिरूपो विशेषो दृष्टान्ते न स्यादित्यर्थः। प्रतिज्ञातुं शक्यमिति। पक्षो नास्तीति प्रतिज्ञाया अभावे पक्षनिषेधासिद्धेः पक्षो नास्तीति वाक्यस्यैव प्रतिज्ञात्वादिति भावः। पक्षो नास्तीति वदन् वक्तव्यः एतत्प्रतिज्ञातार्थोऽभ्युपगम्यते न वेति विकल्प्याद्य आह। एतदिति। पक्षाभ्युपगमादिति। प्रतिज्ञातार्थस्यैव पक्षत्वादिति भावः। अन्त्य आह। तदनभ्युपगम इति। असिद्धेरिति। प्रतिज्ञाया निरर्थकत्वादिति भावः। हेतुर्नास्तीति कारकहेतुसामान्यं निषिध्यते वा ज्ञापकहेतुसामान्यं वा आद्य आह। कारकनिषेध इति। विरोधादिति। प्रवृत्तेरिष्टसाधनगोचरत्वात्तदभावे तदभावप्रसङ्गादित्यर्थः। अन्त्ये परवाक्यात्स्वस्यार्थावबोधोऽभ्युपगम्यते न वा हेत्वभ्युपगमादेव तन्निषेधो न सम्भवतीत्यभिप्रेत्यान्त्ये व्याघातमाह। परवाक्यादिति। किञ्च हेतुनिषेधे ज्ञापकहेतुरस्ति न वा आद्य आह। हेतुनिषेधे इति।

तथैव हेतुसिद्धेरपि विरोधाभावात् । एवं दृष्टान्तोऽपि सामान्यतो निषेद्धुं न शक्यः । लौकिकपरीक्षकसर्वपुरुषसंमतत्वात् । तत्रापि च वाङ्मात्रेण निषेधे तावतैव तत्साधनस्याप्यविरोधात् । हेतुतो निषेधे ऽन्वयरूपस्य व्यतिरेकरूपस्य वा कस्यचित् दृष्टान्तस्य दुस्त्यजत्वात् इति प्रतिष्ठिता पक्षहेतुदृष्टान्तमर्यादा । एवं स्थिते दृष्टान्तवर्तिहेतुव्यक्तेः पक्षधर्मत्वापेक्षितासिद्धार्थत्वादिरूपविरहे साधनविकलत्वादिप्रसङ्गात् । दृष्टान्तस्यापि तादृग्रूपहेतुमत्तया वर्ण्यत्वेन प्रत्यवस्थानं वर्ण्यसमः । यथा ब्रह्म सविशेषं पदार्थत्वात् यः पदार्थः स सविशेषः यथा घट इत्युक्ते जातिवाद्याह पक्षे साधकतया प्रयुक्तस्य हि हेतोर्व्याप्तिर्दृष्टान्ते प्रदर्श्यते नान्यस्यानन्वयादिप्रसङ्गात् । स च यादृग्रूपविशिष्टः पक्षे दृष्टः

---

अन्त्य आह । अहेतुक इति । तथैवेति । ज्ञापकनिरपेक्षतयैवेत्यर्थः । ननु दृष्टान्तो नास्तीति वाङ्मात्रेण साध्यते उत हेतुतः आद्य आह । तत्रापि चेति । तावतैवेति । तावन्मात्रेणैवेत्यर्थः । अन्त्य आह । हेतुत इति ।

असिद्धार्थकता साध्यज्ञापनाय प्रवृत्तता ।
व्याप्तिग्राहकशून्यत्वं संदेहैकार्थता तथा ॥
हेतुस्वरूपभेदश्च पक्षहेतोर्विवक्षितुम् ।
दृष्टान्तवर्तिहेतौ तदुक्तरूपविपर्ययाः ।
भवन्ति पञ्चरूपाणीत्येवं न्याये व्यवस्थितिः इति सङ्ग्रहः ।

दुरुत्थानहेत्वादिव्यञ्जनाय पक्षदृष्टान्तहेतुव्यक्त्योः पञ्चरूपाण्युपपादितानि । ते वर्ण्यावर्ण्यासमे निरूप्येते इत्याह । एवं स्थित इति । एतेनवर्ण्यावर्ण्यसमयोरिह विशेषाकथनादनिरूपितविकल्पसमादिजात्यन्तरवन्नैयायिककृतनिरूपणमपेक्षापेक्ष्याणसम्भवात्किमर्थमेते निरूपिते इति चोद्यं निरवकाशमिति मन्तव्यम् । अनन्वयादिप्रसङ्गादिति । अनन्वितत्वेन उचितान्वयशून्यमनुचि-

तादृग्रूपविशिष्ट एव दृष्टान्तेऽप्युदाहरणीयः । अन्यथा सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादिति विशिष्टहेतुप्रयोगे सामान्यवत्त्वादिमात्रस्य व्याप्त्युदाहरणप्रसङ्गात् । एवमेकदेशव्यतिरेकेण व्यतिरेकोदाहरणप्रसङ्गात् । ततश्च पक्षवर्त्तिनो हेतोरसिद्धार्थत्वादयो रूपविशेषास्तद्धेतुकरूपभेदश्च दृष्टान्ते ऽस्ति वा न वा अस्ति चेदसिद्धार्थत्वादिभिः साध्यविकलत्वादिकमनिवार्यम् । न चेत् प्रकृतसाधनविकलत्वात् दृष्टान्त एव तादृशहेतुमत्तया वर्ण्यः अलं पक्षे साध्यवर्णनेनेति । अत्र सपक्षवर्तिहेतुव्यक्तेः पक्षमात्रविवक्षितरूपवैपरीत्येनोपलम्भ उत्थानहेतुः । दृष्टान्तादिकं दूष्यम् । साधनविकलत्वादिकमारोप्यम् फलं तद्भ्रान्तिः असाधारणं दुष्टत्वमूलं च युक्ताङ्गाधिक्यम् । नहि दृष्टान्तवर्तिन्या हेतुव्यक्तेरसिद्धार्थत्वादिकं युक्तम् । तथा सति दृष्टान्तत्वभङ्गप्रसङ्गात् । व्याप्तिसम्प्रतिपत्तिस्थानं हि दृष्टान्तं ब्रूमः । नचासिद्धार्थत्वादिसम्भवे तदभावसिद्धिः ।

---

तमित्युक्तस्य निग्रहस्थानस्य प्रसङ्गादित्यर्थः । आदिपदेनार्थान्तरं गृह्यते । सामान्यवत्त्वादिमात्रस्येति । सामान्यवत्त्वस्य वा अस्मदादिबाह्यकेन्द्रियग्राह्यत्वस्य वा व्याप्त्युदाहरणप्रसङ्गादित्यर्थः। यः सामान्यवान् स विशेषगुणः यथायमित्युदाहरणमनिष्टमेवेति भावः । एकदेशव्यतिरेकेणेति । यो विशेषगुणो न भवति न स सामान्यवान् यथायमित्यादिव्यतिरेकोदाहरणप्रसङ्गादित्यर्थः । अलं पक्ष साध्यवर्णनेनेति । दृष्टान्ते साध्यहेतुसम्प्रतिपत्त्यवलम्बनेन हि पक्षे साध्यं साधनीयम । अन्यथा तत्साधनस्य दुःशकत्वादिति भावः । दृष्टान्तादिकमित्यादिपदेन दृष्टान्तदूषणाहितं साध्यदूषणं गृह्यते । साधनविकलत्वादिकमित्यादिपदेनासाधारणत्वादिकं हेतुदूषणं गृह्यते । दृष्टान्तत्वाभावप्रसङ्गमेवोपपादयति । व्याप्तीति । तदभावसिद्धिरिति । असिद्धार्थत्वाभावरूपसम्प्रतिपत्तिस्थानत्वसिद्धिरित्यर्थः । सिद्धार्थत्वमेव हि सम्प्रतिपत्तिस्थानत्व-

अत एव युक्ताङ्गहानिरपि दृष्टान्तवर्तिहेत्वङ्गस्य सिद्धार्थत्वादेस्त्यागात् । अविषयवृत्तित्वं वा पक्षवर्तिहेत्वङ्गानां दृष्टान्तवर्तिनि सञ्चरणात् । एवमपि चेत् साधनविकलत्वादिः प्रसज्ज्येत तथा सति अनुमानजातीयमेवोच्छिन्नं स्यात् । नचैवमस्त्विति वाच्यम् । तत्र व्याघातादेः प्रागेवोक्तत्वात् । अपि चैवं पर्यनुयुञ्जानश्च जातिवादी किं दृष्टान्तवर्तिहेतुव्यक्तेः स्वभाववैषम्यमात्रं प्रकाशयति उत तन्मुखेन वादिहेतोरसाधकत्वं साधयति । नाद्यः अर्थस्थित्युपन्यासे विरोधाभावात् । अर्थान्तरनिग्रहस्थानप्रसङ्गाच्च । न द्वितीयः वादिसाधनमसाधकं साधनविकलत्वादिदोषैर्दूषितत्वात् सम्प्रतिपन्नहेत्वाभासवदित्यत्रापि पक्षसपक्षवर्तिहेतुव्यक्तिभेदस्य तद्रूपवैचित्र्यस्य च दुर्वारत्वात् । तदनभ्युपगमे स्वप्रयोगानुत्थानात्तदभ्युपगमे च स्वोक्तपर्यनुयोगसाम्यादिति । पक्षवर्तिहेतुव्यक्तेर्दृष्टान्तापेक्षितसिद्धार्थत्वादिरूपविरहे हेत्वासिद्ध्यादिप्रसङ्गात्तादृग्रूपहेतुमत्त्वाभ्युपगमे पक्षस्य साध्यत्वाभावप्रसञ्जनमवर्ण्यसमः । वर्ण्यः साध्यः अ-

मिति भावः । अत एवेति । असिद्धार्थत्वादेवेत्यर्थः । अत्र जात्युद्धारप्रकारं दर्शयन्नेव साधारणं स्वव्याघातकत्वमप्याह । एवमपि चेदित्यादिना । प्रागेवोक्तत्वादिति । अनुमानाध्यायादावेवोक्तत्वादित्यर्थः । स्वभाववैषम्यमात्रमिति । पक्षनिष्ठहेतुव्यक्त्यपेक्षयेति गम्यते । स्वपक्षे दोषं परिहृत्य वादिपक्षे दोषमप्याह । अर्थान्तरेति । दुर्वारत्वादिति । प्रमाणसिद्धत्वेनाशक्यापह्नवत्वादित्यर्थः । किञ्च तत्र व्यक्तिभेदवैचित्र्यं त्वयाभ्युपगम्यते न वा इति विकल्प्यान्त्य आह । तदनभ्युपगम इति ।

हेतोस्तु पक्षधर्मत्वे यावद्रूपमपेक्षितम् ।
तावद्रूपाङ्कहेतुः स पक्षो वर्ण्योऽन्यथा यदि ॥
भवेत्साधनवैकल्यमित्येषा प्रत्यवस्थितिः ।
ज्ञेया वर्ण्यसमा जातिरन्वर्था वर्ण्यतोक्तित इति सङ्ग्रहः ।

वर्ण्योऽसाध्य इत्यर्थः । यथा ब्रह्म शरीरित्वात्यन्ताभावरहितम् । आत्मत्वादनीश्वरात्मवदित्यत्र यद्यप्यात्मत्वमात्रमनुवृत्तं तथापि तत्तद्विशेषणभेदेन विशिष्टताभेदात् पक्षदृष्टान्तयोर्भिद्येत । ततश्च दृष्टान्त इव पक्षेऽप्यसौ हेतुः सिद्धार्थत्वादिविशिष्टो न वा नचेद्व्याप्यतयानुसंहितविशिष्टहेत्वभावात् स्वरूपासिद्धिः । सकलसपक्षानुयायिस्वरूपवैकल्यात् सोपाधिकतादिश्च । तद्रूपविशिष्टश्चेत् सिद्धसाधनत्वसाधकत्वनिर्णयसमानविषत्वप्रसङ्गः । ततश्चासाध्यत्वं पक्षस्येति । अत्र पक्षनिष्ठहेतुव्यक्तेर्दृष्टान्तमात्रापेक्षितरूपवैपरीत्येनोपलम्भ उत्थानहेतुः । पक्षहेतू दूष्यौ । सिद्धसाधनत्वादिकमारोप्यम् । तथाभिमानः फलम् । प्रातिस्विकं दुष्टत्वमूलं वर्ण्यसमवत् । व्यत्यासेन त्रितयमपि पक्षस्थहेतुव्यक्तेरनङ्गानां सिद्धार्थत्वादीनामुररीकरणादङ्गानामसिद्धार्थत्वादीनां त्यागात् । दृष्टान्तवर्तिन्यपेक्षितानां पक्षवर्तिनि संचरणाच्चेति । तथा

---

पूर्वोक्तवर्ण्यसमतदुत्तरसिद्धसाधनासिद्धिसमादिव्यावर्तनमभिप्रेत्यावर्ण्यसमां लक्षयति । पक्षवर्तीत्यादिना । वर्ण्यसमावर्ण्यसमयोरन्वर्थतां दर्शयितुं वर्ण्यावर्ण्यशब्दयोरर्थमाह । वर्ण्यः साध्योऽवर्ण्योऽसाध्य इति । यथेति । शरीरित्वे साध्यमाने मुक्तात्मन्यैच्छिकाशरीरित्वावस्थायां व्यभिचारः स्यादिति तद्व्यावृत्त्यर्थं शरीरित्वात्यन्ताभावराहित्यं साध्यते । तथा च मुक्तात्मन्यशरीरदशायामपि शरीरित्वात्यन्ताभावाभावान्न व्यभिचारः । तत्तद्विशेषणभेदेनेति । तत्तदात्मवृत्तित्वरूपविशेषणभेदेनेत्यर्थः । सोपाधिकतादिरित्यनेनाप्रयोजकत्वबाधौ गृह्येते । त्रितयमपीति । अयुक्ताङ्गाधिक्ययुक्ताङ्गत्यागाविषयवृत्तित्वानीत्यर्थः । व्यत्यासेन त्रितयमपीत्येतदेवोपपादयति । पक्षस्थेति । पातनसाधारणं दुष्टत्वमूलमभिप्रेत्य प्रत्युत्तरमाह । तथा चेति । पक्षो वर्ण्यो न भवतीति वदन् वक्तव्यः किमनेन पक्षमात्रमेव निषिध्यते उत

च स्वीकारे तथैव स्वव्याघातात् प्रतिक्रिया। नहि पक्षादिकमपि सामान्यतः प्रतिक्षेप्तुं शक्यं न कश्चित्पक्ष इति पक्षप्रतिक्षेपवाक्यस्यापि पक्षादिगर्भितत्वात् सिद्धसाधनतानुयोगश्चात्र स्वदूषणं भवति। यदि हि प्रतिवाद्यसिद्धमपि साधयन् अनेनोपायेन सिद्धसाधनं पुरस्कृत्य निगृह्येत तदा स्वयमेव हि निगृहीतः। एतावन्तं कालं निगृहीतस्य परसाध्यस्य इदानीमभ्युपगमात्। तथाचोक्तविरोधापसिद्धान्तादि अपि चेदमसाधकं सिद्धसाधनत्वादित्यत्र साधकत्वादसाधकमित्युक्तं स्यात्। नह्यन्यतः सिद्धमिदं साध्यत इत्युच्यते किन्त्वेतद्धेतुशक्त्यैवेति व्याघातः। अस्त्वेवं तथापि सिद्धसाधनतानुयोगमुखेनैव स्वव्याघातो दुर्वचः। इदमसाधकमिति जातिवादिसाध्यस्य सिद्धत्वाभ्युपगमे तदिष्टापादनात् स्वोक्तस्वमतविरोधापाताच्चेति चेत् तदेतदसमीक्षितवैषम्यं पिशाचभाषितम्। नह्यत्र जातिवादिवाक्यार्थं सिद्धं कृत्वा वयं स्वव्याघातं ब्रूमः। अपि तर्हि यद्येवंविधेन सिद्धसाधनत्वेन वादिसाधनं दुष्टमिष्येत तदा तथाविधेनैव तेन जातिसाधनमपि दुष्टं स्यात्। दुष्टस्य च न दूष-

---

प्रकृतपक्ष इति तत्राह आह। नहीति। साध्यमत्र आदिपदार्थः। पक्षादिगर्भितत्वादिति। यथा चैतत्तथोक्तं प्रागेव। अन्त्य आह। सिद्धसाधनेति। सिद्धसाधनेनैव पक्षस्यावर्ण्यत्वप्रत्यवस्थानादसाधकत्वादेस्तन्मूलत्वादिति भावः। स्वदूषणत्वमेवोपपादयति। यदि हीति। निगृहीतस्येति। प्रतिक्षिप्तस्येत्यर्थः। विगीतस्येति पाठान्तरेऽपि तथैव। अस्तु को दोष इत्यत आह। तथा चेति। तटस्थः शङ्कते। अस्त्वेवमिति। तदिष्टापादनादिति। जातिवादिनोऽभीष्टसिद्धिरित्यर्थः। किञ्चोक्तविरोधापसिद्धान्तौ स्यातां स्वसाधनस्य साधकत्वत्यागात्साध्यविपरीतपरिग्रहाच्चेत्याह। स्वोक्तेति। पि-

कत्वमिति निर्बाधा स्थापना। तच्चैतेनापि न दुष्टं तदा तद्वदेव स्थापनापि निर्दोषेति निरर्थकः श्रमः। अतो न ब्रूमो वयं नेदं दूष्यदूषकं सिद्धसाधनत्वादिति किं तु स्वव्यापिदूषणसमाधिग्रस्तत्वादिति। स्वोत्प्रेक्षितसाधनदूषणादिप्रतिक्षेप उत्प्रेक्षासमः। यथा शब्दानित्यत्वे वादिना प्रतिज्ञाते भण्डः प्रतिवाद्याह। अलमेतावता शब्दानित्यत्वे प्रत्यक्षत्वं हि त्वया हेतुरभिधित्सितः स च सामान्यादिभिरनैकान्तिक इति। साधनोत्प्रेक्षया प्रतिक्षेपः। एवं शब्दो नित्यः कृतकत्वादिति हेतुं प्रयुज्य वादी स्वयमेवाह। असिद्धत्वमिह दूषणं त्वया विवक्षितं तच्चात्र नास्ति प्रत्यक्षत एव कृतकत्वसिद्धेरिति मर्यादा। ये तु लक्षयन्ति।

---

शाचभाषितमिति। अपसद्भाषितमित्यर्थः। निर्बाधा स्थापनेति। स्थापनादोषनिराकरणार्थमेव जात्युत्तरदोषाभिधानादिति भावः। ननु तथापि नेदं दूष्यदूषकं सिद्धसाधनत्वादिप्रयोगे व्याघातो दुष्परिहर इति शङ्कां निराकुर्वन्नुपसंहरति। अत इति। दूषणसमाधिग्रस्तत्वादिति। दोष साम्याक्रान्तत्वादित्यर्थः।

हेतोः सपक्षवृत्तित्वे यादृग्रूपमपेक्षितम्।
पक्षोऽपि तावद्रूपाङ्कहेतुर्वर्ण्योऽन्यथा यदि॥
भवेदसिद्धभावादिरित्येषा प्रत्यवस्थितिः॥
स्यादवर्ण्यसमा जातिरन्वर्था साध्यतोक्तित इति संग्रहः।

सम्भवद्विशेषासु जातिषु प्रातंसस्कारमकूरविप्रकर्षेण प्रक्रम इति प्रतिज्ञातार्थानुगुण्येनोपपादितास्वसम्भवद्विशेषा जातयः यथोदयनं वरदराजीयादिषु शक्यज्ञाना इति विकल्पसमादिजातीरुपेक्ष्य कार्यसमायां वक्तव्यविशेषत्वाल्लक्ष्यलक्षणे पृथक् प्रक्रियया दर्शयति। स्वोत्प्रेक्षितेति। दूषणादीत्यादिपदेन दृष्टान्ततर्कादयो गृह्यन्ते। भण्डः। निर्मर्यादः। ये त्विति। अन्ये त्वित्यर्थः। यः कश्चिदित्यादिवत्प्रतिनिर्देशानिरपेक्षोऽन्यार्थकोऽयं यच्छब्दः। यद्वा।

असिद्धतां वादिहेतोरुक्त्वा तां साधयेत्स्वयम् ।
तद्दूषणामूलहेतुभङ्गः कार्यसमो मत इति ॥

अयमप्यस्मदुक्तोत्प्रेक्षासमावान्तरभेद एव। न चैतदेव लक्षणं युक्तम् । उदाहृतोदाहरणान्तरासंग्रहात् । नच कार्यसमसमाख्यैव सर्वत्रोचिता अवाचकत्वात् । युक्तस्त्ववान्तरविशेषमुदाहरतः सूत्रकृतस्तत्र तन्निवेशः। एवं दृष्टान्ततर्कोत्प्रेक्षादयोऽपि द्रष्टव्याः। न चात्र स्वोत्प्रेक्षितदूषणमात्राच्छलत्वं शक्यं वक्तुम् शब्दार्थारोपणाभावात् । पाक्षिकपराभिमतिसम्भवाच्च। यत्तु सौगतैरुक्तम्

---

अयमपीत्यत्र तैरुक्तः कार्यसम इत्यर्थवर्णनाद्वा प्रतिनिर्देशसिद्धिः । अयमपीति । अनित्यः शब्दः कार्यत्वादित्युक्ते प्रत्यवतिष्ठते । सिद्धं तावत्कार्यत्वं तत्साधनं च प्रयत्नानन्तरीयकत्वं तच्च प्रयत्नव्यङ्ग्यैः मूलोदकादिभिरनैकान्तिकं ततश्च कार्य्यत्वासिद्धिस्तदवस्थैवेति तैरुदाहृतः कार्यसमोऽपीत्यर्थः । नचैतदेवेति । नैयायिकैरुक्तं कार्यसमलक्षणमेवेत्यर्थः । उदाहृतोदाहरणान्तरासङ्ग्रहादिति । साधनदूषणोत्प्रेक्षासमोदाहरणयोरव्याप्तेरित्यर्थः । किञ्चैतैः कृता कार्य्यसमाख्यापि सर्वोदाहरणाव्यापनादयुक्तेत्याह । नचेति । तर्हि "प्रयत्नकार्यानेकत्वात् कार्य्यसमः" इति सूत्रकृता कार्यसमसंज्ञा कथमुक्तेत्यत आह । युक्तस्त्विति । उदाहरणविशेषाभिप्रायेण सूत्रकृता संज्ञाकृता । तथाहि सूत्रवृत्तिकृत उदाहरन्ति । अनित्यः शब्दः कार्यत्वादिति हेतौ जातिः उदाहरणान्तरसङ्ग्राहकलक्षणकारिणस्तु सर्वोदाहणव्यापकसंज्ञाकल्पनमेवोचितमिति भावः । दृष्टान्ततर्कोत्प्रेक्षादयोऽपीत्यादिशब्देन पक्षतद्विशेषणयोर्ग्रहणम् । पाक्षिकपराभिमतिसम्भवाच्चेति । छले तु कादाचित्कपराभिमत्यामसम्भवाद्वैषम्यमिति भावः। नन्वनवसरग्रहणरूपकेवलानिरनुयोज्यानुयोगविशेष एवायं न जातिः । परोक्तेः पूर्वमेव स्वोत्प्रेक्षिते दूषणाभिधानादिति चेन्न मर्यादालङ्घनाभिप्रायगर्भत्वेन ततो वैषम्यसम्भवात् । वक्ष्यमाणविधया सप्ताङ्गीसंपन्नत्वेन जातित्वानपायाच्च। पूर्वकक्षायामिदं दूषणमिति वा वक्ष्य-

साध्येनानुगमात्कार्यसामान्येनापि साधने ।
सम्बन्धिभेदाद्भेदोक्तिदोषः कार्यसमो मत इति ।

अत्रापि यदि कार्यत्वहेतोः पक्षदृष्टान्तयोस्ताल्वादिपूर्वकत्वमृद्दण्डादिपूर्वकत्वलक्षणविशेषप्रदर्शनमात्रे विश्रमस्तदा जातित्वमेव नास्ति कुतस्तद्विशेषता । अनुपयुक्तवादी त्वयमर्थान्तरेण निग्राह्यः । अथ दृष्टान्तस्थविशेषस्य व्यापकत्वाभिमानेन साध्यापकर्षविवक्षा तदापकर्षसमभेदोऽयं यदा तु साधनवैकल्यहेत्वसिद्ध्यादिष्वभिप्रायस्तदापि वर्ण्यावर्ण्यसमयोरनुप्रवेश इति न पृथग्जातिता । अतोऽस्मदुक्तप्राक्रियैवात्र साधीयसीति । अत्र परमतपारीणत्वाभिमानो वा स्वोत्प्रेक्षितातिरिक्तासम्भवाभिमानो वा सम्भवेऽपि तुल्यन्यायत्वाभिमानो वा प्रतिवादिनस्तथा विधाभिमानजननमनोरथो वा स्यादुत्थाने हेतुः । यथायथं सर्वं दूषणमारोप्यम् । तत्तद्भमः फलं

---

माणकक्षायामिदं दूषणमिति वा इदं न प्रवर्ततेऽपि तु सन्निहितकक्षायामिदं दूषणमित्येव प्रवर्तत इत्यतोऽपि प्रवृत्तप्रकारवैषम्याच्च भेदस्यातिस्फुटत्वादिति संक्षेपः । सौगतास्तु अनित्यः शब्दः कार्यत्वात् घटवदित्युक्ते घटस्य कार्यत्वं मृत्पिण्डादिपूर्वकं शब्दस्य तु ताल्वादिव्यापारपूर्वकमिति कार्यत्वस्य भेद इति पक्षदृष्टान्तयोर्हेतुभेदेन प्रत्यवस्थानं जातिरिति जातिमुदाहृत्य तदनुगुणं लक्षणमपि प्राणयंस्तदिदमनुवाति । साध्येनेति । शब्दो नित्यः कार्यत्वात् इत्यत्रानित्यत्वेन साध्येन सहव्याप्तिमता कार्यत्वेन सामान्यधर्मेण अनित्यत्वे साध्यमाने कार्यत्वस्य शब्दे ताल्वादिसापेक्षत्वात्पक्षदृष्टान्तयोर्हेतुभेद इति प्रत्यवस्थानं कार्यसम इति कारिकार्थः । अत्र प्रतिवादिनः पक्षदृष्टान्तगतहेतुवैलक्षण्यमात्रेऽभिप्रायाविश्रान्तिरुत साध्यप्रकर्षे आहोस्वित् साधनविकलत्वासिद्ध्यादाविति विकल्पमभिप्रेत्याद्यं दूषयति । यदीति । स्वस्थानानतिक्रमेण व्यभिचारादयः सर्वेऽप्यारोप्या

दुष्टत्वमूलं त्वसाधारणमविषयवर्तित्वम्। प्रतिवाद्युक्तमेवहि दूषणस्य विषयः न तु तदभिप्रेतमप्यनुक्तम् अनभिप्रेतं तु किं पुनः। अन्यथोपर्युपरि साधनदूषणपरंपरोत्प्रेक्षणेनोपन्यासप्रक्रियया प्रतिवादिनोऽनवसरप्रसङ्गः। कथायाश्च विश्रमः कदाचिदपि न स्यात्। किञ्च यदि सम्यञ्चं हेतुमन्यं प्रतिवाद्यभिप्रैति स्वयं तु सम्यञ्चमसम्यञ्चं वा कंचिदन्यमुत्प्रेक्ष्य दूषयति तदा प्रतिवाद्यभिप्रेतस्य हेतोः किमायातम्। नच तस्य तुल्यन्यायता निश्चेतुं शक्यते सामान्यतो विदिते प्रक्रियान्तरसम्भवात् विशेषतो विदिते तस्यैव दूषयितुं युक्तत्वात्। नच तस्य विशेषतो वेदनं शक्यं पराभिप्रायस्याप्रत्यक्षत्वात् विशेषनिर्णायकस्य लिङ्गादेश्चासंभवात्। नच सिद्धान्तकोशलिखितमेवासौ वदिष्यतीति नियमः प्रज्ञावतां स्वोत्प्रेक्षिकयान्यकथनस्याप्यविरोधात्। अतस्तदभिप्रेतमेवोत्प्रेक्षाप-

---

इत्यर्थः। अन्यथेति। प्रतिवाद्यनुक्तस्यापि दूष्यत्वे इत्यर्थः। अनवस्थाप्रसङ्गो भवतीति गम्यते। सम्यञ्चम्। अदुष्टम्। किमायातमिति। न कोऽपि दोष इत्यर्थः। ननूक्तो दोषस्तुल्यन्यायतयानुक्तोऽपि स्यादित्यत आह। नचेति। शक्यते इति। अनुक्तस्य ज्ञातत्वादिति भावः। नन्वनुक्तमपि विदितमिति चेत्तत्किं सामान्यतो विदितं विशेषतो वा नाद्य इत्याह। सामान्यत इति। प्रक्रियान्तरसम्भवादिति। उक्तदोषानाक्रान्तप्रकारान्तरसम्भवादित्यर्थः। न द्वितीय इत्याह। विशेषत इति। ननु विनिगमनाविरहादेको न दूषितः तेनापरस्यापि तुल्यन्यायतया दूषितत्वासम्भवेन सर्वदूषणप्रयत्नोऽर्थवानित्यत आह। नच तस्येति। नचानुमानाद्विशेषतो निश्चयः स्यादित्यत आह। विशेषेति। ननु स्वसिद्धान्तग्रन्थलिखितमेवासौ वदिष्यतीति निर्णयादनुक्तस्यापि दूषणं सम्भवतीत्यत आह। नच सिद्धान्तेति। स्वोत्प्रेक्षिकया स्वोत्प्रेक्षया स्वार्थे कप्रत्यये "प्रत्ययस्थात्कात्पूर्वस्य"तीत्वम्।

दमित्यपि दुर्वदम् । अस्तु वा लोकोत्तरप्रज्ञेन तदभिप्रेतमेव विदितं तथापि न तदनुक्तं दूष्यम् । इदं ममानभिप्रेतमित्यपन्हुवाने प्रतिवादिनि सभ्यानामपि तत्र साक्षित्वासम्भवात् । विश्वसाक्षिणां च मौनावष्टम्भात् शपथस्य चात्र दृष्टप्रत्यवाय हेतोरनुपदेशात् । अदृष्टप्रत्यवायहेतोरनुपयोगात्त । अपि च यद्यसौ निष्प्रतिभः स्यात्तदानायाससिद्धे विजये किंतदभिप्रेतवया कस्यचित् पुरस्कारेण । सप्रतिभश्च यदासावभिप्रेतं स्वयमेव वाचि निवेशयति तदा पुरोभाविषु वचनदोषादिषु सम्भविष्यत्सु किं विगीयमानव्याप्त्यादिपरामर्शसापेक्षार्थानुवादतद्दूषणवृथाश्रमेण ।

किं च सिद्धान्तग्रन्थलिखितानामपि हेतूनां बहुत्वात्तत्र को हेतुर्वादिनाभिप्रेत इत्यनध्यवसायस्यैवोचिततया तदभिप्रायपदमेव मयोत्प्रेक्षितमिति वक्तुमशक्यमित्याह । तदभिप्रेतमिति । नन्वलोकसाधारणप्रज्ञावतां पराभिमतोत्प्रेक्षासम्भवतीत्यनुक्तस्यापि दूष्यत्वं सम्भवतीत्याशङ्क्य परिहरति । अस्तु वेति । तदनुक्तं न दूष्यमित्येतदेवोपपादयति । इदं मम नाभिप्रेतमिति । साक्षित्वासम्भवादिति । सभ्यानामपि तदभिप्रायनिर्णयकारणासंम्भवादिति भावः । तर्हि विश्वसाक्षिणश्चतुर्दश प्रष्टव्या इत्यत आह । विश्वसाक्षिणामिति । तद्वाक्याधीननिर्णयस्यादृष्टिपथत्वादिति भावः । ननु तर्हि शपथेन निर्णयो भविष्यतीत्याशङ्क्य स किं दृष्टप्रत्यवायहेतुराज्यस्पर्शादिरदृष्टप्रत्यवायहेतुः पुत्रस्पर्शादिर्वेति विकल्प्याद्य आह । दृष्टेति । अनुपदेशादिति । ब्राह्मणस्य दृष्टप्रत्यवायहेतोः शपथस्याविधानादित्यर्थः । अन्त्य आह । अदृष्टेति । अनुपयोगादिति । दृष्टस्य तथाकरणसम्भवेन परम्पराजयानुपयुक्तत्वादित्यर्थः । उक्तमेव च दूष्यमित्यस्मिन्नर्थे प्रमाणान्तरमाह । अपि चेति । अनायाससिद्ध इति । आपत्तिभियैव परस्य निगृहीतत्वादिति भावः । वाचि निवेशयतीति । वक्तीत्यर्थः । वचनदोषादिष्विति । अवाचकादिष्वित्यर्थः । विगीयमानत्वं

वचनदोषानपि सम्भविष्यतो विदित्वा दूषयत्विति चेत् हन्त तर्हि प्रतिवाद्यपि वैयात्यादेवमपशब्दादिस्त्वया विवक्षित इत्युक्त्वा यदि निगृह्णाति तदासौ कथमपसरिष्यति । एतेन साधारणः स्वव्याघातोऽपि सुस्थः । नह्यन्यतर उत्प्रेक्षितमपि दूषयिष्यति नेतर इति राजाज्ञा । नच तथादौ नियमः कृतः । अपि च निरपराधस्य तावन्न निग्रहः अत्र च केनापराधेन प्रतिवादी निगृह्यते । परोत्प्रेक्षणीयदुष्टार्थाभिप्रायवत्त्वादिति चेत् संदिग्धं तावदिदं तथाविधाभिप्रायसम्भावनाविषयत्वादिति चेत् स्वस्यापि समानमित्येवमपि स्वव्याघातः । इदं समीचीनमदुत्प्रेक्षितासमीचीनव्यवस्थापकत्वादिति वाक्यार्थविश्रमेऽप्येवं विपरिवर्तो वाच्यः। इयं च जातिर्यद्यप्यादिमामपि कक्षामास्कन्दति आदावेव वादिनं विनिवार्य त्वदभिप्रेतमेव दुष्टमिति वक्तुं शक्यत्वात् तथाप्यर्थतो जात्यन्तरवद्द्वितीयैवेयं कक्षा । तदभिप्रेततया प्र-

ममानभिप्रेतमिति परेण निषिध्यमानत्वम् । नन्वनुक्तावसम्भविष्यतां वचनदोषाणामुद्भावने को विरोध इत्यत आह । वचनदोषानपीति । वैयात्यात् । धाष्ट्र्यात् । परमुखेन स्वव्याघातं वाचयितुं पृच्छति । अपि चेति । निग्रहहेतुमाशङ्कते । परोत्प्रेक्षणीयेति । दूषयति । संदिग्धं तावदिदमिति । तथा च हेतोः पक्षधर्मत्वेनानिश्चितत्वात् न साध्यसिद्धिरिति भावः । असंदिग्धहेत्वन्तरमाशङ्कते । तथाविधाभिप्रायसम्भावनाविषयत्वादिति चेदिति । परोत्प्रेक्षणीयदुःस्थाभिप्रायसंदेहाविषयत्वादिति चेदित्यर्थः । इयता परनिग्रहहेतुरुक्तः । इदानीं त्वादिपक्षस्य दुष्टतायां हेतुमाशङ्क्य व्याघातं दर्शयति । इदमसमीचीनमिति । मदुत्प्रेक्षितासमीचीनव्यवस्थापकत्वादिति । मदुत्प्रेक्षाधीनदुष्टत्वव्यवहारयोग्यताश्रयत्वादित्यर्थः । विपरिवर्तो वाच्य इति । परपक्षोऽनेनैव हेतुना दूष्य इत्यर्थः । ननु साधनजात्यङ्गीकारिपक्षानुसारेणास्या जातेः प्रथमकक्षायामपि सम्भवोऽस्त्वित्यत आह ।

थमस्यापि पर्वणः स्वयमेव पुरस्कारात् साधनेष्वपि केषुचित् जातित्वमिच्छतामपि दूषणरूपा जातयो द्वितीयादिकक्षाभाविन्य एवेति नियम इति।

एवं सप्ताङ्गसम्पन्नजातितत्त्वावलोकिनाम्।
सदुत्तरैस्तदुत्थानात् तत्त्वधीजयसम्भवः॥
अन्यथारण्यरुतवद्भवेयुरफलाः कथाः।
इति प्रख्यापनायात्र कथाभास उदाहृतः॥
अर्थिप्रत्यर्थिनोस्तावन्न द्वयोर्जयसम्भवः।
एकस्य विजयेऽपि स्यात्सफला सत्कथैव सा॥

---

साधनेष्वपीति। दूषणरूपा इति। साधनजात्याः प्रथमकक्ष्याभावित्वेऽपि दूषणजात्या उत्तररूपतया द्वितीयादिकक्ष्यास्वेव सम्भव इति भावः।

स्वोत्प्रेक्षामात्रसंसिद्धं साधनं दूषणादि वा।
यत्प्रतिक्षिप्यते सोऽयमुत्प्रेक्षासम उच्यते॥
परैरुक्ता कार्य्यसमाप्येतस्यैव भिदा मता।
सौगतोक्ता कार्यसमान्यत्रान्तर्भावमर्हति इति संक्षेपः।
विशेषोक्त्या शोधनीया जातयोऽत्र प्रदर्शिताः।
अन्या नैयायिकोक्त्यैव ज्ञेया इत्यार्य्यशासनम्॥

एवं जातिनिरूपणस्य प्रयोजनं दर्शयन् कथाभासनिरूपणमुपक्षिपति। एवमित्यादिना। सप्ताङ्गेत्यत्र षोडशपदार्थवत्समासः तत्त्वधीसम्भवो वादे जयसम्भवस्तु जल्पवितण्डयोरिति विवेकः। अरण्यरुतवदिति। अरण्यरोदनादिवदित्यर्थः। उदाहृत इति। गौतमेनेति शेषः। सदसत्कथे फलमुखेन कथयितुं जल्पवितण्डयोर्वस्तुस्थितिं तावद्दर्शयति। अर्थिप्रत्यर्थिनोरिति। जल्पवितण्डयोर्वादिप्रतिवादिनोरुभयोरपि जल्पसम्भवो नास्ति असम्भवात् अपि त्वन्यतरस्येत्यर्थः। तत्रान्यतरस्यापि जयेन साफल्यं दर्शयन् सफलत्वमेव सत्कथालक्षणमित्याह। एकस्येति। साफल्यं च तत्त्वधीविजयान्यतरवत्त्वं तेन न वादाव्याप्तिरिति ध्ये·

यत्र द्वयोर्न विजयो नवा तत्त्वविनिश्चयः ।
कुकथां कथयन्त्येनामसदुक्तिपरंपराम् ॥
तां द्विकक्षादिकामेके षट्कक्षावधिकां विदुः ।
पूर्वत्रासम्भवात्सभ्यैरुत्तरत्र निवारणात् ॥
असदप्रतिभादौ तु पक्षैकत्वमपि क्वचित् ।
सभ्येष्वसत्स्वदक्षेष्वप्युपर्यपि च धावति ॥

तथा हि कथामभ्युपगम्य यदि वादी सभ्येषु दत्तावधानेषु प्रतिवाद्यनुयुक्तोऽपि तूष्णीमास्ते प्रतिवादी च तदा मन्दचित्तवृत्तिरवश्योद्भाव्यमपि तादात्विकं निग्रहस्थानं न व्यनक्ति तदा कस्यचिदपि पक्षस्यानुत्थानमेव । निग्रहस्थानव्यञ्जनेऽपि तावति समाप्तिः । यदा तु वादी सद्वासद्वा ब्रूयात् अनाहितप्रतिभस्तु प्रतिवादी न किंचिद्ब्रूते वादी च यदि तदा निग्रहमूढस्तदा एकपक्षा कथा । द्वयोश्च न विजयः वस्तुतः सद्वादिनोऽपि प्राप्तकालनिग्रहानुद्भावनात् । वादिना

यम् । उक्तवैपरीत्यमेवासत्कथालक्षणमित्याह । यत्रेति । लक्ष्यस्वरूपं दर्शयति । असदुक्तिपरंपरामिति । एषा च कुकथा द्विपक्षीमारभ्य षट्पक्षीपर्यन्ता नैकपक्षी न वा सप्तपक्ष्यादीति नैयायिका वर्णयन्ति तदिदमाह । तामिति । तत्र हेतुमाह । पूर्वत्रेति । पूर्वत्र एकपक्षी नास्तीत्यत्र हेतुरसम्भवादिति । उत्तरत्र सप्तपक्ष्यादि नास्तीत्यत्र हेतुः सभ्यैर्निवारणादिति । एतच्चोत्तरत्र स्फुटीभविष्यति । एकपक्षीसप्तपक्ष्यादिरपि कुकथास्तीति स्वमतमाह । असदप्रतिभादौ त्विति । असदुपक्रमायामप्रतिभोपक्रमायां चेत्यर्थः । असत्सु । अविद्यमानेषु । अदक्षेषु । मन्दमतिव्यवहारेषु उपरि षट्पक्षी इत्याक्षिप्यते । उक्तकारिकार्थमेव स्पष्टयति । तथा हीति । मन्दचित्तवृत्तिः । मूढबुद्धिः । ननु सद्वादिनः कथं न विजय इत्यत आह । वस्तुतः सद्वादिनोऽपीति । ननु वा-

प्रतिवादिनिग्रहे तु तेनैव विजयित्वायासते । यदा त्वसत्साधनोपक्रमायां कथायां प्रतिवादी सदुत्तरेण निगृह्णाति तावति च सभ्याः प्रमाणीकृताः तदा प्रतिवादिनो विजयः असदुत्तरेण निग्रहे सभ्येषु च भरन्यासात् द्विपक्षी कुकथा । एवं तदुपरि वादिप्रतिवादिनोः सप्रतिभयोरसदुत्तरपरंपरायां पञ्चपक्षीपर्यन्ता कुकथाप्रवृत्तिः । सत्साधनोपक्रमायां तु षट्पक्षीपर्यन्ता । तत्र हि प्रथमः पक्षस्तावदनुपप्लवः प्रादुःष्यात् । प्रतिवादिनस्तु निरनुयोज्यानुयोगभेदचतुष्काद्यवतरणात् द्वितीयपक्षप्रवृत्तिः । तत्र सभ्यानां स्वयं कथायामनधिकृतत्वाज्जानन्तोऽपि वाद्यनुयोगमुपेक्ष्यमाणास्तूष्णीमासते । तदा वादी सदुत्तराप्रतिभानात् तत् प्रतिभानेऽपि वा जडीकरणदुरभिलाषेण तज्जातीयमन्यद्वा किंचिदसदुत्तरं प्रयुञ्जीत तथापि प्रतिवाद्यनुयोगमुपेक्षमाणेषु प्रतिवादिनस्तथैव चतुर्थपक्षावतारः । तथाप्यवसरप्राप्तायोभयस्तम्भरूपानुविधेय-

---

दिना प्रतिवादिनिग्रहानुद्भावनेऽपि सभ्यैस्तदुद्भावनाद्वादिनो विजयः स्यादित्यत आह । वादिना इति । विजयित्वायासत इति । विजयित्वं ज्ञातुं तिष्ठन्तीत्यर्थः । "क्रियार्थोपपदस्य च कर्मणि स्थानिन" इति चतुर्थी । सभ्या इति शेषः । कुत्रचित्कोशे सभ्या इति पठ्यत एव । स्वेषां कथायामनधिकृतत्वाद्वादिकृतनिग्रहोद्भावनेनैव वादिनो विजयं जिज्ञासमानाः सभ्यास्तूष्णीमासत इति भावः । तत्रानिवारणेन षट्पक्षीपर्यन्तप्रवृत्तौ हेतुमुपपादयितुं प्रस्तौति । तत्र हीति । निरनुयोज्यानुयोगभेदचतुष्काद्यवतरणादिति । अनवसरग्रहणनिग्रहाभासवचनच्छलजातीनामन्यतमस्य एकस्य द्वयोस्त्रयाणां चतुर्णां वा तत्तदसत्प्रतिभाभेदेनावतारादित्यर्थः । उभयास्तम्भरूपानुविधेयप्रश्नायेति । उभयोर्वादिप्रतिवादिनोस्तम्भस्तब्धता निर्वचनेनावस्थान-

प्रश्नाय दत्तक्षणेषु वादिनः पञ्चमः पक्षः । अनुविधेयेऽपि देवानांप्रिये स्वयमानृशंस्यात् कथंकरणयोरप्रतिभया कथाविच्छेदकाङ्क्षिषु षष्ठः । ततः परं स्वदोषपरिहारायोभौ निवार्य कुकथात्वप्रकाशनेनापक्षपातेन च द्वावपि निगृह्णन्ति । सभ्याभावे मन्दमतिव्यवहारेषु वा सभ्येषु मार्जारकलहवद्दैवान्निवारणमिति ।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धावनुमानाध्याये तृतीयं निरनुयोज्यानुयोगाह्निकम् ॥ २ ॥ ३ ॥

अथ प्रमाणाभासाः । अप्रमाणत्वे सति प्रमाणव्यवहारवि-

मिति यावत् । तेन रूप्यते व्यावर्त्यत इति स्तम्भरूपस्तम्भविषयः स चासावनुविधेयः प्रश्नश्च तस्मै तमधिगन्तुमित्यर्थः । दत्तक्षणेषु । दत्तावसरेषु अनुविधेयेऽपि । सम्भावनायामपि । देवानां प्रिये । मूढे "देवानां प्रिय इति च मूर्खे" इति निपात्यते । "अज्ञो मूढयथाजातमूर्खवैधेयबालिशाः" इत्यमरः । दैवान्निवारणमिति । उदासीनानामपि तत्रानिवारकत्वादिति भावः ।

इति श्रीमद्वेदान्ताचार्य्यचरणारविन्दानुसन्धानविशदप्रबोधेन भारद्वाजकुलजलधिकौस्तुभश्रीदेवराजाचार्य्यसूनुना श्रीनिवासदासेन विरचितायां न्यायपरिशुद्धिव्याख्यायां न्यायसारसमाख्यायामनुमानाध्याये तृतीयं निरनुयोज्यानुयोगाह्निकम् । २ । ३ ।

श्रीमते रामानुजाय नमः ।

यत्सान्निधानमात्रादसदुत्तरतापि शममुपयाति ।
सोऽयं सदुत्तरो मयि निगमान्तगुरुर्निरन्तरं दयताम् ॥

क्रमप्राप्तस्य प्रमाणाभासाख्यनिग्रहस्थानस्य निरूपणं प्रतिजानीते । अथेति । प्रमाणाभासाः निरूप्यन्त इति शेषः । तत्र सामान्यल-

षयास्ते । प्रमाणचातुर्विध्यात्तदाभासा अपि चतुर्विधाः । प्रत्यक्षानुमानागमस्मृत्याभासभेदात् । एषामवान्तरलक्षणं सामान्यलक्षणच्छययैव सुगमम् । तत्र प्रत्यक्षाभासो यथा । द्वौ चन्द्रमसौ पीतः शङ्ख इत्यादि । विषयेन्द्रियादिदोषादस्योद्भवः । इमं च प्रमाणतयोपन्यसतोऽस्य हेत्वाभासत्व-

---

क्षणमाह । अप्रमाणत्वे सति प्रमाणव्यवहारविषया इति । तत्र प्रमाणेष्वतिव्याप्तिवारणायाप्रमाणत्वे सतीति विशेषणम् प्रमेयादिष्वतिव्याप्तिवारणाय प्रमाणव्यवहारविषया इत्युक्तम् । प्रमाणव्यवहारविषयत्वं च तद्योग्यत्वं तच्च प्रमाणपदप्रवृत्तिनिमित्तैकदेशयोगः । एतेन व्यवहारदशायां प्रमाणाभासेष्वव्याप्तिः कस्यचिद्भ्रान्तस्य घटादावपि कदाचित्प्रमाणव्यवहारसम्भवात्तत्रातिव्याप्तिश्चेति निरस्तम् । नन्वेवमपि प्रमेयघटादावतिव्याप्तिः । यथावस्थितव्यवहारानुगुणज्ञानत्वं प्रमाणपदप्रवृत्तिनिमित्तं तदेकदेशस्य व्यवहारानुगुणत्वस्य तत्र सत्त्वादिति चेन्न यथावस्थितांशव्यतिरिक्तस्य व्यवहारानुगुणज्ञानत्वस्यैवैकदेशशब्देन विवक्षितत्वात्तस्य घटादावभावात् । नच हेत्वाभासेष्वव्याप्तिः स्यात् ज्ञानत्वघटितस्य तत्राभावादिति वाच्यम् । प्रमाणाभासानामेवात्र लक्ष्यत्वेन हेत्वाभासेष्वव्याप्तेरदोषत्वात् । ननु तर्हि हेत्वाभासनिरूपणमसङ्गतं स्यादिति चेदनुमानाभासोपपादकत्वेन सङ्गतत्वादित्यलं बहुना । सामान्यलक्षणच्छाययैव सुगममिति । प्रत्यक्षप्रमाणभिन्नत्वे सति प्रत्यक्षव्यवहारविषयाः प्रत्यक्षाभासाः । एवमनुमानाद्याभासा अप्यूहितुं शक्याः । तत्र चास्मदुक्तप्रकारेणाव्याप्त्यतिव्याप्ती च शक्यनिरासे इत्यर्थः । विषयेन्द्रियदोषादिति । प्रत्यक्चन्द्रगमनभ्रमादेर्विषयनिष्ठाभाससन्निधानादिदोषादुद्भवः । चन्द्रद्वित्वशङ्खपैत्यभ्रमादेरङ्गुल्यवष्टम्भतिमिरकुलादिदोषात्स्तम्भपिशाचभ्रमादेरनवधानभीरुत्वादिपुरुषदोषादिति विवेकः । प्रत्यक्षाभासनिरूपणस्य निग्रहस्थाननिरूपणत्वेन साफल्यमाह । इममिति । नचात्रान्वादेशतया एनादेशेन भवितव्यमितीममिति निर्देशोऽनुपपन्न इति वाच्यम् । पूर्वं का-

न्निग्रहो भवत्येव। अक्षपादसूत्रेऽपि हेत्वाभासग्रहणमुपलक्षणम्। चशब्दाद्वा अनुक्तसमस्तसंग्रहः। अनुमानाभासो यथा। वाष्पादिषु धूमत्वाद्यारोपेण धूमवत्त्वात् पर्वतोऽग्निमानित्यादि।

अव्याप्तापक्षधर्मौ द्वौ हेत्वाभासौ समासतः।
तयोरेव प्रपञ्चेन स्यादसिद्ध्यादिकल्पना॥

यदुक्तं न्यायतत्त्वे असिद्धानैकान्तिकविरुद्धा हेत्वाभासा इति। तत्रासिद्धोऽपक्षधर्म इतरावव्याप्तभेदौ हेत्वाभासौ। तावन्मात्रोक्तिश्च प्रदर्शनार्था। प्रयोजकान्तरेण वा तदन्यसंग्रहस्तत्र विवक्षितः। ये चासाधारणबाधितप्रकरणसमादयो भेदाः कथ्यन्ते तत्रासाधारणस्याव्याप्तत्वं केवलव्यतिरेकिनिराकरणे प्रदर्शितम्। अनैकान्तिकभेदश्चासौ कैश्चिदुक्तस्तथा चोक्तमागमप्रामाण्ये। स च तावदनैकान्तिकः। स हि द्विधा। साधारणासाधारणभेदा-

र्यान्तरार्थविधानार्थमुद्दिष्टस्य पुनः कार्यान्तरार्थमुद्देशस्यैवान्वादेशशब्दार्थतयाभियुक्तैर्व्याख्यातत्वात् प्रकृते च पूर्ववाक्यस्यानुवादत्वविवक्षणात्। अत एव हि एतमातं ङितं विद्यात् तमिमं राधे गृहं प्रापयेत्याद्युपपन्नमिति व्याख्यातम्। अक्षपादसूत्र इति। "प्रतिज्ञाहानिः प्रतिज्ञान्तर"मित्यादिनिग्रहस्थानसूत्रे हेत्वाभासाश्चेति हेत्वाभासग्रहणं प्रत्यक्षाभासादीनामप्युपलक्षणम्। तत्र चकारो वा उक्तसमुच्चयार्थः सन् प्रत्यक्षाभासादीन् समुच्चिनोतीत्यर्थः। हेत्वाभाससामान्यलक्षणस्य प्रमाणाभाससामान्यलक्षणच्छाययैव सुगमत्वात्तदुपेक्ष्य सामान्यतः स्वाभिमतं विभागमाह। अव्याप्तेति। हेतुभिन्नत्वे सति हेतुव्यवहारविषयत्वं हेत्वाभाससामान्यलक्षणम्। व्यवहारविषयत्वं च पूर्ववत्तद्योग्यता सा च पक्षवृत्तित्वादिरूपैकदेशयोगित्वम्। नचाज्ञानासिद्धाव्याप्तिस्तस्याज्ञानदशायां हेतुत्वाभावात्। हेतुपदेन गमकतोपयुक्तरूपवत एव विवक्षितत्वादिति दिक्। तत्रासिद्धो ऽपक्षधर्म इति।

त् । बाधितस्य तु न पक्षधर्मत्वम् । नापि व्याप्तिरिति दूषणद्वयसमुच्चयः । नहि साध्याभाववत्तया निर्णीतस्य संदिग्धसाध्यत्वलक्षणं पक्षत्वम् । न च हेतुमति पक्षे साध्याभाववत्तया प्रमिते हेतोर्व्याप्यताग्रहणसम्भवः । प्रकरणसमस्य तु प्रतिसाधनप्रतिरुद्धत्वलक्षणस्यानिर्णीतबलत्वात् । बलस्य च व्याप्तिपक्षधर्मतानातिरेकात् । व्याप्त्याद्यनिश्चयेन तयोरेवान्तर्भावः । स्वपक्षसिद्धाविव परपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः कैश्चिल्लक्ष्यते । यथा नित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् आकाशवत् । अनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् घटवदिति । तत्रेदं लक्षणमसंभवीत्येके एकस्य पक्षद्वयेऽपि त्रैरूप्यसम्भवात् । नित्यत्वे हि साध्ये शब्दाकाशयोरन्यतरत्वादिति हेत्वर्थः । अनित्यत्वे तु शब्दघटयोरन्यतरत्वादिति । नच शब्दसारूप्यमात्रेण हेतोरेकतातिप्रसङ्गादिति । तत्र यद्यप्येतस्मिन्नुदाहरणे लक्षणमसंभवि तथापि

---

असिद्धस्यापक्षधर्मे अनैकान्तिकविरुद्धयोरव्याप्तेऽन्तर्भाव इत्यर्थः । प्रयोजकान्तरेण वेति । असाधारणबाधितप्रकरणसमादेरसाधारणत्वव्यतिरिक्तेनानैकान्तिकत्वेन हेत्वाभासताप्रयोजकेन सङ्ग्रहस्तत्र न्यायतत्त्वे विवक्षित इत्यर्थः । नैयायिकैरुक्तानां भेदान्तराणामपि स्वोक्तविभागे ऽन्तर्भावं दर्शयति । ये चेत्यादिना । सर्वज्ञादिमतमाह । स्वपक्षसिद्धाविवेति । त्रिरूपो हेतुरिति । पक्षसत्त्वसपक्षसत्त्वविपक्षसत्त्वरूपत्रयविशिष्ट इत्यर्थः । तस्यैव साध्यविपरीतसाधकत्वेनाबाधितविषयत्वासत्प्रतिपक्षत्वयोरसम्भवादेव त्रिरूपत्वोक्तिः । तत्र नैयायिकैरुक्तं दूषणं दूषयितुमनुवदति । तत्रेदमिति । असम्भवमेवोपपादयति । नित्यत्वे हीति । अतिप्रसङ्गादिति । जलं पृथिवी पयस्त्वात् क्षीरवदित्यादावपि हेत्वैक्यप्रसङ्गादित्यर्थः । दूषयति । तत्र यद्यपीति । यथेति । स्वेतरे घटादयः । तद्वृत्तित्वानाक्रान्तो धर्मः शब्दमात्रवृत्तिः स

महाविद्यादिप्रस्थानेषु केषां चिद्धेतूनां साध्यतदभावयोः समानाकारतया सम्भवं पश्यामः । यथा शब्दः स्वस्वेतरवृत्तित्वानाक्रान्तानित्यनिष्ठाधिकरणं प्रमेयत्वात् घटवदिति शब्दानित्यत्वसाधने प्रवृत्तः प्रमेयत्वहेतुरेक एव । शब्दः स्वस्वेतरवृत्तित्वानाक्रान्तनित्यनिष्ठाधिकरणं प्रमेयत्वात् आकाशवदित्यपि शब्दानित्यत्वस्थापने पूर्ववृत्तिरूप उपलभ्यते । अतो नोदाहरणमादरणीयमिति न्यायाल्लक्षणासम्भवोऽयं हस्तालोचः । क्व तर्ह्यस्यान्तर्भावः अविनाभावादिसम्भावनायामपक्षधर्मे

चासावनित्यनिष्ठश्चेति कर्मधारयः तस्याधिकरणं शब्द इत्यत्र शब्दमात्रवृत्तेरनित्यवृत्तित्वं शब्दस्यानित्यतामादाय पर्यवस्यतीति साध्यपर्यवसानबलादेव शब्दानित्यत्वं सिध्यतीत्याशयः । एवमेव नित्यत्वसाधनेऽपि योज्यम् । पूर्ववृत्तिरूप इति । पूर्वत्रानित्यत्वसाधने मेयत्वहेतोर्यानि पक्षसत्त्वादीनि रूपाणि वर्तन्ते तानि रूपाणि नित्यत्वसाधकमेयत्वहेतौ वर्तन्त इत्यर्थः । पूर्वत्र वृत्तिर्येषां तानि पूर्ववृत्तानि तान्येव रूपाणि यस्य हेतोः स पूर्ववृत्तिरूप इति विग्रहः । लक्षणासम्भवोऽयम् । उदाहरणादर्शनमात्रेण लक्षणासम्भवोक्तिरित्यर्थः । "वदः सुपि क्यप् च" इति वदेरसम्भवे सुप्युपपदे "तयोरेव कृत्यक्तखलर्थाः" इति भावे क्यपि सम्प्रसारणे च रूपमसम्भवोद्यमिति । हस्तालोच इति । करपरामर्श इत्यर्थः । लोच दर्शन इति धातोर्भावे घञि "निष्ठायामनिट" इति वचनात् "चजोः कुघिण्ण्यतोः"इत्यस्याप्रवृत्त्या कुत्वाभावे रूपं लोच इति हस्तेनालोच इति विग्रहः । तथा च लक्षणासम्भववचनं निमीलिताक्षस्य हस्तपरामर्शमात्रेण दूरस्थवस्त्वभावावधारणप्रायमित्यर्थः । अविनाभावादिसम्भावनायामिति । अव्यभिचरितसामानाधिकरण्यानौपाधिकसम्बन्धसत्त्व इत्यर्थः । सम्भावनायामित्यनेन वक्ष्यमाणव्याप्त्यभावो व्यज्यते । अपक्षधर्म इति । साध्यविपरीतव्याप्यज्ञानस्य साध्यसंशयप्रतिबन्धकत्वेन शब्दे साध्यसंदेहाभावेन तस्य पक्षत्वाभावात् प्रमेयत्वहेतोः पक्षधर्मत्वाभावा-

अन्यथात्वव्याप्तेः। यदि पक्षे व्यापकप्रतीत्यपर्यवसानबलादनित्यत्वं साधयेत स एव हेतुः कथं न तद्विपरीतव्यापकं प्रतीत्यपर्यवसानेन नित्यत्वमपि। ततश्च अविशेषादुभयत्रापि व्याप्तिर्न स्वाभाविकीत्यव्याप्त कोटौ निवेशः। यथा च परपक्षवत् स्वपक्षस्यापि बाधकमुत्तरं जात्युत्तरमिति व्यवहरन्ति। तथा वाद्यभिमतसाध्यवत्तद्विपरीतप्रतिवाद्यभिमतसाध्यस्यापि साधकत्वप्रसङ्गादर्थत उभयासाधकान्येतानि जातिसाधनानीति च केचिदूचुः। अपि चैषां साध्यतदभावसाधने समानाकारत्वादेवानैकान्तिकवदव्याप्तत्वं सुव्यक्तम्। उभयत्र विपक्षे बाधकाभावाच्च। न चोभयत्र तत्संभवः व्याघातात्। एकस्मिन् विरुद्धयोरिव विरुद्धोभयप्रतिक्षेपयोरपि परस्परात्मनोरतिरिक्तयोर्वा स-

---

दिति भावः। ननु साध्यतद्विपर्यययोरुभयोरपि विनिगमनाविरहेण व्याप्यतायां मेयत्वे सम्भाव्यमानायां साधकबाधकप्रमाणाभाववत्साधकबाधकप्रमाणद्वयसत्त्वेऽपि संदेहस्य न्याय्यत्वेन पक्षधर्मत्वानपायात्। अपक्षधर्मेऽन्तर्भावो न सम्भवतीत्यतो व्याप्त्यन्तर्भावमेव निर्धारयति। यदीत्यादिना। येषां मते एतादृशानुमानानां स्वव्याघातकत्वेन जात्यन्तर्भावः तन्मतानुसारे तु न हेत्वाभासान्तर्भावप्रयास इत्यभिप्रेत्य तन्मतं दर्शयति। यथा चेत्यादिना। अनैकान्तिकवदिति। साधारणस्य साध्यसामानाधिकरण्यवत् तदभावसामानाधिकरण्यस्यापि सत्त्वाद्यथा व्याप्त्यभावस्तथा साध्यविपर्ययसाधनाय तन्नित्यानित्यतोभयसामानाधिकरण्यस्याप्यविशिष्टत्वादिति भावः। किञ्चोभयत्रापि विपक्षे बाधकतर्काभावेनाप्रयोजकत्वेन व्याप्यत्वासिद्ध्यवश्यंभावेनाव्याप्तकोटावन्तर्भावः सुदृढ इत्याह। उभयत्रेति। व्याघातमेवोपपादयति। एकस्मिन्निति। विरुद्धयोरिवेति। भावाभावयोरिवेत्यर्थः। भावाभावव्यतिरेकेण तदुभयविपर्ययौ न स्तः। भाव एवा-

मुच्चयासम्भवात् । नच शीतोष्णव्यतिरेकवत् कोट्यन्तरोपलम्भः भावाभावात्मना विरोधे तत्तदन्यात्मना विभागे च तदसम्भवात् । अत एव ह्यनिर्वचनीयानेकान्तवादयोरनवतारः । अस्त्वन्यतरद् विपक्षे बाधकमिति चेत् न तथापि तादृशरीतेः कुटिलोन्नीतिकल्पितताया विपक्षे बाधकविरहादप्रयोजकत्वं सिद्धम् । प्रमाणान्तरबलात्तु सिद्ध्यतः

भावविपर्ययः । अभाव एव भावविपर्यय इति पक्षे भावाभावविपर्यययोः समुच्चयो न सम्भवतीत्यर्थः । अतिरिक्तयोर्वेति । अभावप्रतियोगिकाभावान्तराङ्गीकारिमतेऽपि भावाभावप्रतियोगिकाभावयोरपि समुच्चयो न सम्भवति एकस्य नित्यानित्यभिन्नस्यासम्भवादित्यर्थः । भावाभावात्मना विरोध इति । शीतोष्णत्वयोर्गोत्वाश्वत्वयोर्भावात्मना विरुद्धयोरतिरेकेणानुष्णशीतगोत्वमहिषत्वादिकोट्यन्तरवद्भावाभावयोस्तेनैवाकारेण विरोधेन कोट्यन्तरोपलम्भः । तथा ब्रह्म तद्भिन्नं चेत्यादिना तत्त्वेन तदभिन्नत्वेन च विभागे प्रधानं पुरुषश्चेति भावात्मना विभागे तदतिरेकेण ब्रह्मत्वेन कोट्यन्तरोपलम्भः । तथा च नित्यानित्यत्वयोर्भावाभावात्मनोरतिरेकेण प्रकारान्तरासम्भवान्नोभयत्र विपक्षे बाधकतर्कसम्भव इति भावः । ननु तत्तदभावयोः समुच्चयः सदसदनिर्वचनीयतया निर्वचनीयरजतादौ मायिभिरङ्गीक्रियते यथाह । संप्रतिपन्नोपाधावभावप्रतियोगित्वमनिर्वचनीयमिति । तथा कौमारिलादिभिर्जातिव्यक्त्योर्गुणगुणिनोर्भेदाभेदसमुच्चयोऽङ्गीक्रियते । यथाहुः ।

लिङ्गसंख्यादिसम्बन्धः सामानाधिकरण्यधीः ।
सर्वं समञ्जसं ह्येतद्वस्त्वनैकान्त्यवादिनाम् इति ॥

तथा च नित्यत्वानित्यत्वयोः कस्मिंश्चिद्वस्तुनि समुच्चयसंभवेन कोट्यन्तरमपि संभाव्यत इत्यत आह । अत एवेति । भावाभावसमुच्चयविरोधादेवेत्यर्थः । ननु शब्दस्यान्वयव्यतिरेकिरूपप्रमाणान्तरबलेनानित्यत्वासिद्धौ तद्विपर्यये तथान्यतरकोट्यो र्बाधकतर्कसम्भवान्नोभयकोटावप्यप्रयोजकत्वमित्यत आह । प्र-

साध्यविशेषस्य विपर्यये बाधकमप्यस्तु न पुनः महाविद्यादि हेतुभिरप्रयोजकैः सिद्ध्यतः । अप्रयोजकोऽन्यथासिद्ध उपाधिमान् व्याप्यत्वासिद्ध इति चानर्थान्तरमित्यतोऽपि न द्वितीय बहिर्भावः । तथाहि—

विपक्षे बाधकाभावादुपाधेर्वापि सम्भवात् ।
हेत्वाभासोऽन्यथासिध्यन्नप्रयोजक इष्यते ॥
पञ्चभ्यः पृथगेवैनं कतिचित् संप्रचक्षते ।
व्याप्यत्वासिद्धभेदोऽयमिति वाहुर्मनीषिणः ॥
विपक्षे न हि निर्बाधे व्याप्तिः क्वापि प्रसिद्ध्यति ।
प्रतिकूलेषु तर्केषु सत्सु धात्राप्यनिश्चयात् ॥
व्याप्तिस्वरूपवैकल्यकल्पितोपाधिकेषु नः ।
अप्रयोजकतावादः प्राचां प्रागेव दर्शितः ॥

अन्येऽप्याहुः ।

समासमाविनाभावावेकत्र स्तो यदा तदा ।

माणान्तरबलात्त्विति । तथा च मानान्तरात्साध्यासिद्धौ महाविद्यायाः साधनत्वं न पुरस्कार्यमित्यप्रयोजिकैव महाविद्येति भावः । नन्वस्त्वप्रयोजकत्वं तस्य पृथग्घेत्वाभासत्वेन व्याप्यत्वासिद्धावनन्तर्भूततया ऽव्याप्तकोटावन्तर्भावो दुर्लभ इत्यत आह । अप्रयोजक इति । अनर्थान्तरमिति । एकार्थमित्यर्थः । इतीत्यनन्तरं वचनमिति शेषः । अतो न लिङ्गवचनानुपपत्तिः । विपक्षे बाधकाभावे व्याप्यत्वासिद्धिमुपपादयति । विपक्षे न हि निर्बाध इति । व्याप्तिस्वरूपवैकल्येति । सम्बन्धग्रहवेलानुयायिस्वरूपवैकल्यतः कल्पितनिषिद्धत्वाद्युपाधिकेषु हिंसात्वादिहेतुष्वप्रयोजकत्ववादो भट्टपराशरपादैः कृत इति निबन्धाद्याह्निक एव एवंजातीयके रूपवैकल्यकल्पितोपाधिके हेतावप्रयोजकत्वव्यपदेशः परीक्षकाणामित्यनेन भट्टपराशरपादवचनेन द-

समेन यदि नो व्याप्तस्तयोर्हीनोऽप्रयोजक इति ।

शावरवार्त्तिककारश्च ।

व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजकः ।
अस्मिन् सत्यमुना भाव्यमिति शक्त्या निरूप्यते ॥
अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
दृष्टैरपि न तैरिष्टा व्यापकांशावधारणा इति ।
एनमेव हि संदिग्धव्याप्तिकं बाह्याः पठन्ति ।
साध्यादन्येन धर्मेण सपक्षेष्वनुयायिना ।
विना पक्षे स्थितो धर्मः संदिग्धव्याप्तिको मत इति ।

---

र्शित इत्यर्थः । समासमाविनाभावाविति । एकस्मिन्साध्ये विषयभूते साध्येन सह समविषमव्याप्तिकौ हेतुत्वेनाभिमतौ स्तः । भवतश्चेत्तयोर्मध्ये हेत्वोर्मध्ये हीनो विषमव्याप्तिको हेतुः समव्याप्तिकेन यदि व्याप्तो न भवेत् यथा यागीयहिंसायां साध्येन पापसाधनत्वेन समव्याप्तिकेन निषिद्धत्वेनाव्याप्तिर्हिंसात्वहेतुरप्रयोजक इत्यर्थः । एवं च सोपाधिकस्यैवाप्रयोजकत्वमुक्तं भवति । व्याप्तेश्चेत्यादि । अयमर्थः क्वचिदेकेन साध्येन पापसाधनत्वादिना सह बहूनां हिंसात्वादिधर्माणामापततो व्याप्त्युपलम्भेऽपि तस्मिन् साध्ये सत्यमुनैव भवितव्यं नान्यथेत्यन्वयव्यतिरेकावधारणरूपया शक्त्या सामर्थ्येन कश्चिदेव धर्मस्तस्या व्याप्तेः प्रयोजको निरूप्यते ज्ञायत इति । ननु साध्येन साहचर्याविशेषे कथमेकस्यैव प्रयोजकत्वमित्यत आह । अन्ये इति । अन्ये धर्मास्तु सहचरितधर्मान्तराणां साहचर्यनियमवतां व्याप्तिमुपजीव्य ये व्याप्ता इह भान्ति तैर्व्यापकसाहचर्यै दृष्टैरपि पक्षे व्यापकांशस्य साध्यधर्मस्यासाधरणाप्रतीतिर्नेष्यत इत्यर्थः । परप्रयुक्तव्याप्तिकत्वसम्भावनया संदिग्धव्याप्तिक इति कैश्चिदुच्यत इति मतान्तरमाह । एनमिति । साध्यादन्येनेति । साध्यात्पापसाधनत्वादन्येन सह सर्वेषु सपक्षेषु साध्यधर्ममनुसरता निषिद्धत्वादिधर्मेण विना पक्षे स्थितो धर्मो हिंसात्वादिः परप्रयुक्तव्या-

तस्माद्व्याप्तभेद एवायमप्रयोजकः । तत्स्वभावानतिलङ्घनाच्च । श्रीमहाविद्यामानमनोहरप्रमाणमञ्जर्यादिपठितवक्रानुमानस्यापि तथात्वम् । एवं पक्षदृष्टान्ताभासानामपि हेत्वाभासेष्वेवान्ततो निवेशः । तेषां च तयोरितरत्रैव विश्रमः । सर्वेष्वपि पक्षाभासेषु हेतोरपक्षधर्मत्वात् । नहि पक्षाभासधर्मस्य पक्षधर्मता । नहि साध्यसाधनोभयविकलाश्रयहीनेषु दृष्टान्ताभासेषु हेतोर्व्याप्तिग्रहः शक्यः । सर्वेषु च दृष्टान्ताभासेषु अव्याप्तत्वात् । सिद्धसाधनेऽपि हि पक्षधर्मत्वं न सिध्यति । सिद्धधर्मविशिष्टस्यापक्षत्वात् । यदि पक्षीकृतेष्वेकत्र साध्यं प्रसिद्धं तदांशे सिद्धसाधनत्वादंशतो ऽपक्षधर्मत्वम् । यदा तु सिद्धमसिद्धं च साध्यद्वयं प्रयुञ्जीत तदापि सिषाधयिषितस्य सर्वस्य साध्यत्वाभावादंशतः सिद्धसाधनादंशतः पक्षधर्मत्वम् । अतोऽतिपीडा-

---

प्तिकत्वसम्भावनया संदिग्धव्याप्तिक उच्यत इत्यर्थः । तत्स्वभावानतिलङ्घनाच्चेति । अप्रयोजकतानपायादित्यर्थः । श्रीमहाविद्यामानमनोहरः प्रमाणमञ्जरीति ग्रन्थनामधेयानि । एवंजातीयका अन्येऽपि ग्रन्थाः सन्ति तत्र तत्र पठितानि परपक्षसाधारणानि वक्रानुमानान्यप्रयोजकतया व्याप्यत्वासिद्धान्तर्भूतान्येवेत्यर्थः । अस्तु ततः किमित्यत आह । तेषां चेति । तयोरितरत्रेति । अव्याप्तापक्षधर्मयोरन्यतरत्रेत्यर्थः । पक्षाभासानामपक्षधर्मेऽन्तर्भावमुपपादयति । सर्वेष्वपीति । दृष्टान्ताभासानामव्याप्तेऽन्तर्भावमुपपादयति । नहि साध्येति । सिद्धसाधनस्याप्यपक्षधर्मेऽन्तर्भावं दर्शयति । सिद्धसाधनेऽपीति । अतिपीडायामिति । अतिघर्षण इत्यर्थः । निपुणनिरूपण इति यावत् । नन्वेवं गौतमेन "व्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासा" इति किमर्थं पञ्चधा हेत्वाभासाः परिगणिताः किमर्थं वा सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्चेति न्यायाचार्यादिभिः प्रपञ्चिता इत्यत आह । पूर्वेषां त्विति । प-

यां द्वावेव हेत्वाभासौ । पूर्वेषान्तु पक्षाभासादिपृथगुदाहरणवत् स्फुटतया पृथगुद्भाव्यत्वाय नैयायिकपरिगणनं तदनुसारेण ब्रूमः । तत्र न्यायतत्त्वोक्तास्त्रयः । तदभिप्रेतौ कालात्ययापदिष्ट-प्रकरणसमाविति पञ्च हेत्वाभासाः । तत्र व्याप्तिपक्षवृत्तिनिश्चयरहितोऽसिद्धः । तद्भेदास्तु न्यायतत्त्वे संग्रहेणोक्ताः । अज्ञातसंदिग्धविपरीतास्तिस्रोऽसिद्धय इति । सर्वत्रापि पक्षादिषु अज्ञानसंशयविपर्ययैस्त्रिभिरेव ह्यसिद्धिर्भवति ।

पक्षतद्धर्मभागानां साध्यतद्धर्मयोस्तथा ।
हेतुतद्व्याप्तिधर्माणां स्वरूपेणाप्रसिद्धितः ॥
हेत्वंशयोरिहासिद्धेर्वा वैयधिकरण्यतः ।
पक्षांशसाध्यहेतुस्थविशेषणविशेष्ययोः ॥

---

क्षाभासादिपृथगुदाहरणवदिति । यथा हेत्वाभासान्तर्भूतानामपि पक्षाभासादीनां स्फुटतया पृथगुद्भाव्यत्वाय पृथगुदाहरणं तैः कृतं तथा अव्याप्तापक्षधर्मयोरन्तर्भूतानामप्यन्येषां हेत्वाभासानां पृथगुद्भाव्यत्वाय पृथक् परिगणनं कृतमित्यर्थः । तत्रेति । असिद्धानैकान्तिकविरुद्धा न्यायतत्त्वे कण्ठतः प्रतिपादिताः तत्र तात्पर्यगोचरौ कालात्ययापदिष्टप्रकरणसमौ द्वाविति पञ्च हेत्वाभासा इत्यर्थः। असिद्धसामान्यलक्षणमाह । तत्रेति । अज्ञानसंदिग्धासिद्धयोः सङ्ग्रहाय निश्चयपदम् । अन्यथा व्याप्तिपक्षधर्मतान्यतरराहित्ये लक्षणीक्रियमाणे तयोरव्याप्तिप्रसङ्गादिति । विशिष्य संभावितानसिद्धभेदानाह । पक्षेति । स्वरूपेणाप्रसिद्धित इति । पूर्वषष्ठ्यन्तेषु सर्वत्रान्वयः । पक्षतद्धर्मभागानामप्रसिद्धित इत्यनेनाश्रयासिद्धः आश्रयविशेषणासिद्धः आश्रयभागासिद्ध इति त्रयो भेदाः । साध्यतद्धर्मयोरप्रसिद्धित इत्यनेन साध्यासिद्धः साध्यविशेषणासिद्ध इति द्वौ हेतू । तद्व्याप्तिधर्माणामप्रसिद्धित इत्यनेन स्वरूपासिद्धो व्याप्यत्वासिद्धो हेतुर्विशेषणासिद्धश्चेति त्रयो भेदाः । आहत्य प्रथमकारिकया अष्टौ भेदा उक्ताः । हेत्वंशयोरसिद्धेरित्यनेन स्वरूपभागासिद्ध एकहेतोरंशभेदौ च

वैयर्थ्यादत्र सर्वत्र वादिनः प्रतिवादिनः।
द्वयोश्च निश्चयात्तद्वत्संशयात् सिद्धसाधनात् ॥
असिद्धयोऽशसिद्धेश्च विविच्यन्ते शताधिकाः।

यद्यपि व्यर्थविशेषणत्वादिकं न वस्तुतोऽसिद्धरूपं तथापि तत्त्वरत्नाकरादिषु परानुसारेण तथोक्तम्। व्यर्थमभिदधानो वादी त्वर्थान्तराख्यनिग्रहस्थानेन निगृह्येत। न त्वसिद्ध्या प्रकृतानुपयुक्तस्यैव स्वरूपासिद्धत्वात्। असिद्धत्वेऽपि स्वरूपा-

---

सिद्धाश्रयांशाविति वक्ष्यते। पाश्र्वे व्यधिकरणासिद्ध एकः पक्षांशसाध्यहेतुस्थविशेषणविशेष्ययोर्वैयर्थ्यादित्यनेन पक्षव्यर्थविशेषणासिद्धस्तादृशविशेष्यासिद्ध इत्यष्टौ भेदाः। आहत्येयताष्टादश भेदा उक्ताः। तत्रोक्तेषु भेदेषु वाद्यपेक्षया प्रतिवाद्यपेक्षयोभयापेक्षया च त्रेधा भेदविवक्षायां चतुःपञ्चाशद्भेदा उक्ता भवन्ति। निर्णयादिति। विपर्ययादित्यर्थः। तथा च पक्षतद्धर्मभागानामित्यादिना सिद्धान्वयेनोक्तेषु नवसु भेदेषु वादिप्रतिवाद्युभयापेक्षाभिर्विपर्ययान्वयेन त्रैविध्ये सप्तविंशतिभेदाः तथा पक्षांशसाध्येत्यादिना वैयर्थ्येनोक्तेष्वष्टसु भेदेषु वादिप्रतिवाद्युभयापेक्षाभिर्विपर्ययान्वयेन त्रैविध्ये चतुर्विंशतिभेदास्तद्वत्संशयादिति विपर्ययवत्संशयान्वयेनाप्यन्वये एकपञ्चाशद्भेदाः। सिद्धसाधनमित्येको भेदः। अंशासिद्धेश्चेत्यनेनांशतः सिद्धसाधनकृतोऽप्यसिद्धभेद एकः। एवं शताधिकासिद्धयो विविच्यन्त इत्यस्याष्टपञ्चाशदधिकशतं भेदाः असंकीर्णा उक्ता भवन्तीत्यर्थः। एवमतिपीडायामवान्तरभेदान्तराणामपि शक्योहत्वमुक्तभेदानां केषांचित्केषुचिदन्तर्भावं चाभिप्रेत्य शताधिका इति सामान्योक्तिः। न वस्तुतोऽसिद्धरूपमिति। व्यर्थयोर्विशेषणविशेष्ययोर्व्याप्तिपक्षधर्मतानपनोदनत्वादिति भावः। परानुसारेणेति। नैयायिकैर्नीलधूमत्वादौ व्याप्यत्वासिद्धताया अभ्युपगतत्वात्तदनुसारेण भट्टपराशरपादैरपि व्यर्थविशेषणादेर्व्याप्यत्वासिद्धत्वमुक्तमित्यर्थः। ननु तर्हि व्यर्थमभिदधानस्य

सिद्धेरेव वाच्यत्वात् । व्यर्थविशेषणप्रयोगेऽपि विशेष्यमात्रव्याप्तेरनपक्रमात् । विशिष्टस्यापि व्यभिचाराभावेन व्याप्तिसिद्धेः । न हि कार्यत्वमनित्यत्वं न व्यभिचरति प्रयत्नकार्यत्वं तु व्यभिचरतीति संभवति । नच धूमवत्त्वालोकवत्त्वे प्रत्येकं पावकाविनाभूते धूमवत्त्वे सत्यालोकवत्त्वादिति प्रयोगे त्वविनाभावं त्यजत इति युक्तिमत् । अतो व्यर्थविशेष्यत्वेऽपि न व्याप्तिभङ्गः। पक्षादिविशेषणादिवैयर्थ्येषु तु न व्याप्यत्वासिद्धिप्रसङ्गोऽपि । केचित्त्वसिद्धिं चतुर्धा संगृह्णन्ति । तथाहि व्याप्तत्वे सति पक्षधर्मतया प्रमितिर्हि हेतोः सिद्धिः तदभावश्च व्याप्तेः पक्षस्य तद्धर्मस्य तत्प्रमितेर्वा खल्वभावात् स्यात् । तत्र च व्याप्यत्वासिद्धिराश्रयासिद्धिः स्वरूपासिद्धिस्तत्रैवाज्ञानासिद्धिरिति समाख्यानिवेश इति । नन्विदमसिद्धलक्षणमतिव्याप्तं विरुद्धानैकान्तिकयोरपि व्याप्त्यभावेन व्याप्यत्वासिद्धत्वप्रसङ्गात् । नचैतदिष्टं पृथगेव परिसंख्यानात् । अथैतत्परिहारायानिश्चितपक्षवृत्तिरसिद्ध इति लक्ष्येत तदा त्वव्याप्तिर्व्याप्यत्वासिद्धसंग्राहकत्वाभावात् । न चान्यत्र तत्प्रवेश इष्टो दृष्टो वा । किंच साध्यधर्मविशिष्टो

---

दोषो न स्यादित्यत आह । व्यर्थमभिदधान इति । व्यर्थत्वेऽपि विशेषणस्य व्याप्तिमुपपादयति । न हीति । विशेष्यस्य तथात्वेऽपि तामुपपादयति । न चेति । यद्यपि हेतोर्व्यर्थविशेषणत्वादौ तद्धर्मावच्छिन्ने व्याप्तिर्नास्तीति व्याप्यत्वासिद्धिवाचोयुक्तेरस्त्यवकाशः तथापि पक्षादिविशेषणवैयर्थ्यादौ न साप्नोति न व्यर्थविशेषणादेर्व्याप्यत्वासिद्धित्वमाह । पक्षादीति । नैयायिकैरुक्तं विभागमाह । केचित्त्विति । पृथगेवपरिसंख्यानादिति । तथात्वेऽसिद्धान्तर्भावेन पार्थक्येन परिगणनं न स्यादिति भावः । ननु व्याप्यत्वासिद्धस्यानैकान्तिक एवान्तर्भावोऽस्त्वित्यत आह । नचेति । दृष्टो वेति । सोपाधिकतया व्याप्यत्वासिद्धस्य पक्षवत्तया वृत्तित्वेन

धर्मी पक्ष इति सिद्धसाध्यस्यापक्षत्वात्तन्निष्ठस्य सिद्धसाधनाख्यस्य हेतोराश्रयासिद्धत्वमुच्यते । तथा सति साध्याभाववत्तया निश्चितस्यापि संदिग्धसाध्यत्वलक्षणपक्षत्वाभावेनापक्षत्वात् । बाधितस्यापि हेतोराश्रयासिद्धतैव स्यात् । प्रमाणबाधितस्यापि साध्यस्य सिषाधयिषितत्वमात्रेण साध्यत्वात् तद्विशिष्टस्य पक्षत्वमिति चेत् प्रमाणसिद्धस्यापि तथा किं न स्यात् । अपि च व्याप्तिपक्षधर्मत्वनिश्चय एव हेतोरङ्गं तदभावलक्षणश्चासिद्धो हेत्वाभासमात्रपर्यायः स्यात् नतु तद्विशेषः । अतः प्रागुक्तप्रस्थानेन द्वैधमेवोचितमिति सत्यं तथापि हेत्वाभासान्तराणां पृथक्लक्षणसम्भवस्य वक्ष्यमाणप्रकारसिद्धत्वात् तल्लक्षणानाक्रान्तत्वे सति हेतुरूपासिद्धेरिह लक्षणत्वेन विवक्षितत्वान्न दोष इति । तथैव सिद्धसाधनमपि बाधितसाधनवत् पृथक्कृत्य कश्चित्तद्व्यतिरेकमप्यसिद्धलक्षणे निवेशयेदिति चेत् का नो हानिः विपक्षवैचित्र्येण न्यूनाधिकोद्देशलक्षणादेः प्रारम्भा-

---

पक्षमात्रवृत्तित्वाभावेन चानैकातिकान्तर्भावस्याभावादिति भावः । सोपाधिकस्य हेतोरुपाधिव्यतिरेकनिश्चितसाध्याभववत्पक्षकत्वेन विपक्षवृत्तित्वानपायात्साधारणान्तर्भावः स्यादेवेत्यस्वरसादाह । किञ्चेति । बाधितस्य विपक्षधर्मत्वं शङ्कते । प्रमाणबाधितस्यापीति । यद्यपि हेत्वाभासद्वैविध्यमेव युक्तं तथापि तान् पञ्चधा परिगणयतामसंकीर्णलक्षणस्य वक्तव्यतया स्वेतरवृत्तिनिदानेनैवास्य लक्षणं वक्तव्यमित्याशयेनाह । सत्यं तथापीति । हेत्वाभासान्तराणामिति । अनैकान्तिकविरुद्धबाधितानामित्यर्थः । ननु बाधितं पृथक्कृत्य तद्भिन्नत्वमसिद्धवल्लक्षणे निवेश्यते तर्हि सिद्धसाधनेऽपि तथा स्यादिति शङ्कते । तथैवेति । नन्वसिद्धत्वेन सामान्योद्भावने लाघवमस्तीति प्रयुञ्जानस्य सामान्य एव तात्पर्यात् कथं तुल्यार्थतेत्यत आह । सामान्यनिर्देशेऽपीति । उक्तानां स

ह्निक एव प्रदर्शितत्वात् । अत्र तु पञ्चशः परिगणयतामभिप्रायेणैव संग्रहात् । नचैकीकरणपृथक्करणाभ्यां तस्यानाभासता स्यात् । येनान्यतरपर्युदासे प्रयस्येम । उद्भावनेऽपि सामान्यरूपे विशेषरूपेऽपि तुल्यार्थतैव विवक्षिता । सामान्यनिर्देशेऽपि हि कथमिति विशेषमनुयुक्तेन स एव हि वक्तव्य इति । अथात्र काश्चिदसिद्धय उदाह्रियन्ते । तत्र व्याप्यत्वासिद्धः प्रागुक्तो रूपवैकल्यकल्पितोपाधिको द्रष्टव्यः । तत्र च संदिग्धोपाधिके संदिग्धव्याप्यत्वासिद्धता । आश्रयासिद्धो यथा शशशृङ्गं तीक्ष्णं शृङ्गत्वादिति । स्वसिद्धान्तमात्रसिद्धप्रकृतिपरमाण्वादिपक्षीकारे त्वन्यतराश्रयासिद्धिः । आश्रयभागासिद्धो यथा । अवयवावयविनौ नित्यौ द्रव्यत्वादिति न ह्यवयवसमुदायातिरिक्तमवयविशब्दार्थं त्र्यन्तविद इच्छन्ति । स्वरूपासिद्धो यथा । नित्यः शब्दः निरंशत्वादिति । अत्र हि—

व्योम्नोऽर्द्धभागाश्चत्वारो वायुतेजः पयोभुवाम् ।

इत्यादिपञ्चीकरणबलादागमिकैर्नभसोऽपि सावयवत्वमिष्यते एष एवानिश्चितपञ्चीकरणवाक्यार्थस्य संदिग्धासिद्धः । साध्यस्यैव हेतुतया प्रयोगे च साध्यविशिष्टाख्यः स्वरूपासिद्धभेदः । यथा क्षित्यादिकं सकर्तृकं बुद्धिमत्पूर्वकत्वादिति । यदा तु सिद्धं साध्यं हेतुतया प्रयुज्यते तदा त्वेवं स्वरूपासिद्धता

---

सर्वासामसिद्धीनामुदाहरणे ग्रन्थविस्तरः स्यादिति दिक्प्रदर्शनं क्रियते इत्याह । अथेति । व्याप्यत्वासिद्ध इति । द्रष्टव्य इत्यनुषङ्गः । स्वसिद्धान्तेति । स्वपदेन वेदान्तिनैयायिकयोर्ग्रहः । तत्र प्रकृतिर्वेदान्तिसिद्धा अन्यस्य त्वन्यदिति विवेकः । अनिश्चितपञ्चीकरणवाक्यार्थस्येति । निश्चिततदर्थस्य तु स एव निश्चितस्वरूपासिद्ध इति भावः । ननु सिद्धस्यैव साध्यस्य हेतुतया प्रयोगे कथं स्वरूपासिद्धता तस्य सिद्धत्वात् तथा च स पृथ-

वाच्या सिद्ध एव हि हेतुः प्रयोक्तव्यः स च साध्यात्मा चेत् कथं नासिद्ध इति । अत्र च स्वेनैव ज्ञातेन स्वयं ज्ञाप्यत इत्यात्माश्रयद्वारेणासिद्धौ विश्रमः । धूमानुमानादिष्वेवाविदितधूमादिस्वरूपस्याज्ञानासिद्धिः । व्यधिकरणासिद्धो यथा । पर्वतो वह्निमान् महानसधूमवत्त्वादिति । यद्यपि धूमवत्त्वाद्वह्निमत्त्वं सिध्यति तथापि नान्यनिष्ठेन तेन । यद्यप्यसौ न हेतोरपराधः अपि तु प्रयोक्तुरेव तथापि प्रयुज्यमानवेषेण हेतुरसिद्ध एवेति युक्तं तथोद्भावनम् । अत एवानुपयुक्तपदोपादानेनार्थान्तरानिग्रहतैवेत्यपि नाशङ्कनीयम् । दृष्टान्तस्थितहेतुव्यक्तिविशेषः पक्षे नास्तीति तत्र तस्य प्रयुज्यमानस्यासिद्धता युक्ता । दृष्टान्तस्थितस्यापि तस्य व्याप्तिग्रहणमुखेन प्रकृतोपयोगान्न सहसार्थान्तरत्वं वक्तुं शक्यम् । यदि हि वक्ता पर्वतस्थधूमवत्त्वमेव हेतुमभिसंधाय महानसस्येत्यनुपयुक्तं ब्रूयात् तदैवं स्यादपि । न च तथा विवक्षास्माभिस्तद्वाक्यमन्तरेण निश्चेतुं शक्या । तथा चेत् ब्रूयात् तथापि महानसस्येति पदस्यानन्वयात् निग्रहस्थानान्तरता । अन्वितानुपयुक्तवचने ह्यर्थान्तरावकाशः । उभयसन्निपातेऽप्युद्भटस्यैवोद्भाव्यत्वादिति । स्वरूपभागासिद्धो यथा । घटव्यतिरिक्तं सर्वमनित्यं कार्य-

---

मेव स्यादित्यत आह । यदा त्विति । अज्ञानासिद्धिं सामान्यत उदाहरति । धूमानुमानादिष्विति । अत एवेति । असिद्धत्वोद्भावनस्य शक्यत्वादेवेत्यर्थः । अतः शब्दार्थमेवोपपादयति । दृष्टान्तस्थितेति । तद्वाक्यन तथा निश्चयेऽपि नार्थान्तरं किं त्वनन्वय एवेत्याह । तथा चेद् ब्रूयादिति । ननु वादिवाक्यादुभयथा विवक्षावगमेऽर्थान्तरमप्युद्भावयितुं शक्यमिति चेन्नेत्याह । उभयसन्निपातेऽपीति । उद्भटस्यैवेति । हेत्वन्वयदशायां महानसपद-

त्वात् घटवदिति। नहि पक्षीकृतेष्वीश्वरादिषु स्वरूपतः कार्यत्वम् । येनाकारेण कार्यत्वं तेनाकारेणानित्यत्वसाधने तु सर्वत्रैव सिद्धसाधनतेति विशेषः । सिद्धसाधनस्य चाश्रयासिद्धताप्रकारोऽ पक्षधर्मत्वप्रतिपादनेन प्रागुक्तः । सिद्धेष्वेव पक्षेषु हेतोः क्वाचित्कत्वे स्वरूपभागासिद्ध इति विशेषः । विशेषणासिद्धो यथा । क्षित्यादिकमस्मदाद्युत्तीर्णकर्तृकमस्मदाद्यशक्यक्रियत्वे सति कार्यत्वात् यद्येनाशक्यक्रियं कार्यं तत्ततोऽन्यकर्तृकं यथा मनुष्याद्यशक्यकर्तृकं वल्मीकादीति । अत्रास्मदादिशब्देन सर्वजीवग्रहणे विशेषणासिद्धिः । अस्मदादीनामेवोपचितपुण्यानां विश्वामित्रादिवद्वल्मीकादिवच्च विचित्रतरमहत्तरसूक्ष्मतरकार्यारम्भसंभवात् । नच तेषां तेषु तेष्वेककर्तृत्वं कुलालादिष्वपि प्रसङ्गात् । नहि कुलालादयोऽपि सामग्र्यन्तरभूतमदृष्टादिकमसमवायिकारणभूतमान्तरसूक्ष्मावयवसंयोगादिकं

---

स्यानन्वितत्वेनान्वयस्यैव प्रथमोक्ताव्यत्वमुचितमिति भावः । ननु जीवेश्वरयोः स्वरूपतोऽकार्यत्वेऽपि प्रकृत्यवच्छिन्नत्वाकारेण तयोरेव कार्य्यत्वात्कथं स्वरूपभागासिद्धतेत्यत आह । येनाकारेण कार्यत्वमिति । आश्रयभागासिद्धस्वरूपभागासिद्धयोस्तयोर्वैलक्षण्यं दर्शयति । सिद्धेति । विश्वामित्रादिवद्वल्मीकादिव चेति । विश्वामित्रस्य महत्तरकार्य्यारम्भो हि त्रिशङ्कुकर्थे लोकान्तरनिर्माणे प्रसिद्धः । सौभरेर्विचित्रानेकशरीरारम्भः आदिशब्दार्थः । वल्मीकायाः शिथिलीमिकायाः वल्मीकारम्भजन्तुविशेषात्मिकायाः सूक्ष्मतरावयवैर्वल्मीकारम्भः । तरुचटकाया इतराशक्यक्रियकुलायकरणमत्रादिशब्दार्थः । ननु विश्वामित्रादीनां तत्र कार्य्येषु कर्तृत्वमेव नास्ति अदृष्टपरमाणुतत्संयोगादिघटिततत्कारणवस्तुसाक्षात्काराभावादित्याशङ्क्य निराकरोति । नच तेषामिति । ननु विश्वामित्रादीनां तथा निर्धारकप्रत्यक्षाभावात्तत्र कर्तृत्वमेव न सम्भवतीति वैषम्यमाशङ्क्य परिहरति ।

च यथावन्नुमाक्षात् कुर्वन्ति । अपि त्वेवं व्यापृते सत्येतत् कार्यं भवतीति प्रमाणतो ऽध्यवसाय प्रवर्तन्ते तदेतत्तुल्यं विश्वामित्रादिष्वपि । प्रमाणं त्वन्वयव्यतिरेकादिकं शास्त्रं चेति क एष विशेष इति । एष एव हेतुर्व्युत्क्रमेण पाठे विशेष्यासिद्धः । एवमुभयथासिद्धिराश्रयदृष्टान्तविशेषणाद्यसिद्धिश्च ग्राह्या । यच्चात्र हेत्वाभासे ऽप्यसिद्धे हेतुरसिद्ध इत्युद्भावनं न तत्र व्याघातः शङ्कनीयः। हेतुतया त्वदभिमत इति वाद्यभिप्रेतत्वात्, एवमाभासान्तरेष्वपीति सव्यभिचारो ऽनैकान्तिकः । स द्विधा । साधारणो ऽसाधारणश्चेति । प्रथमः पक्षत्रयव्यापी । उत्तरः पक्षमात्रनिष्ठः यथा हि पक्षसपक्षमात्रविषयस्यान्वयस्य विपक्षवृत्तिर्व्यभिचारः । तथा सपक्षैकदेशमात्रविषयस्य व्यतिरेकस्य स्वस्थानातिक्रमेण सपक्षव्याप्तिर्व्यभिचार इत्येके । असाधारणस्त्वनध्यवसितसंज्ञं हेत्वाभासान्तरमिति भूषणः । द्वावप्यष्टविधौ । तथाहि ।

---

प्रमाणं त्विति । ग्राह्येति । घटो नित्यो गुणत्वादित्युभयवादिसम्प्रतिपन्नः स्वरूपासिद्धः । आप्यो घटो ऽनित्यो जन्यत्वादित्याश्रयविशेषणासिद्धः । तत्रैव शशशृङ्गवदित्युदाहरणे दृष्टान्तासिद्धिः । शशीयत्वावच्छिन्नस्य गोशृङ्गस्य तथात्वे दृष्टान्तविशेषणासिद्धिरित्यायूह्यमित्यर्थः । व्याघातः शङ्कनीय इति । पक्षधर्मताविशिष्टस्यैव हेतुतया असिद्धतोक्तिर्व्याघातमेवावहेदिति भावः । अनैकान्तिकादावपि हेतुरनैकान्तिको विरुद्ध इत्यादावपि हेतुपदं परेण हेतुतयाभिमतमेवाहेति तत्रापि व्याघातो निरसनीय इत्याह । एवमाभासान्तरेष्वपीति । अनैकान्तिकसामान्यलक्षणमाह । सव्यभिचार इति । स्वस्थानातिक्रमरूपस्य व्यभिचारस्यासाधारणेऽप्युपद्यमानत्वान्नाव्याप्तिरिति भावः । त्रयाणामपीति । पक्षसपक्षविपक्षव्यापकः पक्षमात्रव्यापकःसपक्षमात्र

त्रयाणामपि पक्षाणां व्यापको ऽव्यापकस्तथा।
एकद्विव्यापकाः षट् चेत्येवं साधारणोऽष्टधा॥
निःसपक्षो निर्विपक्षो द्वयं निर्विषयं तथा।
पक्षव्याप्तितदव्याप्त्योरष्ट साधारणाः स्मृताः॥
केचित्सपक्षे सत्येव तथाभासत्वमब्रुवन्।
तदसत् सकलं नित्यं सत्त्वादित्यादि सम्भवात्॥

तत्र पक्षत्रयव्यापकः साधारणो यथा। क्षित्यादिकं सकर्तृकं प्रमेयत्वात् घटवदिति। तत्रैव परिमितपरिमाणत्वादिति। पक्षत्रयैकदेशवृत्तिः पक्षसपक्षभूतगुणकर्मणोरवृत्तेर्विपक्षेषु च विभुष्ववृत्तेरस्य पक्षत्रयैकवृत्तित्वम्। पक्षव्यापकस्सपक्षविपक्षैकदेशवृत्तिर्यथा। पर्वताश्चूर्णीभविष्यन्ति प्रत्यक्षग्राह्यत्वात् घटवदिति। अयं हेतुः सपक्षतयाभि-

व्यापकः। च विपक्षमात्रव्यापकः विपक्षव्यापकः पक्षेतरव्यापकः सपक्षेतरव्यापकः विपक्षेतरव्यापकः इत्यष्टविधःसाधारण इति प्रथमकारिकार्थः। निःसपक्ष इति। सपक्षरहितः विपक्षरहितः सपक्षविपक्षरहितः सपक्षविपक्षवानिति चत्वारो भेदास्तेषां पक्षव्यापकत्वतदव्यापकत्वाभ्यां पक्षरहितभेदे ऽष्टावसाधाराणा भवन्तीत्यर्थः। नैयायिकास्तु सपक्षे तस्य केवलव्यतिरेकितयानाभासत्वं युक्तमङ्गीकर्तुमिति सति सपक्षे तद्व्यावृत्त एवासाधारण इति वदन्ति। तेषां मते सर्वमनित्यं सत्त्वादित्यादीनां सपक्षरहितानामाभासत्वं न स्यादित्याह। केचिदिति। नन्वनुपसंहारितया तस्य पृथग्धेत्वाभासत्वमिति चेत्तथा व्याप्तिग्रहस्थलरहितस्यैवानुपसंहारिशब्दार्थत्वेन व्यतिरेकिणोऽपि तथात्वेनानुपसंहारितयाभासत्वमेव स्यादिति किं पृथग्धेत्वाभासकल्पनया। यथा चैतत्तथोक्तं व्यतिरेकिभङ्गे। तत्रैवेति। क्षित्यादिकं सकर्तृकमित्यादिप्रतिज्ञायामेवेत्यर्थः। प्रत्यक्षग्राह्यत्वादिति। लौकिकप्रत्यक्षविषयत्वादित्यर्थः। ननु पक्षैकदेशवर्तिनां हेतूनां भागासिद्धतया कथमनैकान्तिकत्वमित्यत

मते द्व्यणुकादौ विपक्षे चेश्वरादौ न व्याप्नोति । सपक्षव्यापक इतरैकदेशवृत्तिर्यथा । कालजीवावनित्यावचेतनत्वात् पृथिव्यादिवदिति । नित्येश्वराभ्युपगमपक्षे तस्य विपक्षत्वात् अत्राचेतनत्वस्य विपक्षैकदेशवृत्तिता । विपक्षव्यापकः पक्षसपक्षैकदेशवृत्तिर्यथा । कालात्मानावनित्यौ कालघटव्यतिरिक्तत्वात् घटवदिति । अत्र सपक्षे घटे पक्षे च काले कालघटव्यतिरिक्तत्वं नास्ति । एते त्रय एकैकव्यापकाः । अथ द्विव्यापकास्त्रय उदाह्रियन्ते । तत्र पक्षेतरव्यापको यथा । अनित्यौ पृथिव्यात्मानौ पृथिवीव्यतिरिक्तत्वात् प्रदीपवदिति । सपक्षेतरव्यापको यथा । अनित्यः शब्दः घटव्यतिरिक्तत्वात् पटवदिति । विपक्षैकदेशवृत्तिरितरव्यापको यथा । अनित्यस्त्रसरेणुस्सावयवः द्रव्यत्वात् घटवदिति । अत्र पक्षैकदेशवर्तिनां चतुर्णां भागासिद्धलक्षणयोगेऽपि व्यभिचारादनैकान्त्यमप्यस्तीति दूषणसंभेदसम्भवज्ञापनायोदाहृतिः । एवमन्यत्रापि ग्राह्यम् । अत्र चासिद्धिवदन्यतरोभयभेदेनापि विभागोऽनुसंधेयः । न ह्यसिद्धावेवायं विभाग इति नरपतिशासनं त्रिपरिवर्तवैयात्यस्य दुर्वारत्वात् उदाहरणदर्शनाविशेषाच्च । तथाहि नित्या वर्णाः श्रावणत्वात् शब्दत्ववदिति कौमारिलेनोक्ते काणादः स्वानभ्युपगतैरपि श्रावणतया तदभ्युपगतैर्ध्वनिधर्मैरनैकान्त्यमुद्भावयन् कथं प्रतिक्षेप्यः कथं वा शब्दतया स्वाभ्युपगतैरेव समुद्रघोषादिभिरनित्यैरसिद्धिवत् परमतमूलमनैकान्त्यम् । स्वमतमूलं तु तद्वदेवदुरुत्तरमिति । एवमन्य-

---

आह । तत्रेति । सम्भेदसंभवज्ञापनायेति । उपधेयसंकरेऽप्युपा

त्राप्यन्यतरोभयभेदेन सम्भव ऊह्यः। तत्तत्पदार्थभेदाभ्युपग-

---

धेरसङ्कराश्न दोष इति भावः । वादिप्रतिवाद्युभयापेक्षनिःसं-देहनिश्चयाभ्यां च भेदाः सम्भवन्तीत्याह । अत्र चासिद्धिव-दिति । अपिनानुक्तसमुच्चयार्थकेन संशयनिश्चयकृतभेदा गृह्य-न्ते। विपरिवर्तवैयात्यस्य दुर्वारत्वादिति। अनैकान्तिकादिष्वेवायं विभागः नासिद्धाविति धाष्टर्येन कस्यचिदुक्तेरशक्यनिवारणत्वा-दित्यर्थः । धाष्टर्यमात्रमेव तथोक्तौ मूलं न वस्तु स्थितिरिति भावः । कौमारिलेनेति । भट्टमते वर्णधर्मस्य ध्वनेरेवानित्यता न वर्णानामित्यङ्गीकारादिति भावः । स्वानभ्युपगतैरिति । का-णादमते वर्णव्यतिरिक्तस्य तद्धर्मभूतस्य ध्वनेरनङ्गीकारादिति भा-वः । ध्वनिधर्मैरिति । ध्वनिरूपैस्तद्वर्णधर्मैरित्यर्थः । प्रतिक्षेप्य इति । अन्यतरमात्रसिद्धानैकान्त्यस्य दोषत्वाभावात् तत्प्रतिक्षेपो-ऽनुपपन्नः तथात्वे शब्दो नित्यः श्रावणत्वादिति प्रयोगे समु-द्रक्षोभादिभिर्भागासिद्धेरपि स्वमतमात्रमूलत्वेनादोषतया तद्या-वृत्ताया नित्या वर्णा इति प्रतिज्ञाया अप्यकर्तव्यत्वप्रसङ्गादिति भावः । एवं भट्टमतेनानैकान्त्यमुक्त्वा काणादमतेनाप्यनैकान्त्य-माह। कथं वेति। शब्दतया स्वाभ्युपगतैरिति । श्रावणत्वेन का-णादाभ्युपगतैरित्यर्थः। अनित्यैरिति ।साध्याभावः प्रदर्श्यत इति एतदनन्तरमनैकान्त्यमुद्भावयन् प्रतिक्षेप्य इति पूर्ववाक्यशेषानुषङ्गः कर्तव्यः । ननु परमतमूलमनैकान्त्यमत्र नास्त्येव समुद्रघोषादीनां वायुधर्मतया त्वगिन्द्रियग्राह्यत्वेन श्रावणत्वाभावात् तथा समुद्रक्षो-भादिभिर्न वर्णपक्षीकारेणासिद्धिर्निवारिता । स्वमतेन तथा स्व-मतावष्टम्भेनानैकान्तिकत्वस्यापि शक्यनिवारणत्वादित्यत आ-ह । असिद्धिवदिति । अन्यत्रापीति । अपिना सम्भावनार्थ-केन स्वमतावष्टम्भमूलोत्तरस्य दुरुत्तरतया परिहाराभावः सू-च्यते । अत एवोक्तं स्वमतमूलं तु तद्वदेव दुरुत्तरमिति। स्व-मतमूलं वर्णधर्मध्वनिष्वनैकान्त्यं दुरुत्तरमुत्तरहीनमशक्यपरि-हारमित्यर्थः । तद्वदेवेति परमतमूलसमुद्रक्षोभानैकान्त्यं यथा दुरुत्तरं तथेत्यर्थः । अत्र दुरो दुष्टत्वरिक्तत्वरूपार्थद्वयवत्तया

मवशेन तत्संभवादिति । यस्त्वनध्यवसितापरपर्यायोऽसाधारणोऽष्टधा विभक्तस्तत्र सपक्षशून्यः प्राङ्निरूपितः । केवलव्यतिरेकिपराभिमतविपक्षरहितो यथा । सर्वं कार्यजातं पक्षीकृत्याह विमतं नित्यं कादाचित्कत्वादिति । उक्तिविरोधोऽत्र संभिद्यते । सपक्षविपक्षरहितो यथा । सर्वमनित्यं सत्त्वादिति । इह तु व्यतिरेकिहेतौ विरोधोऽपि प्रतिनियतश्च । यन्नित्यं तदसदिति व्यतिरेको हि धियमपि नाधिरोहेत् किमुत वाचं नि-

---

श्लेषेण दृष्टान्तदार्ष्टान्तिकयोः साधारणधर्मसमर्पकत्वमिति बोध्यम् । ननु वर्णधर्मभूतध्वनिभिन्नत्वे सतीति विशेषणेनानैकान्त्यनिवारणसम्भवात् कथं दुरुत्तरत्वमिति चेन्न तथान्यतरासिद्धिरनिवार्या । काणादैर्वर्णधर्मध्वनेरनङ्गीकारादित्यलम् । असाधारणविरुद्धबाधितादिष्वपि उक्तान् भेदानतिदिशति । एवमन्यत्रापीति । सम्भवमेवोपपादयति । तत्तदिति । असाधारणादेरुभयवादिसंप्रतिपन्नपदार्थमूलत्वे उभयासिद्धः उभयानभ्युपगतान्यतरमात्राभ्युपगतपदार्थमूलत्वेऽन्यतरसिद्धासाधारणादिरिति विवेकः । अयं च तत्तदुदाहरणप्रस्तावे स्फुटीभविष्यति । कादाचित्कत्वादिति । कार्यस्य सर्वस्यापि पक्षत्वेनानित्यस्यापि पक्षस्यान्यस्याभावादिति भावः । ननु नायं हेत्वाभासः किन्तूक्तविरोधो नाम निग्रहस्थानं नित्यत्वकादाचित्कत्वयोरत्यन्तविरुद्धत्वादुक्त्यसम्भवादित्याशङ्क्याह । उक्तिविरोधोऽत्रेति । तथा चोपधेयसांकर्येऽपि नान्यतरोपाधेरपन्हव इति भावः । व्यतिरेकिहेतौ विरोधो ऽपीति । हेतुव्यतिरेकनिमित्तो विरोधोऽप्यस्ति स च प्रतिनियतः विपक्षरहितासाधारणहेतुव्यक्तिनियतश्चेत्यर्थः व्यतिरेकहेतुकं विरोधमुपपादयति । यन्नित्यमिति । धियमपि नाधिरोहति किमुत वाचमिति अभिधातुं बुद्धावनारूढस्य वचनं दूरनिरस्तमित्यर्थः । एतदेवोपपादयति । नित्यत्वं हि कालानवच्छिन्नसत्तायोग इति । तथा च यन्नित्यमित्यत्र सत्ताया ज्ञातत्वेन तत्र तदसदित्यसत्ताया दुर्ज्ञानत्वे व्यतिरेकनिरूपणे विरोधो ऽवर्जनीय

त्यत्वं हि कालानवच्छिन्नसत्तायोगः। एवमनित्यत्वादिसाध्यान्तरेऽप्यूह्यम्। सपक्षविपक्षवान् यथा। पृथिव्यनित्या गन्धवत्त्वादिति। एते पक्षव्यापिनः। तदेकदेशवर्तिनोऽपि चत्वारः स्वयमूह्याः। एषामष्टानां साध्यसम्बन्धाग्रहणं समानमिति तुल्ययोगक्षेमतैव। ये च केवलव्यतिरेकिप्रामाण्यमिच्छन्ति तैरपि सपक्षशून्यस्य विपक्षमात्रवर्तिनः क्वचिदाभासत्वमेष्टव्यम्। तथाहि सर्वं कार्यं नित्यं सुखाद्याश्रयकारणकं शशविषाणपूर्वकं वा कादाचित्कत्वादित्युक्ते सपक्षरहितस्यापि कादाचि-

---

इति भावः। पूर्वयोरेवाश्रयहेत्वोर्नित्यत्वाजन्यत्वनिरवयवत्वादिषु साध्येषु सपक्षविपक्षराहित्यं विरोधनेयत्वं चानुसंधेयमित्याह। एवमिति। तदेकदेशवर्तिनश्चत्वार इति। अनुभूतिरननुभाव्या अनुभूतित्वादिति परोक्तव्यतिरेकिणि शाब्दानुभवत्वादिति हेतुप्रयोगे सपक्षशून्यः पक्षैकदेशवर्ती असाधारणः। सर्वं कार्यजातं नित्यं कादाचित्कत्वादित्यत्र कादाचित्कद्रव्यत्वादिति हेतुप्रयोगे विपक्षशून्यः पक्षैकदेशवर्ती। सर्वमनित्यं सत्त्वादित्यत्र सपक्षविपक्षवान् पक्षैकदेशवर्तीति। एते चत्वारो विभागा असिद्धसंकीर्णाः स्वयमूहितुं शक्या इत्याशयः। एषां साधारणं दूषकताबीजमाह। एषामिति। तुल्ययोगक्षेमतेति। दूषकताबीजैक्येनैकाभासोपाधिक्रोडीकारो युक्त एवेत्यर्थः। ननु सपक्षशून्ये केवलव्यतिरेकिणि साध्यसम्बन्धग्रहणाभावेऽपि व्यतिरेकव्याप्तेः शक्यग्रहत्वादनाभासतया आभासोपाधिक्रोडीकारो युक्त इत्याशङ्क्य संप्रतिपन्नसपक्षहीनासाधारणस्यापि सद्धेतुता स्यादिति प्रतिबन्दीमभिप्रेत्याह। ये चेति। नित्यसुखाद्याश्रयकारणकमिति। ईश्वरस्य नित्यज्ञानाद्याश्रयत्वेऽपि नैयायिकमते नित्यसुखाद्याश्रयत्वाभावात् तत्साधको हेतुराभास एवेत्यर्थः। ननु सर्वं कार्यं सर्ववित्कर्तृकं कादाचित्कत्वादिति हेतोर्विपक्षबाधकसत्त्वादनाभासता युक्ता उदाहृताभासस्य तु विपक्षे बाधकाभावात् साध्याप्रसिद्धे-

त्कत्वस्य न सम्यग्घेतुत्वमिष्टम् । विपक्षे बाधकाभावादिना त-दाभासत्वमिति चेत् तुल्यं सर्ववित्कर्तृपूर्वकत्वसाधनेऽपि तम-न्तरेणापि तैस्तैरेव हेतुभिरदृष्टसहकृतैस्तत्तत्कार्योदयसम्भवात् । अदृष्टस्याचेतनत्वाच्चेतनानधिष्ठितस्य न कार्यारम्भप्रवृत्तिसम्भव इति चेत् किमिदमधिष्ठानं नाम किं वास्यादिवत् प्रेरणापरप-र्यायं क्रियावत्त्वापादनमात्रमुतावस्थान्तरापादनमात्रमुत प्रयत्न-वतः सन्निधानमात्रमेवान्यद्वा किंचित् । नाद्यः गुणतयाभ्युपग-तस्यादृष्टस्य क्रियावत्त्वासम्भवात् । न द्वितीयः अद्रव्यत्वादेव न च तृतीयः प्रयत्नजन्यफलानाधारे प्रयत्नवदधिष्ठितत्ववाचो युक्तेरनर्थकत्वात् । प्रयत्नसहकारित्वेनावस्थानमात्रमित्य-प्ययुक्तम् । क्रियाहेतुगुणेष्वन्यतरमात्रेणापि क्रियोपपत्तौ गुणा-न्तरकल्पनानैरर्थक्यात् । अदृष्टस्य च क्रियाहेतुत्वं "वह्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानी"ति वदद्भिः स्वीकृतम् । अचेतनं चेतनाधिष्ठितमिति व्याप्तिश्च चैतन्ये प्रयत्ने

---

श्चाभासत्वमेवेति वैषम्यमाशङ्कते । विपक्षे बाधकाभावादिनेति । बाध-काभावमेवोपपादयति । तमन्तरेणापीति । बाधकमाशङ्कते । अदृष्टस्ये-ति । वास्यादिवदिति । कुठारवत्तक्ष्णो वृक्षच्छेदनसाधनलोहविकार-वास्यादिवदित्यर्थः । गुणतयाभ्युपगतस्येति । युष्माभिरिति शेषः । अ-द्रव्यत्वादिति । त्वन्मत इति शेषः । प्रयत्नजन्यफलानाधारइति । प्रयत्न-कार्य्यस्य क्रियादेरदृष्टेऽसम्भवादिति भावः । ननु प्रयत्नस्यादृष्टे क्रिया-जनकत्वाभावेऽप्यदृष्टजन्योपादानक्रियायां प्रयत्नावश्यकत्वेनादृष्ट-सहकारितयैव सोऽङ्गीक्रियते । तथा च चेतनाधिष्ठितत्वं नाम प्रयत्न-सहकृतत्वमेवेति शङ्कते । प्रयत्नसहकारित्वेनेति । अत्र बहुव्रीहिर्बो-ध्यः । क्रियाहेतुगुणेष्विति । संयोगादृष्टयत्नगुरुत्वेष्वित्यर्थः । अ-न्यतरमात्रेणापीति । प्रकृतादृष्टमात्रेणापीत्यर्थः । अदृष्टस्य क्रिया-हेतुत्वमसंप्रतिपन्नमित्यत आह । अदृष्टस्येति । व्यभिचाररूपा । न

व्यभिचाररूपा अन्यथानवस्थाप्रसङ्गात् तद्व्यतिरिक्तत्वे सतीति विशेषणमपि निर्मूलम् । अनीश्वरचैतन्यप्रयत्नयोरीश्वराधिष्ठितत्वाभ्युपगमात् । ईश्वरगुणयोस्तु तयोरसिद्धौ व्यवच्छेद्यासिद्धेः सिद्धौ तु चेतनाधिष्ठानादिमुखेन तदनुमाननैष्फल्यात् । अत एव न चतुर्थः तथाविधस्य कस्यचित् कुतश्चिन् प्रमाणादसिद्धेश्चेत्यलं प्रसक्तानुप्रसक्त्येति । साध्यविपरीतव्याप्तो विरुद्धो यथा । पर्वतो निरग्निर्धूमवत्त्वादिति ।

सपक्षे सत्यसति च पृथक् पक्षविपक्षयोः ।
व्याप्तिव्याप्त्योर्द्वयोश्चेति विरुद्धोऽप्यष्टधा मतः ॥

---

तु नियतसामानाधिकरण्यरूपेत्यर्थः । अन्यथानवस्थादिप्रसङ्गादिति । यत्नान्तरापेक्षत्वेऽनवस्था स्पष्टा । चैतन्यस्य ज्ञानस्य यत्नापेक्षत्वे यत्नस्य पूर्वत्वात् तत्र चैतन्यस्यैव हेतुत्वेऽन्योऽन्याश्रयः । चैतन्यान्तरापेक्षत्वे तस्य चैतद्यत्नाधीनत्वे चक्रकम् । अपरिमितधावनेऽनवस्थापातश्च स्यादित्यर्थः । यत्नं चैतन्यभिन्नत्वेन विशेषयन् वादी प्रष्टव्यः किमनीश्वरयत्नः चैतन्यभिन्नत्वेन विशेष्यते उतेश्वरयत्नचैतन्यभिन्नत्वेन वा नाद्य इत्याह । अनीश्वरेति । न द्वितीय इत्याह । ईश्वरगुणयोरिति । ननु वेदतस्तत्सिद्धिरस्ति इत्यतआह । सिद्धौ त्विति । अलमिति । न्यायसिद्धान्तेन ईश्वरानुमाननिरासे वक्ष्यमाणत्वादिति भावः । साध्यविपर्ययसमानाधिकरणत्वस्य साधारणासाधरणात्साध्यविपरीतव्याप्तौ विरुद्ध इति नैयत्यमपि गृहीतम् । सपक्षे सतीत्यस्याः कारिकाया अयमर्थः । सत्पक्षाविरुद्धाश्चत्वारः । पक्षव्यापको विपक्षव्यापकः पक्षविपक्षोभयव्यापकः तदुभयाव्यापकश्चेति । तथा सत्पक्षाश्चत्वारो विरुद्धाः । पक्षमात्रव्यापकः । विपक्षमात्रव्यापकः । तदुभयव्यापकः । तदुभयाव्यापकश्चेति । एवं विरुद्धोऽष्टधा मतः । अत्रापिशब्दः अष्टधाभिमत इत्याशयेन वक्ष्यमाणषाड्विध्यद्वादशविधत्वयोः संग्राहकः ननु वक्ष्यमाणे विशेषविरुद्धे-

इष्टप्रतीपव्याप्त्या हि निर्विवादा विरुद्धता ।
विशिष्टसाध्यवैलोम्यात् स्याद्विशेषविरुद्धता ॥
धर्मधर्म्युभयेषां च तद्विशेषत्रयस्य च ।
विपरीतानुमानाच्च विरुद्धः षड्विधो मतः ॥

तत्र सति सपक्षे चतुर्णामुदाहृतिः । पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा । अनित्यो जीवः चेतनत्वादिति । सर्वेषामेव जीवानां सुषुप्त्याद्यवस्थास्वपि संकुचितचैतन्याश्रयत्वं त्र्यन्तविद्भिरिष्यते आगन्तुकचैतन्यवादेऽपि चैतन्यात्यन्तायोग-

लक्षणमिदमव्याप्तं क्रत्वन्तर्वर्तिनी हिंसा अधर्मसाधिका हिंसात्वात् क्रतुबाह्यहिंसावदित्यत्र हिंसात्वस्य साध्यविपर्यये व्याप्तत्वाभावात् । एवमेव हि विशेषविरुद्धत्वमपि व्याप्तेर्दूरानुविधायिस्वरूपवैकल्यवति प्रागुदाहृते प्रतिसंधानीयमिति विशेषविरुद्धं वक्ष्यतीत्यत आह । इष्टप्रतीपव्याप्त्याहीति । तथा चानिष्टत्वमेव विरुद्धसामान्यलक्षणम् । प्रकृते च पक्षधर्मताबललभ्यसाध्यस्य वैधाहिंसानिष्टाधर्मसाधनत्वस्य विपर्ययेण हिंसात्वस्य व्याप्तत्वादिष्टविपर्ययव्याप्तलक्षणं विरुद्धत्वं विशिष्टसाध्यविपरीतव्याप्तत्वमादाय प्रकृतेऽपि सम्भवतीति नाव्याप्तिरिति भावः । प्रकारान्तरेण विरुद्धस्य षाड्विध्यमाह । धर्मधर्म्युभयेषामिति । अयमर्थः धर्मविपर्ययव्याप्तः धर्मिविपर्ययव्याप्तः उभयविपर्ययव्याप्तः धर्मविशेषविपर्ययव्याप्तः धर्मिविशेषविपर्ययव्याप्तः उभयविशेषविपर्ययव्याप्तश्च विरुद्धः षड्विधोऽभिमत इति । अयं च प्रकारो वक्ष्यमाणोदाहरणेषु स्पष्टीकरिष्यते । उदाहृतिः । क्रियत इति शेषः । ननु सुषुप्तिमूर्च्छाद्यवस्थासु जीवेषु चैतन्याभावान्न पक्षसपक्षव्यापकतेत्यत आह । सर्वेषामेवेति । संकुचितचैतन्याश्रयत्वमिति । धर्मभूतज्ञानस्य नित्यत्वेन सुषुप्ताद्यवस्थास्वपि सत्त्वेन विषयसंसर्गाभावकृतः संकोच एव तदा तस्याभ्युपगम्यते न त्वभाव इति भावः । आगन्तुकचैतन्यवादेऽपीति । नित्यचैतन्यानभ्युपगन्तॄणां मतेऽपीत्यर्थः । चेत-

व्यवच्छेदलक्षणं चेतनत्वम् सर्वेषु जीवेषु विद्यत एवेति पक्षव्यापकता। विपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा। नित्यौ पृथिव्यात्मानौ कृतकत्वादिति। उभयव्यापको यथा। नित्यः शब्दः कृतकत्वादिति। उभयाव्यापकस्तु शब्दस्पर्शावनित्यौ श्रावणत्वादिति। शब्दत्वसामान्यं नित्यमिच्छतस्तत्रापि हेतुवृत्तेर्विपक्षैकदेशवृत्तिता। असति सपक्षे त्वन्ये चत्वारः। तत्र पक्षव्यापकः विपक्षैकदेशवृत्तिर्यथा। चेतनाः सर्वे निरतिशयानन्दधर्मकाः स्वयंप्रकाशत्वादिति। स्वयंप्रकाशत्वं हि वेदान्तिनां

---

न्यात्यन्तायोगव्यवच्छेदलक्षणमिति। ज्ञानात्यन्ताभाववत्त्वमित्यर्थः। तथा च सुषुप्ताद्यवस्थास्वपि ज्ञानध्वंसप्रागभावावादाय हेतुसत्त्वमस्तीति भावः। अयं पूर्वोक्तषड्विधेषु साध्यविपर्ययव्याप्तत्वाद्धर्मविपर्ययविरुद्धः। कृतकत्वादिति। पक्षैकदेशे आत्मन्यवृत्तेरयं पक्षैकदेशवृत्तिः अनित्येषु कृतकत्ववृत्तिश्च प्रागभावानङ्गीकारमतेन बोध्यः। कालानवच्छिन्नसत्तायोगित्वरूपनित्यत्वेन विरोधोऽत्र कालानवच्छिन्नत्वरूपसाध्यविशेषणप्रयुक्त इति धर्मविशेषविरुद्धोऽयम्। एवमात्मत्वरूपधर्मिविशेषणविरुद्धत्वाद्धर्मिविशेषविरुद्धश्च। नित्यः शब्दः कृतकत्वादिति। अस्य शब्देषु सर्वत्रानित्येषु च विद्यमानत्वात्पक्षविपक्षव्यापकतया श्रावणत्वादिति स्पर्शे श्रावणत्वस्यावृत्तेरयं पक्षैकदेशवृत्तिः। विपक्षैकदेशवृत्तितामुपपादयति। शब्दत्वसामान्यमिच्छत इति। समवेतसामान्यमात्रस्यैवानङ्गीकारादितिभावः। श्रावणत्वस्य स्वस्पर्शाभावेन व्याप्तत्वादयं हेतुर्धर्मिविरुद्धः। अत एवायं धर्मी साध्याभावविरुद्धोऽपि। उक्ताश्चत्वारोऽपि सपक्षवन्तो द्रष्टव्याः। प्रथमतुरीययोः पृथिव्यादेः द्वितीयतृतीययोः कालादेरेव सपक्षत्वादेतेषां च साध्यविपर्य्ययव्याप्तता पक्षस्य संदिग्धसाध्यतद्विपर्ययतया अन्यत्रैव ग्राह्या। स्वयंप्रकाशत्वादिति। अत्र सर्वेषां चेतनानां पक्षत्वेनान्यत्रानन्दाभावात्सपक्षाभावः। विपक्षाव्यापकतामाह। अचे-

सर्वात्मव्यापकम् अचेतनत्वादनानन्दिनि धर्मभूतज्ञानाख्ये विपक्षे च वर्तत इति । विपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा । सर्वेऽप्यात्मानः सर्वज्ञाः अकर्मवश्यत्वादिति । कर्मवश्यत्वाभावो हि अचेतनेषु सर्वेषु विपक्षेषु व्याप्तः पक्षे चेश्वरांश इति । उभयव्यापको यथा । कादाचित्कं सर्वमनित्यं वस्तुत्वादिति । अत्र वस्तुतः कादाचित्कानामनित्यत्वेऽप्यस्मिन् प्रयोगे वस्तुत्वहेतोर्विपरीतव्याप्त्या विरुद्धता । उभयैकदेशवृत्तिर्यथा । तत्रैव साध्ये द्रव्यत्वादिति । ननु पक्षस्पर्शरहितोऽपि नवमो विरुद्धः सम्भवति नित्य आत्मा कृतकत्वादिति । अत्र हि सर्वस्मिन्नात्मजाते कृतकत्वं नास्त्येव विपक्षे च सर्वत्र वर्तते सपक्षे च कालादौ न वर्तत इति नानैकान्तः । सत्यम् अत एव हि

---

तनत्वादिति । ज्ञानानाश्रयत्वादित्यर्थः । ननु वस्तुत्वस्य नित्यानित्यसाधारणत्वेन साध्यसामानाधिकरण्यसत्त्वान्न विरुद्धते इत्यत आह । अत्र वस्तुत इति । तथा च पक्षस्य संदिग्धत्वेन व्याप्तिग्रहस्थानत्वाभावादन्यत्र साध्यसामानाधिकरण्याभावेन साध्याभावव्याप्ततया विरुद्धत्वमिति भावः । अत एवाह । अस्मिन् प्रयोग इति । घटो नित्यः वस्तुत्वादित्यादौ साधारण एवेति भावः । तत्रैव साध्य इति । कादाचित्कं सर्वमनित्यमित्येव प्रतिज्ञायामित्यर्थः । द्रव्यत्वादिति । तस्यात्मादौ साध्याभावव्याप्त्वाद्विरुद्धता । पक्षैकदेशे गुणादाववृत्तेर्विपक्षैकदेशे सामान्यादौ नित्यरूपादावव‍ृत्तेश्च उभयाव्यापकता । एते चत्वारोऽप्यसत्पक्षाः तत्राद्ययोश्चेतनानां पक्षत्वेनानन्दज्ञानयोरन्यत्राभावादुत्तरयोश्च कार्यमात्रस्य पक्षत्वेन कार्यभिन्ने नित्यत्वाभावादनाद्यभावानभ्युपगमेन एवमुक्तिः । साध्ये भावत्वविशेषणेन वा सत्सपक्षता । नित्य आत्मेति । असंदेह पक्षसाध्ययोरुक्तिविपर्यासः । उक्तं विरुद्धत्वमङ्गीक्रियते नवमता तु न नियता द्वादशविधत्वसम्भवादित्यभिप्रेत्य परिहरति । सत्यमिति । अत एव हीति । पक्षावृत्तेर्वि-

साध्यविपरीतव्याप्तो विरुद्ध इति लक्षणं प्रणीतमस्माभिः । नतु पक्षविपक्षयोरेव वर्तमान इति। ततश्च सत्यसति च सपक्षे सर्वपक्षावृत्तिविपक्षव्यापकाव्यापकरूपविरुद्धचतुष्टयसम्भवाद् द्वादशविधो विरुद्ध इति । विशेषविरुद्धत्वमपि व्याप्तियदशानुविधायिस्वरूपवैकल्यवति प्रागुदाहृते प्रतिसंधानीयमिति ।

कालात्ययापदिष्टस्तु बलवन्मानबाधितः ।
कालातीतोऽतीतकालो बाधितश्च स कथ्यते ॥

रुद्धस्य सम्भवादेवेत्यर्थः । सत्यसति सपक्षे सर्वसपक्षावृत्तिः विपक्षव्यापकः पक्षावृत्तिरुदाहृतः । तत्रैव जन्यगुणत्वादिति विपक्षव्यापकः। एवमन्यावप्यूह्यौ । विशेषविरुद्धत्वमपीति । अयमस्माभिः प्रागेवोदाहृतः । व्याप्तिग्रहदशायामनुविधायिस्वरूपं निषिद्धत्वं तद्वैकल्यं वा हिंसात्वहेतुः सोपाधिक इति यावत । तत्र सर्वत्र विशेषविरुद्धतानुसन्धेयेति व्याप्तिदशानुविधायीत्यादेरक्षरार्थः । कालात्ययापदिष्टस्त्विति । कालात्यये हेतुप्रयोगयोग्यपक्षनिष्ठसाध्यसंदेहकालातीतेऽपादिष्टः प्रयुक्तो हेतुरिति लक्ष्यनिर्देशेनोच्यते । ननु सिद्धसाधनस्यापि तादृशत्वेन कालात्ययापदिष्टता स्यादिति चेत् सिषाधयिषा काले सत्यपि सिद्धसाधने हेतुप्रयोगसम्भवेन सिद्धसाधनस्य कालात्ययानापादकत्वात् । ननु हेतुप्रयोगानन्तरमेव बाधावतारात् न हेतोः कालात्ययापदिष्टत्वमिति चेत् अनुष्णत्वेन पदार्थत्वस्य व्याप्तिग्रहणायोष्णत्वाभावरूपस्यानुष्णत्वस्य निरूपणार्थमुष्णत्वं क्वचिद्धर्मिणि ग्रहीतव्यमिति वन्हावेवोष्णत्वस्य ग्रहीतव्यतया व्याप्तिग्रहकाल एव बाधेन पक्षताविघटनेन गृहीतव्याप्तिपक्षधर्मताकस्य हेतोः प्रयोगात्पूर्वमेव कालात्ययासम्भवादुपजीव्यत्वेन बाधस्यैवोद्भाव्यतया विद्यमानाया असिद्धेरनुद्भाव्यत्वादिति दिक् । बलवत एव साधकत्वाद्बलवदित्युक्तम् । बाधित इति । बाधितसाध्यक इत्यर्थः । कालातीतोऽतीतकाल इति । विशेषण-

एकैकद्वित्रिबाधेन सप्तधा स विभागवान् ।
एवं बाधितयोर्भेदः प्रत्यक्षागमयोरपि ॥
यद्यप्येकैकतो बाधेऽप्याभासत्वं प्रतिष्ठितम् ।
तथाप्यल्पज्ञशिक्षार्थं यावत्संभववर्णनम् ॥
यावद्दोषोक्तिनियमः कथायां चोपयुज्यते ।
यथा स्मृत्येककथनेऽप्यनेकं शिष्यमेव हि ॥
तत्र प्रत्यक्षबाधितो हेत्वाभासो यथा ।
अग्निरनुष्णः पदार्थत्वात् घटवदिति नह्यत्र ज्वालैक्यप्रत्यक्ष-

---

विशेष्यभावे कामचारादुभयथापि तान्त्रिका व्यवहरन्ति । आदिनाग्न्यादित्वात्तदुपपत्तिरिति भावः । बाधितहेत्वाभासं विभजते । एकैकेति । हेतोः प्रत्यक्षानुमानागमैः प्रत्येकबाधे त्रयो भेदाः । तेष्वन्यतमाभ्यां द्वाभ्यां बाधे त्रयः संहत्यैतैस्त्रिभिर्बाधे एक इति बाधितहेत्वाभासः सप्तविध इत्यर्थः । हेत्वाभासे दर्शितं साप्तविध्यं प्रत्यक्षागमाभासयोर्बाधितयोरप्यतिदिशति । एवमिति । ननु एकमानबाधेनापि बाधितत्वं सिध्येत् द्व्यादिबाधवर्णनमनर्थकमित्याशङ्क्य परिहरति । यद्यपीत्यनया कारिकया । अल्पज्ञशिक्षार्थमिति । स्वयमेव मानान्तरबाधोहाशक्तानां व्युत्पत्तयेऽधिकवर्णनमिति भावः । प्रयोजनान्तरमप्याह । यावदिति । यावन्तो दोषाः ते सर्वेऽप्युद्भावनीया इति सङ्केतपूर्विकायां कथायां यावद्दोषकथनाभावे नियमभङ्गेन पराजयप्रसङ्गेन तन्निवृत्तये परत्र नियमभङ्गापादनेन जयसम्भवाय च यावद्बाधवर्णनं कृतमित्यर्थः । अनियमकथायामप्युपयोगमाह । यथास्मृतीति । स्वस्मृत्यनुसारेण स्मृतैकमात्रकथनेऽपि कालसामग्रीभेदेन तस्य स्मरणेनोद्भाव्यत्वसम्भावनयानेकव्युत्पादनं सप्रयोजनमित्यर्थः । ननु प्रत्यक्षेणानुमानस्य बाधे ज्वालैक्यप्रत्यक्षेण तद्भेदानुमानमपि बाध्येतेत्यत आह । न हीति । अनन्यथासिद्धेरिति । भ्रमत्वेनोपपादयितुमशक्यत्वादित्यर्थः । औष्ण्य-

वत्पावकौष्ण्यप्रत्यक्षं दुर्बलमनन्यथासिद्धेः। नह्यौष्ण्यं नाम जगति नास्ति तथा सति वन्हौ तदारोपस्यासम्भवात्। क्वचित्सिद्धमेवान्यत्रारोप्यं तदग्रहे च तदभावलक्षणसाध्यस्याप्यग्रहः नचाप्रमितसाध्यसामान्यमनुमानं प्रवर्तयितुमलम्। नचोष्णत्वाभावातिरिक्तमनुष्णत्वं नाम किञ्चित् भावान्तराभावपक्षेऽपि तस्य तदभावात्मना निरूपितस्य व्याप्त्यनुप्रवेशात्। नच तद्द्रव्यं तल्लक्षणादृष्टेः। नचा वन्हिधर्मः तद्धर्मिणोऽन्यस्य कस्य चित् कुतश्चित् प्रमाणादसिद्धेः। सिद्धौ च तत्रापि पदार्थत्वसद्भावे हेतोरनैकान्त्यात्तदसद्भावे तस्यैवासिद्धेः। अत एव वन्हौ तत्सादृश्यतत्संसर्ग-

---

प्रत्यक्षस्य भ्रमत्वं वदन् वक्तव्यः अलीकस्यैवौष्णस्यारोपादस्य भ्रमत्वमुच्यते उतान्यत्र सिद्धस्य तस्यारोपादिति विकल्पे नाद्य इत्याह। नह्यौष्ण्यं नामेति। तथासतीति। औष्ण्यस्यैवात्यन्तासत्त्व इत्यर्थः। मास्तु तदारोप इत्यत आह। तदग्रहे चेति। औष्ण्यस्य कुत्राप्यग्रह इत्यर्थः। तथा चानुमानमेव न प्रवर्तत इत्याह। नचेति। अलमिति। पुरुष इति शेषः। ननूष्णत्वाज्ञानेऽपि अनुष्णत्वधीः सम्भवतीत्यत आह। नचोष्णत्वेति। तथा च प्रतियोगिज्ञानाभावेऽभावधीरेव न स्यादिति भावः। ननु सिद्धान्तेऽभावस्य भावरूपत्वान्न प्रतियोगिज्ञानापेक्षेत्यत आह। भावान्तरेति। तदभावात्मनेति। भावत्वाभावत्वाकारेण ज्ञाने प्रतियोगिज्ञानापेक्षास्तीति भावः। अन्यत्र सिद्धस्यौष्ण्यस्यारोप इति द्वितीयपक्षे वक्तव्यः। ओँतदौष्ण्यं द्रव्यमित्युच्यते उत द्रव्यधर्म इति विकल्पे नाद्य इत्याह। नच तद्द्रव्यमिति। तल्लक्षणादृष्टेरिति। घटादिवद्विलक्षणसंस्थानवत्तयानुपलम्भादित्यर्थः। द्वितीयेऽपि किं वान्हिधर्मः उतपर्वतवन्हिधर्मः सधर्मः सिद्धो न वेति विकल्प्यान्त्ये दूषयति। नचावंह्निधर्म इति। तथा च साध्याप्रसिद्धिरिति भावः। आद्यं दूषयति। सिद्धौ चेति। तस्यैवासिद्धेरिति। धर्मिण एवासिद्ध्या आसिद्धत्वपक्षान्तर्भाव इति भावः। अत एवेति। वह्निभिन्नस्यौष्ण्याश्रयस्यासम्भवादेवेत्यर्थः।

ग्रहाद्यसंभवात् तद्गुणारोपो दुर्वचः अग्न्यातपोपाधिक एव ह्यन्यत्रौष्ण्योपलम्भः । न तथा तयोस्तदुपलम्भोपाधिं कञ्चित्पश्यामः नच तयोः परस्परोपाधिकत्वं व्याघातात् नियामकाभावाच्च । अतो वन्ह्यातपादिरूपतेजोधर्म एवौष्ण्यमित्यनन्यशरणे प्रत्यक्षेऽनुमानसहस्रेणापि न तत्कम्पनसम्भव इति । नन्वेवं ज्वालैक्यप्रत्यक्षेऽप्यनुमानबाधो न स्यात् न तत्रानुमानस्य स्वमूलभूतप्रत्यक्षविशेषप्रतिक्षेपत्वाभावात् । नहि तत्र भेदसामान्यादिग्रहणं ज्वालैक्यग्रहणोपजीवि भेदप्रतियोगिन ऐक्यस्याप्यन्यत्र सामा-

---

तप्तजलपृथिव्योरप्यौष्ण्योपलम्भात् कथं वह्नेरन्यत्र तदभाव इत्यत आह । अग्न्यातपेति । अग्न्यातपयोरन्तत औष्ण्योपलम्भः सोपाधिकोऽस्त्वित्यत्राह । न तथेति । ननु वन्ह्यातपयोरन्यतरस्यान्यतरत्रारोपे उपाधित्वमस्त्वित्यत आह । नचेति । व्याघातादिति । स्वाभाविकधर्मवत एवान्यत्र तदारोपोपाधित्वादिति भावः । नियामकाभावादिति । अन्यतरस्वाभाविकत्वे नियामकाभावादित्यर्थः । अतो वन्ह्यातपादिधर्म एवौष्ण्यमिति परमाद्द्वितीयपक्ष एवाभ्युपगन्तव्यः । तथा चानन्यथासिद्धत्वाद्वन्ह्याद्यौष्ण्यप्रत्यक्षस्य नानुमानबाध्यत्वं किं त्वनुमानस्यैव तद्बाध्यत्वमित्यभिप्रेत्याह । अत इति । वैशम्यमजानानः शङ्कते । नन्विति । एवमिति । प्रत्यक्षस्यानुमानेन बाधाभाव इत्यर्थः । वैशम्यमुद्घाटयन्परिहरति । नेति । उष्णत्वप्रत्यक्षत्वस्यानुष्णत्वानुमानोपजीव्यत्वात् तत्र प्रत्यक्षेणानुमानबाधो युक्तः ज्वालाभेदानुमाने तु ज्वालैक्यप्रत्यक्षस्यानुपजीव्यत्वात् अनुमानेन तद्बाधो युक्त इति भावः । नच तत्रापि स्वप्रयोजकसाध्यधीरूपभेदसामान्यज्ञानस्य वा पक्षादिज्ञानस्य वा ज्वालैक्यप्रत्यक्षोपजीव्यतास्ति येन तत्राप्यप्रतिक्षेपः स्यादित्याह । न हीति । ननु ज्वालाभेदप्रतियोगितया ज्वालैक्यप्रत्यक्षं ज्वालाभेदानुमानोपजीव्यमेवेत्यत्राह । भेदप्रतियोगिन इति । नहि यत्रैव भेदग्रहस्तत्रैवाभेदग्रहस्तद्धेतुरिति नियमोऽस्ति येन

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षमराजविरचितवृत्तिसमेता (वेदान्तः) २
(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २
(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) २
(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) २
(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३
(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् ( वेदान्तः ) २
(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया सगेतम् । ( वेदान्तः ) १४
(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १
(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ८
(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्तः ) ... २
(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... ३
(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २
(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः : मणिभद्रकृतटीकया सहितः । हरिभद्रसुरिकृतः । ... ... १
(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च ... ... १
(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३
(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सपिण्डदीपकश्च ११
(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६
(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ... ... ४
(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... २
(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... २
(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १
(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २
(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४
(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । २
(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्योः-प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ३
(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ४
(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्म्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता ३
(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

(४६) याज्ञवल्क्यस्मृतिः। बालम्भट्टीसमाख्यव्या-
ख्यासमलङ्कृतमिताक्षरासहिता । व्य-
वहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रव-
र्तिकृता । श्रीगङ्गेशोपाध्यायविरचित-
तत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरो-
मणिविरचितदीधित्या च गर्भिता। ६

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणी-
ता। रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्या-
ख्यव्याख्यया सहिता तर्कपादः । ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहो-
पाध्याय--श्रीनागेशभट्टविरचिता।
श्रीमद्दुर्बलाचार्य--बालम्भट्टाभ्या विर-
चितकुञ्जिकाकलाह्वटीकाद्वयसंवलिता। ११

(४७) व्याकरणसिद्धान्तसुधानिधीः ।
पर्वतीय विश्वेश्वरसूरिविरचितः । ८

(४८) वीरमित्रोदयः। लक्षणप्रकाशः। महामहो-
पाध्यायश्रीमित्रमिश्रविरचितः। ७

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वा-
मिविरचितः। महेश्वरतीर्थकृतयालघुसं-
ग्रहाख्यया टीकयासमलंकृतः। ८

(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महा-
महोपाध्यायश्रीमित्रमिश्रविरचितः । ५

(५१) पूर्वमीमांसा अधिकरणकौमुदी। श्रीमन्म-
हामहोपाध्याय पं० रामकृष्णभट्टाचार्य-
विरचिता परिशिष्टाधिकरणनिरूपणपूर्व-
कं टिप्पण्या परिष्कृत १

(५२) प्रशस्तपादभाष्यटीकासंग्रहः । तत्र क-
णादरहस्यम् । श्रीशंकरमिश्रविरचितम् २

(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय
काश्मीरिककेशवभट्टविरचिता । विद्या-
विनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेन २

(५४) वीरमित्रोदयः । तीर्थप्रकाशः । महा-
महोपाध्याय श्रीमित्रमिश्रविरचितः । ६

(५५) सांख्यसंग्रहः । तत्र सांख्यतत्त्वविवेचनम्
श्रीषिमानन्द ( क्षेमेन्द्र ) विरचितम् ।
साख्यतत्त्वयाथार्थ्यदीपनम् भावागणेश-
विरचितम्। समाससूत्रव्याख्या सर्वो-
पकारिणी च । १

(५६) न्यायपरिशुद्धिः । श्रीमद्वेङ्कटनाथ श्रीवे-
दान्ताचार्यप्रसादिता। श्रीनिवासाचार्यविर-
चित न्यायसारसमाख्यया टीकयायुता। १

पत्रादिप्रेषणस्थानम्। }
जयकृष्णदास गुप्तः, सेक्रेटरी,
चौखम्बा संस्कृत सिरीज आफिस,
बनारस सिटी।

October 1919.

THE

# CHOWKHAMBA SANSKRIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 262.

# न्यायपरिशुद्धिः ।

श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यप्रसादिता ।

श्रीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकया युताः ।

वृन्दावननिवासि सर्वविद्याभूषणलक्ष्मणाचार्येण

टिप्पणीनिवेशन पुरःसरम्

संशोधिता ।

NAYÂYAPARISHUDDHI,

By

SRI VENKATNATH SRI VEDÂNTÂCHÂRYA

With a Commentary called Nyayasar.

By

SRI NIWÂSÂCHÂRYA,

Edited with Notes by Vidyábhushan

Lakshmanachârya of Brindában,

BENARES.

FASCICULUS IV–५.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE. BENARES.

AGENTS:-OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO; BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press, Benares.*

1918.

*Price Rupee one.*

॥ श्रीः ॥

—:०:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२६२


१ अस्यां चौखम्बा- संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था

३ एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।
काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आनकाः ८

५ अन्यैर्देयं प्रतिस्तबकं ... ... ... ... ... " " १ "

६ आपणव्ययः पृथग् नास्ति । ... ... ... ... ... ...


साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २
(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १२
(३) श्लोकवार्त्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०
(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) २
(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १
(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः (मीमांसा) २
(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णः ( मीमांसा ) २
(८) ब्रह्मसूत्रभाष्यम्- बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णं । ( वेदान्तः ) ६
(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा १
(१०) सिद्धित्रयम्—विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्ण (वेदान्तः) १
(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४
(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः ( न्यायः ) ... ... ... ५
(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् ( मीमांसा ) ... ... २
(१४) न्यायसुधा ( तन्त्रवार्त्तिकटीका ) महसोमेश्वरविरचिता । ( मीमांसा ) १६

न्येन ग्रहणं सिद्धम् । नच कृत्स्नप्रत्यक्षादिबाधकानुमानवत् प्रयोजकत्वेषेणापि मूलघातः । नच ज्वालान्तरासम्भवे दीपसामग्र्यनुवृत्त्यादेरन्यथासिद्धिः सुवचा । नच ज्वालैक्यप्रत्यक्षं तदौष्ण्यप्रत्यक्षवदन्यथासिद्धं निर्वापितारोपितदीपेऽप्यविदितनिर्वापणस्य तत्त्वप्रत्यभिज्ञानात् । तद्वदेव सादृश्यादिबलादैक्यधीसम्भवे शङ्कितान्यथासिद्धेः प्रत्यक्षस्य भेदानुमानप्रतिक्षेपाशक्तेः । सुसूक्ष्मावलोकने च ज्वालाधूमादिसन्ततिषु निस्तरङ्गप्रवाहतैलधारादिष्विव सञ्चरणभेदाध्यवसायात् । एवमेव देहात्मैक्यप्रत्यक्षेऽपि भेदानुमानस्यैव विजयित्वं तप्तायःपिण्डे पावकत्वादिबुद्धिवत् ज्ञातृसंसर्गविशेषात् सङ्घातेऽपि तद्ग्रहोपपत्तेः । नच पावकवत् ज्ञाता पृथङ्नोपलभ्यत इति वाच्यम् ममेदं शरीरमिति व्यतिरेकप्रत्ययदशायां गृहतत्स्थादिवत् पृथ-

---

प्रत्यक्षस्योपजीव्यता स्यात् सामान्यतो घटादौ सिद्धेनाभेदग्रहणेनैव ज्वालाभेदज्ञाने प्रतियोगिज्ञानाकाङ्क्षोपशमादिति भावः । किञ्च प्रपञ्चो मिथ्या दृश्यत्वादिति कृत्स्नप्रत्यक्षादिप्रमाणबाधकानुमानेऽनुमानप्रयोजकव्याप्तिज्ञानत्वाद्याकाराभावाच्च ज्वालैक्यप्रत्यक्षेण तद्भेदानुमानबाध इत्याह । न चेति । किञ्च तर्कानुगृहीततया अनन्यथासिद्धेनानुमानेन प्रत्यक्षस्यैव बाध इत्यभिप्रेत्यानुमानानुकूलं तर्कमाह । नचेति । दीपसामाग्र्यनुवृत्त्यादेरिति । दीपनाशहेतुभूतवर्त्यवयवसंयोगनाशवर्त्यवयवान्तरसंयोगयोर्निरन्तरानुवृत्त्या पूर्वज्वालानाशज्वालान्तरोत्पादादिना उपपादयितुमशक्यत्वादित्यर्थः । नन्वनन्यथासिद्धस्य ज्वालैक्यप्रत्यक्षतदुत्पादकस्य कथमनुमानेन बाध इत्यत आह । नच ज्वालेति । वस्तुतस्तु ज्वालैक्यप्रत्यक्षं ज्वालाभेदप्रत्यक्षेणान्यथासिद्धमित्याह । सुसूक्ष्मेति । धूमसन्ततिग्रहणं दृष्टान्तार्थम् । उक्तं प्रत्यक्षस्यानुमानबाध्यत्वमन्यत्रापि तुल्यन्यायतयातिदिशति । एवमेवेति । तत्रापि बाध्यत्वमूलमन्यथासिद्धिमाह । तप्तेति । सङ्घातेऽपीति । करचरणादिसङ्घातेऽपि

गेवोपलब्धेः । नच शिलापुत्रकस्य शरीरम् घटस्य स्वरूपमित्यादिष्विव भेदव्यपदेश औपचारिक इति वाच्यम् तद्वदिह द्रव्यान्तराभावानध्यवसायात् । नच समानाधिकरणप्रत्ययेन व्यतिरेकप्रत्ययबाधः विपर्यासस्यापि सुवचत्वात् । यथा च व्यतिरेकव्यपदेशस्यौपचारिकत्वशङ्का तथा समानाधिकरणाधियोऽपि तप्तायःपिण्डादिष्विव संसर्गोपाधिकत्वशङ्काया अपि दुर्वारत्वात् । नच पावकौष्ण्येऽपि तथा,व्यतिरेकप्रत्ययपुरस्काराभावात् । भावे वा कस्तत्राप्याश्वासः । अपि च व्यतिरेकबुद्धेः प्रथमतस्तन्येच्छाद्यनुत्पत्तिप्रसङ्गेनानुग्रहाद् देहात्मबुद्धेश्च तेन निग्रहात् प्राबल्यदौर्बल्ये प्रतिभातः । नहि भवान्तरीयानुभवजनितसंस्कारमूलतज्जातीयत्वप्रतिसन्धानजनितसुखादिसाध-

---

ज्ञातृत्वग्रहोपपत्तेरित्यर्थः । व्यतिरेकप्रत्ययदशायामिति । भेदज्ञानकाल इत्यर्थः । तद्वदिति । तत्र शिलायां चालीकघटादौ तद्व्यतिरिक्तशरीरस्वरूपशब्दार्थाभावनिश्चयात् तत्रौपचारिकत्वाश्रयणं युक्तं प्रकृते तथा शरीरव्यतिरिक्तद्रव्यान्तराभावानिश्चयादौपचारिकत्वाश्रयणमयुक्तमित्यर्थः । व्यतिरेकप्रत्ययपुरस्काराभावादिति । वह्नौ दृष्टस्यौष्ण्यस्यायःपिण्डे आरोपवद्वह्नेरन्यत्र दृष्टस्यौष्ण्यस्य वन्हावारोप इति वक्तुमशक्यत्वात् वन्हिव्यतिरेकेण औष्ण्याभावादित्यर्थः । यदि च वन्हिव्यतिरिक्तेऽप्यौष्ण्यप्रत्ययसम्भवेन तत्संसर्गाद्वन्हावौष्ण्यप्रत्ययसम्भावना कस्यचित्तत्राप्यनाश्वास एवेत्याह । भावेति । किञ्च देहातिरिक्तात्मानङ्गीकारे जातमात्रस्य जन्मान्तरसंस्काराधीनस्तन्यपानप्रवृत्त्यनुपपत्तिरूपतर्कानुगृहीतेन देहात्मभेदज्ञानेन देहात्मभ्रमस्य बाध्यत्वं व्यक्तमित्याह । अपिचेति । प्रतिभात इति । प्रतिपूर्वाद्भादीप्ताविति धातोर्लटि प्रथमपुरुषद्विवचनम । प्राग्भवीयसंस्कारव्यतिरेकेण स्तन्यपानप्रवृत्त्याद्यनुपपत्तिमेवोपपादयति । नहीति । जातमात्रस्य प्रज्ञारुचिवैचित्र्यानुपपत्तिश्चानुग्राहिकेत्याशयेन प्रतिबन्दिनिदर्शनमा-

नत्वानुमानमन्तरेण प्रथमतस्तन्ये च्छादेरुत्पत्तिसम्भवः। यथा चेदानीमभ्यासभेदात् रुचिभेदः प्रज्ञाभेदश्च हेत्वन्तरसाम्ये ऽपि दृश्यते। तथा प्रसूतमात्रस्यापि प्राग्भवाभ्यासभेदहेतुकप्रज्ञारुचिवैचित्र्यं न सहसा प्रतिक्षेप्तुं शक्यम्। अपि च असमाहितधियामस्मदादीनामपि निरुद्धबाह्यकरणप्रवृत्तीनां मात्रया मनःप्रणिधानेऽपि ग्रहालोकयोरिव देहदेहिनोर्भेदो ऽपि स्फुरत्येव विनिष्पन्नसमाधीनान्तु विशदतम इति विशेषः। अत एव हि तस्मिन्नंशे शास्त्रव्यापारः। यथाहुः।

अवयवितयेदंकुर्वाणैर्बहिः करणैर्वपु
र्निरवयवकोऽहङ्काराहैः पुमान् करणातिगः॥
स्फुरति हि जनाः प्रत्यासत्तेरिमौ न विविञ्चते

१। यथेति। हेत्वन्तरसाम्येऽपीति। भोग्यपदार्थसंनिधानशास्त्रपाठनादिसामग्रीसाम्येऽपीत्यर्थः। स्वप्रकाशतयाप्यात्मा स्वयमेव स्वेतरव्यावृत्त एव प्रकाशत इत्यतोऽपि देहात्मप्रत्ययोऽन्यथासिद्ध इत्याह। अपि चेति। असमाहितधियामिति। योगाभ्याससशून्यानामपीत्यर्थः। मात्रया। ईषदित्यर्थः। विशदतम इति। देहातिरिक्तभगवच्छेषत्वाणुत्वादिविशेषात्मक इत्यर्थः। ननु देहातिरिक्तात्मनः प्रत्यक्षानुमानाभ्यां सिद्धावात्मा न देहो न नर इति शास्त्राणां प्राप्तविषयतया वैयर्थ्यमेव स्यादित्यत आह। अत एव हीति। वैशद्यांशे तदुपयोगादिति भावः। भट्टपराशरपादैः श्रीरङ्गराजस्तवे ऽयमर्थोऽनुगृहीत इत्याह। यथाहुरिति। अवयवितयेति। वपुः शरीरम् इदं कुर्वाणैरिदं मम शरीरमिति विषयीकुर्वद्भिः बहिष्ठकरणैर्बाह्येन्द्रियैः अवयवितया करचरणादिसंघाततया स्फुरति। पुमान् आत्मा तु निरवयवः अवयवरहितः सन्नहंकाराहैः प्रत्यगर्थः करणातिगः चक्षुरन्तःकरणादिनिरपेक्षः संस्तद्व्यतिरिक्ततयैव स्फुरति हिः प्रसिद्धौ जना लौकिकास्तु प्रत्यासत्तेरपृथक्सिद्ध्या न विविञ्चते विविच्य न

तदधिकुरुतां शास्त्रं रङ्गेश ? ते परलोकिनि इति ।

"आनुमानिकीमप्यात्मसिद्धिमश्रद्दधानाः श्रौतीमेव तां श्रोत्रियाः सङ्गिरन्ते" इत्यात्मसिद्धिग्रन्थोऽपि तावन्मात्राभिप्रायः। पाणिपादादिषु प्रत्येकसमुदायाहंत्वविकल्पानुपपत्त्यादयश्चास्मदाचार्यैर्न्यायकुलिशे प्रपञ्चिताः स्पष्टमनुसन्धेयाः । अतो ज्वालैक्यदेहात्मैक्यप्रत्यक्षयोरनुमानेन बाधः सुशकः । दहनौष्ण्यप्रत्यक्षस्य न तथेति तत्रानुमानमेव प्रत्यक्षबाधितमिति पदार्थत्वादेर्हेत्वाभासता । अनुमानबाधितो यथा । प्रथमाद्यास्तिथयः सम्भवच्चन्द्रसूर्योपरागाः तिथित्वात् पर्ववदिति । अयं ह्युपरागस्य पर्वान्तप्रतिनियतभावित्वग्राहिणा शास्त्रानुमतदृढनिरूढान्वयव्यतिरेकेण गणितानुमानेन बाधितः । आगमबाधितो यथा । परविग्रहादिरुत्पत्तिविलयवान् सावयव-

---

जानन्ति । तस्मात्कारणादेव शास्त्रं त्वत्प्रवर्तितं वेदादिकं परलोकिनि परलोकयोग्ये देहातिरिक्तात्मनि अधिकुरुतामज्ञातविशेषाकारज्ञापनेन सफलप्रवृत्तिकमस्त्वित्यर्थः । रङ्गेशेति भगवत्सम्बोधनम् । नन्वेवं देहातिरिक्तात्मासिद्धिः शास्त्रेणैवेत्यात्मसिद्धौ प्रतिपादितं विरुध्येतेत्याशङ्क्यात्मसिद्धिग्रन्थोऽप्युक्तार्थविषयतयैव नेय इत्याह । आनुमानिकीमपीति । अहंप्रत्ययगोचरो ज्ञाता स एवात्मेत्यत्र भवतामविवाद एव तत्र न देहावयवाश्चेतयन्ते तेषामहमिति भावनाभावात् न हि कश्चिदहं पाणिरहं पाद इति वा प्रतिपद्यते । ततो ऽहंत्वाभावात् तेषु ज्ञानाभावः । नच पादादिषु सुखदुःखे समवेते पादे मे सुखं शिरसि मे दुःखमित्युपलम्भात् । अतस्तत्समानाधिकरणं तदात्मकं ज्ञानमपि तत्रैवेत्युचितं यतस्तत्रास्मदर्थस्य सुखसमवायित्वं न ह्यस्मदर्थमपहायान्यसमवेतं सुखमध्यक्षमनुभूतमिति कस्यचिद्भ्रान्तिरपि सम्भाति । अतो मे सुखमिति समवायिनि सिद्धाहं प्रदेशत्वात्तस्य कुत्रेत्याकाङ्क्षायां तदुपलक्षणतया पादादिव्यपदेश इत्येके । अस्मन्मते

त्वात् सम्प्रतिपन्नवदिति । अयं हि "नित्यालिङ्ग्यास्वभावसंसिद्धिः । नित्यासिद्धे तदाकारे तत्परत्वे च पौष्कर ! ।
यस्यास्ति सत्ता हृदये तस्यासौ संनिधिं व्रजेत् ।
नित्यं नित्याकृतिधरम्" । इत्यादिभिरागमैरबाधितैर्बाध्यते । नचात्र शास्त्रमन्तरेण पक्षसिद्धिः नचासिद्धाश्रयो हेतुः साधकः ।

---

त्वणुरेवात्मा सुखमप्यनुकूलवेदनात्मकं तस्मिन्नेव स्थितमपि तत्तदनुकूलस्पर्शादिविषयदेशविशेषितं तथा तथानुभूयत इत्यादिना पाणिपादादिषु प्रत्येकं वा समुदितेषु वा अहंत्वानुपपत्तिर्ज्ञातृत्वानुपपत्तिः सुखित्वाद्यनुपपत्तिश्चात्रेयरामानुजाचार्यैर्न्यायकुलिशे देहाद्यतिरिक्तात्मयाथात्म्यसमर्थनवादे प्रपञ्चिताः । अतो नास्माभिस्तत्र प्रयस्यत इत्याह । पाणिपादादिष्विति । शास्त्रानुमतेति । गणितशास्त्रस्य प्रत्यक्षधियोरन्वयव्याप्त्योरप्रयोजकत्वराहित्यज्ञापन एवोपयोगान्नात्रागमबाध इति भावः । परविग्रहादिरिति । परवासुदेवसंहननानन्दमयमण्डपश्रीवैकुण्ठविमानादिरित्यर्थः । तत्र श्रुतिमुदाहरति । नित्यालिङ्ग्येति । भगवतो दिव्यमूर्तिर्नित्या आलिङ्गितुं योग्या अत्यन्तभोग्येति यावत् । स्वभावतः संसिद्धिः सत्ता यस्या नित्येति यावत् । पौष्करसंहितावचनमुदाहरति । नित्येति । हे पौष्कर ! ब्रह्मन् नित्यसिद्धे कालपरिच्छेदरहिते तस्य परवासुदेवस्याकारे दिव्यमङ्गलविग्रहसंस्थाने तस्य परत्वे पारम्ये च यस्य हृदये मनसि सत्ता तदुभयागोचरनिर्णय इत्यर्थः । तस्य पुरुषस्य हृदये ऽसौ परवासुदेवः संनिधिं व्रजेत् संनिदध्यादित्यर्थः । नित्यमिति । तत्परवासुदेवाख्यं परं ब्रह्म नित्यं शाश्वतिकं नित्याकृतिधरं नित्यदिव्यमङ्गलविग्रहसंस्थानत्वादित्यर्थः । अबाधितैरिति । यथा चैतत्तथोक्तं श्रीपाञ्चरात्ररक्षायामाचार्यैः । नन्वागमस्यासंप्रतिपन्नप्रमाणत्वात्तेन कथमनुमानस्य बाध इत्यत आह । नचात्रेति । तथाचागमस्यासंप्रतिपन्नत्वे त्वदनुमानस्याश्रयासिद्धिः स्यादिति भावः । ननु वह्निरनुष्णः पदार्थत्वादित्यनुमानस्य प्रत्यक्षोपजीव्यत्वात्तेनानुमानस्य बाधेऽपि परविग्रहनित्यताबोधकागमस्य

नच धर्मिग्राहकेणैव बाध इति नियमः । तद्वा तादृग्वेति वि-शेषायोगे तज्जातीयेनापि बाधोपपत्तेः । एवं ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वात् क्षीरवदित्यत्र पातुं शक्यत्वादिविधौ सिद्धसाधनात् । पीतायाः पारलौकिकप्रत्यवायसाधनत्वाभाव एव हि सिषाधयिषितः । तत्र प्रतिषेध्यस्वरूपसिद्धेरागमोपज्ञत्वा-त्तदुपजीविनोऽनुमानस्य तेन बाधः । एवमग्नीषोमीयाधर्म-त्वादिसाधनेष्वपि भाव्यम् । द्वाभ्यां द्वाभ्यां त्रिभिश्च बाधितस्तु भिन्नप्रमाणविरुद्धसाध्यकानेकपक्षीकारे तत्तत्प्रमाणविरुद्धाने-कसाध्यसहसाधने च तत्तदंशप्रतिनियमेन द्रष्टव्यः । यथा विप्र-

---

मानानुपजीव्यत्वात्तेनानुमानबाधो न युक्त इत्यत आह । न च धर्मि-ग्राहकेणैवेति । तादृग्वेति । उपजीव्यप्रमाणवदस्याप्यन्यथासिद्ध-त्वादनुमानबाधकत्वं युज्यत इति भावः । पेयेत्यत्र पातुं योग्या पातुं शक्या पाने प्रत्यवायकरी न भवतीति त्रेधापि गमनिकायाः सम्भवात् तत्रागमबाधोपपादनसौकर्य्यायाविवक्षितकोटिद्वयं नि-राकरोति । पातुं शक्यत्वादिविधाविति । प्रतिषेध्यस्वरूपसिद्धे-रिति । पारलौकिकप्रत्यवायसाधनत्वस्य प्रतियोगिन आगमा-धीनसिद्धिकत्वात्तेनागमेन सुरापाने प्रत्यवायसाधनत्वे सिद्धे त-दभावसाधकानुमानस्य उपजीव्यागमाधीनत्वादिति भावः । अ-ग्नीषोमीयाधर्मत्वादिसाधनेष्विति । अग्नीषोमीयहिंसा अधर्मः अधर्मसाधनं धर्मो न भवतीति वा साध्ये साध्यानां शास्त्रै-कसमधिगम्यत्वेन शास्त्रस्योपजीव्यत्वात्तेन चाग्नीषोमीयहिंसा-या धर्मत्वबोधनादागमेनानुमानबाधोऽत्रापीति भावः । द्वाभ्यां द्वाभ्यामिति । प्रत्यक्षागमाभ्यामनुमानागमाभ्यामनुमानप्रत्यक्षाभ्यां च बाधिता गृह्यन्ते । भिन्नप्रमाणविरुद्धसाध्यकानेकपक्षी-कारे नानाप्रमाणबाधं दर्शयति । यथेति । सर्वमिति । घ-टव्यतिरिक्तं पक्षीक्रियते तत्र पटे साध्यस्य प्रत्यक्षेण बाधः । प्रकृत्यादौ त्वागमेन बाधः । तत्तत्प्रमाणविरुद्धानेकसाध्यस्य सह साधने नानाप्रमाणबाधो यथा घटः स्वप्रकाशः नित्यः स्वतन्त्रश्च

तिपन्नं सर्वं दण्डसाध्योत्पत्तिविनाशवद्वस्तुत्वात् सम्प्रतिपन्नघटवदिति । सम्प्लववादे त्वत्यन्तसमानविषयानेकप्रमाणबाध्यत्वमप्यन्वमंसतेति ।

अतुल्यं तुल्यमपि वा यं तुल्यमभिमन्यते ।
तेन यः प्रतिरुध्येत तमाहुः प्रक्रियासमम् ॥
मानमाभाससंरुद्धं मानरुद्धस्तथेतरः ।
आभासरुद्ध आभासः प्रतिरुद्धस्त्रिधा स्थितः ॥
आभासमानयोरत्राप्यवान्तरभिदावशात् ।
प्रतिरुद्धविधाभेदा निरूप्या बाधितक्रमात् ॥
त्रिविधस्यापि रोधस्य साम्यबुद्ध्यास्ति सम्भवः ।

---

वस्तुत्वादीश्वरवदिति साधने स्वप्रकाशताया अनुमानेन बाधः नित्यत्वस्य प्रत्यक्षेण स्वतन्त्रत्वस्यागमेनेति । नानासिद्धान्तसांकार्येण प्रवृत्तायां कथायामनुमानस्यानेकप्रमाणबाधितत्वं तान्त्रिकैरप्यनुमतमित्याह । संप्लववादे त्विति । यथा सर्वं नित्यं सत्त्वादिति संप्लववादे घटादावनित्यत्वस्य प्रत्यक्षसिद्धत्वात् तत्र प्रत्यक्षेण बाधः । द्व्यणुकादौ त्वनुमानेन धर्माधर्मयोरागमेनेति तत्तन्मतानुसारेण बोध्यम् । अन्वमंसतेति । अनुमत इत्यर्थः । अतुल्यमिति । तुल्यप्रमाणतयाभिमतेन प्रतिरुद्धत्वं सत्प्रतिपक्षत्वमिति लक्षणकारिकार्थः । साध्यधर्मविघटनरूपस्य प्रतिरोधस्य बाधितेऽपि सत्त्वात्तद्व्यावर्तनायाभिमतान्तम् । सत्प्रतिपक्षस्य त्रैविध्यं दर्शयति । मानमिति । प्रमाणस्याभासेन प्रतिरोधात्सत्प्रतिपक्षस्त्रिविध इत्यर्थः । आभासानां प्रत्यक्षाभासादिभेदादवान्तरे सव्यभिचारादिभेदाश्च । तथा मानानामपि प्रत्यक्षानुमानादिभेदास्तदवान्तरचक्षुरादिभेदाश्च सत्प्रतिपक्षभेदा अनुसन्धेया इत्याह । आभासमानयोरिति । बाधितक्रमादिति । बाधितवदेवैकेन द्वाभ्यां त्रिभिश्च प्रतिरोधसंभवात्तथापि भेदा ग्राह्या इत्यर्थः । ननु मानस्याभासेन प्रतिरोध एव न सम्भवति अधिकबलत्वेन मानेनैवाभासस्य बाधितत्वादित्यत आह । त्रिविधस्यापीति । अगृह्यमाणविशेष-

न तु मानेन मानस्य रोधो भवति कर्हिचित् ॥
अन्यूनानतिरिक्तादौ विरोधो न हि विद्यते ।
नचात्यन्तविभिन्नार्थे विरोधेऽन्यतरत् प्रमा ॥
श्रुतिद्वयविरोधेऽपि तत्रैकस्या न मानता ।
तात्पर्यार्थे हि मानत्वं नच द्वे अपि तत्परे ॥
रोधश्च हेतुनैवेति हेतोरेवेति वा पुनः ।

---

दशायां प्रतिरोधः सम्भवतीति भाव. । मानेन मानस्य प्रतिरोधेन चतुर्थस्यापि सत्प्रतिपक्षस्य सम्भवात्कथं त्रेधा परिगणनमित्याशङ्क्य मानेन मानस्य प्रतिरोधं वदन् वक्तव्यः मानप्रतिरोधकं मानं किमन्यूनानारिक्तविषयकं किं वा भिन्नविषयकमिति विकल्प्याद्ये दोषमाह । अन्यूनानतिरिक्तादाविति । आदिपदेनान्यूनविषयस्यानतिरिक्तविषयस्यापि परिग्रहो विकल्प्यो विवक्षितः । तथा चोभयोर्मानयोरविरुद्धविषयकत्वेनान्यतरप्रतिरोधो न सम्भवतीति भावः । द्वितीये दोषमाह । नचेति । तथाच भिन्नविषयकत्वेन सति विरोधेऽन्यतरस्याभासत्वावश्यंभावान्न द्वयोरपि मानत्वेन साम्यं प्रत्येकं शक्यमसम्भवादिति भावः । नन्वतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति भिन्नविषययोरपि ग्रहणाग्रहणशास्त्रयोः सत्यपि विरोधे उभयोरपि मानत्वानपायात् कथमन्यतराभासतानियम इत्यत आह । श्रुतिद्वयेति । तत्रैकस्या न मानतेति । यस्मिन् प्रयोगे षोडशिग्रहणस्याङ्गत्वं विहितं तस्मिन्नेव चेत्तन्निषेधं ब्रूयादपरा श्रुतिस्तदा सा अपमाणमेव स्यादित्यर्थः । ननु संप्रतिपन्नप्रमाणभावायाः श्रुतेरप्रमाणत्वाङ्गीकारो ऽयुक्त इत्यत आह । तात्पर्येऽर्थे हीति। न गृह्णातीति श्रुतेः प्रयोगान्तरे ग्रहणाभावस्याङ्गताबोधकत्वात्तत्र व्रीहियववद्विकल्पेनानुष्ठानसम्भवात्तदनुरोधेन ग्रहणपक्षे फलभूम्नोऽपि कल्पितत्वाद्विरोधेन तात्पर्यविषये प्रामाण्यं न व्याहन्यत इति भावः । ननु हेतोर्हेतुना प्रतिरोधस्यैव सत्प्रतिपक्षतया नैयायिकैरङ्गीकृतत्वात् कथं प्रत्यक्षादिप्रतिरोधेऽपि सत्प्रति-

नियमो नाभिमन्तव्यः सर्वैः सर्वत्र सम्भवात् ॥

तथा हि तत्राभासेन प्रमाणप्रतिरोधो यथा । ब्राह्मणो न सुरां पिबेत् इति वैदिकोक्तौ बौद्धकापालिकाद्यागमैः पातव्यत्वोक्त्या प्रतिरुद्धा श्रुतिरिति । अत्र ह्यविदितगुणदोषबलाबलप्रस्थानस्य प्रमाणभूतमपि प्रतिरुद्धं भवति । उक्तविपर्यासात् प्रमाणेनाप्रमाणस्य प्रतिरोधो द्रष्टव्यः । तत्राधिकबलस्य वस्तुतो बाधकत्वेऽपि बलानभिज्ञः प्रतिरोधकं मन्यते । आभासस्याभासेन प्रतिरोधो यथा । केशोल्लुञ्चनं कर्तव्यम् । अर्हदाद्युपदेशादिति दिगम्बरेणोक्ते न तत्कर्तव्यमन्यथा तथागतोपदेशादिति । अत्रानाप्तवाक्यत्वाविशेषाद्वस्तुता द्वयोरनादरणीयत्वेऽपि योगसिद्धसार्वज्ञ्यवाक्यत्वाविशेषाभिमानात् भवति प्रतिरोधः । वास्तवविमर्शे तुल्यदोषतयोभयोरप्यसाधकत्वमेवेति । प्रकरणसममेव विरुद्धाव्यभिचारिशब्देन केचिदुपचरन्ति । यथा

---

श्त्वमङ्गीक्रियत इत्यत आह । रोधश्चेति । तथा चागृमाणविशेषदशायां प्रतिरोधस्यान्यत्रापि तुल्यत्वेन हेतोरेवेति न हेतुनैवेति वा नियमो निर्मूल इति भावः । बौद्धकापालिकाद्यागमैरिति ।

यदुदुम्बरवर्णानां घटीनां मण्डलं महत् ।

पीतं न गमयेत् स्वर्गं किं तत्क्रतुगतं नयेदित्याद्यागमैरित्यर्थः । उक्तविपर्यासादिति । यदुदुम्बरवर्णानामित्याद्यागमैः । बौद्धादिभिः सुरायाः पातव्यतोक्तौ ब्राह्मणो न सुरां पिबेदिति श्रुत्या प्रतिरोधो द्रष्टव्य इत्यर्थः । ननु श्रुतेरधिकबलवत्तया बाध एव न प्रतिरोध इत्यत आह । तत्रेति । अर्हदाद्युपदेशादिति । क्षपणकादिभिः केशोल्लुञ्चनस्य मोक्षसाधनत्वोपदेशादित्यर्थः । अन्यथेति । तस्याकर्तव्यतया बौद्धोपदेशादित्यर्थः । उपचरन्तीति । वस्तुतो विरुद्धसाध्यकयोरुभयोरव्यभिचारिताया असम्भ-

यत्राप्रत्यक्षता वायोररूपत्वेन साध्यते ।
स्पर्शात् प्रत्यक्षता चासौ विरुद्धा व्यभिचारिता इति ॥

द्विवचनान्तविरुद्धाव्यभिचार्युदाहरणमिदम् । तत्र हेतोर्हेत्वाभासेन प्रतिरोधो यथा । देवदत्तात्मा यज्ञदत्तात्मनो भिन्नः तदनुभवजनितस्मृतिराहितत्वात् घटवत् इत्यन्वयेन वा यो यज्ञदत्तात्मनो न भिन्नः स तदनुभवजनितस्मृत्याधारः यथा यज्ञदत्त एवेति व्यतिरेकेण वोदाहृते स तस्मादभिन्न आत्मत्वात् तद्वदेवेति वा यस्ततो भिद्यते न स आत्मा यथा घट इति वेति । अत्रानुमितपरसुखदुःखाद्यनाधारतया स्वस्य प्रत्यक्षसिद्धत्वात् । सुखदुःखोपभोगसंकरप्रसङ्गात् । उपाधितो व्यवस्थानस्य इन्द्रियादि भेदे-

---

वात्तत्र तच्छब्दप्रयोगो लाक्षणिक एवेत्यभिप्रायः । तत्र तदुक्तिं दर्शयति । द्विवचनान्त इति । विरुद्धाव्यभिचारिणोर्भाव इति विग्रहेणार्थद्वयस्यापि विरुद्धाव्यभिचारिशब्देन विवक्षितत्वात्तत्र द्विवचनान्तस्योदाहरणमिदमिति भावः । हेत्वाभासस्य हेतुना प्रतिरोध उक्तः । इदानीमाभासेन हेतोः प्रतिरोधमुदाहरति । हेतोरिति । ऐक्यानुमानस्याभासतां दर्शयितुं तत्र बाधकान् तर्कानाह । अत्रेति । सुखदुःखयोः परगतयोरप्रत्यक्षत्वात् तदनाधारता स्वस्मिन् कथं प्रत्येतुं शक्येत्यत आह । अनुमितेति । सुखदुःखोपभोगसंकरप्रसङ्गादिति । सर्वजीवगतानां सुखदुःखानामव्यवस्थायाः सर्वानुभाव्यत्वप्रसङ्गादित्यर्थः । तथा च सुखदुःखाद्यनुभवनैयत्यं लोकवेदसिद्धं भज्येतेति भावः । ननु तत्तदन्तः करणशरीराद्यवच्छेदकभेदात् सुखदुःखाद्यनुभवव्यवस्थोपपद्यते इत्यत आह । उपाधित इति । तथा सत्यैकस्यैव जीवस्य चक्षुरादीन्द्रियपाणिपादाद्यवच्छेदकभेदेन भिन्नत्वप्रसङ्गेनैकावच्छेदेन जातयोः सुखदुःखयोरन्यावच्छेदेन तस्यैवानुभवः स्यादित्येकस्यैवानुभवाननुभवौ स्यातामित्यर्थः । ननु शरीरान्तःकरणभेद एव सुखाद्यननुभवव्यवस्थाहेतुर्नत्विन्द्रियादिभेदोऽपि तथात्मनि दर्शनादित्याशङ्क्याह । सौभर्यादिष्विति । भिन्नशरीरान्तः क-

ष्वपि प्रसङ्गात् सौभर्य्यादिषु शरीरादिभेदस्य सुखादिव्यवस्थापकत्वादर्शनाच्च बाधितमैक्यानुमानमित्याभासता। अत्र विपर्य्यासेन हेत्वाभासस्य हेतुना प्रतिरोधः । हेत्वाभासस्य हेत्वाभासेन प्रतिरोधो यथा। यत् सत् तत् क्षणिकं यथा घटः सन्तश्चामी भावा इति सौगतेनोक्ते प्रतिवक्ति यत् क्षणान्तरवर्त्ति न भवति तदसत् यथा खरविषाणम् । नचासन्त इमे भावा इति । अत्राबाधितप्रत्यभिज्ञानादिभिः स्थैर्य्ये वक्तव्ये पिशाचानां पिशाचभाषयैवोत्तरं देयमित्यभिमन्यमानस्यैवमुत्तरसम्भवः । एवं महाविद्यादिरीतिष्वपि प्रागेवोक्तम् । एकस्मिन् हेतौ केन कः प्रतिरुध्येत कथं वा तत्र प्रकरणसमसमाख्यानिवेशः स्यादिति चेन्न एकस्यैव हेतोस्तत्साध्यव्याप्यत्वाभिमानगृहीतस्य तद्विरुद्धसाध्यव्याप्यत्वाभिमतस्वात्मसाध्यनिर्णयपारिपन्थित्वेनावस्थानात् प्रक्रियमाणार्थसाधनप्रवृत्तस्वात्मनस्तद्विरुद्धसाधनप्रवृत्तस्वात्मसमानत्वाच्चेति । तथा हि अनित्यः शब्दः प्रमेयत्वात् घटवदिति केनचित् प्रयुक्ते नित्यः शब्दः तत एव हेतोः आत्मवदिति कश्चित् प्रयुञ्जीत । समं चासाधकत्वमुभयत्र

---

रणावच्छेदेन सौभर्य्यादिषु सुखाद्युत्पत्तावप्यव्यवस्थया सर्वशरीराद्यनुभवस्य शास्त्रसिद्धत्वान्न शरीरादिभेदोऽपि सुखदुःखादिव्यवस्थाहेतुः किं त्वात्मस्वरूपभेद एवेति भावः। प्रतिवक्तीति । अस्य प्रयोगस्यासदृष्टान्तमूलत्वेन क्षणिकत्वव्यभिचाराद्याभासता बोध्या। व्याप्तिज्ञानविषयतया तद्विरुद्धसाध्यधीनिरोधसम्भवात् केन कः प्रतिरुध्यतेति प्रथमाक्षेपस्य नावकाशः स्वेन क्रियमाणैकसाध्यज्ञानेन स्वस्यैव तद्विरुद्धसाध्यव्याप्यत्वेनाकारेण साम्यसम्भवात् कथं तत्र प्रकरणसमाख्या निवेश इति द्वितीयाक्षेपोऽप्यनवकाशिक इति भावः। उभयत्रेति । उभयसाध्यसाधनेऽपीत्यर्थः। अक्षपादादिभिरित्यादिपदेन काणादादयो गृह्यन्ते । ननु कथाप्र-

व्यभिचारित्वादिति । तदेवमेते पञ्च हेत्वाभासा अक्षपादादिभिः संगृहीताः । तथा च सूत्रम् । "(१)सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासा" इति । अत्रासिद्ध एव साध्यतुल्यत्वं निमित्तीकृत्य साध्यसमशब्देनोपचरितः । अत्र न्यायतत्त्वानुसारात् क्रमनियामकसंगत्यभावाच्चाक्षपादं क्रममुल्लङ्घ्यास्माभिर्हेत्वाभासा निरूपिताः । ननु तत्त्वरत्नाकरेऽन्यथैव हेत्वाभासाः प्रपञ्चिताः यथा ।

ईदृक्षपक्षाद्यङ्गानामेकैकविकलत्वतः ।
सर्वानुमानाभासानां संक्षेपाल्लक्ष्म सूचितम् ॥
तत्तत्पक्षादिस्वरूपतत्त्वमतदपि तथा भासमानं तदाभासः। तत्र
पञ्च प्रतिज्ञार्थाभासाः पक्षवैकल्यदोषजाः ।
सिद्ध्यप्रसिद्धिबाध्यत्वविरुद्धत्वाफलत्वतः ॥

इत्याद्युक्त्वा प्रसिद्धिं च विशेषणविशेष्योभयभेदेन त्रेधोदाहृत्य बाध्यत्वमपि प्रमाणत्रित्वात् त्रिधा निर्दिश्य विरुद्धत्वमपि स्ववचनस्वाभ्युपगमसर्वलोकप्रसिद्धिभेदेन विभिद्य

---

सिद्धस्य साध्यसमशब्देन व्यपदेश इत्यत आह । असिद्ध एवेति । तत्त्वरत्नाकरग्रन्थस्य स्वोक्तैकार्थ्यं प्रतिपादयितुं तद्ग्रन्थविरोधशङ्कामवतारयति । नन्विति । ईदृक्षेति । अयमर्थः पक्षहेतुदृष्टान्तानामङ्गानां पूर्वोक्तानामन्यतमवैकल्यं हेत्वाभाससामान्यलक्षणमिति आभासशब्दनिमित्तं दर्शयति । तत्तादिति । तत्र पक्षशब्देन उक्तप्रतिज्ञाङ्गान्यतमवैकल्यात्पक्षाभासपञ्चकमाह । तत्रेति । सिद्ध्यप्रसिद्धीति । साध्यसिद्धौ सिद्धसाध्यता तस्याप्रसिद्धावप्रसिद्धसाध्यता तस्य बाधे बाधितसाध्यता पक्षनिर्देशविरोधे स्ववचनादिविरुद्धसाध्यता । अविवक्षितसाध्यनिर्देशे तु व्यर्थसाध्यतेति पञ्चविधः पक्षाभास इत्यर्थः । विरुद्धत्वमपीति । कार्यं सर्वमनित्यमिति प्रतिज्ञायां

---

(१) गौतमन्यायशास्त्रस्य प्रथमाध्याये द्वितीयाह्निके पञ्चचत्वारिंशंसूत्रम् ।

स्ववचनविरोधेऽभ्युक्तिमात्रधर्मधर्म्युक्तिविरोधभेदेन त्रैविध्यमभिधायाफलत्वपर्यन्तमुदाहृत्य धर्मित्वानिर्देशविशिष्टत्वानिर्देशविशेषणानिर्देशधर्म्यनिर्देशसाध्यानिर्देशरूपपक्षासाधारणनिर्देशदोषपञ्चकमुदाहृत्यावाचकसंदिग्धाश्लीलनिर्देशादयः साधनादिष्वपि साधारणनिर्देशदोषा द्रष्टव्याः । एते च लक्षणवाक्ये

---

स्ववचनविरोधः । नैयायिकस्य नित्यः शब्द इति प्रतिज्ञायां स्वाभ्युपगमविरोधः । प्रपञ्चो मिथ्येति सर्वलोकप्रसिद्धिविरोध इति भाव्यम् । स्ववचनविरोधेऽपीति । खपुष्पं सुरभीत्युक्तिमात्रविरोधः निर्वन्हिः पर्वतो वन्हिमानिति धर्मविरोधः । वन्हिरनुष्ण इति धर्मिविरोधः । अफलत्वपर्यन्तमिति । पर्वतः प्रमेयवन्हिमान् इत्यफलता द्रष्टव्या । धर्मित्वानिर्देश इति । वन्हिमान्पर्वत इति व्युत्क्रमनिर्देशः । अत्र हि पर्वतस्य धर्मित्वं न प्रतीयते प्राथम्यनिर्देशाभावात् । विशिष्टत्वानिर्देश इति । पर्वतो वन्हिरित्यसंसृष्टनिर्देशः । विशेषणानिर्देश इति । पदार्थो वन्हिमानिति पर्वतत्वानादरेण निर्देशः । धर्म्यनिर्देश इति । वन्हिमानिति साध्यमात्रनिर्देशः साध्यानिर्देश इति । धर्मिमात्रनिर्देशः । एते निर्देशदोषाः पञ्चापि प्रतिज्ञामात्रसाधारणाः । अवाचकत्वादयस्तु हेतुनिर्देशादिसाधारणा इत्याह । अवाचकेति । व्याकरणसंस्काररहितो ऽवाचकनिर्देशः । भूभृल्लोहिताश्ववानिति संदिग्धनिर्देशः । पर्वतो धूमयोनिमानिति व्रीडाकरत्वादश्लीलनिर्देशः । आदिपदेन निग्रहस्थाननिरूपणेऽभिहिताः पुनरुक्त्यादयो गृह्यन्ते । लक्षणवाक्य इति । साध्यस्य पक्षधर्मताबोधकं वाक्यं प्रतिज्ञेति प्रतिज्ञालक्षणवाक्य इत्यर्थः । अनध्यवसितोऽसाधारणः अप्रयोजकः सोपाधिकतया व्याप्यत्वासिद्धः । विरुद्धाव्यभिचारी तु साध्यतदभावयोर्व्याप्यत्वेनाभिमतः प्रमेयत्वादिरेको हेतुर्महाविद्यायां प्रसिद्धः । प्रकरणसमस्तु सत्प्रतिपक्षः स्वरूपासिद्ध इति हेतोः स्वरूपाज्ञाने स्वरूपासिद्धः । पक्षसम्बन्धाज्ञाने सम्बन्धासिद्धः । पक्षैकदेशे सम्बन्धाज्ञाने भागासिद्धः । हेतुतावच्छेदकाज्ञाने विशेषणासि-

पक्षधर्मपदेन व्यावर्त्यत्वात् सर्वे प्रतिज्ञाभासा इत्यादि चोक्त्वा अथ हेतवोऽसिद्धानध्यवसितविरुद्धविशेषणविरुद्धानैकान्तिकाप्रयोजकविरुद्धबाध्याव्यभिचारिप्रकरणसमसिद्धसाधना इति दशधा । तत्रासिद्धो ऽप्रमितपक्षधर्मभावः । स स्वतो नवधेति विभज्य स्वरूपासिद्धसम्बन्धासिद्धभागासिद्धविशेषणासिद्धविशेष्यासिद्धोभयासिद्धाश्रयासिद्धाश्रयैकदेशासिद्धव्यधिकरणासिद्धोदाहरणान्युक्त्वा तेषामेवाज्ञानसंदेहविपर्ययैः सप्तविंशतित्वं पुनरन्यतरासिद्ध्युभयासिद्धिभेदेन चतुःपञ्चाशत्त्वमभिधाय एवं सिद्धसाधनपर्यन्तानामपि लक्षणोदाहरणान्यभिधाय हेतूक्तिदूषणं च धूमादित्याद्युक्त्वा उदाहरणदूषणानि साध्यविकलसाधनविकलोभयविकलाश्रयहीनानुपदर्शितव्याप्तिविपरीतोपदर्शितव्याप्तिसाध्याव्यावृत्तसाधनाव्यावृत्तरूपाण्युदाहृत्य सर्वेषु चैतेषु विभागेषु मिथः संभवदन्तर्भावानामपि पृथगुदाहरणप्रयोजनानि तत्रैव भाषितानि । सत्यम् तथापि वा-

---

द्ध इत्यज्ञाननिबन्धनासिद्धाः । एवं संदेहविपर्ययाभ्यामष्टादशत्वे सप्तविंशतित्वं भवतीति भावः । पुनरिति । वादिप्रतिवादिनोरन्यतरमात्रासिद्ध्या तदुभयासिद्ध्या च भेदे चतुष्पञ्चाशत्त्वमित्यर्थः । हेतूक्तिदूषणं चेति । धूमवत्त्वादिति वक्तव्ये धूमादित्युक्तौ हेतुर्दुष्टः पक्षधर्मतायाः अप्रतिपादनादिति भावः । इदंचोदाहरणं त्र्यवयववादिमतेनानुसन्धेयम् । उदाहरणदूषणानीति । साध्यस्य प्रथमं निर्देशे विपरीतोपदर्शितव्याप्तिकमुदाहरणं भवति । योऽग्निमान् स धूमवानिति । साध्याव्यावृत्तत्वसाधनाव्यावृत्तत्वे व्यतिरेकव्याप्त्युदाहरणदूषणे । ननु स्वरूपासिद्धोभयासिद्धयोरुदाहरणभेदाभावात् विरुद्धाव्यभिचारिप्रकरणसमयोश्च तथैव भेदाभावात् पृथगुक्तिरनुपपन्नेत्यत आह । सर्वेषु चेति । सूक्ष्मविचारणायामनेकधा वैलक्षण्यसंभवेऽपि वस्तुस्वभावचिन्ता-

स्तत्त्वचिन्तायामन्तर्भावप्रक्रियैवानुसन्धेया । अत एव हि तत्राप्यन्ते निगमितम् ।

सर्वानुमानाभासानां तल्लक्ष्मावयवक्षतिः ।

व्याप्यत्वपक्षधर्मत्वहानिर्वा लघुलक्षणम् इति ।

अतो वस्तुतो द्वावेव हेत्वाभासौ तत्रापि विवक्षितौ तदवान्तरभेदतयैवान्ये सर्वे दर्शिताः । उक्तिदूषणानि तु न हेत्वाभासाः तथापि समीचीनहेतुप्रतिपादनार्थत्वादुक्तेस्तद्दूषणे सति न तथा हेतुः प्रतिपादितो भवेदिति एतावता हेतुदूषणत्ववचनम् । यद्वा निग्रहस्थानानां सर्वेषां प्रतिज्ञादिवाक्यदूषणात्मकत्वद्योतनायेति मन्तव्यम् । अश्लीलनिर्देशादीनां दोषत्वं तु नियमकथाविषयं योज्यम् । एतेन—

हेत्वाभासास्त उच्यन्ते त्वसिद्धाद्या नवैव ते इति ।

प्रज्ञापरित्राणादिग्रन्था निर्व्यूढाः । अथात्र पक्षदृष्टान्ताभासानां हेत्वाभासान्तर्भावप्रकारमुदाहरामः । तत्र विशेषणाप्रसिद्ध्यादौ हेतोराश्रयासिद्धत्वम् । सामान्यतः प्रसिद्धो हि साध्यधर्मः प्रसिद्धे धर्मिणि सिषाधयिषितो भवति निराम्लवनाविवादायो-

---

यामस्माभिरुक्तं द्वैविध्यं भट्टपराशरपादानामभिप्रेतमेवेत्यभिप्रेत्याह । सत्यमिति । सर्वानुमानाभासानामिति । सर्वेषामनुमानाभासानां तस्यानुमानस्य यल्लक्षणं पञ्चरूपोपपन्नहेतुशालित्वं तस्यावयवलक्षणक्षतिः । एकदेशविकलत्वं पक्षव्यापकत्वादिरूपपञ्चकान्यतमराहित्यमिति यावत् । व्याप्तिपक्षधर्मतान्यतरराहित्यं सङ्ग्राहकं लक्षणमित्यर्थः । उक्तिदूषणानि त्विति । अवाचकसंदिग्धविरुद्धनिर्देशरूपाणीत्यर्थः । सर्वेषां निग्रहस्थानानां प्रतिज्ञादिवाक्यदोषेष्वन्तर्भावान्न पार्थक्यमित्यभिप्रायेण वा उक्तिदोषाणां तत्र कथनमित्याह । यद्वेति । एतेनेति । तत्त्वरत्नाकरग्रन्थाभिप्रायवर्णनेनेत्यर्थः । विशेषणाप्रसिद्ध्यादाविति । साध्या-

गात् । तथाविधसाध्यधर्मविशिष्टश्च धर्मी पक्षः । स च तदप्रसिद्धौ न सः । पक्षश्च हेतोराश्रयः । एवं सिद्धसाधनेऽप्युक्तम् बाधितविशेषणत्वादौ कालात्ययापदेशः । साधर्म्यदृष्टान्ते साधनवर्जिते हेतुरसाधारणो ऽसाधारणो विरुद्धो वा । तत्राद्यो नित्यः शब्दः प्रत्यक्षत्वाद्यथा द्व्यणुकमिति । तत्रैव शब्दत्वाद्यथा घट इति द्वितीयः । श्रावणत्वात् यथा घट इति तृतीयः । साध्यवर्जिते तु तस्मिन् विरुद्धः साधारणो वा । अत्रानित्यः शब्दः श्रावणत्वात् शब्दत्ववदिति प्रथमः । तत्रैव वस्तुत्वादिति द्वितीयः । उभयवर्जिते निराश्रये च व्याप्यत्वासिद्धः । पूर्वे च दोषा यथासम्भवं भाव्याः । यथा अनित्यः शब्दः कृतकत्वाद्यथात्मेति यथा वा शशविषाणमिति । सत्यपि हि व्याप्तिरत्र न

---

प्रसिद्ध्यादावित्यर्थः । आदिपदेन पक्षाप्रसिद्धिः । पक्षसाध्यसंसर्गाप्रसिद्धिश्च गृह्यते । बाधितविशेषणत्वादाविति । आदिपदेन विशेष्यतत्संसर्गबाधौ गृह्येते । पक्षाभासानामन्तर्भावमुक्त्वा दृष्टान्ताभासानां हेत्वाभासान्तर्भावप्रकारमाह । साधर्म्यदृष्टान्त इत्यादिना । साधारणोऽसाधारणो विरुद्धो वेति वृत्तिमतो हेतोरुदाहृतेः । साध्यवत्यवृत्तौ साध्याभाववति वृत्तिः स्यात् तत्र साध्याभावसामानाधिकरण्यमात्रे व्यभिचारिता साध्याभावव्याप्तौ विरुद्धता संदिग्धसाध्याभाववन्मात्रवृत्तावसाधारण्यमिति विवेकः । विरुद्धः साधारणो वेति । दृष्टान्तस्य साध्यविवर्जितत्वे साधनस्य साध्याभाववति वृत्तिः सिद्धा । तत्र हेतोः साध्याभाववन्मात्रवृत्तौ विरुद्धता तत्सामानाधिकरण्यमात्रे साधारणता वा स्यादित्यर्थः । उभयवर्जित इति निराश्रय इति साधर्म्यदृष्टान्त इत्यनुषज्यते । तत्र दृष्टान्तपदेन उदाहरणावयवाभिधानान्नान्वय इति बोध्यम् । पूर्वे दोषाः । साधारणादयः उभयवर्जितमुदाहरति । शशविषाणमिति । नन्वस्य सदनुमानत्वात् कथं व्याप्यत्वासिद्धतेत्यत आह । सत्यपीति । तथा च सत्यामपि व्याप्तौ तस्या अनुपदर्शनेन तदग्रहाद्व्याप्यत्वासिद्धत्वमिति भावः । सा-

प्रदर्शिता। वैधर्म्यदृष्टान्ते तु साधनाव्यावृत्ते हेतोः साधारणत्वं विरुद्धत्वं वा । यथा शब्दः प्रध्वंसप्रतियोगी प्रत्यक्षत्वाद्यन्नैवं तन्नैवं यथा आत्मेति साधारणत्वम् । तत्रैव साध्ये श्रावणत्वादिति हेतौ यदुक्तसाध्यं न भवति तत् श्रावणमपि न भवति यथा शब्दत्वमिति विरुद्धत्वम् । साध्याव्यावृत्ते तु व्याप्यत्वासिद्धादयः गर्भस्थो मैत्रीतनयः श्यामः मैत्रीतनयत्वात् यः श्यामो न भवति स मैत्रीतनयो न भवति यथा सत्यवतीतनय इति व्याप्यत्वासिद्धः । एवमन्येऽपि । यद्यपि सपक्षैकदेशवर्तिनि सम्यग्घेतौ हेतुरहितः सपक्ष एव विपक्षविवक्षया केनचिदुदाह्रियते तथापि तत्र व्यतिरेकव्याप्तेरनुपदर्शितत्वान्न तत्र व्याप्यत्वं सिद्ध्यति । एवं सर्वत्र समीचीनेऽपि हेतौ साधर्म्यदृष्टान्तेषु साधनविकलसाध्यविकलोभयविकलाश्रयविकलेषु साध्याव्यावृत्तसाधनाव्यावृत्तोभयाव्यावृत्ताश्रयहीनेषु च वैधर्म्यदृष्टान्तेषु पुरुषापराधाद्व्याप्त्यनुपदर्शने सत्यपि व्याप्तिरनुपकारिका । व्याप्तिप्रत्यायनार्थं हि असौ दृष्टान्तमुदाहरति न तु व्याप्तिसद्भावार्थं येन तद्दोषेऽप्यन्यतोऽस्ति व्या-

---

धर्म्यदृष्टान्ताभासानां हेत्वाभासान्तर्भावमुक्त्वा वैधर्म्यदृष्टान्ताभासानामाह । वैधर्म्येति । व्याप्यत्वासिद्ध्यादिरिति । आदिपदेन साधनवर्जितसाधर्म्यदृष्टान्तोक्ताः साधारणादयो गृह्यन्ते । सत्यवतीतनयेति । तस्य व्यासत्वेन कृष्णत्वात्साध्यव्यावृत्तो दृष्टान्त इति भावः । एवमन्येऽपीति । साधारणादयः स्वयं प्रयोगान्तरेणोदाहार्या इति भावः । ननु पर्वतो वह्निमान् धूमवत्त्वात् योऽनग्निः स निर्धूमः यथायोगोलकमिति वैधर्म्यदृष्टान्ताभासस्य हेत्वाभासता न सम्भवतीति शङ्कते । यद्यपीति । एवं साधर्म्यवैधर्म्यमुखेन प्रयुज्यमानानां सद्धेतूनां दृष्टान्ताभासवचने कथाभासतामतिदिशति । एवं सर्वत्रेति । वादी निगृह्येत इति ।

प्तिरिति चरितार्थता । नच परेण स्वयमेव व्याप्तिः प्रत्येतव्या तथा सत्युदाहरणाख्यावयवस्यैव परित्यागप्रसङ्गात् । यद्यपि च घटकः प्रतिवादी सम्यग्दृष्टान्तसिद्धां व्याप्तिं स्वयं प्रतिसन्धत्ते तथाप्यप्रतिसन्धानमभिनीय वादी निगृह्येत । स्वप्रतिसन्धानं प्रकाश्य वा दृष्टान्ताभासवचनाज्जडीक्रियेतेति । साध्यमात्रविकले साधर्म्यदृष्टान्ते साधनमात्राव्यावृत्ते च वैधर्म्यदृष्टान्ते हेतोर्न कथं चिदपि सम्यक्त्वसिद्धिः । हेतोर्विपक्षवृत्तित्वेन साधारणत्वाविरुद्धत्वयोरन्यतरावश्यम्भावात् । तत्रोभयाव्यावृत्तो यथा । क्षित्यादिकं सकर्तृकं कार्य्यत्वात् यत्सकर्तृकं न भवति तत् कार्यमपि न भवति यथा घट इति साधर्म्यदृष्टान्तवच्छशविशाणाद्युदाहरणेऽत्राप्याश्रयहीनत्वम् व्यतिरेकित्वे त्वाश्रयहानिर्न दोष इत्येके । यथाहुः ।

यस्मिन्ननित्यता नास्ति कार्यतापि न विद्यते ।
अस्मिन् यथा खपुष्पादाविति शक्यं हि भाषितुम् इति ।

अभ्युपगतोऽयमर्थो मुखभेदेनास्मदीयैरपि कैश्चिद्यथोक्तं प्रज्ञापरित्राणे ।

---

प्रतिवादिनेति शेषः । व्याप्यत्वासिद्ध्युद्भावनेनेति बोध्यम् । दृष्टान्ताभासवचनादिति । दृष्टान्ताभासतोद्भावनादित्यर्थः । केषुचिद्दृष्टान्ताभासेषु हेतोः सम्यक्त्वमेव नास्तीत्याह । साध्यमात्रेति । प्रासङ्गिकं परिसमाप्य प्रकृतमुभयाव्यावृत्तमुदाहरति । तत्रोभयाव्यावृत्तो यथेति । आश्रयहीनत्वमिति । ज्ञेयमिति शेषः । व्यतिरेकव्याप्त्युदाहरणे निराश्रयदृष्टान्तवचनं न दोषायेत्यभ्युपगच्छतां मतमाह । व्यतिरेकित्वे इति । यस्मिन्ननित्यतेति । यदनित्यं न भवति तत्कार्यमपि न भवतीति व्यतिरेकव्याप्त्युदाहरणे यथा गगनकुसुममिति प्रयोक्तुं शक्यमिति तदीयकारिकार्थः । मुखभेदेनेति । अभावरूपसाध्यसाधनोभयवत्स्वनुमानेषु सा

भवेदाश्रयहीनत्वं भावसाधन एव तत् ।
असत्तासाधने तादृगसदर्थोपवर्णनम् ।
न दोषायान्यथा सत्ता साधनस्याप्रसङ्गत इति ।

भाष्ये च गगनकुसुमाद्युदाहरणमेतत्पक्षानुसारेण ये पुनरसिद्धपक्षादयोऽपि केचित् भाष्यादिषु प्रयोगास्ते तु तत्तत्प्रतिवादिमतानुविधायिप्रसङ्गविशेषपराः । परिणमयितव्याः । नचैवं शुष्कवैतण्डिकोत्थानप्रसङ्गः । स्वसिद्धान्तगृहीतमनाकुलयद्भिः स्वव्याघातरहितैः परस्य स्वव्याघातादिप्रदर्शने प्रवृत्तिरिति । एवमष्टौ निश्चिता उदाहरणाभासाः प्रद-

धर्म्यदृष्टान्ततया असतो निदर्शनमस्मदीयैर्वरदनारायणभट्टारकाद्यैरनुमतमित्यर्थः । भवेदाश्रयहीनत्वमिति । पर्वतो वन्हिमान् धूमवत्त्वादित्यादि । भावसाधनकेष्वनुमानेषु दृष्टान्तस्याश्रयहीनत्वं न दूषणं भवेत् ह्रदो धूमाभाववान् वन्ह्यभाववत्त्वादित्यभावसाध्यसाधकानुमानेषु खपुष्पाद्यसद्दृष्टान्तप्रदर्शनं नाश्रयदोषमावहति । अन्यथा साध्याभावहेत्वभावरूपधूमवन्हिमत उदाहरणे व्याप्यत्वासिद्ध्यादिना भावसाधकानुमानस्याप्रवृत्तिप्रसङ्गादित्यर्थः । ननु प्रथमसूत्रे प्रतिप्रयोगाश्चेत्यारभ्य विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्माश्रयम् अज्ञानत्वाच्छुक्तिकाद्यज्ञानवत् ज्ञात्राश्रयं हि तदित्येवमादयोऽसिद्धपक्षकाः प्रतिपादिताः अतस्तद्भाष्यानुसारेण व्यतिरेकोदाहरणे आश्रयराहित्यवत्तयाश्रयासिद्धेरप्यदोषत्वमङ्गीकृतं स्यादित्यत आह । ये पुनरिति । प्रसङ्गविशेषपरा इति । यदि भावरूपमज्ञानमङ्गीक्रियते तस्याज्ञानत्वात् ज्ञानमात्ररूपब्रह्माश्रयत्वं न स्यादिति तर्करूपास्ते प्रयोगा व्याख्येयाः । अतो नाश्रयासिद्धिप्रसक्तिरिति भावः । न चैवं शुष्कवैतण्डिकोत्थानप्रसङ्ग इति । परमतमात्रसिद्धस्य भावरूपाज्ञानस्य परमतरीत्या दूषणे तदंशे भाष्यस्य वैतण्डिकव्यवहारत्वप्रसङ्ग इत्यर्थः । परिहरति । स्वसिद्धान्तेति । स्वव्याघात रहितैरिति । तर्कैरिति शेषः । प्रवृत्तिरिति । भाष्यकारस्येती

र्शिताः । अथान्ये संदेहद्वारेणाष्टौ प्रदर्श्यन्ते । विगीतः पुरुषः पुनर्भवानर्हः सुसमाहितावताररहस्यत्वात् यदुक्तसाधनं तदुक्तसाध्यमित्युक्तत्वाह । यथा सद्विद्यादिसमाधिनिष्पत्तिमान् पुरुष इति । अत्र विद्यान्तरसमाधिनिष्पत्त्या मोक्षनिश्चये तदनङ्गभूतावताररहस्यतत्त्वज्ञानसद्भावे साधकबाधकानवतारात् संदेह इति संदिग्धसाधनविकलता । संदिग्धसाध्यविकलो यथा । तत्रैव साध्ये विदितवेदान्तत्वादिति हेतौ यथा बृहस्पतिरिति । अत्र साधननिश्चयेऽपि वशिष्ठापान्तरतपःप्रभृतीनामिव पुनर्भवसंभवात् साध्यसंदेहः । संदिग्धोभयो यथा । तत्रैव यथोन्मत्तवेषः पुरुष इति । अत्र सकिमुन्मत्तः उत ब्रह्मविदेव सन्नुन्मत्तभावक इति संदेहे साध्यसाधने अपि संदिह्येते । तत्रैव यथाभविष्यन्मैत्रीतनय इति संदिग्धाश्रयहीनः । न ह्यवन्ध्यायुवत्यपि मैत्री पुनः प्रसूतिमतीत्यर्वाग्दृशां सुग्रहम् । संदिग्धसाधनाव्यावृत्तो यथा । यः पुनर्भवार्हः सोऽविदितवेदान्तः यथासौ देशान्तर-

---

शेषः । इतिहेतौ तथा च स्वाभ्युपगताविरोधिभिस्तर्कैः पराभ्युपगतविरोधप्रदर्शने प्रवर्तमानस्य भाष्यकारस्य न केवलवैतण्डिकत्वोत्थान प्रसक्तिः । वैतण्डिकस्य स्वपक्षस्थापनाहीनत्वादिति भावः । सुसमाहितावताररहस्यत्वादिति ।

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन इति ।

उक्तरामकृष्णाद्यवतारगतस्वसंकल्पाधीनत्वाप्राकृतत्वादिज्ञानवत्त्वादित्यर्थः । मोक्षनिश्चय इति । साध्यांशे निश्चय उक्तः । साधनांशे संदेहमुपपादयति । तदनङ्गभूतेति । अवताररहस्यज्ञानस्य सद्विद्यानङ्गतया सद्विद्यानिष्ठस्यावताररहस्यज्ञाननैयत्याभावादनङ्गस्यापि तस्यागमे बाधकाभावाच्च साधनांशे संदेह एवेति भावः । वशिष्ठापान्तरतपः प्रभृतीनामिति । निमिशापाद्वशिष्ठस्य देहत्यागे सत्यूर्वशीदर्शनादुद्भूतबीजप्रपातयोर्मित्रावरुणयोरेतसि-

गतः पुरुष इति । अत्र कामक्रोधादिदृढिमलिङ्गात् सहसैव मोक्षानर्हत्वनिश्चयेऽप्यौपनिषदसंव्यवहारात् प्रागविदितवेदान्ततत्त्वं संदिह्यते । संदिग्धसाध्याव्यावृत्तो यथा । विगीतः पुरुषो ब्रह्मविद्याधिरोहानर्हः अत्रैवर्णिकत्वात् यस्तदर्हः स त्रैवर्णिकः यथासौ काणाद इत्यत्र निदर्शितस्यारूढपतितत्वादिशङ्कायां भवति तदनर्हत्वसंदेहः । संदिग्धोभयाव्यावृत्तो यथा । तत्रैव यथासौ वैदेशिको मीमांसक इति । नह्यत्र तदर्हतां त्रैवर्णिकत्वं च वेदपठनादिमात्रेण विनिश्चिनुमः । दशपुरुषविख्यातत्वादिविरहेण दुष्टशूद्रादिष्वपि सम्भवद्भिर्लिङ्गैर्वर्णविशेषादिनिर्धारणायोगात् । व्यतिरेकेऽपि संदिग्धाश्रयहीनोदाहरणं प्राचीनमेव । अपि चात्र हेत्वसिद्ध्यादाविव कथकयोरन्यतरोभयभेदेन

---

पुनः संभवो विष्णुपुराणे नारायणाज्जातस्यापान्तरतपसो द्वैपायनत्वेन वशिष्ठवंशे पुनः सम्भवो नाराणीये षट्सप्ततितमेऽध्याये च द्रष्टव्यः । उन्मत्तभावक इति । जडभरतादिवदुन्मत्तभावाभिनायक इत्यर्थः । युवत्यपीति । युमिश्रणामिश्रणयोरिति धातोः शतरि उगितश्चेति ङीप् भर्तृसंयोगक्षमापीत्यर्थः । औपनिषदव्यवहारात्प्रागिति । उपनिषदर्थव्यवहारमन्तरेण परगतवेदान्तवेदनस्याशक्यनिश्चयत्वात्साधनसंदेह इति भावः । निदर्शितस्येति । अधीतन्यायशास्त्रस्यापि आरूढपतितत्वे सत्यामपि त्रैवर्णिकतायां वेदान्तानधिकारादिति भावः । ननु वैदिकस्य मीमांसकस्य वेदार्थविचाररूपमीमांसाव्यवहारेणैव व्याप्यव्यापकनिर्णयः संभवतीत्यत आह । दशपुरुषेति । दुष्टशूद्रादिष्वपीति । विद्यास्थानाधिकारनिषेधमुल्लङ्घ्य प्रच्छन्नवेषपरिग्रहादिनाधिगतमीमांसकेषु शूद्रेष्वित्यर्थः । प्राचीनमेवेति । भविष्यन्मैत्रीतनय एव दृष्टान्त इत्यर्थः । उदाहरणाभासानामिव दृष्टान्तवचनाभासानामपि व्याप्यत्वासिद्ध्यादिहेतुदोष एवान्तर्भाव इत्याह । अपि चेति । उक्तानां षोडशविधानामुदाहरणाभासानां

संदिग्धनिश्चितसाधनविकलत्वादिभेदाद्द्वात्रिंशद्भिदा भवन्ति। उदाहरणे लोकप्रसिद्धेऽप्युभाभ्यामपि संदेग्धव्यम् निश्चेतव्यमिति वा न राजशासनम् सामग्रीशक्तेरनियमादिति। व्याप्त्यनभिधानविपरीतव्याप्त्याभिधानादयो दृष्टान्तवचनदोषाः। यथा घट इति दृष्टान्तधर्मिमात्रोदाहरणं व्याप्त्यनभिधानम्। कृतकत्वादिहेतौ यदनित्यं तत् कृतकम् यथा घट इति विपरीतव्याप्त्यभिधानम्। तदनित्यं यथा घट इति व्याप्त्येकदेशाभिधानम्। घटवत् घट इवेत्यादीनामभिन्नार्थत्वात् व्याप्त्युपन्यासानन्तरमेतेष्वन्यतमाभिधाने न दोषः। नहि यथाशब्देनैव व्याप्तिरूपदर्शनीया नान्येनेति नियामकमस्ति। शब्दशक्तिश्च नातिदवीयसीति यथाविवक्षं न विरोधः। ननु व्याप्त्यनभिधाने तदेकदेशाभिधाने चावयवांशन्यूनत्वापाताद्विपरीतव्याप्त्यभिधाने चावयवैकदेशविपर्यासान्न्यूनत्वाप्राप्तकालत्वे उद्भाव्ये।

---

वादिप्रतिवाद्यन्यतरोभयभेदेन द्वैगुण्यं सम्भवतीत्याह। कथकयोरिति। वचनदोषानेवोदाहरति। यथेत्यादिना। व्याप्त्येकदेशाभिधानमिति। एषु व्याप्त्यनभिधानाविपरीताभिधानैकदेशाभिधानेषु व्याप्तेः सम्यगप्रतिपादनाद्व्याप्यत्वासिद्ध्याद्याक्रान्त एव हेतुरिति भावः। व्याप्त्युपन्यासानन्तरमिति। यत्कृतकं तदनित्यं घटवत् घट इवेत्याद्यभिधानेन वचनदोषः। अनभिधाय व्याप्तिं घटवद् घट इवेत्युदाहरणप्रयोगे न्यूनता भवेदिति भावः। ननु घटवद् घट इवेत्यादौ यथाशब्दप्रयोगाभावान् न्यूनता स्यादेवेत्यत आह। नहीति। नातिदवीयसीति। यथाशब्दस्य सदृशप्रकारार्थत्वेऽपि इववतोरपि सादृश्यार्थकत्वेन सादृश्यांशे यथाशब्देनैकार्थता न व्याहन्येतेति भावः। न्यूनत्वाप्राप्तकालत्वरूपनिग्रहस्थानत्वेन सिद्धानां दृष्टान्तवचनदोषाणां हेत्वाभासविश्रान्तिकथनक्लेशो व्यर्थ इत्याशङ्कते। नन्विति। सत्यपि दोषान्तरेण दोषान्तरसाङ्कार्यप्रदर्शनमु-

किमेषां हेत्वाभासविश्रान्तदृष्टान्तदोषत्ववचनेन। सत्यं व्याप्त्य-नुपदर्शनमुखेन हेतुदोषेऽप्येते विश्राम्यन्तीति ख्यापनायैत-दिति मन्तव्यम्। हेतुदोषपर्यवसायिनामप्येषां वैशद्याय स्वयं कथकाशक्तिख्यापनसामर्थ्याच्च विशेषत उद्भावनं कार्यम्। सा-मान्यत उद्भाविते वा कथमिति पृष्टेन विशेषो वक्तव्यः। हे-त्वाभासोऽयमिति सामान्यत उद्भावितेऽपि हि न दोषः। तत्र यदि विशेषानुयोगे प्रतिवक्तुं न शक्नुयात् हेत्वाभा-सतास्थापकाव्याप्त्यपक्षधर्मत्वयोरन्यतरनिर्वाहे वा न प्रगल्भे-त निरनुयोज्यानुयोगेन निगृह्येत। एवं पक्षदृष्टान्ताभासप्र-योगेऽपि प्रयोगाभासोऽयमिति वा पक्षाभासोऽयमिति वा दृष्टा-न्ताभासोऽयमिति वोद्भाविते सभ्यप्रतिवादिबुभुत्सानुसारे-ण तत्तद्विशेषाः प्रदर्शनीयाः। स्पष्टेषु तावतैव चेत् चरि-तार्थबुद्धयस्ते स्युः किं विशिष्याभिधानेन। अत्रापि यदि पक्षा-

---

चितमेवेत्यभिप्रायेण परिहरति। सत्यमिति। हेतुदोषपर्यवसायिना-मप्युदाहरणाभासानां दृष्टान्तवचनदोषाणां च विशेष्योद्भावनमेव न्याय्यं व्याप्यत्वासिद्ध्यादिसामान्योद्भावनेऽपि परकथन्तायां विशेष-स्यावस्यावश्यवक्तव्यत्वादित्याह। हेतुदोषपर्यवसायिनामिति। सत्यां विशेषोपपादनशक्तौ सामान्योद्भावनमपि न दोषायेत्याह। हेत्वा-भासोऽयमितीति। तत्र सामान्योद्भावनपक्षे विशेषकथनाशक्तौ कथि-तविशेषस्यानिर्वाहे चोद्भावयितुं निरनुयोज्यानुयोगः स्यादित्या-ह। तत्र यदीति। विशेषोद्भावनेऽपि तदवान्तरविशेषानुयोगे विशेषो वक्तव्यः। अनुक्तौ तु पूर्ववन्निग्रहः स्यादित्याह। एवमि-ति। चरितार्थबुद्धय इति। स्पष्टेषु विशेषानुयोगरहिताः साम्याः प्रतिवादिनश्चेदित्यर्थः। किं विशिष्याभिधानेनेति। स्पष्टेषु विशि-ष्याभिधानं न कर्तव्यमिति भावः। पूर्ववन्निग्रह इति। निरनुयो-ज्यानुयोग एवेत्यर्थः। शब्दो नित्यः कृतकत्वादिति प्रयोगे सि-

त्वाभासतामनुयुक्तो न निर्वहति तदा पूर्वनिग्रहः । अभावरूपदोषानुयोगे च भरः प्रतिवादिनः । भावरूपदोषानुयोगे तु तद्वक्तुरेवेति वृद्धाः । परस्परसम्मत्या लौकिकव्यवहारेष्विवात्रापि समर्थकथकयोर्न व्यवस्थितिरिति केचित् । एवं हेत्वाभासप्रसङ्गात् तदनुप्रविष्टपक्षाभासादीनां दिङ्मात्रं दर्शितम् । तदङ्गभूततर्काभासा अपि हेत्वाभासविशेषा एव । तर्कस्यानुमानराश्यपृथग्भावात् न्यायस्तर्कश्चोभयमनुमानमिति मीमांसकाः । व्याप्याङ्गीकारे व्यापकानिष्टप्रसञ्जनं हि तर्कः । व्याप्याद्व्यापकप्रमितिरेवानुमानमिति । ननु न तर्कोऽनुमानम् भाष्यकारैरेव पृथग्व्यवहृतत्वात् । यद्यपि जन्माद्यधिकरणे "तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयत्वान्न निर्विशेषवस्तुनि प्रमाण"मित्यनुमानेऽपि तर्कशब्दः प्रयुक्तस्तथापि "न विलक्षणत्वादि"त्यधिकरणे यतः सर्वेषां प्रमाणानां क्वचिद्विषये तर्कानुगृहीतानामेव स्वार्थनिश्चयहेतुत्वम् तर्को हि नामार्थस्वभावविषयेण वा सामग्रीविषयेण वा निरूपणेनार्थविशेषे प्रमाणं व्यवस्थापयत्

---

त्वभावात्मकासिद्धत्वरूपदोषोद्भावने प्रयोक्तुः कथंताकरणं निरनुयोज्यानुयोगं दोषमावहतीत्याह । अभावरूपदोषानुयोगे चेति । तत्रैव सव्यभिचारत्वरूपदोषोद्भावने परेण तद्विशेषानुयोगे तदुक्त्यशक्तस्योद्भावयितुरेव निरनुयोज्यानुयोगः स्यादित्याह । भावरूपदोषानुयोगे त्विति । भावरूपे च दोष उद्भाविते तद्विशेषानुयोगे वक्तव्यविशेष इति परस्परसंमत्या प्रवृत्तायां कथायां वृद्धोक्ता व्यवस्था नास्तीत्याह । परस्परसंमत्येति । वृत्तानुकीर्तनपूर्वकं तर्काभासानामपि हेत्वाभासान्तर्भावं दर्शयति । एवमिति । अनुमानमिति । तथा च व्यापकज्ञानत्वविशेषादनुमानैकराश्यमेव युक्तमिति भावः । तत्र तर्कस्यानुमानत्वेऽभियुक्तवचनविरोधमाशङ्कते । नन्विति । विशेषेणेति । आकाङ्क्षासन्निधियोग्यतादिनिर्धारणाय

तदितिकर्तव्यतारूपमूहापरपर्यायं ज्ञानम् । तदपेक्षा च सर्वेषां प्रमाणानां समाना । शास्त्रस्य तु विशेषेणाकाङ्क्षासन्निधियोग्यताधीनप्रमाणभावस्य सर्वत्रैव कर्तानुग्रहापेक्षा । उक्तं च मनुना यस्तर्केण इत्याद्यभिहितम् । तथा प्रथमसूत्रेऽपि "अनधिगतपदवाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादिसकलप्रमाणवृत्ततदितिकर्तव्यतारूपसमीचीनन्यायमार्गाणा"मित्याद्युक्तम् । एवं श्रीमति गीताभाष्येऽपि मत्तः स्मृतिर्ज्ञानमपोहनञ्चेत्यस्य व्याख्याने अपोहनं ज्ञाननिवृत्तिः अपोहनमूहनं वा ऊहनमूहः ऊहो नामेदं प्रमाणमित्थं प्रवर्तितुमर्हतीति प्रमाणप्रवृत्त्यर्हताविषयं सामग्र्यादिनिरूपणजन्यं प्रमाणानुग्राहकं ज्ञानं स चोहो मत्त एवेत्युक्तम् । किं च "तर्काप्रतिष्ठाना"दिति सूत्रम् । तर्को ऽप्रतिष्ठ इति स्मृतिश्च तर्कस्यानुमानादन्यत्वं सूचयतः । नह्यनुमानं प्रमाणभूतमप्रतिष्ठितं स्यात् । किं च एवंत्वादेवमिति ह्यनुमानस्वरूपम् एवं चेदेवं स्यादिति तर्कप्रकारः कथमनयोरैक्यम् । आहार्यलिङ्गजन्यत्वाच्चानुमानाभासवन्नास्यानुमानत्वमारोपितविषयत्वाच्च । न हि संधूमे निर्धूमत्वप्रसङ्ग इति धीरनारोपितविषया विपर्यये पर्यवसानाच्च । नह्यनुमानं स्ववेद्यविपर्यये पर्यवस्यति किंतु स्ववेद्य एव अन्यथानुमानप्रामाण्योच्छेदप्रसङ्गात् । उक्तं च प्रज्ञापरित्राणे ।

---

सर्वत्र तर्कापेक्षावश्यंभावादिति भावः । तदितिकर्तव्यतेति । न्यायात्मकस्य तर्कस्य प्रमाणाङ्गत्वेन प्रमाणपृथग्भावस्य दर्शितत्वादिति भावः । तर्कस्यानुमानत्वे वस्तुविरोधमप्याह । किं चैवमिति । अनन्यथेति । अनुमानस्यापि विपर्यये पर्यवसान इत्यर्थः । प्रमाणेति । प्रमाणानिष्टस्य साध्यविपर्ययस्योक्तौ परेण प्रतिपादने तस्य परस्थप्रतिलोमेन व्याप्तिबलादनिष्टापादनं तर्कः । स च नानुमानं किं-

प्रमाणानिष्टपक्षोक्तौ तस्य व्याप्तिबलात् प्रति ।
अनिष्टापादनं तर्को नानुमानं स्मृतिर्मता ॥
स्मृतिप्रमोष एवात्रानिष्टोपस्थापनं ह्यतः ।
तद्व्याप्तिबलतस्तादृगनिष्टापादनं स्मृतिः ॥
इत्यादिकमुक्त्वानन्तरमेवोक्तम् ।
एवं व्याप्रियमाणोऽसौ तर्को मानोपकारकः ।
प्रामाणिकोऽर्थो लिङ्गं स्यादनुमाने तु तद्बलात् ॥
व्याप्तिः प्रामाणिकः स्यादित्यनुमातर्कयोर्भिदा ।
प्रसङ्गद्वारतो याः स्युरनुमानप्रवृत्तयः ।
तर्कोक्तयस्तास्तदपि साक्षाल्लिङ्गादयोऽपरे इत्यादि ।

तस्मादनुमानादन्यदेव किंचिद्यथाभाष्यमूहापरपर्यायं ज्ञानं तर्क इति वदन्ति । यत्तु सर्वेषां प्रमाणानां तर्कानुग्रहापेक्षावचनं तत् प्रमाणस्य सतस्तर्कस्यानुग्राहकत्वमात्रेणोपपन्नम् । प्रमाणस्य प्रमाणेन कथमपेक्षेतिचेत् कथं वा प्रमाणेतरे

---

तु स्मृतिरेवेत्यर्थः । तर्हि तत्त्वोल्लेखः कुतो न दृश्यत इत्यत आह । स्मृतिप्रमोष एवेति । एवमिति । एवं प्रवृत्ततर्को मानोपकारकः मानाङ्गं तत्र च लिङ्गसाध्ये आरोपिते अनुमाने तु लिङ्गमनारोपितं तद्बलाल्लिङ्गबलात्प्राप्तोऽर्थः साध्यम । तदपि प्रामाणिकमेवेत्यनुमानतर्कयोरयमेव भेद इत्यर्थः । भेदान्तरमप्याह । प्रसङ्गद्वारत इति । या अनुमाने प्रवृत्तयः प्रसङ्गद्वारेण भवन्ति तास्तर्कोक्तयः । अपरेऽनुमानप्रकारास्तु साक्षाल्लिङ्गादयः अप्रसङ्गाद्वारकलिङ्गमूला इति तदपि ततोऽपि हेतोरनुमानतर्कयोर्भिदेति पूर्वेणान्वयः । तर्कस्यानुमानपृथग्भावपक्षमुपसंहरति । तस्मादिति । तर्कस्यामुमानैकराश्ये प्रदर्शितान् दोषान्क्रमेण प्रतिवक्ति । यत्वित्यादिना । प्रमाणस्य प्रमाणान्तरापेक्षा न दृष्टचरीति शङ्कते । प्रमाणस्येति । परमुखेनोत्तरं वाचयितुं पृच्छति । कथं वा प्र-

तर्केण। विपक्षे जिज्ञासाविच्छेदादिति चेत् तुल्यम्। तर्हि पूर्वेण किं प्रयोजनमिति चेत् किं वातिरिक्ततर्कवादिनः। पक्षस्थापनमिति चेत् तुल्यम्। नच तत्रापि तर्कान्तरापेक्षयानवस्था अप्रमाणत्वपक्षेऽपि व्याप्तेर्व्याप्त्यन्तरापेक्षाक्रमेणानवस्थानप्रसङ्गात्। न हि तर्कान्तर्गता व्याप्तिर्नास्तीति युक्तं वक्तुम्। तार्किकगोष्ठीषु शङ्काभावे च तदनपेक्षणात्। अपरे पुनस्तर्कः क्वचित्क्वचिदित्येव ह्युच्यते। उक्तं चोदयनेनापि।

व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मत इति।

---

माणेतर इति। प्रमाणमितरत् यस्मादिति बहुव्रीहिः। अतो न सर्वनामता प्रमाणव्यतिरिक्तस्य तर्कस्य विपक्षजिज्ञासाविच्छेदकतया प्रमाणोपकारकत्वं सम्भवतीति शङ्कते। विपक्षेति। परिहरति। तुल्यमिति। ननु तर्हि तर्करूपप्रमाणेनैव सिषाधयिषितसिद्धौ किं पूर्वप्रमाणेनेति शङ्कते तर्हीति। अतिरिक्ततर्कवादिन इति। पूर्वेणेत्यनुषङ्गः। तथा च तर्केणैव विपक्षजिज्ञासाविच्छेदसिद्धावनुमानमतिरिक्ततर्कवादिनोऽपि निष्प्रयोजनमिति भावः। नन्वनुमानस्य पक्षस्थापनं प्रयोजनं तर्कस्य तु विपक्षजिज्ञासाविच्छेद इति न पूर्ववैयर्थ्यमित्यभिप्रेत्य शङ्कते। पक्षस्थापनमिति चेदिति। ननु प्रमाणस्य प्रमाणान्तरापेक्षत्वे तर्कस्यापि प्रमाणत्वात्तर्कान्तरापेक्षायामनवस्थेति शङ्कते। नचेति। अप्रमाणत्वपक्षेऽपि तर्कमूलभूतव्याप्तिज्ञानेऽपि तर्कान्तरापेक्षायामनवस्था तुल्येति प्रतिवन्द्या समाधत्ते। अप्रमाणत्वपक्षेऽपीति। प्रतिवन्द्या अनुत्तरत्वमभिप्रेत्य वास्तवं परिहारमाह। तार्किकगोष्ठीष्विति। क्वचिदिति। यत्र प्रमाणविषयानिष्टशङ्काव्याघातौ व्यभिचारशङ्का वा तत्रैव नियमेन तर्कापेक्षा यत्र तु सामग्रीविरहाद्वा व्याघातेन वा शङ्कानिवृत्ता तत्र तु न तर्कापेक्षेति नानवस्थेति भावः। व्याघातावधिरिति। यत्र तु व्याघातेन शङ्कानिवृत्ता न तत्र तर्कापेक्षा अन्यत्र तु शङ्कायां तर्कापेक्षेति नानवस्थेति भावः। तत्त्वरत्नाकरेऽपि सर्वप्रमाणानां तर्कापेक्षानैयत्यमाशङ्क्य सर्वत्र त-

तत्त्वरत्नाकरेऽपि । अपरे पुनः सकलप्रमाणानां तर्कानुग्राह्यतामाग्रहादुदाहरन्तीत्याद्युक्त्वा तदा तर्कापेक्षाध्यवसाय-विरुद्धमित्यादिना प्रत्युक्तम् । पश्चाच्चोक्तम् ।

नैनं तर्कमपेक्षन्ते सर्वाः प्रमितयो यतः ।
विरोधाबोधयोर्जातं संशयं स चिकित्सत इति ।

यच्च तर्को हि नामेत्यादि तदप्यनुमानविशेषस्यैव तर्कस्य प्रमाणान्तरपरिकरत्वेनावस्थितस्य व्यापारसंज्ञाविशेषादिकथनमात्रम् । नहि तत्रानुमानान्यत्वमुक्तम् । एवमनधिगतेत्यादावपि । एतेन यस्तर्केणेति मनुवचनमपि निर्व्यूढम् । यच्चोक्तं श्रीविष्णुचित्तैर्भाष्यकारैस्तु प्रत्यक्षानुमानागमेभ्यस्तर्कोपबृंहितेभ्य आत्मनः स्वयंप्रकाशत्वं समर्थितमिति तथा तैरेव संगतिमालायामुक्तं "रचनानुपपत्ते"रिति सूत्रे नात्रेश्वरानुमानमुच्यत इति शङ्कनीयम् । प्रतितर्कमात्रवचनात् व्याप्तिबलमालम्ब्यानिष्टप्रसङ्गस्तर्क इति

र्कापेक्षणमनुमानप्रामाण्यविरुद्धमिति परिहृतमित्याह । तत्त्वरत्नाकरेऽपीति । तर्कानुग्राह्यतामाग्रहादुदाहरन्तीति । आग्रहग्रस्तचित्तत्वात्सर्वत्र तर्कापेक्षायामनवस्थामपि न प्रेक्षितवन्त इति भावः । तर्कापेक्षाध्यवसायविरुद्धमिति । अनुमानप्रामाण्यमित्युत्तरग्रन्थान्वितम् । तथा चानुमानप्रामाण्यं सर्वत्र तर्कापेक्षाध्यवसायेन विरुद्धमिति भावः। नैनमिति। यतो विरोधाबोधयोः परस्परकोटिविरोधज्ञाने धर्मिविशेषादर्शने च सति जातं न चिकित्सतेन निवर्तयति अतो हेतोः सर्वाः प्रमितयो नैनं तर्कमपेक्षन्ते सत्येव संशये तन्निवर्तनार्थं तर्कापेक्षणादित्यर्थः । व्यापारसंज्ञाविशेषादिकथनमात्रमिति । प्रमाणस्यार्थविशेषं व्यवस्थापनं व्यापारः अर्थस्वभावः । सामग्रीविषयः ऊह इति संज्ञाविशेषः । आदिशब्देन प्रमाणानां तदपेक्षानेक्षते गृह्येते एतावदेव तेन भाष्येणोच्यते नत्वनुमानबहिर्भाव इत्यर्थः । एवनमधिगतेत्यादावपीति । अनुमानस्यैव सत प्रमाणेतिकर्तव्यताभावः । न्यायशब्दवाच्यता च तत्रापि भाष्ये-

तर्कस्यापि व्याप्त्यवश्यंभावादिति तदपि भाष्यवदेव योज्यम् । यत्त्वप्रतिष्ठितत्वसूत्रस्मृतिभ्यामनुमानान्यत्वं सूचितमिति तदपि न अतीन्द्रियार्थगोचराणां केवलतर्काणामेवाप्रतिष्ठितत्वाभिधानस्य भाष्यकारैरेव बहुशोऽभिधानात् । उक्तं तत्रैवोपसंहारे। "अतोऽतीन्द्रियार्थे शास्त्रमेव प्रमाणम् । तदुपबृंहणायैव तर्क उपादेय" इति । प्रत्यक्षादिविरोधे चाप्रतिष्ठा साक्षादनुमानेऽपि समाना अन्यथा तर्कमात्रस्याप्रतिष्ठितत्वे मीमांसैव हिंसिता स्यात् । नच तद्युक्तम् । "यश्च मीमांसतेऽध्वरम् वेदशास्त्राविरोधिना यस्तर्केणानुसन्धत्ते" इत्यादिविरोधात् । किञ्च

तर्काप्रतिष्ठा तर्कोऽयं प्रतितिष्ठति वा न वा ।
तर्कप्रतिष्ठा द्वेधाऽपि तत्तदन्यव्यवस्थितेः ॥
अप्रतिष्ठितस्य तर्कस्यानुग्राहकत्वमपि मृग्यमिति ।

प्रतिपादितेत्यर्थः । निर्व्यूढमिति । मनुवचनस्यापि प्रमाणस्य सतस्तर्कस्य मानाङ्गतायामेवाभियोगः नतु मानबहिर्भावेऽपीति भावः । भाष्यवदेव योज्यमिति । रचनानुपपत्तेरित्यत्र ईश्वरेऽनुमानमेव स्वतन्त्रप्रमाणतया नोच्यते किं त्वीश्वरप्रमाणभूतायाः श्रुतेरनुमानमुपोद्बलकतयोच्यते इति सङ्गतिमालाग्रन्थोऽपि योज्य इति । एतादृशाप्रतिष्ठितत्वमनुमाने सममित्याह । प्रत्यक्षादिविरोधे चेति । अन्यथाशब्दमेव व्याचष्टे । तर्कमात्रस्याप्रतिष्ठितत्व इति । तर्काप्रतिष्ठा तर्कोऽयमिति । तर्को यदि प्रमाणं स्यात् प्रतिष्ठितः स्यादित्ययं तर्कः प्रतिष्ठितो न वा आद्ये सिद्धं तर्कस्य प्रामाण्यं यस्य कस्यापि तर्कस्य प्रामाण्यसिद्धेः । अन्त्ये तर्काप्रामाण्यग्राहकस्य तर्कस्याप्रतिष्ठितत्वादेव तर्कप्रामाण्यं प्रतिष्ठितमित्युभयथापि तर्कः प्रतिष्ठतीति तर्कस्य वा तद्विषयभूततर्काणां वा प्रतिष्ठासिद्धेर्न तर्काप्रतिष्ठेत्यर्थः । तर्कमात्रस्याप्रतिष्ठितत्वे प्रमाणानां तर्कानुग्राह्यतैवोच्छिन्ना स्यादित्याह । अप्रतिष्ठिततर्कस्येति । एवमृषिप्रोक्तवचनविरोधं परिहृत्य स्वरूपविरोधमपि परिहर्तुमनु-

यत्तु एवं स्यादेवम् एवं चेदेवं स्यादित्यनयोः कथमैक्यमिति। तत्र ब्रूमः।

व्यतिरेकात्मिका व्याप्तिर्विपक्षे दण्ड्यतां गता।
पक्षोपश्लेषणवशात् स्याच्चेदित्यवतिष्ठते ॥
पक्षधर्मत्वगर्भोक्तिः स्यादित्येवं प्रवर्तते।
नचैवमिति तेनैव हेतुमाहुर्विपर्ययम् ॥
साध्याभाववतामेष हेत्वभावो व्यवस्थितः।
नच सोऽयमिहास्तीति स्यात्कारेणाभिसंहितम् ॥
साध्यशून्यस्त्वया पक्षो विपक्षवदभीप्सितः।
नासौ तथेति चेत्कारस्साध्यधर्मान्वयाशयः ॥
अनुवादात्मना पक्षे साध्याभावो विभाति यत्।
प्रतिषेधोपपत्त्यर्थः परामर्शः स युज्यते ॥

---

वदति। यत्त्विति। व्यतिरेकव्याप्तिमतो हेतोः पक्षधर्मताबलायत्तसाध्यसिद्धिपरं हीदं वाक्यं तत्र व्यापकीभूतव्यतिरेकप्रतियोगिना हेत्वोः पक्षधर्मत्वं स्यात्कारेण व्यज्यते व्याप्यभूतव्यतिरेकप्रतियोगिनः साध्यस्य पक्षसम्बन्धिता चेत्कारेण व्यज्यते स्यात्कारेण व्यञ्जिता पक्षधर्मतैव विपर्ययपर्यवसानावयवेन स्पष्टीक्रियते विपक्षे बाधकतया च व्यतिरेकव्याप्तिरत्रोपादीयत इत्यनुमानाङ्गव्याप्ति पक्षधर्मतयोरेवानेन तर्कवाक्येन प्रतिपादनान्न वस्तुविरोध इति कारिकाचतुष्टयार्थः। ननु तर्ह्यस्तु पक्षे हेत्वभावापादनव्यतिरेकप्रतियोगिनो हेतोः पक्षधर्मताप्रतिपादनाय, साध्याभावानुवादस्तु तत्र व्यर्थः स्यादित्यत आह। अनुवादात्मनेति। अनुवादात्मना पक्षे साध्याभावो विभातीति यत्साध्याभावस्य परामर्शोऽनुवादः प्रतिषेधोपपत्त्यर्थः तस्य साध्याभावस्य प्रतिषेधः साध्यसिद्धिः तदुपपत्त्यर्थस्तदुपपादनप्रयोजनक इत्यर्थः। तथा च साध्याभावानुवादहेत्वभावादनयोः पक्षे साध्याभावहेत्वभावनिवृत्तितात्पर्यकत्वान्नैकांशेऽपि वैयर्थ्यमिति भावः। ननु तर्कस्य

एवं चेदेवमेव स्यादिति धीर्यदि विभ्रमः ।
व्याप्तिरेवात्र भग्ना स्यात्तदा कस्तर्क इष्यताम् ॥
नचैवमिति तर्कोऽयं पर्यवस्यन् विपर्यये ।
पर्यवस्यति तेनैव प्रसञ्जकविपर्यये ॥
प्रसङ्गान्तर्निमग्नोऽर्थ उन्मज्जति विपर्यये ।
एवकाराद्यभिप्रेताः स्वशब्दाभिहिता यथा ॥

अत आहार्याध्यारोपितहेतुविषयत्वेऽपि तर्कस्य याथात्म्यं

---

हेतुसाध्यवति पक्षे तदुभयाभावावगाहित्वाद्भ्रमत्वमेव युक्तमिति न प्रामाण्यमित्यत आह । एवञ्चेदिति । यद्ययं निर्वह्निः स्यात्तदा निर्धूमः स्यादितीदं वाक्यं पक्षे साध्यहेत्वभावौ न बोधयति चेत्स्याद्गर्भत्वेन तद्विपर्य्ययतात्पर्यकत्वात् । किं तु पक्षादन्यत्र व्यतिरेकव्याप्तिमेव दर्शयति । अत एव न चैवमिति । विपर्यय-पर्यवसानवाक्येन तत्तात्पर्यार्थ एव व्याख्यायते तथा तद्वाक्यजन्य-ज्ञानमेव यदि भ्रमः स्यात्तदा व्यतिरेकव्याप्तेरभावात्तर्क एवोच्छिन्नः स्यादिति कारिकाद्वयार्थः। पर्यवस्यन् विपर्यय इति। हेत्वभावविपर्यये पर्यवस्यन्नित्यर्थः । तेनैवेति । हेत्वभावविपर्यये पर्य्यवसानेनै-वेत्यर्थः । प्रसञ्जकविपर्यये । साध्याभावविपर्यय इत्यर्थः । ननु स्या-च्छत्कारेणैव यदि साध्याभावहेत्वभावावभिसंहितौ तदा नचैवमिति विपर्य्ययपर्यवसानवाक्येन व्याख्यानं व्यर्थमित्यत आह । प्रसङ्गान्त-रिति । यद्येवं तर्ह्येवं स्यादिति प्रसङ्गवाक्ये व्यञ्जनाविषयत्वेन निमग्नः अस्पष्टः अर्थो विपर्यये पर्य्यवसानवाक्ये स्पष्टीभवति यथा घट एवेत्येवकारेणाभिप्रेता पटव्यावृत्तिर्न पट इति वाक्ये तथेति न व्याख्यानवैयर्थ्यमिति भावः। ननु तर्कस्य साध्याभावहेत्वभावनिषेध-पर्य्यवसायित्वेऽपि भूतले घटो नास्तीत्यत्रेव प्रतियोग्यंशे आहार्य्या-रोपरूपत्वाद्भ्रमत्वमवर्जनीयमित्याशङ्क्य निषेध्यारोपांशे भ्रमत्वेऽपि उद्देश्यनिषेधांशे प्रामाण्यमस्त्येवेत्युपसंहारव्याजेन परिहरति । अत इति । अत एवेति । व्याप्तिज्ञानाधीनव्यापकज्ञानत्वादेवेत्यर्थः। एतच्चोप-लक्षणम् तत्तानुल्लेखादपि न स्मृत्यन्तर्भाव इति बोध्यम् । अत एव

नापैति । यद्युपश्लषण स्यात्कारण च प्रवृत्तः । तयोश्च तद्विपर्ययाध्यवसायगर्भत्वात् । अत एव च न स्मृत्यादावपि तर्कधियोऽन्तर्भावः । स्मृतिप्रमोषविशेष एवायमीदृश इति चेन्न तत्रापि चेत्स्यात् प्रयोगयोरयोगात् । नहि स्मृतावेव तयोः सम्भवः कुतस्तत्प्रमोषे प्रमुषितपूर्वानुभवविषयैकदेशा स्मृतिरेव हि स्मृतिप्रमोष इति वर्ण्यते । अपि च तर्कस्यायथार्थत्वे यदि सविषमिदमन्नं भक्षयिष्यसि परेष्यसि । "अन्धो भविष्यद्यन्मां नागमिष्य" इत्यादयो लौकिकवैदिकप्रसङ्गा मृषावादाः स्युः । ततश्चैतेभ्योऽनर्थेभ्यो विच्छेदोऽपि न स्यात् । नहि यदि धर्मञ्चरिष्यसि नरके पतिष्यसीत्ययथार्थोक्तौ कश्चिद्धर्मान्निवर्तते । एवं च दृष्टेऽपि, यदि भोक्ष्यसे क्षुच्छान्तिर्न भविष्यतीति । अपि च यद्युपश्लिष्टं प्रसञ्जकं व्याप्यं यदि कार्तान्तिकवदनिष्टं प्रसञ्जयेत् तदा स्यादप्ययाथार्थ्यम् । न तथात्र । यदि स्वरूपतो मिथ्याभूतप्रसञ्जनीयोल्लेखमात्रादयथार्थत्वम् तदा भ्रान्तिविषयज्ञानान्तरेऽपि स्यात् ।

---

प्रमुष्टतत्ताकस्मृतित्वं तर्कस्याशङ्कते । स्मृतिप्रमोषेति । तत्रापीति प्रमुष्टतत्ताकस्मृतावपीत्यर्थः । धर्मान्निवर्तत इति । तथा चायथार्थोक्तित्वाविशेषाद्विषभक्षणादेरपि न निवर्तत इति भावः । एवञ्चेति । भोजनान्नहि कश्चिन्निवर्तत इत्यर्थः । कार्तान्तिकवदिति । तर्कस्य दैवज्ञवाक्यवद्भाव्यनिष्टसूचकत्वेऽयाथार्थ्यं संभाव्येतापि न तथात्र किं तु प्रत्यक्षसिद्धविरोधमेव तर्को दर्शयतीति भावः । ननु यदि प्रतिषेध्यारोपांशे भ्रमत्वेन सर्वांशेऽपि तर्कस्य भ्रमत्वमुच्यते तदा भ्रान्तिगोचरज्ञानस्य मिथ्याभूतरजतविषयतया भ्रमत्वं स्यादित्याह । यदि स्वरूपत इति । ननु तर्कस्यानुमानान्तर्भावे सिद्धाश्रयाणां व्यवहितानिष्टापादकानां तर्काणामाश्रयासिद्धिः स्या·



नन्वीश्वरो दयालुश्चेत् सुखैकान्तं जगत् सृजेत् ।
अविद्या ब्रह्ममूला चेदनिवर्त्या प्रसज्ज्यते ॥
सर्वप्रपञ्चमिथ्यात्वं मिथ्या चेद्व्याहतं भवेत् ।
अनाश्रयस्यैवमादेरनुमानात्मता कथम् ॥
भ्रान्ताश्रयानुमन्तॄणां शून्याद्वैतादिवादिनाम् ।
नैतच्चोद्यं तदन्येषामेवं दोषः समुत्थितः ॥
अनुमानान्यतायामप्येष न स्यादनाश्रयः ।
बन्ध्यासुतो बुभुक्षुश्चेत् भुञ्जीतेति हि नोच्यते ॥
ततो यदाश्रयस्तर्कः साक्षाद्व्यवहितोऽपि वा ।
तस्यानुमानभावेऽपि नह्यसावपसर्पति ॥

नचैतदनादेशिकम् । आरम्भणाधिकरणे तर्केष्वेवानुमानश-

---

दिति शङ्कते । नन्वीश्वर इति । अत्र प्रथमतर्कस्यावैदिकोक्तिरूपत्वात्तदपेक्षया आश्रयासिद्धिर्बोध्या । अन्त्यानुमानद्वये तु अस्मन्मते नाश्रयासिद्धिः । एवमाश्रयासिद्ध्यापादनं शून्यवादिनामद्वैतवादिनां च न संभवति तैर्भ्रान्तिसिद्धस्य मिथ्याभूतस्यैवाश्रयत्वेनाभ्युपगमात् । तदन्येषां तु वादिनामाश्रयसिद्धता तर्कस्यानुमानबहिर्भावेऽप्यवर्जनीयेत्याह । भ्रान्ताश्रयानुमन्तॄणामिति । ननु तर्कस्यानुमानान्यत्वे आश्रयासिद्धिर्न दोषायेत्यत आह । अनुमानान्यतायामिति । तत इति । यदि वन्हिर्न स्यात्तर्हि धूमोऽपि न स्यादिति साक्षादनिष्टापादको वा अविद्याया ब्रह्ममूलनिवृत्त्यव्यवधानेनाविद्यानिवृत्तिरूपानिष्टापादनात्मकव्यवहिततर्को वा यमाश्रित्य प्रवर्तते तस्य तर्कस्यानुमानत्वेऽपि स आश्रयो नापसर्पत्येवेत्यर्थः । तथा च स्वमतसिद्धस्य परमतसिद्धस्य वा यस्य तर्काप्रमाणत्वपक्षे आश्रयत्वं तस्य तत्प्रमाणत्वपक्षेऽपीति भावः । ननु पूर्वैरनुपदिष्टत्वान्न तर्कस्यानुमानैकराश्यं युक्तमिति शङ्कते । नचैतदनादेशिकमिति । तद्भाष्यमेवोदाहरति । तानि चेति । नच ते न तर्का इति । किंच निर्विशेषचिन्मात्रातिरेकि सर्वं मिथ्येति

ब्दस्य भाष्यकारैः प्रयोगात् । "तानि चानन्तरोक्तैरविद्याकार्यत्वादिभिरनुमानैर्निरस्तानी"ति । न च ते न तर्का इति शक्यं वक्तुम् । यथाश्रुतप्रकारेण स्वरूपासिद्ध्यादिप्रसङ्गात् । तत्त्वरत्नाकरेऽप्येषां प्रसङ्गद्वारेण वा प्रयोग इत्यादिना हेतुत्रयस्यापि प्रसङ्गरूपेण प्रयोग उदाहृतः । अर्थापत्त्यन्तर्भाव-दशायामप्युक्तम् । तन्निरवकाशमानाल्लिङ्गादिह सावकाशस्यात्मा-विरुद्धविषयस्थापनविषयार्थानुमानमर्थापत्तिः । इयमेवागमवि-

---

वदतो मोक्षार्थश्रवणादिप्रयत्नो निष्फलः अविद्याकार्यत्वात् शुक्तिकारजतादिषु रजताद्युपादानादिप्रयत्नवत् । मोक्षार्थप्रयत्नो व्यर्थः कल्पिताचार्यायत्तज्ञानकार्यत्वात् शुकप्रह्लादवामदेवादिप्रयत्नवत् तत्त्वमस्यादिवाक्यजन्यं ज्ञानं न बन्धनिवर्तकम् अविद्याकल्पितवाक्यजन्यत्वात् स्वयमविद्यात्मकत्वात् अविद्याकल्पितज्ञात्राश्रयत्वात् कल्पिताचार्यायत्तश्रवणजन्यत्वाद्वा स्वाप्नबन्धनिवर्तकवाक्यजन्यज्ञानवत् किंच निर्विशेषचिन्मात्रं ब्रह्म मिथ्या अविद्याकार्यज्ञानगम्यत्वात् अविद्याकल्पितज्ञात्राश्रयज्ञानगम्यत्वादित्यादिप्रयोगाणामनुमानप्रयोगत्वेन तर्कप्रयोगत्वाभावात्तेष्वनुमानशब्दप्रयोगो भाष्यकारस्य युक्त एवेति शङ्कार्थः। स्वरूपासिद्ध्यादिप्रसङ्गादिति। आदिपदेन बाधपरिग्रहः। अप्रामाणिकानामविद्याकार्यत्वादिहेतूनां विपर्ययपर्यवसानतात्पर्यकतायां तर्कत्वस्यैव न्याय्यत्वादिति भावः। हेतुत्रयस्यापीति। अन्वयव्यतिरेकिकेवलान्वयिकेवलव्यतिरेकिणामित्यर्थः। प्रसङ्गरूपेणेति। अनुमानस्य प्रसङ्गरूपेण प्रवृत्त्युक्त्या तर्कात्मकतोक्ता भवतीति भावः। निरवकाशमानादिति । शतवर्षजीवी देवदत्तो न गृहे वर्तते इति प्रत्यक्षेण देवदत्ताभावावगमेऽपि निरवकाशप्रमाणरूपेण शतवर्षजीवित्वलिङ्गेन गृहमात्रासत्त्वविषयतया सावकाशस्य प्रत्यक्षस्य ध्वंसव्यतिरिक्ताभावविषयत्वं स्वाविरुद्धमनुमीयत इत्यर्थापत्तिरप्यनुमानमेव न प्रमाणान्तरम् । इदमेव विषयव्यवस्थापकमनुमानं विषयव्यवस्थाकरणेनागमसहकारि चेत् पदाहवनीयहोमादौ सामान्यविशेषन्यायशब्दवाच्यो भवतीति उक्तानुमान एव त-

षयव्यवस्थितौ शेषभूता चेत्सामान्यविशेषाख्यो न्यायो निर्दिश्यत इति। आकाङ्क्षादिनिरूपणे चाभिहितम्। पीनो देवदत्तो दिवा न भुङ्क्ते इत्येतदपि रात्रिभोजनपर्यन्ततात्पर्यश्चेदध्याहारस्योदाहरणं दिवातनाशननिषेधमात्रपरं चेच्छ्रुतार्थापत्तेः। यस्य हि प्रमाणस्य यावत्प्रमेयं व्यवस्थापितं तत्तावत्यप्रमिते न स्वातन्त्र्येण पर्यवस्यति। तदा तत्पर्यवसानार्थतया अनुपपत्तिलिङ्गादिकं व्याप्रियमाणं तर्कलक्षणापन्नं तच्छेषतयावतिष्ठते। परोद्देशप्रवृत्तव्यापारव्याप्यत्वात्। प्रमित्सितपर्यवसाने तत्प्रमेयस्वभावपर्यालोचनया स्वातन्त्र्येण व्याप्रियमाणं तर्कप्रमाणपदं समधिरोहतीति। मनोनिरूपणे चोक्तं यद्यप्येवं न तर्कः स्वातन्त्र्येण स्वार्थसमर्थनसमर्थस्तथाप्यागमानुग्रहेण प्रभवति। सन्ति चागमा इत्यादि। नन्वप्रमाणत्वं तर्कस्य तत्रैव प्रपाञ्चितम्। तथा हि न्यायपादे।

---

र्कापरपर्यायन्यायशब्दप्रयोगात् तर्कस्यानुमानापृथग्भावः भट्टपराशरपादानामभिप्रेत एवेत्यर्थः। अभिहितमिति। तत्त्वरत्नाकर एवेत्यर्थः। तर्कप्रमाणपदं समधिरोहतीति। पीनो देवदत्तो रात्रौ भुङ्क्ते दिवा अभुञ्जानत्वे सति पीनत्वादित्यनुमानस्य प्रसङ्गरूपेण प्रयुज्यमानस्य पीनो देवदत्तो दिवा न भुङ्क्ते इति वाक्यस्य रात्रिभोजनतात्पर्यपर्यवसानाय श्रुत्यनुपपत्तिमुखेन तत्राध्याहारकल्पकतया अस्वतन्त्रप्रमाणत्वेन तर्कशब्दवाच्यता तस्य वाक्यस्य दिवातनानशनतात्पर्यकतायां तस्यैवानुमानस्यार्थापत्तिमुखेन स्वतन्त्रप्रमाणतया अनुमानशब्दवाच्यतेति भट्टपराशरपादैरेव तर्कस्यानुमानापृग्भावो व्यक्तमुक्त इत्यर्थः। तर्क इति। व्यासङ्गानुपपत्तिर्मनसो लिङ्गमिति सूत्रितमनुमानमित्यर्थः। स्वार्थसमर्थनसमर्थ इति। मनःसाधनक्षममित्यर्थः। ननु तर्कस्याप्रमाणतया अनुमानपृथग्भावस्तत्त्वरत्नाकर एव बहुधा प्रतिपादित इति तदुक्तिविरोधमाशङ्कते। नन्विति। यदुक्तमिति। परीक्षानिरूपणे

यदुक्तं न प्रमाणानां परीक्षा दोषवन्न तत् ।
अप्रमाणेन तर्केण परीक्षा वक्ष्यते यत इति ॥
साक्षात्तर्कप्रमाणे च
मानानुग्राहकं युक्त्या ज्ञानं तर्कोऽभिधीयते ।
युक्तिश्च सम्भवौचित्यतद्विपर्ययतो द्विधा ॥

मानानुग्राहकपदेन प्रमाणेभ्यो व्यावर्त्यत इत्याद्युपक्रम्य हेतुफलविषयव्यापारावान्तरभेदादीनतिप्रपञ्चेनोक्त्वा

केचिदाचक्षते तर्कः प्रमाणमिति मन्महे ।
संशयादिबहिर्भावात् प्रामाण्यस्य च सम्भवात् ॥

इत्यादिना तर्कप्रामाण्यपक्षं प्रपञ्चेनानूद्य प्रसङ्गरूपव्यतिरेक्यनुमानमेव तर्क इति च तन्मतमुपसंहृत्य

उच्यते न प्रमा तर्को वेषहेत्वोर्विशेषतः ।
हेत्वाभासोद्भवत्वाच्च सोऽयं निर्णायको न च । इत्यादिना

---

प्रमाणेन परीक्षा न क्रियत इति यदुक्तं तत्र न दोषः यतः प्रमाणभूतेन तर्केणैव परीक्षा करिष्यत इत्युक्त्या तर्कस्यानुमानभिन्नत्वमुक्तमिति भावः । साक्षात्तर्कप्रमाणे चेति । अभिहितमिति शेषः । मानानुग्रहेति । प्रमाणानुग्राहकेन प्रसङ्गेन यज्ज्ञानं तर्कः स च सम्भवौचित्यतद्विपर्ययतः सम्भावनारूपतया तद्विपर्ययेणावधारणरूपतया च द्विविध इत्यत्र मानानुग्रग्राहकपदेन तर्कस्य प्रमाणव्यावृत्तिरुक्तेत्यनेन तस्यानुमानबहिर्भाव उक्त इत्यर्थः। हेतुफलेति। तर्कानुमानयोर्हेतुकृतावान्तरभेदः फलकृतावान्तरभेदः। विषयकृतावान्तरभेदः व्यापारकृतावान्तरभेदः आदिपदेन स्वरूपभेदश्च प्रपञ्चित इत्यर्थः । केचिदिति। तर्कः प्रमाणं तस्य संशयविपर्ययाभिन्नत्वात् प्रामाण्यस्य सत्त्वाच्चेति। मन्महे इति। केचिदाचक्षत इत्यन्वयः। वेषहेत्वोर्विशेषत इति । प्रमाणापेक्षया तर्कस्य हेतोः स्वरूपस्य च विलक्षणत्वादित्यर्थः । परमतानुसारेण तर्कस्य प्रमाणबहिर्भावस्तत्र समर्थित इति सनिदर्शनमुपपादयति ।

सत्यम् तथापि भाष्यकारै"श्चार्वाकशाक्यौलूक्याक्षपादक्षपणककपिलपतञ्जलिमतानुसारिणो वेदबाह्या"इत्यादिषु बहुषु प्रदेशेषु बाह्यपक्षनिक्षिप्ताक्षपादोक्तषोडशपदार्थसूत्रानुवादपूर्वकं तत्क्रमेण प्रमाणादिपरीक्षायां न्यायपादमारचयतः परमतमनुरुध्यापि कचिद्व्यवहाराः सम्भवन्ति । अन्यथा स्वेनैवार्थापत्त्यन्तर्भावादिप्रकरणोक्तग्रन्थविरोधात् । यच्च तत्र युक्तिरूपमिव किंचिदुक्तं तदपि न तदुचितमिति तत्रापि न स सिद्धान्तः तथा ह्येवं भवितव्यमिति हि प्रमाणात् तर्कस्य वेषविशेष उक्तः । स त्वनिश्चयात्मकश्चेत् संशय एवान्तर्भावः । तत्रैव हि भ्रमसंशयादिलक्षणानन्तरश्चैवमुक्तम् संभवासम्भवपरामर्शस्तर्कः यथा बाह्वादिप्रदेशवत्त्वात् पुरुषेणानेन भवितव्यं न स्थाणुनेति । एषां संशयादीनां विमर्शानवधारणाद्येकप्रयोजनान्तर्भावसंभवेऽपि पृथगुपादानमवान्तरकारणवैषम्यात् । उपयोगभेदस्य च न्यायपादे दर्शयिष्यमाणत्वाच्चेति । नचानग्निश्चेन्निर्धूमः स्यादिति बुद्धेः संशयता । अ-

---

सत्यमिति । अन्यथेति । तस्य स्वमतत्व इत्यर्थः । किञ्च तर्कस्वरूपकथनग्रन्थपर्यालोचनयापि तस्य परमतत्वमेव न स्वसिद्धान्तत्वमित्याह । यच्चेति । तत्र हि संशयात्मकता तर्कस्योक्ता सा च न सिद्धान्त इति भावः । ननु तत्र तर्कस्यानवधारणात्मता नाभिप्रेतेत्याशङ्क्य तत्र तत्रत्योत्तरग्रन्थमेव प्रमाणयति । तत्रैव हीति । सम्भवासम्भवपरामर्श इति । यद्धर्मद्वयसहचरितानेकधर्मवद्धर्मिज्ञानं तत्कोटावुत्कटत्वमित्युक्त उत्कटैककोटिकः संशय एव तर्क इत्यर्थः । नन्वेतस्य तर्कस्यानवधारणात्मकत्वेन संशयान्तर्भावसम्भवे पृथगुपादनं व्यर्थमित्याशङ्क्याह । एषां संशयादीनामिति । संशयसम्भावनापरामर्शानामित्यर्थः । निर्णयत्वेनाभिमतस्य तर्कस्य संशयात्मकतोपपादनमसिद्धान्त एवेत्यभिप्रेत्य तस्य संशयात्मतां निराचष्टे । नचानग्निश्चेदिति ।

थायमसम्भावनानिरासः तथापि तेनाकारेण वैषम्यान्निर्णयरूपत्वादबाधाच्च प्रमाणमेव। यच्च न केवलं प्रसङ्गसाधनं साध्यधर्मिण्यसिद्धमपि त्वन्यगतमेव प्रसङ्गहेतुः। न त्वनुमानमन्यगताद्धर्मात् प्रवर्तते। ततस्तस्मात्स्फुटोऽस्य भेद इत्युक्तम्। तत्रासिद्धहेतुजन्यत्वे परिहारः पूर्वमेवोक्तः। एवं चेदेवं स्यादित्यस्य च। नचैवं तस्मान्न तथेत्यत्रैव तात्पर्याद्व्यतिरेकव्याप्तिक्रोडीकार एवातिरिक्तः। अन्यगतहेतुसमुत्थत्वं तु न कथं चिदपि स्यात्। न खल्वन्योऽनग्निश्चेदयं निर्धूमः स्यादिति युज्यते। नापि नचान्यो निर्धूमस्तस्मादयं नानग्निर्भवतीति। यच्चाप्रयोजकानैकान्तिकहेतुभिरपि तर्कस्य सम्भवरूपेण समुत्थानादनुमानान्यत्वमुक्तं तदपि हेत्वाभासजन्यज्ञान एवान्त-

---

न्न्वयमनाग्निश्चेदधूमः स्यादित्ययं तर्को न तत्र संशयत्वेनाभिप्रेतः किं तु विवक्षितकोट्यसम्भावनानिरासत्वेनातो न सिद्धान्तविरोध इत्याशङ्क्य तथात्वे तस्याबाधितनिर्णयरूपत्वे प्रमाणान्तर्भाव एवोचित इति पृथग्भावहेतुवैलक्षण्यं शक्योपपादनमित्याह। अथायमसम्भावानानिरास इत्यादिना। तत्रोक्तं हेतुकृतवैलक्षण्यमपि निराकर्तुमनुवदति। यच्चेति। न केवलं प्रसङ्गसाधनमिति। अनुमाने साध्यसाधनं तर्के तु साध्याभावेन साधनाभावप्रसङ्गसाधनमित्येतदेव वैलक्षण्यं न किं तु हेतुकृतमपि वैलक्षण्यमस्ति अनुमाने हेतुः पक्षगतः तर्के तु हेतुरन्यगतो यत इत्यर्थः। परिहारः पूर्वमेवोक्त इति। व्यतिरेकव्याप्तिमुखेन व्यापकव्यतिरेकस्य पक्षगतस्यैव हेतुत्वं चेत्कारेण प्रतिपाद्यत इति पूर्वमेवोक्त इत्यर्थः। व्यतिरेकव्याप्तिक्रोडीकार एवातिरिक्त इति। व्यतिरेकव्याप्तिपुरस्कार एवानुमानापेक्षया वैलक्षण्यमित्यर्थः। तथा च तन्न प्रामाण्यप्रयोजकमिति भावः। अन्यगतहेतुनानिष्टापादने तस्य विपर्यये पर्यवसानमपि न स्यादित्याह। नापीति। अप्रयोजकानैकान्तिकहेतुमूलतर्कस्यानुमानान्यत्वोपपादनं प्रमाण-

र्भावाय न तु पृथक् तर्काख्यज्ञानसिद्धये । नच तेऽपि हेतवः आभासा अपि संशयद्वारा विपर्ययद्वारा वोपकुर्वते तत्त्वनिश्चयस्य तदपेक्षानियमाभावात्। भावेऽपि सिषाधयिषितस्याविरोधप्रदर्शननिर्णयद्वारेणैवोपकारात् । एवमन्यदपि चिन्त्यम् । निर्णयात्मकत्वं च तर्कस्य श्रीविष्णुचित्तैरुक्तम् । तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषय इति ।

भवत्वेवं प्रमाणभूतोऽप्रमाणभूतो वा प्रमाणानुग्राहकस्तर्कः। स किमङ्गकः कतिविधः कियदवयवप्रयोगश्च। व्याप्त्यादिपञ्चाङ्गः संग्रहाद्द्विविधः पञ्चविधो वा प्रयोगोऽप्यनुवादप्रसङ्गाभ्यां द्व्यवयवः। विपर्ययपर्यवसानवाक्यं तु तृतीयोऽवयवः। स नावश्यं

---

भूतानुमानवैलक्षण्यमुखेन हेत्वाभासान्तर्भावाय नत्वनुमानसामान्यबहिर्भावायेत्यर्थः । नच तेषां हेत्वाभासत्वे निर्णयोपकारकत्वं न स्यादित्याशङ्क्येष्टापत्त्या परिहरति। नच तेऽपीति। तर्कमूलभूताप्रयोजकव्यभिचारिहेतव इत्यर्थः। तथा च सद्धेतुमूलतर्कैरेव निर्णयजनकैस्तत्त्वनिर्णयसिद्धौ संशयविपर्ययहेतूनामप्रयोजकत्वव्यभिचारिणामनपेक्षितत्वमिति भावः । नन्वप्रयोजकत्वव्यभिचारित्वास्फूर्तिदशायां तेषामपि साध्यनिर्णयत्वाद्विषयाबाधेन तज्जन्यज्ञानस्य प्रमाणत्वसम्भवाच्च तेऽपि तत्त्वनिर्णयोपकारिण एव स्युरित्याशङ्क्य तथात्वे तद्धेतुजन्यज्ञानात्मकतर्कस्य प्रमाणान्तर्भावः स्यादित्याह। भावेऽपीति । एवमन्यदपि चिन्त्यमिति फलतो व्यापारतो वैलक्षण्यमपि नानुमानबहिर्भावहेतुरिति स्वयमेवोहितुं शक्यमित्यर्थः । तर्कस्य निर्णयात्मकत्वं सिद्धान्त इत्येतदभियुक्तसंमत्या द्रढयति । निर्णयात्मकत्वं च तर्कस्य श्रीविष्णुचित्तैरुक्तमिति। वस्तुयाथात्म्यज्ञानाय तु तर्कस्यानुमानतया प्रामाण्यमुक्तं तर्कस्याप्रामाण्यतायामपि प्रमाणानुग्राहकत्वं नापैतीत्याह। भवत्वेवमिति। तर्कस्याङ्गावयवावान्तरभेदान्निरूपयितुं प्रश्नानुपक्षिपति।स किमङ्गक इति।अनिष्टताव्यक्त्यर्थमिति । न-

वक्तव्यः । मन्दस्य त्वानिष्टताऽव्यक्त्यर्थमुच्येतापि । प्रसञ्जकस्य प्रसञ्जनीयेन व्याप्तिः प्रतितर्केणाप्रतिघातः प्रसञ्जनीयविपर्यये पर्यवसानं प्रसञ्जितस्यानिष्टत्वं परपक्षासाधकत्वं चेति तदङ्गानि । यथा अनग्निश्चेन्निर्धूमः प्रसज्जेत् नचासौ निर्धूम इति । अग्न्यभावो हि धूमाभावेन व्याप्तः । यथाहुः—

धूमाभावेनाग्न्यभावे व्याप्ते नाग्निस्ततश्च्युतः ।
अधूम एव वर्ततेत्येवं व्याप्यत्वमश्नुत इति ।

नच साग्नित्वेऽप्यत्र कश्चिदनिष्टप्रसङ्गः येन ततः प्रतिहन्येत । नचायं निर्धूम इति विपर्यये पर्यवसानं धूमप्रत्यक्षबलसिद्धम् । अत एव धूमाभावप्रसञ्जनमनिष्टमेव नचासावनग्नित्वपक्षसाधक इति । प्रामाणिकपरित्यागोऽप्रामाणिकस्वीकार इति प्रसञ्जनीयद्वैविध्याद्द्विविधस्तर्कः । तत्र पूर्वो दर्शितः । अपरो यथा । यदीश्वर आतृणादाकरीषात् स्वरूपेणाभिन्नः तस्य विकारापुरुषार्थयोगित्वप्रसङ्ग

---

चैवमिति विपर्य्ययपर्यवसानेन आपाद्यस्य धूमाभावस्यानिष्टता स्फुटीक्रियत इत्यर्थः । धूमाभावेनेति । धूमाभावेनाग्न्यभावे व्याप्ते सति अग्नित्वं व्याप्तिलक्षणमङ्गं प्राप्नोतीत्यर्थः । धूमाभावेनाग्न्यभावो व्याप्त इति प्रथमान्तपाठेऽप्ययमेवार्थो द्रष्टव्यः । व्याप्तिरूपमङ्गमुक्त्वा प्रतिघातादिकमप्याह । नचेत्यादिना । अत एवेति । धूमस्य प्रत्यक्षसिद्धत्वादेवेत्यर्थः । पूर्वो दर्शित इति । प्रामाणिकधूमपरित्यागरूपप्रसञ्जनीयमद्भिन्नस्तर्को दर्शित इत्यर्थः । विकारापुरुषार्थयोगित्वप्रसङ्ग इति । ईश्वरस्य स्वरूपतः स्थावरजङ्गमात्मकप्रपञ्चाभिन्नत्वे विकारित्वदुःखित्वे स्यातामित्यर्थः । अत्राप्रामाणिकयोर्विकारित्वदुःखित्वयोःस्वतः पक्षाच्च्युतो न भवति । तर्हि पक्षो निर्धूम एव वर्ततेत्येवमापादनरूपस्तर्को व्याप्यत्वस्वीकारापादनादप्रामाणिकस्वीकाररूपप्रसञ्जनीयमद्भिन्नोऽपरस्तर्क उक्तः । पञ्च-

इति। आत्माश्रयान्योऽन्याश्रयचक्रकानवस्थाकेवलानिष्टप्रसङ्गभेदेन पञ्चविधः। तत्रात्माश्रयादयश्चत्वारः स्वविषये स्वरूपासिद्धिमावहन्ति। पञ्चमस्तु व्याप्यत्वासिद्ध्यादिकम्। अन्याधीनतयैव नियतस्य स्वाधीनत्वाभ्युपगमे विरोधप्रसङ्ग आत्माश्रयप्रसङ्गः। यथा स्वेनैव स्वयमुत्पाद्यत इत्यादौ। नियतपूर्वसिद्धि कारणं, नियतोत्तरं च कार्यं नचैकमेकापेक्षया पूर्वमपरं च स्यात्। अन्यथा भावाभावसौहार्देन सर्वस्य व्यवहारस्योन्मूलनप्रसङ्गात् इति। अन्याधीनत्वानियमरहितस्य स्वाधीनतया विरोधापादनमात्माश्रयाभासः। यथा स्वेनैव स्वयं पोष्यते ज्ञायते चेत्यादौ। नह्यत्र कर्मकर्तृविरोधः स्वरूपतः सिद्धे-

---

विधत्वमुपपादयति। आत्माश्रयेति। स्वरूपासिद्धिमावहन्तीति। कार्यं स्वेनैवोत्पद्यते कार्यत्वात् इत्यनुमाने प्रतिकूलतया प्रवर्तमानस्य स्वेनैव स्वोत्पत्तावात्माश्रयप्रसङ्ग इत्यादेः स्वरूपासिद्ध्यापादकत्वादिति भावः। व्याप्यत्वासिद्ध्यादिकमिति। पर्वतो वन्ह्यभाववान् पर्वतत्वादित्यत्र प्रतिकूलतया प्रवर्तमानः यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादित्येवं रूपानिष्टप्रसङ्गः पर्वते वन्ह्यभावसाधकहेतोर्व्याप्यत्वासिद्धिव्यभिचारबाधान् संपादयति न स्वरूपासिद्धिमिति भावः। अन्याधीनतयैव नियतस्येति। अन्याधीनताव्याप्तसिद्धिकस्येत्यर्थः। इदं च विशेषणं वक्ष्यमाणात्माश्रयाभासातिव्याप्तिवारणाय। स्वयमुत्पद्यत इत्यादाविति। स्वस्मिन्नेव स्वयं वर्तते इत्येतदादिपदग्राह्यम्। अन्यथेति। एकस्यैव पूर्वापरभावयोरङ्गीकार इत्यर्थः। भावाभावसौहार्देनेति। प्रागभावप्रतियोगिनोरेककालवृत्तिप्रसङ्गेनेत्यर्थः। अत्रेष्टापत्तिं निवारयति। सर्वव्यवस्थोन्मूलनप्रसङ्गादिति। अन्याधीनतयैव नियतस्यैतत्परव्यावर्त्यमात्माश्रयाभासं दर्शयति। अन्याधीनत्वानियमरहितस्येति। नन्वेकस्यां पोषणक्रियायां ज्ञानक्रियायां वा एकस्यैव कर्मत्वकर्तृत्वे न सम्भवत इत्यत आह। नहीति। तत्र प्रथमं पोषणे अविरोधं दर्शयति। स्वरूपत इति। ज्ञाना-

नातथाभूतेन स्वेनैव स्वस्यैव तथाभावापादनस्य सर्वप्रत्यक्षसिद्धत्वात् । ज्ञानादिषु चैकस्यैवाश्रयत्वविषयत्वयोः सहोपलम्भात् स्वातिशयापादनानभ्युपगमे स्वज्ञानाभावाभ्युपगमे च दृष्टादृष्टार्थसर्वचेतनप्रवृत्त्यपह्नवप्रसङ्गेन स्ववचनादिविरोधादिति । स्वकार्येण स्वोत्पत्त्यभ्युपगमे विरोधप्रसङ्गोऽन्योऽन्याश्रयप्रसङ्गः । यथा देवदत्तः पिता यज्ञदत्तस्य तस्मिन्नेव च जन्मनि स एव तस्येति । नहि स्वकारणात् पूर्वं स्वस्य सत्ता समस्ति । पूर्ववत् स्वप्रागभावसमानकालत्वप्रसङ्गात् । नह्यसति प्रागभावे कारणेन किञ्चित्कार्यम् । नचासता कार्येण कारणस्योत्पादनं युक्तम् । तथा सति किं कस्य कारणं कार्यं वा न स्यात् । एवं कारणेऽपि कार्यसमनन्तरभाविनि भवनस्य प्रागभावाव्यवधानात् स्वकार्यस्य

---

दौ तदविरोधमाह । ज्ञानादिषु चेति । आदिपदेनेच्छाद्वेषादिपरिग्रहः । दृष्टादृष्टार्थेति । सर्वेषां चेतनानां स्वातिशयार्थमेव लौकिकालौकिककार्येषु प्रवृत्तिदर्शनादिति भावः । स्ववचनादिविरोधमुपपादयति । नहि स्वकारणादिति । पूर्ववदिति । आत्माश्रय इवात्रापि स्वस्य स्वकारणहेतुत्वे स्वकारणप्रागभावकालवृत्तित्वावश्यम्भावेन तस्य स्वप्रागभावकालवृत्तित्वात्स्वप्रागभावसमानकालत्वप्रसङ्ग इत्यर्थः । ननु स्वकारणप्रागभावकाले स्वप्रागभावो नाभ्युपगम्यत इत्यत आह । नह्यसतीति । तदा स्वप्रागभावानङ्गीकारे स्वकारणेन स्वयमेवोत्पद्येतेत्यर्थः । ननु स्वकारणप्रागभावकालस्य स्वप्रागभावकालत्वेऽपि तदा स्वस्य वृत्त्यनङ्गीकारेण विरोधः परिहृत इत्यत आह । नचासतेति । अयुक्ततामेवोपपादयति । तथा सतीति । सर्वेषां सर्वकारणत्वसर्वकार्यत्वयोः प्रसङ्ग इत्यर्थः । स्वकार्यस्य स्वकारणत्वे विरोध उक्तः स्वकारणस्य स्वकार्यत्वेऽपि विरोधं दर्शयति । एवमिति । कारणे कार्यसमनन्तरभाविनि सति स्वसत्तायाः स्वप्रागभावाव्यवहितकालवृत्तित्वावश्यंभावात्स्व-

स्वप्रागभावपरिच्छन्नप्रसङ्गः । यदि च कारणप्रागभावदशायां कार्यं स्यात् किं कारणेन साध्यं स्यात् । यच्च धूमेन वह्निर्ज्ञायते तेनैव च वह्निना स एवेत्यादिषु ज्ञाप्यज्ञापकाद्यन्योऽन्याश्रयणम् । तत्रापि कृतावेव तद्विश्रमः । धूमज्ञानेन वह्निज्ञानं जन्यते तेनैव च तदिति । एवमन्यत्रापि द्रष्टव्यम् । अन्योऽन्योपकारादिमात्रे तदाभासः । यथा सैन्येन राजा रक्ष्यते तेन च सेनेत्यादि । नह्यनयोः शक्तिव्यापारादिकं वा परस्परोत्पाद्यम् । अन्यतः सिद्धशक्तिकयोस्तु मुखभेदेनान्योऽन्योपकारः । एवं परस्परोपष्टम्भेन काष्ठाद्यवस्थानेऽपि द्रष्टव्यम् । त्रिप्र-

---

कार्यकाले प्रागभावसत्त्वप्रसङ्ग इत्यर्थः । तत्रेष्टापत्तिं निवारयति । यदि चेति । कारणप्रागभावदशायां कार्यसत्त्वे कारणमकिंचित्करमेव स्यादित्यर्थः । धूमेन वह्निर्ज्ञायते वह्निना धूमो ज्ञायत इति ज्ञप्त्यन्याश्रयोऽपि ज्ञानोत्पत्तावेव विश्राम्यतीत्याह । यच्चेत्यादिना । तदेवोपपादयति । धूमज्ञानेनेति । एवमन्यत्रापीति । ज्ञप्तौ चक्रकानवस्थयोरप्युत्पत्तावेव विश्रमो बोध्य इत्यर्थः । स्वकार्य्येण स्वोत्पत्त्यभ्युपगम इत्यत्र कार्य्योत्पत्तिपदव्यावर्त्यमन्योऽन्याश्रयाभासं दर्शयति । अन्योऽन्येति । उपकारादीत्यादिपदेन राज्ञा शत्रवः पीड्यन्ते शत्रुभिश्च राजेत्यादिपरस्परोपकारो गृह्यते । ननु परस्परर‌क्षणानुकूलशक्तिव्यापारयोः परस्परजन्यत्वादुत्पत्त्यधीनोऽन्योन्याश्रयोऽत्रापि स्यादेवेत्यत आह । अन्यतः सिद्धशक्तिकयोरिति । राज्ञो भटानां च स्वस्वादृष्टसिद्धशक्तिकानामर्थदानपरनिवारणादिमुखभेदेन परस्परोपकारो न विरुद्ध इति भावः । परस्परोपष्टम्भेन काष्ठाद्यवस्थानेऽपीति । त्रिविष्टब्धकाद्यवस्थानेऽपीत्यर्थः । भाषितं हि व्याकरणभाष्यकृता इतरेतराश्रयाण्यपि कार्याणि प्रवर्तन्ते यथा त्रिविष्टब्धकमिति । त्रिप्रभृतीनामिति । एतच्चान्योऽन्याश्रयेऽतिव्याप्तिवारणाय । अनवस्थायामतिव्याप्ति-

भृतीनामवधिमतामन्योऽन्यं चक्रवदुत्पत्त्यपेक्षावृत्तौ चक्रक- प्रसङ्गः । यथा कश्चित् कौपीनसारः संकल्पयति न श्रीर- कृषमाणस्येति परमाप्तवचनात् कृष्या धनमुपलप्स्यते तेन चोपदामुखेन राजानं प्रसादयिष्यामि राजप्रसादेन लब्धो- पकरणस्य मे कृषिरद्य न दुष्करेति । मुखभेदेन तु तदाभा- सः । यथा अन्योऽन्यव्यक्त्यनुसारिणि बीजाङ्कुरस्तम्बादिप्रवाहे दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानपरिवृत्तौ "अन्नाद्भवन्ति भूता- नि" इत्यादिचक्रेषु । स्वस्मिन्नेव विश्रमे ह्यत्रापि विरोधः नतु स्वसजातीयविश्रान्तौ । तज्जातीयप्रागभावस्य तस्य च विरोधाभावात् । अन्यथा सजातीयानां सर्वेषां समानायुष्कत्वा-

---

वारणायाह । अवधिमतामिति । चक्रवदिति । चक्रस्येवेत्यर्थः । एतच्च वृत्तिमात्रे निदर्शनं चक्रशब्दात् "इवे प्रतिकृतौ" इति सूत्रात्सादृश्येऽनुवर्तमाने "संज्ञायाञ्च" इति विहितस्य कन उपप- त्त्यर्थमिति द्रष्टव्यम् । कौपीनसार इति । दरिद्राण इत्यर्थः । सङ्कल्पप्रकारमेवाह । न श्रीरकृषमाणस्येति । अकृषीवलस्येत्यर्थः । अन्योऽन्यसजातीयव्यक्त्यपेक्षावृत्तौ तु चक्रकाभास इत्याह । मुख- भेदेन त्विति । अन्योऽन्यव्यक्त्यनुसारिणीति । भिन्नभिन्नव्यक्तिसा- पेक्षानन्तरभाववतीत्यर्थः । स्तम्बो गुल्मः अप्रकाण्डेस्तम्बगुल्मावि- त्यमरः । दुःखजन्मेति । दुःखं नरकगर्भवाससम्भववतो जन्म उत्प- त्तिः ततः कर्मसु प्रवृत्तिः ततो दोषः चित्तमालिन्यं ततो मि- थ्याज्ञानं ततो दुःखमित्येवं परिवृत्तावित्यर्थः ।

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।

इति गीते चक्रक इत्यर्थः । अन्यथेति । स्वसजातीयप्रागभावे-

दिप्रसङ्गात् । अपर्यवसिताप्रामाणिकप्रवाहप्रसक्तिरनवस्था । यथा ज्ञातेनैव सर्वं ज्ञायत इति यदि कश्चिन्नियमं ब्रूयात् तदा पूर्वपूर्वज्ञापकज्ञानपरंपरापेक्षायां न क्वचिदपि विश्रमः । तत्र कस्यचिदप्यज्ञाने तज्ज्ञाप्यज्ञानासम्भवात् सर्वाज्ञानप्रसङ्गः । जिज्ञासितार्थविज्ञाने च ज्ञापकपरंपराज्ञानस्य दुःसंपादत्वाच्च सर्वाज्ञानमेवापतेत् नचाविच्छिन्ना ज्ञानसन्ततिः येन तत्तद्विषयैर्ज्ञातैरेवोत्तरोत्तरज्ञप्तिसिद्धिः स्यात् । तस्मादज्ञातैश्चक्षुरादिभिः संस्कारैश्च ज्ञातेन लिङ्गेन शब्देन चार्थप्रतीतिरित्यनियम एवाङ्गीकार्य इति । एवं सम्बन्धस्य सम्बन्धान्तरे विशेषस्य विशेषान्तरे सामान्यस्य सामान्यान्तरेऽवयवस्यावयवान्तरे धारकस्य धारकान्तरे शेषिणः शेष्यन्तरे अङ्गस्याङ्गान्तरे नियन्त्रादेर्नियन्त्रन्तरादौ च नियमेनाभ्युपगम्यमाने तस्यापि तथेत्यनवस्था ग्राह्या । अतः प्रमाणसिद्धेषु स्वपरनिर्वाहकेषु निरपेक्षेषु वा विश्रमः स्वी-

---

नापि विरोध इत्यर्थः । समानायुष्कत्वादिप्रसङ्गादिति । सर्वेषां सजातीयानामेककालत्वं वा स्यात् भिन्नकालत्वे वैजात्यं वा स्यादित्यर्थः । समानयुक्तत्वप्रसङ्गादिति पाठस्तु लेखकप्रमादागतो न स्वरसः । ब्रह्मणि पर्य्यवसिते शेषित्वानियन्तृत्वादिप्रवाहे अतिव्याप्तिवारणायापर्यवसितेत्युक्तम् । प्रामाणिके सामग्रीप्रवाहे अतिव्याप्तिवारणायाप्रामाणिकेत्युक्तम् । जिज्ञासितमेव गृह्यत इति नियमाङ्गीकारेऽपि जिज्ञासाया इच्छात्मकत्वेन इष्यमाणज्ञानपूर्वकज्ञानत्वात् तज्ज्ञानेऽपि जिज्ञासापेक्षायामनवस्थायां सर्ववस्तुज्ञानाभावः प्रसज्ज्यत इत्यर्थः । ज्ञापकपरंपराज्ञानस्येति । ज्ञापकस्य परंपराज्ञानस्येति विग्रहः । ज्ञानहेतुभूतजिज्ञासामूलज्ञानपरंपराया इति यावत् । ननु सामग्रीप्रवाहवत् ज्ञानसंततिस्वीकाराज्ञानवस्थेत्यत आह । नचेति । अनियम एवेति । उपलक्षणमेतत् जिज्ञासितमजिज्ञासितं वा गृह्यत इत्यनियमोऽप्यङ्गीकार्य्य इति भावः । स्वपरनिर्वाहकेष्विति । सम्बन्धस्य स्वपरविशिष्टप्रतीतिहेतुत्वात्सा-

कार्य इति । प्रमाणसिद्धप्रवाहप्रसक्तिस्त्वनवस्थाभासः । यथा यदि सामग्र्या अपि सामग्री स्यात् तस्या अपि सामग्र्यन्तरेण भवितव्यम् । एवमुपर्युपरीति । नह्यनादिसामग्रीप्रवाहाभ्युपगमे कश्चित्प्रमाणविरोधः । उत्तरोत्तरासिद्धिर्वा येन सिद्धानवस्थापि दूषणमिष्येत । एवं विभुद्रव्येषूपाधिभिरवच्छिद्यमानेष्वायामविस्तारघनभागान्तरपरंपराभ्युपगमेऽपि न तद्द्रव्यस्वरूपस्य सिद्धानां वा भागानां काचित् क्षतिर्येन सर्वं परिमितस्वभावमपरिमितमङ्गीक्रियेत । अन्यथापि परिमितभागप्रदेशान्तरपरंपरानुसरणाप्यनवस्था दुस्त्यजा । कस्यचिदपि स्वाभावविशिष्टप्रदेशान्तराभावे विभुत्वप्रसङ्गात् । एवं दृष्टान्तहेतुपक्षादिषु तज्जा-

---

मान्यविशेषयोश्च स्वपरव्यावृत्तिबुद्धिहेतुत्वाच्च स्वपरनिर्वाहकत्वम् । ब्रह्मणः शेषिनियन्त्राद्यन्तरानपेक्षत्वात्परमाणोरवयवनिरपेक्षत्वाच्चरमाङ्गस्याङ्गान्तरनिरपेक्षत्वात्तेषां निरपेक्षत्वमिति विवेकः अनवस्थाभासान्तरमप्युदाहरति । एवमिति । सकलमूर्तद्रव्यसंयोगे स्वसंबन्धिभिर्दीर्घविपुलैः पदार्थैरुपाहितानां दैर्घ्यवैपुल्यनिविडप्रदेशभेदानामौपाधिकानामनन्तानामप्युपाध्यानन्त्यवत्प्रमाणसंप्रतिपन्नत्वेन तदनवस्थाया अदोषत्वमित्यर्थः । येन सर्वमपरिमितमङ्गीक्रियेतेति । विभुद्रव्यभागानन्त्यस्यापि दोषत्वे विभुद्रव्यसंबन्धिनां स्वाभावसमानाधिकरणानामनन्तौपाधिकभागानां प्रसिद्धये तदुपाधिभूतदीर्घविस्तृतपदार्थानां महीमहीधरजलधिप्रभृतीनामपरिमितत्वमङ्गीकार्यं स्यादित्यर्थः । अन्यथापीति । विभुद्रव्येऽनन्तभागानङ्गीकारेऽपीत्यर्थः । परिमितभागप्रदेशान्तरेणापीति । परिमितभागानां महीमहीधरप्रभृतीनामपि स्वसंबन्धितत्तत्पदार्थावच्छिन्नप्रदेशभेदानन्त्यस्यावश्यंभावेनानवस्था दुर्वारेत्यर्थः । यदि चैतादृशप्रदेशानन्त्यकृतानवस्थापरिहाराय महीमहीधरादिष्वा संसर्गिणामुपाधीनां स्वाभावसमानाधिकरणप्रदेशान्तरं नाङ्गीक्रियते तर्हि महीमहीधरादिसम्बधिनां प्रदेशोपाधीनां स्वाभावासमानाधिकरणत्वेन विभुत्वमङ्गीकृतं स्यादित्याह । कस्यचिदपीति । स्वि

तीयान्तरापेक्षानियममिच्छतोऽनवस्था। अनिच्छतस्तत्प्रसङ्गे तदाभासो ग्राह्यः। आत्माश्रयादीनामेषां चतुर्णां साध्यस्य सिद्धवत्कारप्रतिपादनमुखेन दूषणत्वम् केवलानिष्टप्रसङ्गे तु पूर्वप्रदर्शिते व्यापकानुपलब्धिविरोधेनेति। एतेषामेव प्रकारभेदात् प्रतिबन्दिसमवचनोभयतःस्पाशादयः प्रसङ्गभेदा द्रष्टव्याः। प्रज्ञापरित्राणे तु केवलानिष्टप्रसङ्गमेव द्विधा कृत्य षोढा तर्का उक्ताः।

आत्माश्रयणमन्योऽन्याश्रयणं चक्रकं तथा।
अनवस्था विरोधश्चासम्भवश्चेत्यमी बुधैः इति।
तत्रान्त्ययोश्चैवं लक्षणमुक्तम्।

---

द्वे दृष्टान्तहेत्वादौ साधनप्रश्नपूर्वकमनवस्थाभाववचःप्रसङ्गसमजातीयेत्युक्तप्रसङ्गसमजातिवादिनः दृष्टान्तहेतुपक्षादिष्वपि दृष्टान्तहेतुपक्षापेक्षानियमाङ्गीकारेण स्वव्याघातकादि स्यात्। प्रतिवादिनस्तदनङ्गीकारात्तं प्रत्यनवस्थापादनेऽनवस्था न स्यादित्यर्थः। आत्माश्रयादीनां चतुर्णां दूषकताबीजमाह। आत्माश्रयादीनामिति। साध्यस्य सिद्धवत्कारप्रतिपादनमुखेनेति। सिद्धत्वसाध्यत्वयोरैकाधिकरण्यविरोधप्रदर्शनमुखेनेत्यर्थः। पूर्वप्रदर्शित इति। अप्रामाणिकस्वीकारप्रामाणिकपरित्यागप्रसञ्जनरूपद्वैविध्यवत्तया पूर्वोक्ते इत्यर्थः। प्रतिबन्दीसमवचनोभयतःस्पाशादय इति। यदि प्रपञ्चस्य मिथ्यात्वं स्यात्तर्हि ब्रह्मणोऽपि मिथ्यात्वं स्यादित्यत्रानिष्टापादनं प्रतिबन्दी। यदि प्रामाणिकत्वेन ब्रह्मणः सत्यत्वं स्यात्तुल्यं प्रपञ्चस्यापीति साम्यापादनं समवचनम्। मिथ्यात्वं मिथ्या वा न वा यदि मिथ्या तर्हि प्रपञ्चस्य सत्यत्वान्न ब्रह्मातिरिक्तनिषेधसिद्धिः। यदि न मिथ्या तर्हि तस्यैव सत्यत्वेन न ब्रह्मातिरिक्तनिषेधसिद्धिरिति संभावितकोटिद्वयेऽप्यनिष्टापादनमुभयतःस्पाशा। स्पश बाधन इति धातोर्भावे घञि स्पाश इति रूपम्। अस्तिक्षीरादित्वादुभयतःस्पाशेति बहुव्रीहिः। आ-

स्ववागविरोधो यत्र स्याद्विरोधः स प्रकीर्तितः ।
सर्वप्रमाणासिद्धत्वमसम्भव उदाहृत इति ॥
एवं च तावुदाहृतौ ।
बन्ध्या मे जननीत्येष विरोधः स्वोक्तिबाधतः ।
शशे शृङ्गमुदस्थादित्येवमादिरसम्भव इति ।

अत्र व्याप्त्याद्येकैकवैकल्येन केवलानिष्टप्रसङ्गाभासपञ्चकमुदाह्रियते । तत्र व्याप्तिशून्यो यथा । आत्माणुश्चेत् तत्कर्मणा देशान्तरे फलं न स्यादिति । नहि कर्मणः फलकरणत्वमाश्रयसंयोगादिमुखेनेति नियमः । तत्तत्कर्मसाध्यदेवतानुग्रहनिग्रहमुखेन तत्सिद्धेरागमिकत्वात् । परस्या देवतायाश्च वैभवात् सङ्कल्पमहिम्ना च सार्वत्रिकफलजननोपपत्तेरिति । प्रतितर्कप्रतिहतो यथा । प्रागसच्चेत् कार्यं पश्चादपि शशविषाणवदनुत्पत्तिप्रसङ्ग इति । तत्र प्रतिप्रसङ्गः प्रागपि सच्चेत् प्रकृत्यादिवदेवानुत्पाद्यत्वप्रसङ्ग इति । नहि सर्वत्र व्यक्त्यर्थो व्यापारः व्यक्तौ तदसम्भवात् । अन्यथानवस्थादिप्रसङ्गात् । विपर्ययपर्यवसानरहितो यथा । न सत्यं स्थूलं विरुद्धधर्मसंसर्गप्रसङ्गादिति । नह्यत्र विरुद्धधर्मसंसर्गो दृश्यते देशकालदशावयवप्रतिसम्बन्ध्यादिभेदेन तत्तद्विरोधप्रशमनात् । इष्टप्रसङ्गो यथा । ईश्वरसत्त्वे नित्यस्यापि वेदस्य तदधीनत्व-

---

दिपदेन गौरवलाघवतर्कयोर्ग्रहणं केवलानिष्टप्रसङ्गाभासान् पञ्चधोदाहरति । अत्रेति । नियम इति । कर्तृनिष्ठापूर्वस्य फलजनकत्वानङ्गीकारादिति भावः । अन्यथेति । व्यक्तेरपि व्यङ्ग्यत्व इत्यर्थः । देशकालेति । अग्निव्यतिरिक्ते देशे ऽस्थूलस्यापि अग्निरूपे देशे अङ्गनादस्थौल्यं दृश्यते तत्र देशतो विरोधपरिहारः । घृतपानपूर्वकाले अस्थौल्यं घृतपानोत्तरकालं स्थौल्यं तत्र कालतो विरोधपरिहारः । मृदः पिण्डावस्थायामस्थूल-

प्रसङ्ग इति। नह्यौपनिषदैर्नित्योऽपि वेदः स्वतन्त्र इष्यते। तदाज्ञारूपत्वात्। क्रमभङ्गाभावेऽपि प्रवर्तनादिषु सर्वथा तदधीनत्वाच्च। अनुकूलप्रसङ्गो यथा। अस्ति चेदीश्वरः उपनिषदपि प्रमाणं स्यादिति। नह्यत्रेष्टतामात्रम् अपित्वीश्वरसिद्धिहेतुत्वमपीति परपक्षसाधकत्वात् पृथक्करणम् नहीष्टं सर्वं विवक्षितसाधकम्। अनग्नित्वे वृक्षवत्त्वप्रसङ्ग इत्यत्र वृक्षसम्बन्धस्येष्टत्वेऽपि वन्ह्यभावसाधकत्वाभावात्। नच विवक्षितसाधकं सर्वमिष्टम् अग्निमत्त्वे सालोकत्वप्रसङ्ग इत्यत्र प्रत्यक्ष विरुद्धस्यालोकस्य साधकत्वेऽप्यनिष्टत्वादित्येके। परविपक्षे दण्डभूतस्तु तर्कः परपक्षानुकूल इति पण्डिताः। यथा स्थूलापलापिनो बौद्धस्य नास्थूलमिदं त-

---

त्वेऽपि घटावस्थायां स्थौल्यं दृश्यते तत्रावस्थाभेदेन विरोधपरिहारः। सर्पस्य शिरोदेशे स्थूलस्य पुच्छदेशे कृशत्वं तत्रावयवभेदेन विरोधपरिहारः। घटापेक्षया स्थूलस्यापि रथादेः पर्वतापेक्षया कृशत्वं दृश्यते तत्र प्रतिसम्बधिभेदेन प्रचयद्रव्यान्तरसंयोगादयो विरोधपरिहारा आदिपदेन गृह्यन्ते। अतो न सूक्ष्मपरमाणुपुञ्जमात्रत्वं जगत इति भावः। नन्वनुकूलप्रसङ्गोऽपीष्टप्रसङ्ग इति ततः पृथक्करणं व्यर्थमित्यत आह। नह्यत्रेति। इष्टानुकूलप्रसङ्गयोः पृथक्करणहेतुतया इष्टानुकूलयोर्भेदमुपपादयति। नहीष्टमिति। एक इति।

व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्य्यये।

अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम् इति।

तर्कस्याङ्गपञ्चकनैयत्यवादिनो ऽत्रैकशब्देन गृह्यन्ते।

परविपक्षे दण्डभूतस्य तर्कस्य परपक्षानिष्टत्वे प्रतिपक्षानुकूलत्वेन परपक्षाननुकूलताया अप्यवश्यंभावात्तर्कस्य चत्वार्येवाङ्गानि तथा चैकाङ्गवैकल्येन चत्वार एवाभासा इतिस्वमतमुपन्यस्यति। परविपक्ष इति। परपक्षानुकूल इति। तर्कप्रयोक्तृपक्षानुकूल इत्यर्थः। यथा स्थूलापलापिनो बौद्धस्येति। विपक्षे दण्डभूतस्तर्कः प्रयोक्तृपक्षानुकूल इत्यनुषज्ज्यते। एतदेवोपपादयति। नास्थूलमिति। तथोपलम्भ-

थोपलम्भप्रसङ्गादिति । स्थूलसाधकस्य ह्यस्थूलपक्षबाधको- ऽनुकूलः । एते च तर्काभासा अनुमानाभासान्तर्भावपक्षेऽपि प्रावादुकैः पृथगुद्भावयितुमुचिताः । तर्कस्य पृथक् प्रसिद्धव्यवहार्यत्वेन तदाभासानामपि तथैव व्यवहारोपपत्तेरिति । स्थितं तावत् सावान्तरभेदैर्हेत्वाभासैः । सापराधैः पुरुषैः प्रणीतानि वाक्यान्यागमाभासाः । भ्रमविप्रलम्भप्रमादाशक्तयश्च प्रणेतृणामपराधाः । तत्र भ्रममूल आगमाभासो यथा । पतति गुरुत्वान्नित्यं पृथिवीत्यादिरार्हतादीनामुपदेशः । विप्रलम्भमूलो यथा । अयसः काञ्चनत्वादिवदाचण्डालं संस्कारविशेषवशात् ब्राह्मणत्वादिद्धिरिति कापालिकादीनाम् । प्रमादमूलो यथा । व्यासङ्गादिदशाविक्षिप्तचेतसां प्रामाणिकानां स्वपक्षपरपक्षसंकराद्युपदेशः । अशक्तिमूलो यथा । तत्त्वविदामृजूनामवहितानामप्यपटुकरणत्वादिवशादक्षरादिविपर्यासवान् व्यवहारः । सोऽपि हि श्रोतुरर्थान्तरभ्रमादिहेतुत्वादागमाभासः । एवमधिकृ-

---

प्रसङ्गादिति । अस्थूलतयोपलम्भप्रसङ्गादित्यर्थः । अनुकूल इति । तथा च स्थूलपक्षानुकूलस्य तर्कस्य स्थूलापलापिपक्षाननुकूलत्वमवर्जनीयमिति भावः । ननु तर्कस्यानुमानापृथग्भाववर्णनात्तदाभासा अपि हेत्वाभासान्तर्भूता एवेति ततः पृथङ्निरूपणमयुक्तमित्यत आह । एते चेति । क्रमप्राप्तस्यागमाभासस्य लक्षणमाह । सापराधैरिति । उपदेश इति । हेत्वाभासमूलानुमानमूलत्वादस्यागमस्यागमाभासत्वमिति भावः । कापालिकादीनामिति । उपदेश इत्यनुषज्यते । ऋजूनामिति । अविप्रलम्भकानामित्यर्थः । नन्वशक्तिमूलस्यागमस्य यथार्थवक्तृज्ञानजन्यत्वात् कथमाभासत्वमित्यत आह । सोऽपिहीति । वाक्यमपीति । आगमाभास इत्यनुषज्यते । तस्यापि तात्पर्यभ्रममूलत्वादागमाभासत्वं युक्तमेवेति भावः । ननु तदर्थे बोधकस्य तत्परता कुतो नास्तीत्यत आह । क्वचिद्धीति । ज्योतिषमिति । तथा च तत्त्वनिर्णये ज्योतिषं प्रमाणयतां सूर्यादिभूम्यधोगमनवाक्यं

तशास्त्रविरोधेऽनधिकृतशास्त्रमतत्परमपि तत्परं योजयतां वाक्यमपि। क्वचिद्धि किञ्चिच्छास्त्रमधिकरोति। यथा शुभाशुभकालेषु ज्योतिषम्। श्रौतानुष्ठानक्रमे कल्पसूत्राणि। आचारेषु धर्मशास्त्राणि सर्गप्रतिसर्गादिषु पुराणानि। चिदचिद्विवेकमात्रे सांख्यम्। साङ्गसमाधिस्वरूपे योगः। अधिकारिविशेषनियतानन्यभजनप्रस्थाने पञ्चरात्रम्। वास्तुविभागादिषु शिल्पविद्यादयः। पथ्यापथ्यद्रव्यविभागादिषु आयुर्धनुर्गान्धर्ववेदादय इति। तेष्वाधिकृतशास्त्रविरोधेऽनधिकृतं शास्त्रमन्यपरं नेतव्यम्। तदेव तत्परं ब्रुवाण आगमाभासेन निगृह्येत। अत एव हि सांख्यादेः क्वचिदंशे परिग्रहोऽपरिग्रहश्च। नच

सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा।
आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः।

इत्यादिभिः सांख्ययोगपाशुपातानामपि यथोक्ततात्पर्येण कृत्स्नं प्रामाण्यं शङ्क्यम् अत्यन्तातीन्द्रियार्थविषयतया हेतुहन्तव्यत्वमात्रे निषेधात् नहि तादृशे विषये हेतुभिर्विधातुं निषेद्धुं वा शक्यम्। न च हेतुहन्तव्यत्वनिषेधमात्रात् श्रुतिहन्तव्यत्वमपि निषिद्धं स्यात्। अतुल्यबलयोर्विरोधे हीनस्य निग्रहावश्यंभावात्।

---

तत्परविष्णुपुराणविरुद्धत्वादागमाभास इति भावः। पथ्यापथ्यद्रव्यविभागादिष्विति। पथ्यापथ्यविभागे आयुर्वेदः। अस्त्रशस्त्रादिप्रयोगे धनुर्वेदः। षड्जादिस्वरभेदे गान्धर्ववेदः। राजनीतावर्थशास्त्रमिति विवेकः। नन्वधिकृतागमविरुद्धार्थावबोधिनोऽनधिकृतस्य का गतिरित्यत आह। तेष्विति। निग्रहावश्यंभावादिति। तथा च श्रुतिविरुद्धेऽर्थे सांख्यादिकं प्रमाणयन्नागमाभासेन निगृह्यत एवेति भावः। एवं श्रुतिविरुद्धेऽर्थे स्मृतिं प्रमाण-

पौरुषेयापौरुषेयविरोधे पौरुषेयं हीयते । पौरुषेयेष्वपि परिग्रहादितारतम्यात् परस्परबलाबलव्यवस्था । परिग्रहादिसाम्येऽप्यैदंपर्यान्यपर्याभ्यामर्थतत्त्वव्यवस्थेति । लौकिकेष्वपि पित्रादिवाक्यं प्रमाणं कुहकादिवाक्यमप्रमाणमिति स्थिते क्वचिदंशे गुणदोषसम्भावनया दृष्टमन्यथात्वम् । संदिग्धप्रामाण्येष्वपि वाक्येष्वागमाभासत्वमेव याथार्थ्येऽपि प्रत्ययजनकत्वाभावात् । तदर्थं हि पुरुषः प्रमाणमुपादत्ते । अन्यथा भ्रान्तविप्रलम्भकादिवाक्यानामपि यादृच्छिकार्थसम्भावनया प्रामाण्यप्रसङ्गः । नच तथा लौकिकाः परीक्षका वा प्रतियन्ति ।

अतो ये नाम बाह्यानां व्याहाराः कुदृशामपि ।
न ते दृष्टेष्वदृष्टेष्वप्यर्थेष्वादरगोचराः ॥

---

यतोऽप्यागमाभासनिग्रहोऽस्तीत्याह । पौरुषेयेति । एवं सर्वशिष्टपरिगृहीतमनुस्मृतिविरुद्धार्थे स्मृत्यन्तरं प्रमाणयतो ऽप्यागमाभासनिग्रहोऽस्त्येवेत्याह । पौरुषेयेष्वपीति । बलाबलव्यवस्थेति । "मनुस्मृतिविरुद्धा या सा स्मृतिर्न प्रशस्यत" इति स्मृतेरिति भावः । एवं "कलौ पाराशरं स्मृत"मिति कालविशेषतत्परपराशरस्मृतिविरुद्धेऽर्थे कालविशेषपरस्मृत्यन्तरं प्रमाणयतो ऽप्यागमाभासनिग्रहोऽस्तीत्याह । परिग्रहादिसाम्येऽपीति । नन्वाप्तानां मनुवशिष्ठादीनां स्मृतीनां प्रमाणतया व्यवस्थितेः क्वचिदप्रामाण्यं कथमुपपाद्यत इत्याशङ्क्य क्वचिदंशे ऽप्रमाण्यसम्भवं दृष्टान्तमुखेनोपपादयति । लौकिकेष्वपीति । अन्यथात्वमिति । तथा च प्रमाणतया व्यवस्थितानामपि मन्वादिस्मृतीनां श्रुतिविरुद्धांशेऽप्रमाण्येऽपि औत्सर्गिकं प्रामाण्यं न व्याहन्यत इति भावः । निर्णीताप्रामाण्यके युक्तमागमाभासत्वं संदिग्धाप्रामाण्यके प्यतिदिशति । संदिग्धेति । याथार्थ्येऽपि वेदाविरुद्धत्वेन सम्भवद्याथार्थ्येष्वपि बाह्यकुदृष्टिव्यवहारेष्वनाप्तमूलत्वनिश्चयेन श्रोतुस्तदर्थे निश्चयाजननादर्थत आगमाभासत्वमेवेति भावः । किमष्ट तदुक्तिभिरिति । निश्चितप्रमाणभावैर्वेदादिभिरेव तन्निर्णयसम्भवादिति भावः । स्वोक्तार्थे मनुवचनं प्रमाणयति । या वेदबाह्या इति ।

दृष्टे किमुपदेशेन किमदृष्टे तदुक्तिभिः ।
न खल्वतीन्द्रिये वस्तुन्यस्ति पुंसां स्वतन्त्रता ॥
प्रत्यक्षादेरसाध्येषु वेदवेद्येषु वस्तुषु ।
किमन्यैः सति सूर्ये कः खद्योतमनुधावति ॥
"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः" ॥
इति मन्वादयश्चाहुरध्यक्षितपरावराः ।
येषां यदृच्छावादोऽपि श्रूयते विश्वभेषजम् ॥
"मन्वर्थविपरीता च या स्मृतिः सा न शस्यते" ।
इति स्मर्तृभिरेवोक्तमतश्चिन्त्यं बलाबलम् ॥
"सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतो ज्ञानमेव च" ॥
इति स्वयं भगवता गुणकार्य्यमगीयत ।
अतः सत्त्वोत्तरादेशसंनिधावन्यथापनम् ॥
इतिहासपुराणेष्वप्यन्योऽन्यपरिपन्थिषु ।

कुदृष्टयः। वैदिकतया छन्ना वेदार्थविप्लावकाः शङ्करादयः। येषामिति। "यद्वैकिञ्चनमनुरवदत्तद्भेषजमिति(१) श्रुतेरिति भावः। ननु पौरुषेयापौरुषेयग्रन्थेषु बलाबलसम्भवेऽपि सर्वज्ञप्रणीतासु सर्वशिष्टपरिगृहीतासु मनुवशिष्ठपराशरादिस्मृतिषु कथंबलाबलं विचिन्त्यत इत्यत आह । मन्वर्थविपरीतेति । पुराणागमेष्वपि सात्त्विकानां बलवत्त्वमन्येषां दौर्बल्यं च ज्ञापयितुं भगवता गीतं गुणकार्यं दर्शयति। सत्त्वादिति । अत इति। तस्मात्सत्त्वोत्तरादेशानां सात्त्विकपुरुषप्रणीतपुराणागमानां प्रमामूलत्वेनाज्ञानलोभमोहप्रमादास्पृष्टानां सन्निधावन्येषां राजसतामसपुरुषप्रणीतानां तेषामन्यथापनं अन्यथानयनं युक्तमित्यर्थः । तथा च सात्त्विकपुराणादिविरोधे राजसतामसयोर्दुर्बलत्वं सुनिश्चितमेवेत्याह। इतिहासेति । बला:

१ ताण्डय ब्राह्मण श्रुतिः ।

स्वमूलगुणभेदेन बलाबलविनिश्चयः ॥
मात्स्यादिषु पुराणेषु परस्परविरोधिनाम् ।
पुराणानां विभागो हि तत्परोक्त्यैव साधितः ॥
"यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा
तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ॥
अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते ।
राजसेषु तु माहात्म्यमधिकं ब्रह्मणो विदुः ॥
सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः ।
तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम् ॥
संकीर्णेषु सरस्वत्या इन्द्रस्ये"त्याद्यनुक्रमात् ।
द्रष्टव्यमेतदखिलं स्पष्टं पुरुषनिर्णये ॥
वेदार्थसंग्रहे चैव भाष्यकारैः प्रदर्शितम् ।
नच प्रजापशुपतिप्रभृतेर्नास्ति विभ्रमः ॥
मेधाविभ्रंशतत्सिद्ध्योरेषां व्यासेन साधनात् ।

---

बलनिर्णय तात्पर्येणैव मात्स्यादिपुराणेषु सात्त्विकराजसतामसविभागः कृत इत्याह । मात्स्यादिष्विति । साधित इति । अन्यथा विभागोक्तेर्वैयर्थ्यमेव स्यादिति भावः । सात्त्विकराजसतामसविभागसाधकानि मात्स्यपुराणवचनान्याह । यस्मिकल्पेत्विति इन्द्रस्येत्यन्त्येन । अनुक्रमादिति । साधित इति पूर्वेणान्वयः । पुरुषनिर्णय इति । पुरुषनिर्णयाख्ये ग्रन्थ (१)इत्यर्थः । ननु सर्वज्ञानां प्रजापतिपशुपत्यादीनामज्ञानान्यथाज्ञाने कथं संभवत इत्याशङ्क्य परिहरति । न चेति । व्यासेन साधनादिति । मेधाभ्रंशस्य पुनर्मेधासंपत्तेश्च भारते मधुकैटभाद्युपाख्यानेषु विस्तरेण प्रतिपादितत्वादित्यर्थः । ब्रह्मादीनामज्ञानमुपपाद्य प्रतारकत्व-

---

१. नाथमुनिविरचितः पुरुषनिर्णयो नारायण परत्वप्रतिपादकः ।

"त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय ॥
अल्पायासं दर्शयित्वा फलं शीघ्रं प्रदर्शय ।
अहं मोहं करिष्यामि यो जनं मोहयिष्यति" ॥
इत्थं भगवदादेशाद्युक्ता चैषां प्रतारणा ।
"आबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः" ॥
इत्यादिभिः स्यादेतेषां प्रमादाशक्तिसम्भवः ।
अतः प्रत्यक्षवेदादेः सत्परिग्रहशालिनः ॥
विरुद्धमीश्वरवचोऽप्यागमाभास एव नः ।

प्रत्यक्षाद्याभासनिरूपणेनैव स्मृत्याभासाश्च निरूपिताः तत्सम्यक्त्वतदभावानुविधानात् स्मृतिसम्यक्त्वतदभावयोः । अथापि स्मृतिप्रामाण्यमिच्छन् कश्चित्प्रतिज्ञातेऽर्थे यदि भ्रान्तिमूलां स्मृतिं प्रमाणतया पुरस्कुर्यात् तदाभासत्वमुद्भाव्यम् । न हि स्मृतिरत्र प्रमाणमित्युक्ते न तन्मूलं प्रमाणमिति साक्षादुत्तरं स्यात् । नच स्मृतिरित्येवाप्रामाण्यं वक्तुं शक्यम् । तद्याथात्म्यस्य वक्ष्यमाणत्वात् । अतः पुरस्कृतस्य स्मृतिविशेषस्याप्रामाण्ये प्रथममुद्भाविते तत्समर्थनकक्षायां मूला-

---

मपि प्रमाणमुखेनोपपादयति । त्वं हीति । तेषां प्रमादाशक्ती अपि प्रमाणत उपपादयति । अबुद्धिपूर्वक इति । तस्मात्प्रत्यक्षश्रुतिमन्वादिस्मृतिसात्त्विकपुराणादीनामविगीतशिष्टपरिग्रहशालिनां विरोधेऽन्येषामागमाभासत्वमेवेत्युपसंहरति । अत इति । ईश्वरवचोऽपीति । राजसतामसपुराणागमादिषु भगवदुक्तित्वेन दर्शितानामप्यागमाभासत्वमेवेत्यर्थः । तथा च कैमुत्यन्यायेन तदर्वाचीनवचनानामागमाभासत्वं सिद्धमेवेति भावः । ननु भ्रान्तिमूलस्मृतिपुरस्कारे तन्मूलप्रत्यक्षाद्याभासत्वस्यैवोद्भाव्यत्वात्स्मृत्याभासत्वोद्भावनमयुक्तमित्यत आह । न हीति । कलधौतमिति-

नुभवसम्यक्त्वादिविचारावतार इति युक्तः पन्थाः । तत्र प्रत्यक्षाभासमूलस्मृत्याभासो यथा । आसीत्तदा गगने गन्धर्वनगरमिति । अनुमानाभासमूलो यथा । कलधौतमिति परिगृहीतरक्षितकम्बुशकलस्यास्ति मे तदङ्गुलीयकार्हद्रव्यमिति । आगमाभासमूलो यथा । उपच्छन्दितस्यार्भकस्य पयःपानेन शिखा मे वर्धिष्यत इति । एवमेव बाह्यानां कुदृष्टीनां च तत्तत्प्रबन्धकरणहेतवः स्मृत्याभासा द्रष्टव्याः । एवं तत्तत्संशयमूला स्मृतिरपि तथा तथा संशयात्मिका तत्तज्जनकसंस्काराणां स्वमूलानुरूपस्मृति जननशक्ततयैव हि स्वसामग्र्योत्पत्तिः । यथा जङ्गमस्थावरबीजानां स्वतस्तत्तदनुरूपचराचरारम्भकत्वं विनाशे प्रतिबन्धे वा नारम्भः । वैगुण्ये कार्यवैगुण्यं सहकार्यन्तरवशाच्च जातिगुणान्तरविशिष्टकार्यारम्भः । एवं संस्कारबीजेष्व-

---

परिगृहीतेति । चाकचिक्यादिलिङ्गमूलरूप्यभ्रमतः परिगृहीतरक्षितशुक्तिशकलस्येत्यर्थः । एवमेवेति । बाह्यकुदृष्टिस्मृतिष्वपि यथायोग्यं प्रत्यक्षाभासादिमूलत्वात्स्मृत्याभासत्वमेवेत्यर्थः । संशयरूपस्मृतेः स्मृत्याभासतां वक्तुं संशयरूपपूर्वानुभवस्य संस्कारद्वारा स्वसमानाकारस्मृतिजनकतां समर्थयते । एवमिति । एतेन निश्चयस्यैव संस्कारजनकत्वं स्मृतिजनकत्वं च न संशयस्येति वदन्तो नैयायिकाः प्रत्युक्ता इति भावः । तत्र संशयजन्यसंस्कारस्य स्वमूलानुभवसमानाकारस्य स्वमूलानुभवसमानाकारस्मृतिजनकत्वं दृष्टान्तमुखेन समर्थयते । यथेति । बीजस्य सजातीयारम्भकतानियमे व्यभिचारमाशङ्क्य परिहरति । विनाश इत्यादिना । वैगुण्य इति । व्रीहिबीजानां शोषणादिसंस्कारवैगुण्ये कार्ये विवृद्ध्यभावबहुफलानारम्भकत्वादिवैगुण्यदर्शनादिति भावः । सहकार्यन्तरवशाच्चेति । यथा व्यासबीजस्यापि क्षत्रियशूद्रक्षेत्रादिसहकार्यन्तरवशात् क्षत्रियत्वशूद्रत्वजातिविशिष्टधृतराष्ट्रविदुराद्युत्पत्तिः । यथा वा

पि प्रबलसुखदुःखपापकालविप्रकर्षादिभिर्विनष्टेषु प्रतिबद्धेषु वा न तत्साध्या स्मृतिः । वैगुण्ये त्वनुभूतैकदेशविषयः स्मृतिप्रमोषः । प्रत्युत्पन्नकरणादिसहकारिसन्निधौ प्रत्यभिज्ञा तदाभासाद्यारम्भकत्वमिति सांदृष्टिकमेतत् । ततश्च संस्काराणां स्वतः पूर्वानुभवसमानाकारस्मृतिजननस्वाभाव्यात् स्मृतिरपि संशयविपर्ययवेषैवेति स्वमूलप्रत्ययवन्नार्थव्यवस्थापिका । सापि च विचित्रार्थगोचरा काव्यादिनिर्मिणानामुपकुरुते । नतु वस्तुस्थितिं प्रपित्सतामिति तत्पुरस्कारे परस्य निग्राह्यतैव । अतः स्मृतिप्रामाण्यवादानुसारे भ्रान्तिमूलस्मृतीनां प्रमाणाभासाख्यनिग्रहस्थाने निवेशः । स्मृतिमात्रप्रामाण्यपक्षनिष्ठस्तु यथार्थामपि स्मृतिं पुरस्कुर्वंस्तदप्रामाण्याभ्युपगमोद्भावनेन निगृह्येतेति विशेषः । तत्प्रामाण्यवादी च यथार्थां चेत् स्मृतिं प्रस्तुते प्रमाणयेत् तदनभ्युपगन्ता तु परस्तदाभासतां ब्रूयात् तत्प्रामा-

---

लाक्षासेकादिदोहदसहकारियुक्तकार्पासबीजात् तत्फले रक्तिमादिगुणान्तरोत्पत्तिस्तथेति भावः ।

पङ्कजं वा सुधांशुर्वेत्यस्माकं तु न निर्णयः ।

इत्यादिसंशयसमानाकारकाव्यरूपकार्यान्यथानुपपत्त्यापि संशयरूपस्मृतिरङ्गीकार्येत्यभिप्रेत्याह । सापि चेति । ननु संशयस्मृतेः पाक्षिकयाथात्म्यासत्त्वासत्त्वज्ञानेऽप्युपकारकत्वमस्त्वित्यत आह । न त्विति । पाक्षिकाप्रामाण्यकवलितत्वादिति भावः । स्मृतिमात्रप्रामाण्यवादिनो नैयायिकादयः प्रमाणमूलामपि स्मृतिं पुरस्कुर्वाणा न प्रमाणाभासेन निग्राह्या अपि त्वपसिद्धान्तोद्भावनेनेत्याह । स्मृतिमात्रेति । मात्रशब्दोऽत्र कार्त्स्न्यार्थः । स्मृतिप्रामाण्यमभ्युपगच्छतस्तदनभ्युपगन्त्रा सह कथायां प्रथमेन यथार्थस्मृतिपुरस्कारे परेण प्रमाणाभासे उद्भाविते उद्भावयितुः किं निरनुयोज्यानुयोगोऽस्ति नेत्याह । तत्प्रामाण्यवादी चेति ननु तर्हि उभयोरप्यदोषे कथं कथापर्यवसानम् अपर्यवसाने वा कथं कथाप्रवृत्तिरित्यत आह । तत्प्रामाण्येति ।

व्याप्रामाण्यविमर्शविषयवादान्तरावतारः । एवं प्रकृतोपयुक्तेषु प्रकृतमध्ये वादान्तरावतारो गर्भाङ्कान्तरचिन्तावदविरुद्धः । तदवसाने च पुनः प्रकृतमेवानुसरणीयम् । जल्पवितण्डयोस्तु प्रकृतविच्छेदेऽपि तदर्थचिन्तान्तरबलेन प्रकृतोद्भावितनिग्रहस्थानसदसद्भावसिद्धेस्तावतैव च जयपराजयव्यवस्थनान्न प्रकृतविशेषचिन्तावकाशः । अभ्युपगमनीयभेदे तु तदनुसारेण स्यादपीति । एवमनुमानतर्कप्रयोगप्रसङ्गादसत्प्रयोगादिपरिहाराय निग्रहस्थानान्तं निरूपितम् । एतदध्यायचिन्तितमेव चासाधारणं सारं न्यायविस्तरस्येत्यत्रैव वादिभिः सातिशयश्रमैर्भाव्यमिति ।

यस्मिन्नानुमितिः क्रमेत विविधा बोधाय बाधाय वा

नन्वेकस्यां कथायां कथान्तरावतारो विरुद्ध इत्याशङ्क्य सदृष्टान्तमविरोधं दर्शयति । एवमिति । गर्भाङ्कान्तरचिन्तावदिति । अपर्यवसित एव प्रकृताधिकरणेऽन्याधिकरणवर्णनमन्तरागर्भिणीन्यायेन मीमांसकैः क्रियते । नाटकेष्वपर्यवसित एवोपक्रान्तेऽङ्कगर्भाङ्कविरचनं क्रियते कविभिस्तद्वदित्यर्थः । अनुसरणीयमिति । वादे प्रधानार्थानुबन्धिदोषेणैव पराजयस्य व्यवस्थाप्यत्वादिति भावः । जल्पवितण्डयोस्तु प्रसक्तानुप्रसक्तस्यासङ्गतपुरुषदोषेणापि पराजयसिद्धेर्न पुनः प्रकृतानुसरणमित्याह । जल्पवितण्डयोस्त्विति । जल्पवितण्डयोरपि प्रसक्तानुप्रसक्तनिग्रहस्थानस्य क्षन्तव्यतया वादिभ्यामभ्युपगमे तु पुनः प्रकृतानुसरणमस्तीत्याह । अभ्युपगमनीयभेदे त्विति । अत्रानुमानाध्याये निरूपितानामवयववादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानादीनामसाङ्गत्यं परिहरति । एवमिति । सङ्गतानामपि तेषां विस्तरतो निरूपणस्य प्रयोजनं दर्शयति । एतदध्यायचिन्तितमेवेति । अध्यायार्थं सङ्ग्रहेण दर्शयन् "मङ्गलमध्यानि शास्त्राणि" इत्यभियुक्तवचनानुसारेणाशासनमङ्गलमाचरति । यस्मिन्निति । यस्मिन् भगवति विविधा केवलान्वयान्वयव्यतिरेकिलिङ्गभेदात्सामान्यतोदृष्टादिभेदाच्च बहुविधा अनुमितिरनुमानं बोधाय सिद्धये बाधाय

यस्याशेषदृशः क्षितावनुमितिस्तन्मानताख्यातये ।
यस्मिन् पश्यति तत्त्वनिर्णयजया वत्याहितं यत्क्रुधा
नित्यैश्वर्यमहोदधिः स भगवान्निःश्रेयसायास्तु नः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ अनुमानाध्याये चतुर्थं प्रमाणाभासान्हिकम् । २ । ४ ।

समाप्तश्चाध्यायः ।

---

प्रतिषेधाय वा न क्रमेत न प्रभवेत् । तस्य शास्त्रयोनित्वेन मानान्तरेण बाद्धुं वा प्रतिषेद्धुं वाशक्यत्वादिति भावः । अशेषदृशः । नित्यसिद्धविश्वसाक्षात्कारवतो यस्य भगवतः क्षितौ भूमावनुमितिः

तोयान्तां स महीं ज्ञात्वा जगत्येकार्णवे प्रभुः ।
अनुमानात्तदुद्धारं कर्तुकामः प्रजापतिः ॥
अकरोत्स्वतनूमन्यां कल्पादिषु यथा पुरम् ।

इत्युक्तौ तस्यानुमानस्य प्रमाणत्वख्यापनाय न त्वत्र प्रत्यक्षासम्भवादिति भावः । यस्मिन् भगवति पुरुषं पश्यति सति तस्य तत्त्वनिर्णयः कथासु विजयश्च भवतः ।

जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ।

इति स्मर्यत इति भावः । यस्य भगवतः क्रुधा कोपेन पुंसः अत्याहितं महाभीतिर्भवति ।

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।

इति हि गीयते इति भावः । नित्यैश्वर्यमहोदधिः निरवधिकविभूतियुक्तः स भगवान् षाड्गुण्यपरिपूर्णः नः अस्माकं निःश्रेयसाय मोक्षाय अस्तु परमपुरुषार्थहेतुर्भवत्वित्यर्थः ।

इति श्रीमद्वेदान्ताचार्यचरणारविन्दानुसन्धानविशदप्रबोधेन भारद्वाजकुलजलधिकौस्तुभश्रीदेवराजाचार्यसूनुना श्रीनिवासदासेन विरचितायां न्यायपरिशुद्धिव्याख्यायां न्यायसारसमाख्यायामनुमानाध्याये चतुर्थं प्रमाणाभासान्हिकम् ॥ २ ॥ ४ ॥

अथानुमोद्भवं स्मृत्या हेतुत्वेनापि संस्थितम् ।
मध्ये तयोरिहेदानीं मानं शाब्दं प्रचक्ष्महे ॥

---

यदुक्तेरुल्लासः कविकथकदर्पप्रशमनो
यदीयाङ्घ्रिश्रद्धा प्रगुणयति तत्त्वं व्यवसितम् ।
प्रतिष्ठा तर्काणां भवति च यदुक्तेः करणतः
स वेदान्ताचार्यः शमयतु ममाघं बहुमुखम् ॥
प्रबुद्धा भक्तिश्चेद्भवति परमाचार्यपदयो
र्वयं तद्भक्तत्वादभिमतिपदं वा यदि मताः ।
तदा दोषादर्शिप्रणयरससारेण मनसा
परिग्राह्योऽयं स्याद्गुरुरनघभावाः सुमनसः ॥

शब्दाध्यायमारभते । अथेति । हेतुहेतुमद्भावं सङ्गतिमाह । अनुमोद्भवमिति । तयोर्मध्ये संस्थितम् । अनुमानस्मृत्योर्मध्ये । इह हेतुसमाप्त्यनन्तरप्रकरणे इदानीं हेतुरूपानुमानस्य समाप्तत्वादनन्तरमित्यर्थः । ननु हेतुहेतुमद्भावः कथं शब्दानुमानयोरिति चेदुच्यते । अङ्गुल्या निर्दिश्य पदार्थे तत्पदार्थव्युत्पत्तेर्व्याप्तेरपि प्रत्यक्षसापेक्षत्वात् प्रत्यक्षस्य सर्वहेतुत्वम् यत्राङ्गुलीनिर्देशो न सम्भवति अथ च व्युत्पत्तिस्तत्र क्वचिद्व्याप्तिबलात् क्वचित्तर्कबलादिति तन्निरूपणाभावे कथं व्याप्त्यादिपूर्विका व्युत्पत्तिर्निरूपणीया । किंचार्थसंशये तत्सापेक्षत्वात्तस्य चानुमानत्वाद्धेतुहेतुमद्भावः । नन्वेवं तर्हि क्वचित्सादृश्यादप्यर्थबोधादुपमितेरप्यस्ति हेतुत्वमिति कथं न तन्निरूप्यते इति चेन्न तस्यानुमानानतिरेकात् तथा हि आरण्यकवाक्यं हि गोसादृश्यवैशिष्ट्यज्ञापकं सर्ववादिसिद्धम् । ततश्च इयं गवयव्यक्तिर्जातिप्रवृत्तिनिमित्तद्योतकगोसादृश्यवती तन्निरूपितव्यक्तित्वात् गवयान्तरवत् । इयं व्यक्तिरिति व्यक्तेर्जातिनिरूपितत्वाद्गवयत्वजातेश्च पुरोवर्तिनिष्ठत्वेन ज्ञातत्वाद्गोसादृश्यनिरूपितव्यक्तौ जातिसङ्गितयाभिसंधत्ते । यदा पुनरनेन सदृशी मदीय गौरिति तदापि मदीया गौस्तादृशगोवत्सादृश्याधिकरणं गवयान्तरवदिति सुलभः पन्थाः । अतः फलकरणभेदादिभिर्भेदो निरस्तः । यद्वा शब्द एवान्तर्भावः किमारण्यकवाक्यमाप्तवाक्यमुत

अनाप्तानुक्तवाक्यजनितं तदर्थविज्ञानं तत् प्रमाणम् ।

कारणदोषबाधकादर्शनात् । नचानाप्तोक्तवाक्यं प्रमाणं कारणदोषबाधकदर्शनात् । न च वाक्यत्वादिभिर्बाधः स्ववचन-

---

न आद्ये वाक्यजन्यं ज्ञानं सादृश्यनिरूपकम् । अतीन्द्रिये प्रवृत्त्यनुपपत्तेः । ननु पदार्थव्युत्पत्त्यभावात् कथं वाक्यार्थबोध इति चेत् तस्य पदार्थस्य न व्युत्पत्तिर्नास्ति गवयपदस्वरूपेण प्रश्नानुपपत्तिप्रसङ्गात् । सामान्यतः सा प्रवृत्तिर्न व्युत्पत्तिबलादिति चेत् किमिदं सामान्यतो नाम गवयत्वसामान्यमात्रमुत गवयवृत्तिमात्रमुतोभयमपि किञ्चित् नाद्यद्वितीयौ अपदार्थत्वान्नान्त्यः किञ्चित्त्वाज्ञानात् । पूर्वं सम्बन्धो न प्रतीयत इति चेत् पश्चाद्वा कथं प्रतीयतां प्रत्यक्षेणेति चेत् नामादीनामिदानीमप्रत्यक्षत्वादशाब्दत्वेनाप्रतिपत्त्यापत्तेः । हनूमतो लङ्काज्ञानं सम्पातिशब्देन बोधाभावादुपाधेरनुपदेशः । लङ्कापदप्रवृत्तिनिमित्तस्य प्रत्यक्षाग्राह्यत्वादेकव्यक्तित्वेन व्याप्त्यग्रहात् अलौकिकपञ्चमप्रमाणप्रतिपन्नत्वं स्वतः प्रकल्प्य संतोष्टव्यमायुष्मता । अतः साधुशब्दश्रवणे तदर्थप्रतीतिस्तदर्थप्रतीतौ विग्रहेण असमासे निरूपकयत्नान्तरपदैरर्थप्रतीतिरिति सुपपन्नं शब्दत्वं गवयज्ञान इति भावः । शब्दलक्षणमाह । अनाप्तेति । अर्थविज्ञानं प्रत्यक्षादपीति वाक्यजनितेति वाक्यस्वरूपज्ञानमपि तज्जनितमिति तदर्थेति । शब्दस्यापि शब्दशब्दार्थत्वात्तत्पदम् । करणव्यावृत्तये ज्ञानमिति । भ्रान्तिं व्यावर्तयति । अनाप्तानुक्तेति । आप्तोक्तवाक्यत्वेन प्रामाण्यमस्त्वित्याशङ्क्य निराकरोति । कारणदोषेति । अबाधितार्थकत्वमनाप्तानुक्तित्वमिति भावः । ननु शब्दे कारणे दोषादिसम्भावना त्वयैवोच्यते तथा च विप्रतिपन्नं वाक्यमप्रमाणं वाक्यत्वात्संप्रतिपन्नवत् अतः शब्दमात्रस्याप्रमाणत्वात् कथं निरूप्यते । आप्तवाक्ये व्यभिचरितोऽयं हेतुरितिचेत् किमिदमाप्तत्वं नाम हितोपदेष्टृत्वमिति चेन्न करणादिदोषस्य तत्रापि सम्भवात् । किञ्च वाक्यत्वमपि किं नाम प्रत्यक्षमाकाङ्क्षादिमत्त्वमिति चेन्न अनाप्तवाक्यस्यापि तत्त्वात् नापि पदसमूहत्वं पूर्वस्यैव तत्त्वात् । नापि त्रितयवत्त्वं शुकवाक्य-

न्ताभ्युपगमे सर्वत्राविशेषात् । व्युत्पत्तौ च स्वतन्त्रतयैव बोधकत्वसिद्धेः । अत एव च वक्तृज्ञानानुमानाभ्युपगमेऽपि शब्दप्रामाण्यं सिद्धम् । आगमिकबुद्धिरनुमा प्रत्यक्षेतरप्रमितित्वात् सम्प्रतिपन्नवदितिचेन्न उक्तोत्तरत्वात् । अन्यथा शब्दरसगन्धादिबुद्धिरनुमा अचाक्षुषप्रमितित्वात् सम्प्रतिपन्नवदित्यपि प्रसङ्गात् । "प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।

दृष्टानुमानागमज"मिति मन्वादिमहर्षिसम्मतेश्च शब्दानुमानयोर्भेदो दृश्यते । नचात्र गोवलीवर्दनयः अन्तर्भावादर्शनात् ।

---

वावाक्यार्थबोधे व्याप्त्यादेरपरामर्शात् । अत्र संसर्गबोधस्यानुमानपूर्वकत्वे आकाङ्क्षासत्तितात्पर्यवत्त्वादीनां संसर्गग्रहपूर्वं ग्रहो वक्तव्यः स तु वाक्येन वा गृह्यते अनुमानेन वा आद्ये तस्यैव शब्दत्वं सिद्धं द्वितीयेऽनवस्था । किंच पदैः पदार्थसंसर्गादितत्त्वगर्भादनुमानस्य पक्षेऽपि पदार्थसंसर्गज्ञानेऽपि बोधाभावात् न व्याप्तिपरामर्शौ मन्येत कल्प्येत वा किं च प्रत्यक्षमनुमानविधया प्रमाणं किं नोच्येत तथा हि अयं घटश्चाक्षुषज्ञानविषयः रूपवत्त्वात् पटवदिति इत्यादि ध्येयम् । आगमज्ञानस्यानुमानत्वमनुमानेन पूर्वं गृह्यते पश्चात्पदार्थसंसर्गोऽनुमीयत इति चेन्न कारणत्वाग्रहात् तद्ग्रहेण च शक्तिज्ञानं तोऽपि वाक्यार्थबोधादाकाङ्क्षादिज्ञानान्तरं विना आकाङ्क्षादिग्रहात् किमनुमेयमवशिष्यते । तस्य कारणत्वात् यदनिष्टं साध्यत इति शङ्कते । आगमिकेति । परिहरति । उक्तोत्तरत्वादिति । आगमो न प्रमेतिवदागमबुद्धिश्चानुमा इति विरोधस्योक्तप्रायत्वादित्यर्थः । यद्वा आगमबुद्धेरनुमानप्रमाणतया अनुमित्यर्थतया तत्प्रामाण्यसिद्धेरुक्तत्वादित्यर्थः । विपक्षे दण्डमाह । अन्यथेति । अप्रयोजकोऽयं हेतुरिति भावः । शब्दस्यानुमानाद्भिन्नत्वे महर्षीणां संमतिमाह । प्रत्यक्षमित्यादि । नन्वनुमानं च शास्त्रं चेति अनुमानावान्तरभेदाविवक्षा गोवलीवर्दन्यायेनेति चेन्नेत्याह । नचेति । यदि शब्दस्यानुमानेऽन्तर्भावः कुत्रचित्स्मृतिषु

आगमोऽनुमानं सम्बन्धग्रहणे सत्येव बोधकत्वादितिचेन्न बोध्यबोधकभावातिरिक्तसम्बन्धग्रहणापेक्षिण्यनुमानत्वनियमात्। न चात्र तदतिरिक्तः सम्बन्धः यद्ग्रहणं नियमेनापेक्ष्येत। अन्यथा सम्बन्धसापेक्षतया तयोः प्रत्यक्षत्वस्यापि तथा सुसाधत्वादिति। नच स्मृतिः अपूर्वविषयत्वात्। पदसंदोहविशेषो वाक्यम्। प्रामा-

---

दृश्येत तदा शब्दानुमानयोरैक्यात्तत्र गोवलीवर्दन्यायावतारः। अन्तर्भावदर्शनाभावादैक्यप्रत्यायनाभावे न तत्र न्यायावतार इति भावः। अनुमानान्तरमाशङ्कते। आगम इति। अनुमानवैधर्म्येण परिहरति। न बोध्येति। सम्बन्धस्त्वनुमाने व्याप्यव्यापकभावः। शब्दे तु पदार्थसम्बन्धो न व्याप्तिस्तेन नानुमितिरित्यर्थः। अत्र स सम्बन्धो नापेक्ष्यते सम्बन्धान्तरमेव शब्दरूपानुमान इत्याशङ्क्य परिहरति। नचेति। सति सम्बन्धे प्रमाणानियामकत्वं तदेव नेत्यर्थः। सम्बन्धमात्रेणानुमितित्वे प्रत्यक्षस्यापि तथात्वमापादयति। अन्यथेति। तथा सुसाधत्वात्। अनुमानमिति सुसाधत्वप्रसङ्गादित्यर्थः। ननु तर्हि व्युत्पन्नपदार्थानां स्मरणादेव वाक्यार्थबोधः। नच व्युत्पन्नपदार्थानां पदार्थसमूहातिरिक्तसमूह्याभावात् स्मृतिरेवास्तु शब्द इति चेत्तत्राह। नचेति। नन्वसिद्धपूर्वविषयत्वं पदार्थस्मरणस्य भवद्भिरप्यङ्गीकारादितिचेन्न किं वाक्यार्थस्यापूर्वत्वमुत पदार्थस्य व्युत्पत्तौ यथा सङ्केतग्रह एव संसर्गो वाक्यार्थं उत संसर्गविशेषः। आद्येऽपि दृष्टार्थविषयको ऽदृष्टार्थविषयको वा दृष्टे पदार्थप्रत्यभिज्ञावत् धारावाहिकवद्वा स्मरणानुपपत्तेः। अदृष्टे पुनरेकत्र स्मृतिः संसर्गविशेषश्चेत् अननुभूते स्मृतित्वाभाव इति। न द्वितीयः तदभावेऽपि पदार्थान्वयरूपत्वाद्वाक्यार्थस्य पदार्थातिरिक्तत्वाभावात्। किञ्च घटशब्दस्य प्रथमान्ततया व्युत्पत्तिः पटशब्दस्य द्वितीयान्ततया द्वितीयान्तघटपदश्रवणे घटपदनिष्ठद्वितीयाया अननुभूतत्वात् कथं स्मृतिरतोऽपूर्वविषयत्वान्न स्मृतित्वं शब्दस्येति भावः। एवमुपोद्घातं परिसमाप्य वाक्यलक्षणमाह। पदेति। अर्थसंसर्गवारणार्थं पदपदम्। घटः कर्मत्वमान-

णिकपदव्यवहारविषयः पदम् । तस्य सुप्तिङन्तत्वादिकल्पनयापि व्यक्तिः क्रियते । अत एव ह्यन्यथान्यथा प्रकृतिप्रत्ययादिकं व्याकरणान्तरेषु कल्प्यते । तच्च न साङ्केतिकम् सङ्केतयितृपुरुषासम्भवात् । अत एव न भाषान्तरवत्तत्क्लृप्तिः नित्यवेदगतत्वाच्च । यानि वैदिकानि पदानि तान्येव लौकिकानीति "वेदशब्देभ्य एवादा"वित्यादिवचनादपि सिद्धम् । भाषाछन्दसोस्तु कतिपयशब्दानां लक्षणभेदस्तत्तदानुपूर्वीमातिनिमापेक्षः ।

भाषाप्रयुक्तः सर्वोऽपि वेदे क्वापि प्रयोगवान् ।

वेदैकनियतः शब्दो नान्यत्रेति व्यवस्थितिः ।

उक्तं चैतद्वेदार्थसंग्रहेऽपि "वैदिका एव हि सर्वे वाचकाः शब्दाश्चे"त्यादिना । वाक्यं द्विधा । पौरुषेयापौरुषेयभेदात् । पुरुषस्वातन्त्र्याधीनरचनाविशेषाविशिष्टं पौरुषेयम् । तद्द्विधा । अन्वितार्थमनन्वितार्थं च । आद्यं यथा अग्निरुष्णः आपो द्रवा इति । द्वितीयं यथा अग्निरनुष्णः आपः कठिना इति । अत्रैकदेशिनो वदन्ति । अनन्वयाग्रहादन्वितव्यवहारः क्वचिज्जायत इति । अत एव लौकिकवाक्ये दृष्टव्यभिचारस्य न झटिति वाक्याद् वाक्यार्थाध्यवसायः । योग्यताविमर्शसाका-

---

यनं कृतिरित्यत्रापि संसर्गस्तिष्ठतीति तद्व्यावृत्त्यर्थं विशेष इति । संसर्गविशेषविशिष्टपदसमूह इत्यर्थः । विशेष आकांक्षादिरिति ध्येयम् । ननु किमिदं पदंनाम यत्संसर्गविशेषो वाक्यम् । न तावद्वर्णसमूहः कपटादीनामपि पदत्वापत्तेः । एकवर्णात्मकानां अः विष्णुः इः काम इत्यादीनां पदत्वानापत्तेश्च नापि सुबन्तत्वंतिङन्तेष्वभावात् । नापितिङंतत्वंसुबंते ष्वभावात् नापि विभक्तिमत्त्वम् ।

---

(१) इतः परमियं टीका नोपलभ्यते ।

ङ्गत्वात् । सामान्ययोग्यताग्रहणेऽपि व्यक्तियोग्यताया वक्तृज्ञानानुमानमन्तरेणासिद्धेरिति प्रमेयसंग्रहादिषु समर्थितम् । तथा सन्मात्रग्राहिप्रत्यक्षनिराकरणाय शास्त्रस्यानुवादकत्वप्रसङ्गे विवरणकारैरुक्तम् । अबुद्धबोधनस्वरसस्य शब्दस्यातथात्वं दोष इत्यभिसन्धिः। अथवानुवादकत्वमेव स्यात् । नहि मानान्तरप्रतीतेऽर्थे शब्दः प्रमाणम् । तथैव हि तस्य व्युत्पत्तिरित्युक्त्वा नन्वनुवादकतयैवव्युत्पत्तिः पुंवाक्येष्वित्यादिना वक्तृज्ञानानुमानमुपपाद्य सत्यं दैवात् तदनुवादकत्वमिति नाबुद्धबोधनस्वारस्यभङ्गप्रसङ्गः । यथा स्मृत्यनुमितवेदस्यानुवादकत्वेऽप्यर्थादिति न मानताभङ्ग इत्यादि । उक्तं च प्रज्ञापरित्राणे ।

पौरुषेयगिरः शङ्काग्रस्ता न सहसा मितिम् ।
जनयन्ति न यावत्तन्मूलमानानवग्रहः ॥
अनुमाय च वक्तुस्तन्मूलयोग्यप्रमान्तरम् ।
तदुक्तवाक्यलिङ्गेन वाक्यार्थमनुजानते ॥
अन्वितार्थाभिधानाय योग्यं वाक्यमिदं सदा ।
असौ च नानृतं वक्ति संज्ञात्वार्थं तदब्रवीत् ॥
वक्तृज्ञानानुमानेन ज्ञाताज्ञातस्ववाक्यतः ।
अन्विताथाभिधायित्वयोग्यतामात्रधीर्गिराम् ॥
परामर्श इति प्रोक्तो नार्थसंसर्गगोचरः ।
मानान्तराविरोधित्वं योग्यतेत्यभिधीयते ॥
नन्वेवं लौकिकं वाक्यं लिङ्गं चेल्लिङ्गवत्ततः ।
शब्दो गृहीतसम्बन्धात्तद्वदस्यापि लिङ्गता ॥
व्युत्पत्तिकाले व्युत्पित्सोर्लिङ्गधीर्नास्त्यसंशयात् ।
यथाव्युत्पत्तिशब्दास्तु बोधका इति चेदतः ।

स्वत एवार्थबोधः स्यादिति नैवास्य लिङ्गता इत्यादि ।

भगवद्यामुनमुनिभिस्त्वागमप्रामाण्ये वक्तृज्ञानानुमानं दूषितम् निगमितं च ।

तस्मादस्ति नदीतीरे फलमित्येवमादिषु ।

या सिद्धविषया बुद्धिः सा शाब्दी नानुमानिकी इति ।

अयमेव पक्षोऽनुसृतो वरदविष्णुमिश्रैः । तत्त्वरत्नाकरेप्यागमप्रामाण्यग्रन्थोपादानपूर्वकं प्रपाञ्चितमेतत् । अपौरुषेयं तु सर्वमन्वितार्थमेव । किन्त्वादित्यो यूप इत्यादिषूपचारतो निर्वाहः। आकाङ्क्षासत्तियोग्यतावन्ति हि पदान्यन्वितमभिदधति अन्वये वा विश्राम्यन्ति । आदित्ययूपपदयोः प्रत्यक्षसिद्धस्वार्थभेदयोरयोग्यतया मुख्यवृत्तिपरित्यागः । वृत्तिर्द्विधा । अभिधोपचारभेदात् । व्युत्पत्तिसिद्धार्थ एव वृत्तिरभिधा । यथा सिंहशब्दस्य मृगेन्द्रे । सा जातिगुणादिविषयभेदात् योगरूढितत्समुच्चयभेदाच्च बहुविधा । मुख्यार्थबाधे सति तदासन्ने वृत्तिरुपचारः । आसत्तिश्च द्विविधा । मुख्यार्थसम्बन्धस्तद्गुणसम्बन्धश्चेति । तत्र पूर्वेण प्रवृत्तिर्लक्षणा । यथा गङ्गायां घोषः प्रतिवसतीत्यत्र गङ्गाशब्दस्य प्रवाहविशेषरूपवाच्यसम्बन्धिनि तीरे । एवं लक्षितलक्षणा ग्राह्या । द्वितीयेन प्रवृत्ति गौणी । यथा सिंहो देवदत्त इत्यत्र सिंहशब्दस्य शौर्यादिगुणयोगिनि देवदत्ते । तत्त्वरत्नाकरे त्वेवमुक्तम् ।

अभिधानाभिधेयत्वमतः शब्दार्थयोः स्थितम् ।
सम्बन्धोऽत्राभिधा द्वेधा बोध्या मुख्यजघन्यतः ॥
अभिधार्थावगत्यात्मा शब्दं व्यापारयिष्यतः ।
शब्दशक्तिनिमित्ता सा स्वार्थे मुख्याभिधयिते ॥

स्वार्थाभिधानद्वारा स्याज्जघन्यार्थान्तरे मता इति ।

तद्विस्तरस्तत्रैव द्रष्टव्यः । नच गौणलाक्षणिकप्रयोगयोरवाच्यविषयत्वादवाच्यत्वम् । संबन्धसादृश्यमूलमात्रप्रवृत्तेरप्यनादित्वात् । तत एव विवक्षास्थले यथौचित्यं प्रयोगोपपत्तेः । एताः सर्वा अपि वृत्तयो ऽन्विताभिधानवृत्त्यन्तर्भूताः । पृथक्पदानां स्मारकत्वमेव । अभिहितान्वये हि पदानां पदार्थे पदार्थानां वाक्यार्थे पदानां च तत्रेति शक्तित्रयकल्पनागौरवं स्यात् वाक्यार्थस्याशाब्दत्वप्रसङ्गो वा । पदार्थे लक्षणसमाप्तेः प्रमाणप्रसङ्गश्च । न चान्विताभिधाने अन्योऽन्याश्रयणं मिथः स्मरणमात्रोपजीवनात् । यथाहुः

पदजातं स्मृतं सर्वं स्मारितानन्विताथकम् ।
न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् इति
नापि पौनरुक्त्यादिदोषः तत्तदंशप्रतिनियतशक्तित्वात्
नापि वाक्यभेदः । एकप्रधानतया स्वार्थाभिधानात् ।

पदार्थ एव वाक्यार्थ संसृष्टो ह्यभिधीय इत्युक्तम् । तथा "नाना शब्दादिभेदादि"त्यधिकरणे यद्यपि वेदोपासीतेत्यादयः शब्दाः प्रत्ययावृत्तिवाचकाः प्रत्ययाश्च ब्रह्मैकविषयास्तथापि तत्तत्प्रकरणोदितजगत्कारणत्वापहतपाप्मत्वादिविशेषणविशिष्टब्रह्मविषयप्रत्ययावृत्त्यभिधायिनः प्रत्ययावृत्तिरूपा विद्या भिन्दन्तीति । वेदार्थसंग्रहेऽपि शोधकेष्वपि सत्यं ज्ञानमनन्तं ब्रह्म आनन्दो ब्रह्मेत्यादिषु सामानाधिकरण्यव्युत्पत्तिसिद्धानेकगुणविशिष्टैकार्थाभिधानमविरुद्धमिति सर्वविशिष्टं ब्रह्मैवाभिधीयत इति । अत्रैवापूर्वभङ्गे समभिव्याहृतपदार्थान्तरवाच्यान्वययोग्यमेवेतरपदप्रतिपाद्यमित्यन्विताभिधायिपदसंघातरूपवाक्यश्रवणसमन्तरमेव प्रतीयते । तच्च स्वर्गसाधनरूपम् । अतः क्रियावदनन्यार्थता

विरोधादेव परित्यक्तेति । एषां स्वारस्यमन्विताभिधाने । नचात्र पराभ्युपगमेनोक्तमिति ज्ञापकमस्ति । वरदविष्णुमिश्रैरपि सत्यज्ञानादिपदानामखण्डैकरसार्थत्वेऽन्विताभिधानानुपपत्तेश्चेत्यादिषु बहुषु प्रदेशेषु अन्विताभिधानमेव मायावादिनं प्रत्युक्तम् । उक्तं चागमप्रामाण्ये ।

अन्यान्विताभिधानेऽपि व्यवहारोपपत्तितः
अवश्याश्रयणीयेयमन्वितार्थाभिधायिता इत्यारभ्य—
तस्मादाकाङ्क्षितासन्नयोग्यार्थान्तरसंगते ।
स्वार्थे पदानां व्युत्पत्तिरास्थेया सर्ववादिभिः इति
तत्त्वरत्नाकरेऽपि
अवश्याश्रयणीयेयमन्वितार्थाभिधायिता ।
इत्याहुर्यामुनाचार्याः पदैरेवान्विताभिधाम् ॥
इत्यारभ्य प्रपञ्चेनोपपाद्योपसंहृतम् ।
षड्भिः प्रतीतिप्रमुखोपपत्तिभि
र्निर्धूतचोद्याभिरिहान्विताभिधा ।
सिद्धा पदैर्नाभिहितान्वयस्थिति
र्विपर्ययादित्यखिलं समंजसम् इति
प्रज्ञापरित्राणन्यायसुदर्शनयोश्च बहुश उक्तम् ।
अन्वितार्थाभिधायित्वं शब्दशक्तिनिबन्धनम् ।
व्युत्पत्त्यवगतं पुंधीदोषतोऽस्य विपर्यय इत्यादिना ।

नन्वभिहितान्वयद्योतकान्यपि वाक्यानि विद्यन्ते । वेदार्थसंग्रहे तावत् । एवं बोधकानां पदसंघातानां संसर्गविशेषबोधनेन वाक्यशब्दाभिधेयानामुच्चारणक्रमो यत्र पुरुषबुद्धिपूर्वक इत्याद्युक्तम् । तथा तत्रैव प्रकृतिप्रत्ययरूपेण पदस्यैवानेकविशेषणगर्भत्वात् अनेकपदार्थसंसर्गबोधकत्वाच्च वाक्यस्य इति । भाष्येऽपि

शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यं पदवाक्यरूपेण प्रवृत्तेः । प्रकृतिप्रत्यययोगेन हि पदत्वं प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम् । पदभेदश्चार्थभेदनिबन्धनः पदसंघातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेनेत्याद्युक्तम् । एवं व्युत्पत्तिनिरूपणे वेदार्थसंग्रहेऽपि । सिद्धवस्तुषु शब्दस्य बोधकत्वशक्तिग्रहणमत्यन्तसुकरमित्युपक्रम्यापवरके दण्डास्थित इति वाक्ये यादृच्छिकव्युत्पत्तिप्रकारमुपपाद्य तथा बालस्तातोऽयमातैषेत्यादिना बुद्धिपूर्वव्युत्पादनेन तत्तत्पदानां तत्तत्पदार्थेष्वेव बोधकत्वशक्तिग्रहणमुपपाद्य पुनरप्यस्य शब्दस्यायमर्थ इति पूर्ववृद्धैः शिक्षित इत्यादि चोक्त्वा एवमेव सर्वपदानां स्वार्थाभिधायित्वं संघातविशेषाणाञ्च यथावस्थितसंसर्गविशिष्टवाचित्वं च जानातीत्याद्युक्तम् । भाष्येऽपि प्रथमसूत्रपूर्वपक्षनिराकरणे । एवं किल लौकिकाः शब्दार्थसम्बन्धमवधारयन्ति । मातापितृप्रभृतिभिरम्बाताततमातुलादीनित्यादिना पदव्युत्पत्तिः पूर्वमुपपादिता । तत्र च तेषु तेष्वर्थेषु तेषां शब्दानां प्रयोगो बोधकत्वनिबन्धन इति निश्चिन्वन्ति इत्याद्युक्तम् । पुनश्च व्युत्पन्नेतरशब्देष्वस्य शब्दस्यायमर्थ इति पूर्ववृद्धैः शिक्षिता इत्यादि । यदि नामान्विताभिधानमभिमतं तदा कथमिव पदमात्रे व्युत्पत्तिः स्यात् । यदि च सा स्यात् कथमन्वितमभिधेयं व्युत्पत्तिवैपरीत्यप्रसङ्गात् । तस्मान्नान्विताभिधानमेव सिद्धान्त इति निर्णेतुं शक्यमिति केचित् । अन्ये तु बोधकानामित्यादिवाक्यमन्विते संसर्गविशेषसिद्धेरुपपद्यते । पदवाक्यभेदाभिधानमपि तत्तद्विशेषवैशिष्ट्यप्रदर्शनमात्रार्थं पराभ्युपगमद्योतनार्थं वा प्रत्येकपदव्युत्पत्त्यभिधानमप्यान्वितार्थबोधनोपयुक्तासाधारणद्वारप्रकाशनमात्रम् । पदार्थं स्मार-

यित्वैव हि पदानि वाक्यार्थं बोधयन्तीत्युक्तम् । स्मृतेश्च स्वानुभूतिमूलत्वान्न शक्त्यन्तरक्लृप्तिः । व्याख्यातं च भाष्यादिकमन्वितपरतया विवरणे श्रीराममिश्रैः । तथा षडर्थसंक्षेपेऽपि शब्दश्च स्वतः शक्यमन्विततया बोधयति । असम्भवेऽर्थान्तरमिति हि व्युत्पत्तिरित्याद्युक्तम् । अतोऽन्विताभिधानं सिद्धान्त इति । एवमन्विताभिधानसामर्थ्यात् विशिष्टप्रतिपत्त्यन्यथानुपपत्तेश्च पदानामपि विशिष्टार्थाभिधायित्वं सिद्धम् । अत एव विशिष्टार्थाभिधायित्वेऽपि विशेषणमात्रे शक्तिरित्यपि निरस्तम् । अभिधायित्वातिरिक्तशक्त्यन्तराभावात् । अपर्यवसानवचनमपि विशिष्टार्थबोधनशक्तस्य विशेषणमात्रे स्थातुमशक्तत्वात् । विशिष्टानुप्रविष्टं हि विशेषणम् परोपरञ्जकत्वेषमेवेति तादृगाकारो विशेष्यग्रहणमन्तरेण दुर्ग्रहः । तावता च तदर्थं विशेष्यग्रहणमिति व्यर्थं वचः । यथाप्रतीतिव्यवस्थापनस्यैव युक्तत्वात् । किञ्च ।

गवादिशब्दाभिहितगोत्वाद्यर्थस्वभावतः ।
व्यक्तधीर्यदि तद्वत्स्यात् निष्कर्षकपदेष्वपि ॥
गवादिशब्दा जात्यादीन् परतन्त्रान् प्रचक्षते ।
तेनाश्रयप्रतीतिश्चेत्तन्न सिद्धं समीहितम् ॥
परं कथमविज्ञाप्य पारतन्त्र्यस्य बोधनम् ।
विज्ञाप्य यदि शब्दस्य तत्र शक्तिर्न किं भवेत् ॥
परस्य परतन्त्रेण तथा बुद्धेन बोधनम् ।
तद्बुद्ध्या परतन्त्रस्य बोधनेऽन्योऽन्यसंश्रयः ॥
परधीनिरपेक्षं चेत्पारतन्त्र्यं प्रतीयते ।
न तेन परबुद्धिः स्यान्निष्कृष्टप्रतिपत्तिवत् ॥
पारतन्त्र्यं स्वरूपं चेत् तुल्यं निष्कर्षकेऽपि तत् ।
अधिकं धर्मिनिष्ठत्वादन्यन्नोपलभामहे ॥

पदान्तरपरामर्शनिरपेक्षप्रतीतिके ।
निरूढलक्षणावादाः पर्य्यायावृत्तिगोचराः ॥
व्यक्तेर्गौरित्यनिष्कर्षान्निष्कर्षे त्वाद्यपेक्षणात् ।
निष्कर्षकेऽत्रदृष्टेश्च न जात्या व्यक्तिलक्षणा ॥
आकृतावेव यः शक्तिं शब्दानामभिमन्यते ।
सत्तायामेव किं तेन सर्वेषां नाभ्युपेयते ॥
अतो गवादिशब्देभ्यो विशिष्टविषया मितिः ।
शब्दशक्तिप्रसूतेति बलादभ्युपगम्यताम् ॥

यत्तु न लोकव्युत्पत्तिहानिस्तत्रैव शक्तेरिति षडर्थसंक्षेपे श्रीराममिश्रैरुक्तम् तदपि तत्र शक्त्यभावप्रतिक्षेपपरम् । असमाप्तधीस्तु वेदान्ताश्रुतेर्भ्रमः । आपातव्युत्पत्त्या श्रुतेस्तत्पूर्तिरित्यनन्तरमभिधानात् । यच्चात्मसिद्धौ यथा गवादिपदशक्तिरेकबुद्धिसिद्धेऽपि सामान्यविशेषात्मके वस्तुनि सामान्यांशेन संबध्यत इति । तदपि पराभ्युपगतोदाहरणमन्यार्थम् । यथेति परसंप्रतिपन्ननिदर्शनात् ।

गुणवाचिन्यपि पदे जातिशब्दोक्तनीतितः ।
अपृथक्सिद्धवाचित्वान्न युक्ता गुणिलक्षणा ॥
स्वरलिङ्गविशेषोत्थामन्त्रलोपे न संस्क्रिया ।
विशिष्टवाचकत्वं तु तदायत्तं न मन्महे ॥

अतो निष्कर्षकशब्दातिरिक्तानामपृथक्सिद्धविशेषणवाचिनां विशेष्यपर्यवसानव्युत्पत्तेः शरीरवाचिनां देवादिशब्दानामपि यथाप्रयोगं शरीरिपर्य्यवसानं सिद्धम् । अत एव चात्मपृथिव्यादिशब्दानामीश्वरपर्यन्तता । तेन सर्वं खल्विदं ब्रह्म योर्तींषि विष्णुः अयमात्मा ब्रह्म तत्त्वमसीत्यादिसामानाधिकरण्यं तत्तत्प्रकारकब्रह्मपरम् । नामरूपव्याकरणं च तदनुप-

वेशात् । अत एव च तस्य सर्वशब्दवाच्यत्वमपि श्रूयते । तदेव च व्यज्यते । तदनुप्रविश्य सच्च त्यच्चाभवदिति । स्मृतिरपि सर्वं समाप्नोषि ततोऽसि सर्व इति । सूत्रितं च "चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वा"दिति । उक्तं च वरदाविष्णुमिश्रैः स्वर्गकामशब्देन काम्यमानस्वर्गः पुरुषोऽभिधीयते। नहीश्वरो ऽवाप्तसमस्तकामः स्वर्गं कामयते तस्यात्यल्पसुखत्वात् । अतो वाच्यैकदेशे जीवे लक्षणा गङ्गाशब्दस्य तीर इवेति । यद्वा स्वर्गकामादिशब्दानामपि जीवादिमात्रेऽपि मुख्यत्वमेव प्रवृत्तिनिमित्तापरित्यागात् । अत एव हि भाक्तपदस्य भक्त्या व्यपदेशार्थत्वमपि भाष्यकारैरुक्तम् । विशिष्टवेषस्य शक्तिविषयत्वात् तत्त्यागे कथं न लक्षणेति चेत् अपरित्यक्तप्रवृत्तिनिमित्तस्य व्युत्पत्त्यनुप्रविष्टमात्रबोधनं मुख्यता तदभावकृत उपचार इति व्यवस्थानात् । ननु तत्त्वमसीत्यत्र त्वमिति श्वेतकेतुमात्रनिर्देशे तदसीति सामानाधिकरण्यायोगः । श्वेतकेतुशरीरकेश्वरनिर्देशे तदाभिमुख्येनोपदेशायोगः । तदुद्देशेन त्वमर्थाविधानं चासिशब्दानन्वयादिना दूरनिरस्तम् । प्राप्तार्थतया निगमनरूपत्वेऽपि विशेषणविशेष्यभेदो निष्कर्षणीयः । एवमहं ब्रह्मास्मि इत्यादिव्यपदेशोऽपि दुर्निर्वहः । तथानेन जीवेनात्मनेत्यत्राप्यात्मशब्देन जीवात्माद्यभिधानं भाष्यकारवचनविरुद्धं जीवेन मयेत्यादिव्यपदेशात् । परमात्माभिधाने तु तृतीयानुपपत्तिः । व्याकरवाणीत्यभिहितत्वात् । क्रियाभेदेऽपि क्त्वादेरुत्तरक्रियैकरस्यात् कर्त्रन्तरायुक्तिः समानकर्तृकत्वविरोधात् करणत्वविवक्षया कर्तरि तृतीयायां मुख्यत्वहानिः । अतश्चारेणानुप्रविश्य परबलं संकलयानीति वज्जीवस्यैव प्रविशतिकर्तृत्वं परस्तु व्याकरणमात्रकर्ता । तावता

तु शब्दानां न तत्पर्यन्तत्वसिद्धिरिति । अत्रोच्यते । सम्बुद्धिस्तावदत्रात्मविद्योपदेशेन श्वेतकेतुमात्रपर्यवसितेति नासंबोध्यसंबोधनम् । वचनव्यक्तिश्च तदसीत्येव । तत्र कार्यकारणभावेन शरीरात्मभावेन वा सामानाधिकरण्यनिर्वाहः । उभयत्र त्वंशब्दस्यापि तच्छब्दाभिहितद्रव्यपर्यवसानं सिद्धम् ।

धर्मान्तरविशेष्यस्य धर्मान्तरविशेष्यतः ।
स्वस्मादभेदस्तादात्म्यं स्यादुपादानदेहिनोः ॥

अतस्त्वच्छरीरकं ब्रह्मेति विवक्षायां सत्यां त्वं तदिति निर्देशमात्रमुपपन्नम् । मध्यमपुरुषश्च त्वंशब्दप्रयोगनिबन्धनः पर्यवसितः । "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः" इति विधानात् । अतः सोऽपि त्वंशब्दपर्यवसानविषयपर्यवसितः । यद्वा तत्त्वमसीत्येवान्वयोऽस्तु न चोद्देश्यानुगुणा तिङ्विभक्तिरिति नियमः । उपादेयानुगुणलिङ्गवचनादिनिर्देशवदत्रापि विरोधाभावात् । प्रयुञ्जते च पतञ्जलिप्रभृतय उपादेयानुगुणामपि तिङ्विभक्तिम् "स पुनरावृत्तः सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवत" इत्यादिषु । एतेनाहं ब्रह्मास्मीत्यादिकमपि निर्व्यूढम् । जीवेनात्मनेत्यत्राप्यनेनैव न्यायेन स्वशब्दपर्यायेणात्मशब्देन जीवशब्दस्य सामानाधिकरण्यं तावत्सिद्धम् । तृतीयानुपपत्तिस्तु स्वरूपतादात्म्यपक्षे पृथक्त्वपक्षे च समाना । अथांशभेदादिना विभज्य करणत्वादिविवक्षया कथं चिन्निर्वाहः तथा विशिष्टाकारादिभेदविवक्षया विभज्यात्रापि निर्वाहमनुमन्येथाः ।

अतः श्रुत्यादिवाक्येषु विरुद्धार्थानुबन्धिनः ।
सामानाधिकरण्यस्य न स्वरूपैक्यनिष्ठता ॥

कार्यत्वादपृथक्सिद्धेः प्रवेशादनुकारतः ।
अस्ति सृष्ट्युपकारादेः सामानाधिकरण्यधीः ॥

न च त्वदुद्दिष्टः पुरुषः स्थाणुरितिवत् पुरुष एवेदं सर्वं तत्त्वमसीत्यादौ बाधार्थं सामानाधिकरण्यमिति वाच्यम् । मुख्यवृत्तिसम्भवे तदयोगात् । प्रपञ्चसत्यत्वादेश्चाबाधितप्रत्यक्षादिबलसिद्धत्वात् । चिदंशसामानाधिकरण्यं तु न बाधसहं त्वयापि तत्सत्यत्वाभ्युपगमात् । स्वरूपैक्यविधाने च विरुद्धधर्मप्रतिरोधात् । तत्परित्यागे च पदयोरनतिरिक्तार्थतया पर्यायपदसामानाधिकरण्यप्रसङ्गात् । द्वाराभावेन मुख्यवृत्तिबाधापत्तेः गत्यन्तरे च सम्भवति तदयोगात् स्वरूपमात्रनिर्देशे च पदान्तरवैयर्थ्यात् । स्वरूपभेदस्य च बहुप्रमाणसिद्धत्वात् । सत्यं ज्ञानमित्यादिलक्षणवाक्यमपि सत्यत्वादिविशिष्टैकविषयं तथैव सामानाधिकरण्यव्युत्पत्तेः । न चात्र विशेषणभेदाद्विशेष्यभेदप्रसङ्गः विरुद्धविशेषणाभावात् । नहि घटपटादिष्विव विरोधः । यथा च प्रत्यक्षे नीलत्वोत्पलत्वादेरविरोधो दर्शनबलात् तथात्रापि । नच सत्यत्वज्ञानत्वादेर्वैयधिकरण्यं नियमेन दृष्टं येन विरोधः स्यात् । विशेष्यैक्यपरे तु सामानाधिकरण्ये विशेषणानां विशेषणविशेष्ययोश्च मिथो भेदो गुण एव । नच विशेष्यैक्यवद्विशेषणविशेष्यैक्यप्रसक्तिः विशेषणानामैक्यप्रसक्तिर्वा लक्षणाविरोधादिदोषात् अतथा व्युत्पत्तेश्च । नापि विशिष्टे विशिष्टान्तरविधानाद्विशेषणानां मिथः समवायादिदोषः युगपदनेकविशिष्टैकाभिधानात् । अनूद्य विधानेष्वपि यथाव्युत्पत्तिधर्मिप्रधानत्वाच्च । नच विशेषणं सर्वं विशेषणान्तरासहं विरोधिमात्रविरोधित्वात् । अन्यथा प्रत्यक्षविरोधात् । साध्यसाधकधर्मादिविशिष्टविषयानुमानाद्यनुदयप्रसङ्गात् । एवंत्वा-

दिदं विशिष्टबोधकं न भवति इत्यादिव्यवहारस्यापि विलोपः स्यात् । नच शब्देन प्रतिपादने तथा अविशेषात् प्रत्यक्षादिवच्छब्देनापि यथावस्तु बोधनीयत्वात् । विशेषणमात्रपरत्वं तु नाभ्युपगतमेव । येन विशिष्टैक्यासिद्धिः स्यात् । यस्य तु विशेष्यमात्रपरत्वं तस्य पर्य्यायतुल्यत्वात् पदान्तरवैयर्थ्यलक्षणभङ्गलक्षणादिदोषः । प्रवृत्तिनिमित्तानां विशेषणानां त्यागात् विशेष्यमात्रस्य च द्वाररहितस्यालक्ष्यत्वात् । इतरव्यावृत्तीनां तूपलक्षणत्वे स्वरूपत्वे च पदान्तरवैयर्थ्यादिदोषः स एव । एवं तासां विशेषणत्वे पक्षान्तरवद्विशिष्टभेदादिदोषस्त्वदुक्त आपतेत् । न चेन्नान्यत्रापि । त्यक्तप्रवृत्तिनिमित्तस्य तद्विरोधिव्यावृत्त्यभिलाषस्त्वालोकमपहाय तिमिरनिराकरणवाञ्छा । विमतिपन्नं वाक्यमखण्डपरं समानाधिकरणवाक्यत्वात्, सोऽयं देवदत्त इति वाक्यवत् । यद्वा लक्षणवाक्यत्वात् प्रकृष्टप्रकाशश्चन्द्र इत्यादिवदिति चेन्न दृष्टान्तासिद्धेः । तत्तेदन्ताविशिष्टस्यैव देवदत्तस्य सोऽयमिति प्रतीतेः । युगपत्तयोर्व्याघात इतिचेन्न यौगपद्यस्यानभिधानादनाक्षेपाच्च । युगपत् प्रतिपत्तिस्तु न दोषः । अन्यथा प्रत्यभिज्ञाभङ्गे क्षणभङ्गनैरात्म्यद्रव्यापलापादिवादा विजयेरन् । तथाप्यतीतत्ववर्तमानत्वे कथमेकस्येति चेत् स्वप्रध्वंसकाले हि स्वयमतीतः स्यात् नचासौ प्रध्वस्तः वर्तमानत्वोपलम्भात् । अतीतोपाधिविशेषसम्बन्धितया हि तत्त्वं नत्वतीततया । कथमेकं पूर्वमपरं चेति चेन्न । प्रतिसम्बन्ध्युपाधिभेदेनोभयोपपत्तेः । अन्यथा क्षणस्यापि पूर्वापरमध्यवर्तिनः क्षोदप्रसङ्गात् । नहि तस्य पूर्वस्मादपि पूर्वत्वमेव उत्तरस्मादप्युत्तरत्वमेव वा । क्षुद्यतां क्षणोऽपीतिचेत् न सर्वापह्नवप्रसङ्गादिति तिष्ठत्वेतत् । द्वितीयोऽपि दृष्टान्तो विशिष्टपर एव । अन्यथा

व्यावृत्तप्रतीत्यनुदयप्रसङ्गात् प्रकृष्टत्वादिविशेषणवैयर्थ्याच्च एवं श्रुत्यन्तरादिबाधोऽप्यनुमानयोर्वक्तव्यः । पर्यायतुल्यत्वादिप्रसङ्गलक्षणप्रतिकूलतर्कश्च । तथा विप्रतिपन्नं वाक्यं विशिष्टपरम् आकांक्षायुक्तवाक्यत्वात् व्यधिकरणवाक्यवदिति । बाधकमनुमानमपि प्रतिपत्त्यनुरोधात् दृष्टान्तासिद्धेश्चास्य बलीयस्त्वम् । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति शाब्दैरेवोक्तम् । तत्र भिन्नप्रवृत्तिनिमित्तानामिति पर्यायव्यावृत्तिः । एकस्मिन्निति व्यधिकरणानां घटः पट इत्यादीनामनन्वितानां च व्यवच्छेदार्थम् । शब्दानामर्थ इति च व्यत्ययर्थमेव अर्थ इति विशेष्यस्य प्रधानतया वाच्यत्वसूचनार्थं वा । तेन व्यधिकरणवाक्येष्वेकप्रधानार्थे वृत्तिसम्भवेऽपि तस्य विशेष्यत्वाभावाद्व्यवच्छेद्यता । विशेष्यबोधनव्यापारो वृत्तिः प्रवृत्तिरिति च सामान्यतो विशेषतश्चात्रोच्यते । प्रकृष्टा हि वृत्तिः प्रवृत्तिः । प्रकर्षश्चात्र विशेष्यविषयतया । तत्र यदुपाधिका विशेष्ये शब्दवृत्तिः तत्प्रवृत्तिनिमित्तम् । भिन्नविशेषणद्वारेणैकविशेष्याभिधानं सामानाधिकरण्यमित्युक्तं भवति । ननु पौरुषेयं सर्वमन्वितार्थमिति प्रतिपादितं तन्नोपपद्यते । गुणवद्वक्तृप्रणीतस्यैव वाक्यस्य तथात्वदर्शनादितिचेन्न । स्वतः प्रामाण्यात् स्वरसतो हि सर्वं ज्ञानमबाधितव्यवहारजनकं दृश्यते । भेदाग्रहादिविशेषोपाधिकं हि क्वचित् बाध्यव्यवहारहेतुत्वम् । ततः स्वाभाविकमपि प्रामाण्यं प्रतिबन्धकेन दोषेण क्वचिदपहापितम् । यथाग्नेरौष्ण्यम् । तत्र तदंशापेक्षया प्रामाण्यमेव । गुणास्तु सम्भावितदोषस्थले दोषनिराकरणौपयिकाः प्रामाण्यस्य तैर्व्याप्त्यभावात् । नित्यसर्वज्ञवादिनां प्रमाणभूतं तज्ज्ञाने व्यभिचारात् । अप्रामाण्यस्य तु दोषाधीनत्वमव्यभिचारितान्वयव्यतिरेकासिद्धम् । अवस्तुनो ऽप्रामाण्यस्य

कथं हेतुसाध्यत्वमितिचेन्न संशयत्वविपर्ययत्वादिरूपस्य तस्या-वस्तुत्वाभावात् । भावान्तरातिरिक्तस्य चाभावस्यास्माभिर-नभ्युपगमात् अभ्युपगमेऽपि प्रध्वंसस्य मुद्गरादिसाध्यत्वदृष्टेः । तद्वत् प्रमापि सम्यङ् मिथ्याबोधसाधारणादतिरिक्तसहिता जाय-ते । कार्यत्वे सति तद्विशेषत्वात् । अप्रमावत् प्रामाण्यम् पर-रतो ज्ञायते अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यव-दितिचेत् तत्र प्रथमे कृत्स्नप्रमापक्षीकारे हेतोः स्वमते भागासि-द्धिः । ईश्वरप्रमाया नित्यत्वाभ्युपगमात् । अनीश्वरप्रमापक्षी-कारे यावदीश्वरासिद्धि व्यर्थं विशेषणम् । ईश्वरानुमानसमन-न्तरं प्रयोग इति चेन्न तस्य शास्त्रयोन्यधिकरणन्यायेनानुमातु-मशक्यत्वात् । तर्हि निर्विशेषणं प्रयोक्ष्यामह इति चेन्न स्वाभि-मतेश्वरप्रमयानैकान्त्यात् । अनभ्युपगतेश्वरैः सौगतादिभि-रेवं प्रयोगे कः परिहार इति चेन्न श्रुतिसिद्धनित्यप्रमासम-र्थनेन बाधस्य वानैकान्तिकत्वस्य च वक्तुं शक्यात् । श्रुति-सिद्धनित्यप्रमाव्यवच्छेदेन कार्यत्वविशेषणं सफलं स्यादितिचेत् तर्हि श्रुत्या तत्सिद्धिः श्रुतिप्रामाण्यनिर्णयमन्तरेण कथं स्यात् तत्प्रामाण्यं च नित्यनिर्दोषतयाभ्युपगम्यते चेत् । कथं तत्र परतः प्रामाण्योत्पत्तिः वक्तृगुणाधीनं वाक्यानां प्रामाण्यमिति हि वः सिद्धान्तः । निर्दोषतैव गुण इति तदधीनतया तत्र परतः प्रामा-ण्यमिति चेन्न प्रतिबन्धकाभावस्य परैः कारणत्वानभ्युपगमात् । अभ्युपगमे च तावन्मात्राधीनत्वेऽपि वेदापौरुषेयत्वनित्यत्वादे-रविरोधात् । वेदपौरुषेयत्वादिसिद्ध्यर्थं हि वः परतः प्रामाण्य-समर्थनारम्भः । तदपौरुषेयत्वादिसिद्ध्यर्थमेवचास्माभिः स्वतः प्रामाण्यं प्रतिपाद्यते । अथाप्तोक्ततया वेदप्रामाण्यादीश्वरासिद्धौ तत्प्रमाव्यवच्छेदाय विशेषणमितीष्यते तदपि न परतः प्रामा-

ण्ये निर्णीते वेदस्याप्तमूलप्रामाण्यसिद्धिः तत्सिद्धौ चेश्वरसिद्धिः तत्प्रमाण्यवच्छेदाय विशेषणम् सविशेषणश्चासौ हेतुः प्रामाण्यं परतः साधयेदिति चक्रकाश्रयप्रसङ्गात् । ईश्वरानुमानान्यथासिद्धिपरिहाराय च परतः प्रामाण्यं न्यायकुसुमाञ्जलौ समर्थ्यते । तत्रैव च कार्यत्वविशेषणं प्रयुज्यते । नचासिद्धिव्यवच्छेदाय विशेषणं युक्तं सिद्धत्वे तु परतः प्रामाण्यसमर्थनस्य न तदर्थतेति दुस्तरता । तथापि शब्दे प्रामाण्यं वक्तृगुणाधीनमिति चेन्न विशेषकाभावात् । दोषसम्भावनास्थले च तदपेक्षणाद्वेदस्य च निर्दोषत्वात् । दोषाभावाधीनत्वेऽपि परतः प्रामाण्यं सिद्धमिति चेन्न तदधीनत्वाभावात्तस्य विरोधनिवृत्तिमात्ररूपत्वात् । अस्तु वा तदधीनत्वं तथापि वेदे तु न दोषः । गुणमन्तरेण दोषाभावो न घटत इति चेत् । अनुष्णाशीतस्पर्शवदुभयनिवृत्तेरपि दर्शनादुपपत्तेश्च । भावान्तराभाववादिनो दोषाभावोऽपि गुण एवेति चेन्न । स्वाभावान्तरेणापि तन्निर्वाहात् । नहि तस्यापि शीताभाव उष्ण एव अनुष्णाशीते तदसिद्धेः । उभयसङ्ग्रहणेन हि शीताभावत्वम् । तद्वदत्रापि सगुणेष्वाप्तवाक्येषु वक्तृगुणरहितेषु वेदवाक्येषु च दोषाभावः समानः । ननु शब्दानां स्वतः प्रामाण्ये बुद्धादिवाक्यानामपि स्वतः प्रामाण्यं स्यात् । न स्यात् स्वतस्त्वस्योत्सर्गरूपत्वात् आपादितादितरत्र व्यवस्थानात् विरोधिविशेषे च तस्याननुप्रवेशात् । उक्तं चागमप्रामाण्ये ।

नैव शब्दे स्वतो दोषाः प्रामाण्यपरिपन्थिनः ।
सन्ति किन्तु स्वतस्तस्य प्रमाणत्वमितिस्थितिः ॥
वक्तुराशयदोषेण केषुचित् तदपोद्यते ।
अङ्गुल्यग्रेऽस्तिमातङ्ग यूथमित्येवमादिषु इति ।

किञ्च ।

नित्ये हेतुगुणापेक्षा वेदे नास्तीशबुद्धिवत् ।
हेत्वभावान्न दोषश्चेद्वक्त्रभावादिहापि नः ॥
अकारणं यथा ज्ञानं प्रमात्वमधिगच्छति ।
अकारणं तथा वाक्यं स्वतः प्रमितिकारणम् ॥
यदि हेतुगुणाभावादप्रामाण्यं प्रसज्ज्यते ।
तदेश्वरप्रमायामप्यनिवार्य्यमिदं तव ॥

अथैवं ब्रूषे कारणगुणदोषयोरभावे तत्प्रयोज्ययोः प्रामाण्याप्रामाण्ययोर्द्वयोरप्यसम्भवात् कोट्यन्तरायोगाच्च निःस्वभावत्वं वेदजन्यज्ञानानां स्यादिति इदमपि तुल्यमीश्वरज्ञाने । हेतुनिवृत्तिस्तत्कार्यं प्रामाण्यं निवर्तयेत् नतु नित्यमिति चेत् अप्रामाण्यहेतुनिवृत्तिरपि तथैव । अतो विरुद्धस्वभावयोग उभयपरित्यागान्निःस्वभावतैव वा स्यात् । एवमनीश्वरवादिनां सौगतादीनां शुद्धसंवित्सन्तानादिष्वधिपतिसहकार्यादिकारणतद्गुणादेरसम्भवात् स्वारसिकस्वात्मगोचरप्रामाण्यस्य चाभ्युपगमात् समाश्चर्चाः । यद्यपि पूर्वप्रत्ययस्य कारणत्वमिष्टं तथापि तस्यापवर्गदशास्थस्य गुणदोषादिरूपसमस्तसंस्कारप्रत्यस्तमयान्न तज्जन्यस्य गुणहेतुतेति । यच्च प्रामाण्यं परतो ज्ञायत इति प्रयुक्तं तत्र ज्ञानान्तरेण ज्ञानान्तरस्वभाववेदनाभ्युपगमात् सिद्धसाधनता । परत एवेति विवक्षायामीदृशं ज्ञानं प्रमेति लक्षणतः सर्वप्रमाणसंग्राहिणि ज्ञाने पारमेश्वरे च विज्ञाने तदसम्भवः । नहि ताभ्यां स्वप्रमात्वं न गृहीतं लक्षणाव्याप्तेकिञ्चिज्ज्ञत्वादिप्रसङ्गात् । ततोऽन्यत्र परत एवेति नियम इतिचेत्तदपि न तद्दृष्टान्तेनैव प्रतिप्रयोक्तुं शक्य-

त्वात् । विगीतं प्रामाण्यं स्वाधारेण ज्ञायते प्रामाण्यरूपत्वात् ईश्वरज्ञानादिप्रामाण्यवदिति । कथं तर्हीदं प्रमाणमप्रमाणं वेति संशयावकाश इति चेन्न विशेषतो गृहीतेष्वपि संशयोत्पत्तिदर्शनात् । भवति मुहुः शुक्तिकारजतमोहादन्धीकृतधियः कलधौतेऽपि तथोपलभ्यमाने यथोपलम्भमिदं रजतमेव वा पूर्ववच्छुक्तिरजतं वेति पुरतः । तथात्रापि गृह्यमाणेऽपि प्रामाण्ये किमिदं प्रमाणमेव सत्प्रमाणतयोपलभ्यते उत बाधात्पूर्वभ्रमवदप्रमाणं सदिति संशयो युक्तः । तथापि सन्देहसहेन किं स्वतो ग्रहणेन निश्चयस्तु पराधीन एवेति चेत् किमस्मदपेक्षया ग्रहणमग्रहणं वा नियन्तुं शक्यं सिद्धो हि ग्रहणप्रकारः परीक्षकैरनुसरणीयः । सिद्धिरेव स्वतः कथमिति चेदित्थं ज्ञानं स्वालम्बनं प्रकाशयत् स्वयमपि ज्ञानान्तरनिरपेक्षं प्रकाशत इति तावत् सर्ववेदान्तिनां संमतम् । अस्वयं प्रकाशवादेऽपि स्वग्राहिणानुव्यवसायेन प्रकाशमानो व्यवसायस्तावदसंशयात्मैव दृश्यते स्मृत्यप्रामाण्यवादेऽपि अपूर्वार्थगोचरतया स्मृतिविलक्षणश्च अविपर्ययात्मा चाबाधात्मा च बाधादेः पूर्वं तत्प्रसङ्गाभावात् । ततश्च यद्विषयतयायं व्यवसायः प्रथमं प्रतिभातः तद्विषयतयैव परः सहस्रपरिक्षोदात् पश्चादपि । अतो यत्तद्विषयत्वलक्षणं प्रामाण्यं पश्चात्तेनैव व्यवस्थाप्यते दादावेव गृहीतमिति स्वतः प्रामाण्यग्रहः । नन्वेवं संशयत्वादिलक्षणमप्रामाण्यमपि स्वयंप्रकाशेनानुव्यवसायेन वा प्रथममेव ग्रहीतुं शक्यं तथापि विपर्ययत्वलक्षणं न तथा गृह्यमाणवैपरीत्यस्य स्वेन स्वग्राहिणा वा प्रथममग्रहणात् । तस्मिन्नंशे च वैदिकानामविवादात् तत्रेममंशमादायैव चान्ततःस्वतः प्रामाण्यसमर्थनप्रवृत्तेः । तत्र दोषाभावादेवादावप्रामाण्यानुत्पत्तेः । तत एव चाप्रामाण्यप्रमि-

स्यसंभवात् । स्वत एव च प्रामाण्यप्रमितेरबाधाचेत्युच्यत इति ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ शब्दाध्याये प्रथममाह्निकम् ॥ ३ ॥ १ ॥



अथ पौरुषेयापौरुषेयविभाग एवानुपपन्नः सर्वस्यापि वाक्यस्य पौरुषयत्वे वाक्यत्वादिलिङ्गसद्भावात् । सर्वज्ञप्रणीता वेदाः वेदत्वादिति व्यतिरेकिसम्भवात् । "मन्त्रकृद्भ्यः तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः ऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्मात् यजुस्तस्मादजायत" इत्यादिश्रवणात् ।
प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते इत्यादि स्मृतेश्च ।
तथा "अधिकृत्य कृते ग्रन्थ" इति पाणिनिस्मृतिसिद्धार्थकाठककालापादिसमाख्याविशेषयोगात् कादाचित्ककथाविशेषसंदृष्टेरनित्ययोगात् तत्पूर्वोत्तरकालयोस्तदनन्वयापत्तेः। शब्दस्य च भूतगुणस्य नश्वरत्वादिति चेत्तन्न वाक्यत्वानुमानस्य विपक्षे बाधकाभावात्। अकारणकार्योत्पत्तिप्रसङ्ग इति चेन्न कार्यत्वस्यैव साध्यमानत्वात् । अकारणत्वमात्रस्य प्रसज्ज्यमानस्येष्टत्वात् । क्रमविशेषेणानुच्चार्यमाणानां वर्णानां कथं पदत्वं वाक्यत्वं वेतिचेन्न परकृतप्रबन्धपाठवदकर्तृभिरुच्चारणेऽपि तत्सिद्धेः । आदिममुच्चारणं कर्त्रभावे कथं स्यादिति चेन्न आदिमत्वस्यैवासिद्धेः । दर्शनानुगुण्येनाद्यत्ववदेव सर्वदा परतन्त्रोच्चारणस्यैवाभ्युपगन्तुमुचितत्वात् । ततश्च सर्वदोच्चारयितृपुरुषसापेक्षत्वेऽपि पूर्वपूर्वाधीतप्रकारस्यानुसरणादनादित्वसिद्धेः । अपौरुषेयत्वे घुणक्षताक्षरवत् बोधकत्वेऽप्यभिप्रायविरहादर्थपरत्वं न स्यादिति चेन्न

प्रतिपक्षे निर्बाधे चार्थे प्राधान्ये बोधकत्वस्यैव तात्पर्यरूपत्वा-त् । प्राधान्यादेर्लौकिकवाक्यवदाख्यातादिस्वभावादेव सिद्धेः अस्मदिष्टे च सेश्वरमीमांसापक्षे निरीश्वराभिप्रायसंभवात् ईश्वरः स्वयमेव ह्याह । श्रुतिः स्मृतिर्ममैवाज्ञे इति । तथा च भाष्यम् । स्वशासनाववबोधिशास्त्रमिति नित्यं श्रुत्यैव नियमयति पर इति नित्यापि सा तदाज्ञा । गीतादिरपि श्रुत्यर्थोपदेशरूपतया प्रवर्तते । साक्षात्तु श्रुतिस्तदादेशस्तदनुविधानाच्च स्मृतिरपि । अज्ञातकर्तृकत्वे गन्धर्वभाषितादिवदाप्तकर्तृकत्वनिश्चयाभावादप्रामाण्यशङ्का स्यादिति चेन्न दोषाभावनिश्चयादेव तन्निवृत्तेः । अनाप्तकर्तृकत्वशङ्कायां कथं दोषाभावनिश्चय इति चेन्न महाजनपरिग्रहादेवानाप्तकर्तृकत्वशङ्कोन्मूलनात् । बाह्यागमपरिग्रहवत् किं न स्यादिति चेन्न बहुजनपरिग्रहादिमात्रस्य महाजनपरिग्रहत्वेनाविवक्षितत्वात्तत्परिग्रहविशेषस्यैव विवक्षितत्वाच्च । तयोः को वा विशेष इति चेन्न हेतुदर्शनादर्शनाभ्यां विशेषात् । अनन्यगतिकैः स्वैररसिकैः सुखजीविकार्थिभिः कुहकवञ्चितैर्वा तत्परिग्रह इह तु न तथा तद्वैपरीत्यस्य सुप्रसिद्धत्वादिति । अपि च बाह्यागमप्रतिबन्दिः किं वेदप्रामाण्यमाप्तप्रामाण्यनिबन्धनमितीच्छद्भिर्वैशेषिकादिभिरुच्यते उत सौगताद्यनुमतप्रामाण्यमिच्छद्भिरुत परित्यक्ताशेषपारलौकिकागमैर्लोकायतिकैरिति । नाद्य ईश्वरकृतत्वेऽपि वेदस्यैवंविधपरिग्रहविशेषमन्तरेणाद्यतनैर्बाह्यागमेभ्यो विवेकस्य दुःशकत्वात् । सर्वज्ञप्रणीतत्वाद्यभिमानस्य तदनुमानप्रक्रियायाश्च सर्वत्र दुर्वारत्वात् । न द्वितीयः अभ्युपगतप्रामाण्ये स्वागमेऽपि प्रसङ्गात् । दृष्टफलसम्वादस्य विसंवादान्यथासिद्धेश्च सर्वत्र सप्रपञ्चत्वात् । अ-[illegible] स्वपक्षे दुर्वचत्वात् । अ-

एष न तृतीयः । प्रामाण्यस्य परोक्षप्रामाण्यस्य वाक्यप्रामाण्यस्य च स्थापितत्वेन वैदिकवाक्ये ह्यौत्सर्गिके प्रामाण्ये प्राप्ते निरुपाधिकप्रेक्षावदनन्तपुरुषपरिग्रहादेवानाप्तकर्तृकत्वशङ्कोन्मूलने च वक्तृदोषशङ्कानुत्थानाद्वचसि च स्वतः काचादिवद्दोषादर्शनात् । आप्तकर्तृकत्वाभावेऽप्यौत्सर्गिकं प्रामाण्यमनपोदितमिति । अत एव हि प्रेक्षावन्तश्श्रौतेषु बहुवित्तव्ययायाससाध्येषु निःशङ्कं प्रवर्तन्ते प्रतिषिद्धेषु च सुखकरेष्वपि विषसंसृष्टान्नभोजनादिवन्निवर्तन्ते । प्रयोगश्च । पारलौकिकी महाजनप्रवृत्तिः सफला प्रेक्षावत्प्रवृत्तित्वात् कृष्यादिप्रवृत्तिवत् नह्यनन्तैः प्रेक्षावद्भिरविसंवादेनाफलमनुष्ठीयते इति शङ्कितुं शक्यम् दुःखरूपफलदर्शनेन सिद्धसाधनतेति चेन्न अनभिप्रेतोपालम्भात् । प्रवृत्तिदुःखादधिकपुरुषार्थपर्यवसानस्य सिषाधयिषितत्वात् । तथापि लाभपूजाख्यातिरूपदृष्टप्रयोजनेनैव सार्थतेति चेत्तदप्यसत् । अतदुद्देशेन तेषां प्रवृत्तिदर्शनात् तदुद्देशेन प्रवृत्तेश्च दाम्भिकत्वेन शास्त्रैस्तन्निष्ठैश्च विगर्हणात् । ये तु तदुद्देशेन प्रवर्तन्ते तेऽप्यतदुद्देशेन प्रवृत्तानामनुकुर्वाणा एव ख्यात्यादि प्राप्नुवन्ति । अन्यथा ख्यातिलाभपूजादेर्निर्निमित्तत्वप्रसङ्गात् । नहि यत्किञ्चिदनेन कृतमिति मत्वा कश्चित् कृच्छ्रसम्पादितान् धनादीन् ददाति पूजयति गुणान् वारोप्य स्तौति । अपि तु कुतश्चित्प्रमाणात्सिद्धं प्रशस्ताचरणमभिमत्यैव । समरसामर्थ्यादिमूललाभपूजादिकमप्यन्ततोऽर्थशास्त्रादिमूलप्रशस्तवृत्तिप्रसूतम् । अतः सन्मर्यादाप्रवृत्तान् दानमानादिभिरभ्यर्चयन्तोऽप्यदृष्टबुद्ध्यैव प्रवर्तन्ते । जनरञ्जनार्थमेव दानादि, जनो दातरि मानयितरि च रज्यते । जनानुरागप्रभवाश्च सम्पद इति प्रसिद्धेरिति चेन्न प्रत्युपकाराद्यनर्हप्रव्रा-

जिततपस्विजनजडबधिरदीनानाथादिषु दानमानादिभिरनुरञ्जितेष्वपि तन्मूलदृष्टसंपत्प्रसङ्गाभावात् । अत एव हि नीतिनर्मसचिवेष्वेव तदर्थदानादिव्यवस्थापनम् । प्रतारणपरैर्वैदिकैः प्रतारितास्तान् पूजयन्तीति चेन्न किं ते स्वात्मानमपि प्रतारयन्ति ये नाम समस्तभोगविमुखा यावज्जीवमात्मानं परिक्लेशयन्ति। यैश्च पटुप्रज्ञाः सर्वे लोकाः प्रतारितास्ते कथं लोकोत्तरप्रज्ञेन त्वया प्रतारका इत्युन्नीताः । अन्धपरंपराकल्पस्तर्ह्ययमनुष्ठानप्रवाह इति चेन्न प्रमाणस्वरूपफलयोरबाधस्य च प्रत्यक्षसिद्धत्वात् । धर्मबुद्ध्यैव च निरुपाधिकपरिग्रहस्य त्वदुक्त्यैव सिद्धेः । अनादिनिधने ऽस्मिन् आम्नायमूलेऽनुष्ठाने प्रवहति प्रक्रियान्तरमाश्रित्य प्रतारकैरीश्वरैरर्वाचीनैश्च प्रतिच्छन्दप्रवर्तना श्रुतिस्मृतिसिद्धा युक्तिमती चेत्येषा दिक् । वेदानित्यत्वानुमानानां प्रतिप्रयोगाश्च । पूर्वापरकल्पा एतद्वेदसंदर्भपाठवन्तः कल्पत्वादद्यतनकल्पवत् । ऐश्वरं वेदप्रवर्तनमप्रच्युतप्राचीनसंदर्भम् आप्तकर्तृकवेदप्रवर्तनरूपत्वात् । अद्यतननिपुणोपाध्यायवेदप्रवर्तनवत् नचाश्रयाद्यसिद्धिःपौरुषेयत्वेऽपि प्रामाण्यमिच्छतस्तत एव तत्सिद्धेः । अप्रामाण्यमिच्छतोऽपि महाजनपरिग्रहान्यथानुपपत्त्यैव प्रामाण्यं प्रसाध्य तत एव तत्साधनात् । न चास्ति वेदप्रवर्तनस्य सारस्वतपाठेनानैकान्त्यं तथैव तत्प्रवाहस्य तत्तच्छाखाप्रणयनवदनादित्वात् मन्त्रब्राह्मणादिवाक्यस्वरूपवैयाकुलीविरहाच्चेति । एवं विपक्षे बाधकाभावादेव केवलव्यतिरेक्यपि निरस्तः । अनुमानाध्याये तस्य सामान्यतो दूषितत्वाच्च । त्वन्मतेऽप्यायुर्वेदादिसपक्षसद्भावेन तस्यासाधारण्यं नहि तेभ्यो व्यावृत्तमपौरुषेयत्वादिलक्षणं वेदत्वं त्वयाभ्युपगम्यते । वेदशब्दप्रयोगविषयतामात्रेण तेषामपि पक्षीकारे स्वे-

च्छागृहीतरूपस्येश्वरस्य तत्तदवतारसंव्यवहारा वेदव्यतिरिक्ताः सन्ति सपक्षाः । नच ते त्वयापि नेष्यन्ते वेदतया वा स्वीक्रियन्ते । गीतादिषु भगवदुक्त्यंशानां श्रीविष्णुस्मृतिप्रभृतीनां च वेदत्वानभ्युपगमात् । धर्मशास्त्रतयैव हि वैष्णवस्मृत्यादिप्रसिद्धिः । अकर्तृकसन्दर्भा वेदाः वेदत्वात् यः सकर्तृकसन्दर्भः नासौ वेद इति प्रतिहेतुश्च सिद्धः । अप्रसिद्धविशेषणत्वादिचोद्यं त्विह न त्वया स्मर्तव्यम् । सन्दर्भः कथमकर्तृकः स्यादिति चेन्न वर्णक्रमविशेषनियममात्रस्य सन्दर्भशब्देन ग्रहणात् तस्य च प्रागुक्तनयेन यथापूर्वप्रवर्तनमात्रेणापि व्यवस्थानात् । माभूदवीतहेतुः वीतस्तु स्यात् । विगीतं वाक्यं सर्वज्ञप्रणीतं प्रमाणत्वे सत्यलौकिकार्थविषयवाक्यत्वात् न त्वेवाहं जातुनासमित्यादि वाक्यवदिति चेन्न वेदार्थविषयैः कल्पसूत्रकारादिवाक्यैरस्मदादिवाक्यैरेव चानैकान्त्यात् । अजीवबवक्तृकत्वे सतीति विशेषयिष्याम इति चेन्न तथापि यथापूर्वप्रणयनमात्रेणापि तत्प्रणीतत्वसिद्धौ सिद्धसाधनत्वात् । यथा पूर्वमेवहि विश्वमीश्वरः सृजति यथाधीमहे "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति" एवं तर्हि तुल्ययोगक्षेमतया वेदवज्जगतोऽप्यकर्तृकत्वं प्रसक्तमिति चेन्न यथापूर्वं घटादिनिर्माणे कुलालकुविन्दादेः कर्तृत्वसिद्धेः हन्त वेदेऽप्येवं स्यादिति चेत् हन्त स्यादेव । नहि कल्पान्तरवर्णव्यक्तिसमुदायविशिष्टमेवेदानींतनवेदराशिं ब्रूमः । अपि तु तादृशक्रमयोगितामात्रम् । सर्वत्र वाक्येषु हि यथेष्टक्रमकल्पने पुरुषस्य स्वातन्त्र्योक्तिः न पुनर्यथापूर्वोच्चरण इति काव्यादिष्वपि प्रसिद्धम् । यदि त्वयाअयथापूर्वप्रणीतत्वं साध्येत तत्र यथापुरप्रणयने कमिव दोषमालोक्य एवं विशेषयसि । मन्त्रादिषु क्र-

मभङ्गानुपपत्तिश्च कल्पान्तरेऽपि तच्छक्त्यनपायादेव । तथात्वेऽपि वा यथापूर्वोच्चारणेऽपि तदनपायादन्यथा कल्पनागौरवादिति । तथापि सर्गप्रलयसम्भवात् सम्प्रदायविच्छेदे सर्ववेदोच्छेदात् पश्चादीश्वरस्तत्स्रष्टा स्यात् न स्यात्तथापि प्राचीनवेदसाक्षात्कारिणस्तस्य तत्प्रवर्तनमात्रौचित्यात्। शक्तस्यापि तज्जातीयवेदान्तरकल्पने गौरवात् । शक्तावपि सिद्धोपजीवनस्यास्मदादिषु दृष्टेः । एषामेव च मन्त्राणां कल्पान्तरेऽपि मन्त्रत्वाविरोधात् । एवं मन्त्रनित्यत्वे च तुल्यन्यायतया ब्राह्मणनित्यत्वस्यापि दुस्त्यजत्वात् तद्दृष्टान्तेन वा तन्नित्यत्वसाधनात् । सारस्वतपाठादावपि मन्त्रादिस्वरूपभेदाभावस्योक्तत्वात् ।

यो ब्रह्माणं विदधाति पूर्वं
यो वै वेदांश्च प्रहिणोति तस्मै ।

वाचा विरूपनित्यया पूर्वे पूर्वेभ्यो वच एतदूचुः । अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्मस्वयंभ्वभ्यानर्षत त ऋषयोऽभवन् तदृषीणामृषित्वम् ।

अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा ।

व्यस्य वेदं सनातनम् इत्यादिभिरीश्वरस्याप्यनीश्वरवदेव वेदप्रवर्तनमात्रसिद्धेः । कुतश्च सर्गप्रलयसिद्धिः । विश्वसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवत् । विश्वसन्तानोऽयं दृश्यसन्तानहीनैः समवायिभिरारब्धः सन्तानत्वादारणेयाग्निसन्तानवत् । वर्तमानब्रह्माण्डपरमाणवः पूर्वमुत्पादितसजातीयसन्तानान्तराः नित्यत्वे सति तदारम्भकत्वात् प्रदीपपरमाणुवत् । पर्वता अपि चूर्णीभविष्यन्ति अवयवित्वात् घटवत् । समुद्रा अपि शोषमुपयास्यन्ति जलाशयत्वात् पल्वलवत् इत्याद्यनुमानत इति चेन्न केषांचिन्नित्यसंसारपक्षे प्रथमस्य हेतोस्तथा तत्प्रतिपाद-

कैरागमैरंशतो बाधः । तद्बहिष्कारे चानैकान्तः सर्वेषां च श्रुतिशतसिद्धैर्नित्यविभूतिनिष्ठैरीश्वरनित्यविग्रहादिभिस्तैस्तैरनेकान्तः । न च तत्पक्षीकारः शक्यः बाधासिद्ध्योरन्यतरापातात् । प्रतिप्रयोगाश्च गणितविशेषादिसिद्धद्विपरार्धसंख्यापूर्वोत्तरकालो न लोकशून्यः कालत्वात् अद्यतनकालवत् इत्येवमादयःस्वयमूह्याः । विपक्षे च बाधकं न सम्यगुद्दृश्यते यच्चागमानुग्रह एषां बलमित्यभिमतम् तदागमप्रमाणत्वोपजीवनं तथा चागमत एव प्रलयादिसिद्धिः । ततश्चागमादेवागमनित्यत्वं सिद्धम् । उक्तं च प्रज्ञापरित्राणे ।

वेदतः पौरुषेयत्वशङ्का वेदे न शाम्यति ।
हेत्वन्तरसमुद्भूता हेत्वन्तरनिवारिता इति ॥

सर्गादौ वेदपरिग्रहप्रकारश्चैवमुपपादितः ।

व्यवहारिजनाभावाद्गिरां व्युत्पत्त्यसम्भवात् ।
वेदार्थो नैव शक्येत बोद्धुं तस्येति चेन्न तत् ॥
बहवः सम्भवन्त्येव शब्दार्थव्यवहारिणः ।
मुक्ताद्या ईशितुर्यद्वा बहुरूपपरिग्रहात् ॥
प्राच्यविज्ञानसंस्कारानुप्रवृत्त्या वास्य वेधसः ।
सर्वशब्दार्थविज्ञानं सुप्तोत्थितवदुद्भवेत् ॥
न गर्भवासस्तेषां न वयोऽवस्थादयोऽपि च ।
सर्वविज्ञानसंपन्नाः सृष्टास्त इति वेदधीः ॥
यो ब्रह्माणमिति श्रुत्या सृष्ट्वा ब्रह्माणमीश्वरः ।
अस्मै वेदानदत्तेति प्रतीतिर्न उदेति हि ॥
शब्दार्थवेदिने वेदप्रदानं सार्थकं भवेत् ।
अन्यथा व्यर्थमित्यर्थापत्त्या शब्दार्थवेदिता इति ।

सूक्तकाण्डमन्त्रकृत्त्वजन्मादिवाक्यानामपि प्रथमद्रष्टृत्वसमर्थ

त्व सम्प्रदायप्रवर्तनादिभिरेव निर्वाहः । इदमप्यागमानुरोधादेव सिद्धम् । स्वयंभूरभ्यानर्षदित्यादि हि श्रुतिः । प्रजापतिनियोगाच्च तदाहितमहिमानो महर्षयोऽनधीतानेव वेदभागान् पश्यन्ति । तन्नियोगश्च तत्तद्दृषिकत्वेनानुसन्धानादेः कर्मौपयिकत्वात् तेषामपि प्रवाहानादित्वान्नानित्ययोगादिदोषः । "यद्वै किंच-नमनुरवदत् तद्भेषजम्" इत्यादौ प्रवाहानादित्वं परैरुक्तम् तदुपाख्यानान्तरादिष्वपि तुल्यम् । उक्तं च भगवता व्यासेन ।

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा इति ।

इतिहासोऽत्र तत्तद्वृत्तान्तः । उक्तं च तेनैव धर्मशास्त्रेऽपि ।

धर्ममूलं वेदमाहुर्ग्रन्थराशिमकृत्रिमम् ।
तद्विदां स्मृतिशीले च साध्वाचारं मनः प्रियम् इति ॥

शाखाप्रणयनं च द्वापरान्ते भाविपुरुषशक्तिपरिक्षयाद्वेदस्यैकदेशोद्धरणम् । एतेन समाख्या निर्व्यूढा । प्रवचनविशेषविषयत्वात् ।

इदं च सर्वं प्रसाधितं प्रज्ञापरित्राणे

याहक्प्रभावाः श्रूयन्ते ऋष्याद्या वेदराशिषु ।
तादृशा एव सृज्यन्ते वेदान् द्रष्टुं स्वयंभुवा ॥
अतस्तेभ्यः पुरावेदसत्त्वाद्वेदस्य नित्यता ।
अनधीत्यैव वेदानामाविर्भावयितृत्वतः ॥
तपसा प्राप्य संस्कारात् तत्सूक्तत्वादिसम्भवः ।
तपःप्रभावान्मन्त्राणामृषिदर्शनसंस्कृतेः ॥
शक्तिराधीयते काचित् यथास्माकमधीतितः ।
अर्थावबोधकत्वं तु शब्दशक्त्यान्यशब्दवत् ॥
ऋषिदर्शनतोऽधीतेरपि शक्त्यन्तरोद्भवः ।

अपूर्वकार्यनिष्पत्तावुपकुर्यादिदं ततः ॥
काठकादिसमाख्याया निमित्तं चेदमेव वा।
प्रकृष्टं वा प्रवचनं तत्सिद्धा वेदानित्यता इति ॥

वर्णानित्यत्वं क्रमानित्यता वा नाभिमतवेदनित्यत्वविरोधि न च वर्णनित्यत्वं वेदानित्यताहेतुः काव्यादिष्वपि तुल्यत्वात्। शब्दाधिकरणं चानुपयुक्तवर्णानित्यत्वपरं नानुमन्यामहे। शारीरकदेवताधिकरणे च "शब्द इतिचेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्। अत एव च नित्यत्वम्। समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च" इति सूत्रैरिदं सर्वं समर्थितम्। वेदार्थसंग्रहे तु वेदाः प्रमाणं चेत् विध्यर्थवादमन्त्रगतं सर्वमपूर्वमर्थजातं यथावस्थितमेव बोधयन्ति। प्रामाण्यं च वेदानाम् "औत्पत्तिकस्तु शब्दस्यार्थेन संम्बन्धस्तस्य ज्ञानमुपदेश" इत्युक्तमिति मन्त्रार्थवादयोरपि याथार्थ्यं प्रकृत्य शब्दशक्तेरसांकेतिकत्वम्। तत एव शब्दानुमानाविवेकः पौरुषेयापौरुषेयादिविभागादिकं च व्यक्तं प्रदर्शितम्। तथाहि यथाग्निजलादीनामौष्ण्यादिशक्तियोगः स्वाभाविकः यथा चक्षुरादीनामिन्द्रियाणां बुद्धिजनकत्वशक्तिः स्वाभाविकी तथा शब्दस्यापि बोधकत्वशक्तिः स्वाभाविकी। नच हस्तचेष्टादिवत् संकेतमूलं शब्दस्य बोधकत्वमिति वक्तुं युक्तम्। अनाद्यनुसंधानाविच्छेदेऽपि संकेतयितृपुरुषाज्ञानात्। यानि संकेतमूलानि तानि सर्वाणि साक्षाद्वा परम्परया वा विज्ञायन्ते। नच देवदत्तादिशब्दवत् कल्पयितुं युक्तं तेषु साक्षाद्वा परम्परया वा संकेतो ज्ञायते। गवादिशब्दानां तु अनाद्यनुसन्धानाविच्छेदेऽपि संकेताज्ञानादेव बोधकत्वशक्तिः स्वाभाविकी। अग्न्यादीनामौष्ण्यादिशक्तिवत् इन्द्रियाणां बोधकत्वशक्तिवच्च शब्दस्यापि

बोधकत्वशक्तिरवश्याश्रयणीया । ननु चेन्द्रियवच्छब्दस्यापि बोधकत्वं स्वाभाविकमिति चेत् सम्बन्धग्रहो बोधकत्वाय कि-मित्यपेक्षते, लिङ्गवदित्युच्यते । यथा ज्ञातसम्बन्धनियमं धूमादि वन्ह्यादिबुद्धिजनकं तथा ज्ञातसम्बन्धनियमः शब्दोऽप्यर्थविशेष-बुद्धिजनकः । एवं तर्हि शब्दोऽप्यर्थविशेषस्य लिङ्गमित्यनुमान-मेव स्यात् । मैवम् । शब्दार्थयोः सम्बधो बोध्यबोधकभाव एव । धूमादीनां तु सम्बन्धान्तरमिति तस्य सम्बन्धस्य ज्ञापनद्वारा बुद्धिजनकत्वमिति विशेषः । एवं गृहीतसम्बन्धस्य बोधकत्वदर्शनादनाद्यनुसन्धानाविच्छेदेऽपि सङ्केतस्याज्ञानात् बोधकत्वं शक्तिरेवेति निश्चीयते । एवं बोधकानां पदसङ्घातानां संसर्गविशेषबोधकत्वेन वाक्यशब्दाभिधेयानामुच्चारणक्रमो यत्र पुरुषबुद्धिपूर्वकस्ते पौरुषेयाः शब्दा इत्युच्यन्ते । यत्र तू-च्चारणक्रमः पूर्वपूर्वोच्चारणक्रमजनितसंस्कारपूर्वकः सर्वदा अपौ-रुषेयास्ते वेदा इत्युच्यन्ते । एतदेव वेदानामपौरुषेयत्वं नि-त्यं च यत्पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यमाणत्वं तेनानुपूर्वीविशेषेण संस्थिता-क्षरराशयो वेदा ऋग्यजुःसामाथर्वभेदेन भिन्ना अनन्तशाखा वर्तन्त इति । अत्राङ्गिरसानुक्तिरथर्वानुप्रवेशविवक्षया । एवं त्रिवेदीव्यपदेशेऽपि विवक्षाभेदो ग्राह्यः । सर्वोऽप्यसौ पुनर्वि-धिमन्त्रार्थवादरूपेण त्रिविधः। तत्र प्रामाणिकमन्त्रव्यवहारविषयो मन्त्रः । स चानुष्ठेयार्थप्रकाशनादिनोपकरोति । नच इदमेव तल्लक्षणं तस्य वसन्ताय इत्येव माद्यव्याप्तेः । वसन्तायकपिञ्ज-लानालभते इत्यादयस्तु मन्त्रा अपि विधिपरा एव मीमांसिताः । स किल मन्त्रः क्रियमाणानुवादिस्तोत्रशस्त्रजप्यादिभेदभिन्नः । पैशाचमागधादितत्तद्भाषामन्त्राणां फलप्रदत्वे तत्तद्बीजजा-

त्यादिकं निदानम् । अद्धेयदेवतानामाङ्कमात्रं तु न तदक्षरशक्तिप्रतिबन्धकं क्षिप्रक्षुद्रफलप्रकाशनेन विप्रलम्भार्थं तथैवेश्वरादिभिः सृष्टम् । गरुडादिनामाङ्कभाषामन्त्रेषु तु तत्तद्देवतास्मृत्युपकारकत्वमप्यस्ति । एतेन मन्त्रव्याकरणं निर्व्यूढम् । ये तु सप्तकोटयो महामन्त्रा इत्यागमशास्त्रे पठितास्ते तु प्रणवयोगायोगादिभिर्वैदिकास्तान्त्रिका इति विभज्यन्ते । तत्र शूद्राधिकारत्वसिद्ध्यर्थं तान्त्रिकपरिभाषा न पुनरवैदिकतया श्रौतस्मार्तादिभेदव्यपदेशवत् प्रमाणसिद्धत्वाविशेषात् । सर्वेषाञ्च मन्त्राणां सद्वारकमद्वारकं च परमात्मैव प्रतिपाद्यः फलप्रदश्च । सद्वारकेषु तावत् विनियोगभेदात् बहुधा ब्रह्मणि पर्यवसानम् ।

तत्तद्देवशरीरत्वात् तत्तदंशतया स्थितेः ।
ऐन्द्र्यादिन्यायतश्चैषां सर्वेषामीश्वरे स्थितिः ॥

विध्यधीनप्रवृत्त्युत्तम्भकवाक्यविशेषो ह्यर्थवादः । सोऽपि प्रत्यक्षाद्यविरुद्धे स्वार्थे प्रमाणं स्वतः प्रामाण्यस्यानपवादात् । यत्र तु विरोधप्रतीतिस्तत्राप्यविरुद्धार्थोपचारेण तत्प्रामाण्यम् । स च क्वचिद्विध्येकवाक्यतया प्रमाणीभवतीत्यर्थवादाधिकरणादिषु साधितम् । स्वतः प्रयोजनभूतार्थविशेषविषयस्तु स्वतन्त्रतयापि प्रामाण्यं प्राप्नोतीति समन्वयसूत्रासिद्धम् । तत्प्राप्त्यभिलाषे तु तदुपायवाक्यप्रवृत्तिः । स चतुर्धा निन्दाप्रशंसापरकृतिपुराकल्पभेदात् । निषेधादिशेषभूतो निषेध्यादिदोषवादोऽत्र निन्दा । विध्यादिशेषभूतो विधेयादिगुणवादः प्रशंसा । एकानुबन्धी कथाविशेषः परकृतिः । अनेकानुबन्धी तु पुराकल्पः । हितानुशासनरूपं वाक्यमिह विधिः । स च बहुविधः । नित्यनैमित्तिककाम्यसंवलितविधिनिषेधादिभेदात् । नियमपरिसंख्ये अपि विधिभेदावेव । तत्रैवं विवेकः ।

अप्राप्तस्य विधौ प्राप्तिर्नियमे प्राप्तिपूरणम् ।
बाधस्तु परिसंख्यायां प्राप्तस्यैवैकदेशतः ॥

अथात्र को नाम लिङादिप्रत्ययार्थः न तावदपूर्वं तस्मिन्प्रमाणान्तरागोचरे व्युत्पत्त्ययोगात् । तद्गोचरत्वे त्वपूर्वत्वव्याघातात् लिङादिवाच्यमित्येव व्युत्पत्तौ इतरेतराश्रयप्रसङ्गात् । विमर्शतः सिद्धिः स्यादिति चेन्न विमर्शस्य स्मृत्यनुभवातिरिक्तस्यानभ्युपगमात् । क्रियाकार्ये व्युत्पन्नस्य चान्वयायोग्यतायामपि लक्षणादिभिरेव निर्वाह्यत्वात् । अभिधानान्यथाकरणायोगात् । प्रथमव्युत्पत्तेरपि सर्वत्र कार्य एवेति नियमाभावात् । यथा गामानयेत्यादि प्रयोजकवृद्धवाक्यश्रवणसमनन्तरं गवानयने प्रवृत्तं पुरुषमालोक्य पार्श्वस्थो व्युत्पित्सुश्चेतनप्रवृत्तेः कार्यताबुद्धिपूर्वकत्वात् प्रयोज्यवृद्धकार्यताबुद्धेश्च कारणान्तरादर्शनात् यदनन्तरं यदारभ्यते तत् तस्य कारणमिति प्रयोजकवृद्धवाक्यमेव प्रयोज्यवृद्धकार्यताबुद्धेः कारणमित्यध्यवस्यतीति तथा कस्यचित् पुत्रस्ते जात इति केन चिदुक्ते प्रतिपन्नपुत्रोत्पत्तेस्तस्य प्रियत्वं च जानन् व्युत्पित्सुः पुत्रजन्मवाक्यश्राविणः पुरुषस्य मुखविकाशमालोक्य तस्य प्रियार्थप्रतिपत्तिनिमित्तत्वानुमानात् तत्प्रतीतेश्च कारणान्तरादर्शनात् पुत्रजन्मवाक्यमेव कारणं कल्पयति । नच पुत्रजन्मनः प्रियत्वं बालेन न ज्ञातमिति वाच्यम् प्रज्ञातपुत्रजन्मनस्तस्य प्रौढस्य भाषान्तरवत् प्रथमव्युत्पत्तावेवं सम्भवात् नोदाहरणमादरणीयमिति च न्यायविदः । ततश्च ये बालानां प्रियत्वेन सम्प्रतिपन्ना भक्ष्यभोज्यादयः तद्दर्शी व्युत्पित्सुस्तत्सम्प्रवृत्तिश्राविणः पुरुषस्य मुखविकाशदर्शनादिप्रक्रियया व्युत्पद्यत इति किं नोपपद्यते । प्रियान्तरस्मृत्यादिभिरपि मुखविकाशः सम्भवतीति चेत्तथैव स्वयं तदधीनप्रयोजनान्तर-

स्मरणादिनापि गवानयनकर्त्तव्यताबोधः सम्भवेत् । आप्तवित्तविशेषवशादनेकप्रयोगानुगतेश्च व्यवस्थेतिचेत् तुल्यम् । तथापि तत्तत्प्रियानुबन्धिसुलग्नजन्मसुखप्रसवस्वादुत्राक्तत्वादिहर्षहेत्वर्थान्तरसम्भावनया विशेषो दुर्निश्चय इति चेन्न गवानयनेऽपि वत्ससंयोजनक्षीरसम्पादनादिकर्त्तव्यताबोधकेऽपि वाक्ये तदर्थगवानयनसम्भवात् गामानयेत्यातिवाक्यं गवानयनकर्त्तव्यतैकबोधकमिति कथं निश्चिनुयात् अन्वयव्यतिरेकमाहिमवशाद्दृष्टानुग्रहाच्चेति चेत् तुल्यम्। तदेवं पुत्रजन्मवाक्योदाहरणसमीकारस्य मन्दमतीनां दुरारोहत्वात् । तदुपेक्षणेन स्पष्टतरव्युत्पत्तिप्रकारो याहच्छिको बुद्धिपूर्वकश्च भाष्यकारैर्दर्शितः। तदत्र लिख्यते। एवं किल बालाः शब्दार्थसम्बन्धमवधारयन्ति । मातापितृप्रभृतिभिरम्बाताततमातुलादीन् शशिपशुनरमृगपक्षिसरीसृपादींश्चैनमवेहि इमं चावधारयेत्यभिप्रायेणाङ्गुल्या निर्दिश्य तैस्तैः शब्दैस्तेषु तेष्वर्थेषु बहुशः शिक्षिताः शनैः शनै स्तै स्तैरेव शब्दैस्तेषु तेष्वर्थेषु स्वात्मनां बुद्ध्युत्पत्तिं दृष्ट्वा शब्दार्थयोः सम्बन्धान्तरादर्शनात् सङ्केतयितृपुरुषाज्ञानाच्च तेष्वर्थेषु तेषां शब्दानां प्रयोगो बोधकत्वनिबन्धन इति निश्चिन्वन्ति । पुनश्च व्युत्पन्नेतरशब्देष्वस्य शब्दस्यायमर्थ इति पूर्ववृद्धैः शिक्षिताः सर्वशब्दानामर्थमवगम्य परप्रत्यायनाय तत्तदर्थावबोधिवाक्यजातं प्रयुञ्जते । प्रकारान्तरेणापि शब्दार्थसम्बन्धावधारणं सुशकं केनचित्पुरुषेण हस्तचेष्टादिना पिता ते सुखमास्ते इति देवदत्ताय ज्ञापयेति प्रेषितः कश्चित्तज्ज्ञानपने प्रवृत्तः पिता ते सुखमास्ते इति शब्दं प्रयुङ्क्ते पार्श्वस्थोऽन्यो व्युत्पित्सुर्मूकचेष्टाविशेषज्ञःतज्ज्ञापने प्रवृत्तमिमं ज्ञात्वानुगतस्तज्ज्ञापनाय प्रयुक्तमिमं शब्दं श्रुत्वा अयं शब्दस्तदर्थबुद्धिहेतुरिति निश्चिनोतीति कार्यार्थे

एव व्युत्पत्तिरिति निर्बन्धो निर्निबन्धन इति । अत्र पिता ते सुखमास्त इति वाक्यस्य स्थाने अपवरके दण्डस्थित इति उदाहरणान्तरमात्रमन्यत्रोक्तम् । अतः सिद्धा सिद्धेऽप्याद्यव्युत्पत्तिः । भवतु वा प्रथमव्युत्पत्तिः कार्यार्थ एव तथापि प्रयोगान्वयव्यतिरेकवशादेव शब्दशक्तिर्विवेचनीया । प्रयुज्यन्ते च सिद्धपरा एवाविवक्षितकर्तव्यैः पुरुषैः शब्दाः । यथा कोऽसौ राजा कौरवः । कौतुकमात्रादेव ह्यत्र प्रश्नः प्रतिवचनं च तदनुविधाय्येव अतो यथा पदानां प्रातिस्विकी शक्तिः सिद्धे कार्येऽपीति यथासम्भवं निष्कृष्यते । तथा तात्पर्यमपि यथायोगमेव व्युत्पत्त्युपायत्वेऽपि च कार्यस्य सर्वशब्दतात्पर्यविषयत्वायुक्तेः । कार्यवाक्येऽपि प्रवर्तकत्वादिलक्षणं च प्राधान्यमपूर्वस्य मृग्यम् । सुखदुःखाभावाभ्यामतिरिक्तस्य स्वतः स्वस्मिन् प्रवर्तकत्वायोगात् । व्युत्पत्तिदशायामप्यसुखरूपस्यानयनादेरन्यशेषतयैव प्रवृत्तिशेषत्वाभ्युपगमात् । अतः सुखे दुःखनिवृत्तौ वा साक्षात् कार्यत्वबोधः तदर्थतया तत्साधने । अपेक्षितत्वेन च साधनवत् साधनसाधनेऽपि कार्यत्वबोधोपपत्तिः । नच सुखादित्वमपूर्वस्य न च तत्साधनतया तत् प्रवर्तकत्वमभ्युपगतम् । अभ्युपगमेऽपि लौकिकसेव्यप्रीत्येव देवताप्रीत्यैव श्रुत्यादिसिद्धया कालान्तरभाविफलसिद्धौ लिङ्वाच्यतया स्वरूपेण वा तत्कल्पनायोगात् रात्रिसत्रादिनयाच्च । प्रतिष्ठादेशविशेषशतयातनासाधनत्वघृताञ्जनछागादिपरिग्रहवद्विध्यपेक्षितं प्रतीतं च देवताप्रीत्यात्मकमेवा पूर्वं लिङ्वाच्यतया स्वरूपेण वा द्वारमुपकल्प्यतां किमन्येन । यच्च जल्पन्त्यर्धलौकायतिकाः ।

विग्रहो हविरादानं युगपत्कर्मसन्निधिः ।

प्रीतिः फलप्रदानं च देवतानां न विद्यते इति ।

तदपि जैमिनीयहृदयानभिज्ञतानिबन्धनम् । नहि स्वतः प्रमाणाम्नायस्मृतिपुराणादिसिद्धाः साधकबाधकप्रमाणागोचरा देवताविग्रहादयो हातुं युक्ताः । न चायोग्येष्वनुपलम्भमात्रेण बाधः शक्यः । अतिप्रसङ्गित्वात् । साक्षाल्लौकायतिकत्वादप्रसङ्गात् । स्तुत्या विधिशेषभूतेष्वप्यर्थवादेषु तदर्थतयैव स्वार्थमभिदधानेषु न वाक्यभेदादिदोषः । स्तुत्यादिपरत्वेऽपि न मुख्यार्थबाधः । स्वार्थबाधकाभावे स्वार्थप्रहाणायोगात् । न च सर्वा स्तुतिरयथार्था न चासता गुणेन कथितेन स्तुतिसिद्धिः । यत्र तु मुख्यार्थबाधः तत्राप्यौपचारिकं किञ्चिदालम्बनमभिप्रेतम् । अन्यथा विडम्बनमात्रमेव स्यात् । नचोपच्छन्दनमात्रता तज्ज्ञाने पुंसः प्रवृत्त्यनुपकारात् । निरूपकस्य च तदज्ञानायोगात् । अन्यथा भ्रान्तिमूलप्रवृत्तित्वप्रसङ्गात् । समन्वयाधिकरणनयाच्च सिद्धैकपराः सन्ति भागाः । तदनुवादिनश्चेतिहासपुराणादयः । नन्वर्थवादाधिकरणे "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्यु,, रिति सर्वेषामर्थवादानां विध्येकवाक्यत्वमुक्तं समन्वयसूत्रे तु कथं तद्विरुद्धोक्तिः । मैवम् । अर्थवादाप्रामाण्यपूर्वपक्षप्रतिक्षेपाय विध्येकवाक्यतया प्रामाण्यं सम्भवतीत्येतावन्मात्रमर्थवादाधिकरणे स्थापितम् । विध्येकवाक्यत्वे ब्रह्मस्वरूपतात्पर्याभावपूर्वपक्षस्तु अपवरकनिधिसद्भावादिवाक्यवत् स्वतः प्रयोजनभूतार्थविषयवाक्यानां भिन्नवाक्यतयापि प्रामाण्यमुपपाद्य समन्वयसूत्रे प्रतिक्षिप्यत इति विरोधाभावात् । अपि च औत्सर्गिकमापवादिकं च तं तमर्थं प्रतिपादयत्सु वाक्येषु विषयव्यवस्थया विरोधशमनं व्याकरणादिष्वपि दृष्टमिति । अत एव ब्राह्मणशेषोऽर्थवाद इति आर्षमपि

वाक्यमौत्सर्गिकविषयमवगन्तव्यम् । या तु शब्दभावनैव लिङाद्यर्थ इति कौमारिलकुसृतिः सा तु प्रतीतिविसम्वादादिप्रतिहता न हि विधिवाक्यश्रावित्रपुरुषो लिङादि स्वव्यापारमभिधत्ते अतो मया प्रवर्तितव्यमिति मन्यते । नच यागादिस्वरूपे लिङादिव्यापारे च केनचिद्वाक्येन समुच्चित्य प्रतिपादितेऽपि कश्चित्प्रवर्तमानो दृश्यते । लिङादेश्च ज्ञायमानत्वलक्षणव्यापारमात्राच्छक्तिलक्षणव्यापारमात्राद्वा प्रवर्तकत्वे व्युत्पत्तेः प्रागपि ततः प्रवृत्तिप्रसङ्गः । व्युत्पत्तेरपि सहकारित्वे तत्सापेक्षाया निर्विषयायास्तस्या असम्भवात् तद्विषयो वाच्यः । नच स्वव्यापारे लिङादिः क्वचिद्व्युत्पन्नः । सर्वेषामपि शब्दानां स्वव्यापारातिरिक्त एव ह्यर्थे व्युत्पत्तिः । ये चाभिधायिनः शब्दास्तेऽपि न शृङ्गग्राहिकया स्वव्यापारमभिदधति । अपि तु शब्दमात्रव्यापारे तत्प्रवृत्तेः । सामान्योपाधिक्रोडीकारमात्रेण स्वव्यापारस्यापि निवेशः । अत एवाभिधादिशब्दाभिधेयस्य निमित्तस्य च सामान्यतः प्रतिपन्नत्वाद्व्युत्पत्त्युपपत्तिः । लिङादेस्तु स्वव्यापारे प्रतीते तत्र व्युत्पत्तिः स्यात् । तत्प्रतीतिर्व्युत्पन्नेन चेत् अन्योऽन्याश्रयः । अव्युत्पन्नेन चेदतिप्रसङ्ग इति । नचेष्टसाधनत्वमात्रं लिङादिबोध्यं तवेष्टतासाधनमिदम् अतः कुर्विति सह प्रयोगदर्शनात् । नचादरादिनिबन्धना पुनरुक्तिरियं प्रतीतेरतथात्वात् हेतुसाध्यनिर्देशायोगाच्च कर्तव्यमिदमतः कुर्वित्यपि दृश्यत इति चेत् न ब्राह्मणस्य कर्तव्यमिदम् अतस्तवापि कर्तव्यमितिवत् सामान्यविशेषादिविवक्षाया अविरोधात् । अत्यन्तैकार्थविवक्षायां तु तत्रापि प्रयोगायोगात् । अत एवाप्तस्य वक्तुरिच्छामात्रं लिङाद्यर्थ इति प्रत्युक्तम् । आप्तस्येष्टमिदमतो ममेदं कार्यमिति प्रवर्तमानपुरुषाभिलापविशेषदर्शनात् ।

न च लिङ्‌र्थत्वादेव निमन्त्रणादिवद्विधिरपि वक्त्रभिप्रायमात्रमिति वाच्यम् । सम्भावनादिभिर्विशेषविहितैश्चानैकान्त्यात् । एकशब्दवाच्यतामात्रेण एकत्वे चानेकार्थशब्दभङ्गप्रसङ्गे दृष्टान्तोऽपि न सिध्येत् । यद्यपि परमतेऽप्युदयनोक्ता निषेधानुपपत्तिस्तथापि न साम्प्रतपक्षमवगाहते । कर्तव्यताया विध्यर्थत्वे न कर्तव्य इति नञन्वयाविरोधात् । कर्तृव्यापारसाध्यत्वमेव च कर्तव्यत्वम् । तथाहि वेदार्थसङ्ग्रहे लिङादेः कोऽयमर्थः परिगृहीत इति प्रश्नपूर्वकं प्रत्युक्तं यज देवपूजायामिति देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां लिङादयोऽभिदधतीति न किञ्चिदनुपपन्नं कर्तृवाचिनां प्रत्ययानां प्रकृत्यर्थस्य कर्तृव्यापारसम्बन्धप्रकारो हि वाच्यः भूतवर्तमानतादिमन्ये वदन्ति लिङादयस्तु कर्तृव्यापारसाध्यतां वदन्ति इति । भाष्ये चाद्यसूत्रे अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादेर्वाच्यमित्यध्यवसीयते । धात्वर्थस्य च यागादेरग्न्यादिदेवतान्तर्यामिपरमपुरुषसमाराधनरूपता समाराधितात् परमपुरुषात् फलसिद्धिश्चेति "फलमतउपपत्ते"रित्यत्र प्रतिपादयिष्यत इति । अत्र कर्तृव्यापारसाध्यतामात्रमिति निष्कृष्टार्थप्रदर्शनायोक्तं प्रतिपत्तिप्रकारस्तु यजेतेत्यादौ स्वव्यापारसाध्ययागादिविशिष्ट इति कर्तृप्राधान्येनैव । यथोक्तं दीपे कर्त्रधिकरणे यजेतोपासीतेति हि कर्तरि लकारः अतः कर्तारमेव बोधयति शास्त्रमिति । उक्तं च वेदार्थसङ्ग्रहेऽपि स्वर्गकामो यजेतेत्येवमादिषु लकारवाच्यकर्तृविशेषसमर्पकाणां स्वर्गकामादिपदानां नियोज्यविशेषसमर्पकत्वं शब्दानुशासनविरुद्धमिति । यद्यपि दीपग्रन्थः पुंसः कर्तृत्वं श्रुतिसिद्धमित्यत्रैव तत्परः तथापि धात्वर्थसाध्यता-

परलिङ्गादिष्वपि कर्तृप्रधानतया वृत्तिं प्रदर्श्य सांख्यान् प्रतिक्षिपतीति तादर्थ्यात्तत्रापि तत्परत्वमेव ग्राह्यम् । पचतीत्यादौ पाकं करोतीत्यादिनिपुणव्याक्रियाश्च कृतिकर्मतयैव धात्वर्थस्यान्वयं व्यञ्जयन्ति । श्रीमद्गीताभाष्ये चैतद्व्यञ्जितम् । युध्यस्वेत्यत्र युद्धाख्यं कर्मारभस्वेति व्याख्यानात् । व्याकरणात् करणतया च धात्वर्थस्यान्वये कथं क्रियाविशेषणस्य कर्मविभक्त्यन्तता नहि विशेष्येण विशेषणं भावयेदित्यन्वेति । फलस्यापूर्वस्य वा भवद्भिर्भाव्यत्वाभ्युपगमात् । वर्तमानव्यपदेशादिषु च साध्यान्तराभावेऽपि न विशेषणमात्रं साध्यं न च प्रथमान्तं क्रियाविशेषणं करणपक्षेऽपि धात्वर्थेनानन्वयप्रसङ्गात् । अनन्वितस्य विशेषणताद्यनुपपत्तेः । नचाकर्मविभक्त्यन्तेन धातुना कर्मविभक्त्यन्तस्य कथं सामानाधिकरण्यमिति वाच्यं करणविभक्त्यन्तेनाप्यसामानाधिकरण्यप्रसङ्गात् । नच प्रतीयमाने कर्मत्वेनान्वयेऽपि न कश्चिद्दोषो दृश्यते । व्रीहिकामः कृषिं कुर्यादितिवत् स्वर्गकामो यागं कुर्यादिति वाक्यार्थेऽपि विरोधाभावात् । तदुद्देश्यार्थतस्तस्य तदुपायत्वसिद्धेः । केनेति करणाकाङ्क्षाया अपि शमनात् । नामधेयगततृतीयान्वयोऽपि नावश्यंसामानाधिकरण्येन तत्तन्नामकैः कर्मविशेषैर्देवतापूजां कुर्यादित्येवं परत्वेऽपि स्वरसान्वयात् सामान्यविशेषरूपेण व्यधिकरणनिर्देशाद्युपपत्तेः । चाटुवादेन राजानं प्रीणयेदितिवत् यागं कुरुष्वेत्यादौ न कृञ्धात्वर्थस्यापि साध्यत्वप्रसङ्गः । तस्यैव कर्तृव्यापाररूपत्वे तत्साध्यत्वायोगात् । प्रकृतिप्रत्यययोरन्यतरस्य कृतावुदासीनत्वात् । एको द्वौ बहवः इत्यादिवत् । तत्रापि यदा कर्मतां विवक्षति तदापि कर्तृव्यापारान्तरमभिप्रेत्य वा भेदोपचारेण वा निर्वाहः । यथोदकाहरणक्रियां करोति इत्यादौ । नच तावतानवस्था-

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मज भट्टशङ्करविरचितः । ( मीमांसा ) १

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि–मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । ११

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं संपूर्णम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । ( वेदान्तः ) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्तः ) ... ... २

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्याः व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ३

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्ड-प्रकाशव्याख्यासहितः प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १६

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ... ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः १

(३२) स्मृतिसारोद्धारः ;विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । ... ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... ... १

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... ... १

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित–योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । १

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... १

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्योः–प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित १

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ... ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद. शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता । २

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्य व्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ६

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणिता । रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्याख्यव्याख्यया सहिता तर्कपाद । ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाख्यटीकाद्वयसंवलिता। ११

(४७) व्याकरणसिद्धान्तसुधानिधिः । पर्वतीय विश्वेश्वरसूरिविरचितः । ८

(४८) विरमित्रोदयः । लक्षणप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः। ७

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचितः । महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकया समलंकृतः । ८

(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ५

(५१) पूर्वमीमांसा अधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृत । १

(५२) प्रसस्तपादभाष्यटीकासंग्रहः । तत्र कणादरहस्यम् । श्रीशकरमिश्रविरचितम् १

(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेत १

(५४) वीरमित्रोदयः । तीर्थप्रकाशः । महामहोपाध्याय श्रीमित्रमिश्रविरचितः । ४

(५५) सांख्यसंग्रहः । तत्र सांख्यतत्त्वविवेचनम् श्रीषिमानन्द ( क्षेमेन्द्र ) विरचितम् । सांख्यतत्त्वयाथार्थ्यदीपनम् भावागणेशविरचितम् । समाससूत्रव्याख्या सर्वोपकारिणी च । १

(५६) न्यायपरिशुद्धिः । श्रीमद्वेङ्कटनाथ श्रीवदान्ताचार्यप्रसादिता । श्रीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकया युता। १

जयकृष्णदास गुप्तः, सेक्रेटरी,
चौखम्बा संस्कृत सीरीज आफिस,
बनारस सिटी।

पत्राद्रिप्रेषणस्थानम् ।

November 1922.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS,

NO. 299.

# न्यायपरिशुद्धिः

श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यप्रसादिता ।
श्रीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकया युता: ।

वृन्दावननिवासि सर्वविद्याभूषणलक्ष्मणाचार्येण
टिप्पणीनिवेशन पुरःसरम्
संशोधिता ।

# NAYÂYAPARISHUDDHI,

By

SRI VENKATNATH SRI VEDÂNTÂCHÂRYA

With a Commentary called Nyayasar.

By

SRI NIWÂSÂCHÂRYA,

Edited with Notes by Vidyábhushan
Lakshmanachârya of Brindában,

FASCICULUS V-५

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE, BENARES.
AGENTS:-OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAM MUKUNDAJI. BOMBAY:
PROBSTHAIN & CO; BOOKSELLERS LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

*1923.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२९९

प्रतीत्यनारोहेण व्यवहारस्य पर्यवसितत्वात् । अग्निहोत्रं जुहोतीत्यादिप्रयोगाश्चास्मत्पक्षानुकूलाः । अतः किं केन कथमिति भवत्प्रोक्तवत् किमर्थं किं केन कथमित्याकाङ्क्षाचतुष्टये स्वर्गादिना किमर्थमित्याकाङ्क्षापूरणं देवतां प्रीणयेदिति किमितित्याकाङ्क्षाशान्तिः । ज्योतिष्टोमेनेत्यादिनामधेयादिभिः केनेत्याकाङ्क्षा पूर्यते । कथमित्याकाङ्क्षापूरणं तु भवतामस्माकं चतुल्यमेवेति शाब्दोऽयं पन्थाः । अतस्तत्तदधिकारिणः स्वसाध्यधात्वर्थविशिष्टताबोधिनि यजेतेत्यादौ तत्तद्धात्वर्थानुष्ठाने फलमननुष्ठाने प्रत्यवायश्च सर्वप्रशासितुः संकल्पाद्भवतीत्यपि वाक्यादेवावगन्तव्यम् । अवान्तरदेवताबुद्धिवृत्तिविशेषस्तु सद्वारकयजने श्राद्धभोजिपुरुषप्रीत्यादिवदानुषङ्गिकः । अन्यथा कल्पान्तरादिषु प्रलीनप्राचीनदेवतागणेषु पूर्वकल्पानुष्ठितकर्मफलानुत्पत्तिप्रसङ्गात् । अत एव ह्येकस्यैव श्रुतिराज्ञा अन्येषां त्वाराधकत्ववदाराध्यत्वमपि तदायत्तमिति । नारायणार्यैस्त्वेवमुक्तम् ।

आप्तस्य हितकामस्य नियोगं केचिदूचिरे ।
भाष्यकारोऽपि भगवानेवमेवान्वमन्यत इति ।

अत्र च स्वशासनाववबोधिशास्त्रं च प्रदिश्येति भाष्यमभिसंहितम् । इदं च विधिनिषेधानुवर्तनातिवर्तनप्रयुक्तनिग्रहानुग्रहवचनबलात् सिद्धम् ।

श्रुतिःस्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णव इति

विधिः प्रेरणमिति च व्याकारि वैयाकरणैः । प्रेरणं च शासनमेव । तत्त्वरत्नाकरकारैश्चैवमुक्तम् ।

क्रिया तच्छक्तिर्वा किमपि तदपूर्वं पितृसुर-
प्रसादो वा कर्त्तुः फलद इति रङ्गेश कुदृशः ।
त्वदर्चेष्टापूर्ते फलमपि भवत्प्रीतिजमिति
त्रयीवृद्धास्तत्तद्विधिरपि भवत्प्रेरणमिति ।

नित्यनैमित्तिकादिविधिभेदेषु च प्रशासितुरभिप्रायविशेषा व्यञ्जिताः ।

आज्ञा ते सनिमित्तनित्यविधयः स्वर्गादिकाम्यद्विधिः
सोऽनुज्ञा शठचित्तशास्त्रवशतोपायोऽभिचारश्रुतिः ।
सर्वा यस्य समस्तशासितुरहो श्रीरङ्गराजस्य ते
रक्षाकूतनिवेदिनी श्रुतिरसौ त्वन्नित्यशास्तिस्तत इति ।

अपि च वेदार्थसङ्ग्रहेऽप्युपात्तं द्रमिडभाष्यं स्वशासनानुवर्तिनो ज्ञात्वा कारुण्यात् स्वभावाच्चद्धयैतद्विद्वान् कर्मदक्ष इति अनन्तरं चायमेवार्थो भगवद्गीतायामपि दर्शितः ।

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ॥
श्रद्धावन्तो ऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ।
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ॥
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतस इति ।

स्वाज्ञानुवर्तिनः प्रशस्य विपरीतान् विनिन्द्य पुनरपि स्वाज्ञानुपालनमकुर्वतामासुरप्रकृत्यन्तर्भावमभिधायाधमा गतिश्चोक्तेति ईदृश एव विधिशब्दार्थो वेदान्तिभिः स्वीकृत इति । परेऽपि केचिदन्ववादिषुः । अतो मूलस्कन्धीकृतनियोगं धात्वर्थस्य कर्तृव्यापारसाध्यत्वं वा निर्विषयप्रेरणासम्भवात् तत्साध्यत्वपर्यन्तं प्रेषणमेव वा लिङाद्यसाधारणार्थ इति स्थिते "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्"इति समभिव्याहृतनिमन्त्रणादिसमानयोगक्षेमतया विधिशब्दार्थतया व्या-

कृतस्य प्रेषणस्यैव लिङादिशब्दवाच्यत्वं युक्तमिति । अन्यथापि प्रेषणमन्तर्भूतमेवेत्यपरे । इदं च विधिवाक्यानामीश्वरशासनात्मकत्वं जैमिनिनापि सूचितमेव। "चोदनालक्षणोऽर्थो धर्म"इति चोदनाशब्दो हि चोदकं कंचित्पुरुषं सूचयति। अहृदयादपि शावरोदाहरणादिदं व्यज्यते—आचार्यचोदितः करोमीति हि दृश्यते इति। एवं चोदनाशब्दसूचितश्च पुरुषः स्ववाक्येन प्रथममेव विशेषतो दर्शितः। अपि च औत्पत्तिकसूत्रे "तस्य ज्ञानमुपदेश" इत्यसूत्रयत् उपदेशो ह्युपदेष्टारमाक्षिपति। "तत्प्रमाणं बादरायणस्य"इति सूत्रखण्डे च स्वस्य स्वाचार्यभूतबादरायणसमानाभिप्रायत्वं व्यञ्जितम्। स च बादरायणो जैमिनिं स्वशिष्यमभ्युपगतेश्वरादितत्त्वं "साक्षादप्यविरोधं जैमिनि"रित्यादिषु बहुषु सूत्रेष्वदर्शयत्। प्रतिक्षेपस्तु क्वाचित्कोऽन्यपरोक्त्या आपातप्रतीतार्थमन्दमतिमोहनिरासार्थो वा क्षुद्रप्रमादमात्रस्याप्युद्धारार्थो वेति न प्रधानविरोधकल्पनालिङ्गम्। अर्थवादाधिकरणे च "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्यु"रिति प्रेरणरूपविधिप्रतिपादकलिङवयवद्वारा समुदायभूतं विध्युद्देशवाक्यं लक्षयित्वा तदेकवाक्यत्वमर्थवादानां वदन् कृत्स्नस्य वेदस्येश्वराज्ञारूपविधिप्रतिपादकत्वं तद्वाक्यकण्ठोक्तमसूचयत्। एवमन्यत्रापि भाव्यम्। एवं श्रुतिस्तावदीश्वराज्ञा तदनुविधानात् स्मृतिरपि। ब्राह्मणमन्त्रार्थवादरूपा ह्यनन्ता वेदाः सङ्कीर्णा विप्रकीर्णाः क्वचित् कदाचिदुत्सन्नाश्च। तत्र कृत्स्नवेदिनो मन्वादयो महर्षयस्तत्तद्देशकालविशेषेष्वकृत्स्नवेदिनां तत्त्वानुष्ठानविप्लवप्रशमनाय स्वानुभूतान् वेदार्थान् यथावन्निबध्नन्ति। अतस्तन्मूलोऽनादिर्वाचामर्थनिर्णयः। श्रुतिस्मृतिविरोधे तु स्मृत्या मूलान्तरानुमानादनुष्ठानविकल्पं केचिदाहुः। सर्वेषां गुणत्रयवतामाप्ततमत्वेऽपि क्वाचि-

त्कभ्रमसंभवाच्छ्रुत्या स्मृतिबाध इत्यपरे । तत्त्वविषये तु विरोधे बाध एव । आन्यपर्यं वा वस्तुनि विकल्पासंभवात् । स्मृतिद्वयविरोधे तु परिग्रहतारतम्यादिभिर्व्यवस्था । नच क्वचित्स्मृतीनामप्रामाण्ये सर्वत्रानाश्वासः बाधकादर्शनात् । कारणदोषक्लृप्तेश्च नियतलिङ्गाभावात् । संवादभूयस्त्वादिभिः परिग्रहान्यथानुपपत्त्या च श्रुतेरेव मूलत्वकल्पनोपपत्तेः । अन्यथा पौरुषेयवाक्यस्य सर्वस्याप्रामाण्यप्रसङ्गे विलीनमागमेन । नचैतन्नानिष्टमिति वक्तुं शक्यम् । पित्राद्याप्तवाक्यं प्रमाणीकृत्य चार्वाकस्य प्रवृत्तिदर्शनात् । नच क्वाचित्कसंवादमात्रेण बाह्यागमेष्वपि विश्रम्भावकाशः प्रत्यक्षश्रुतिविरोधभूयस्त्वेन वैदिकपरिग्रहाभावेन वेदबाह्यत्वप्रसिद्ध्या वेदप्रतिक्षेपाच्च वेदाख्यमूलकल्पनस्याशक्यत्वात् । नचालौकिके प्रत्यक्षादिमूलकत्वसम्भवः । योगजसाक्षात्कारमूलत्वक्लृप्तिरपि वेदाविरुद्धस्थले स्यात् । नच तत्रापि निश्चयः विपरीतोपलम्भस्यापि सम्भवादिति । ततश्च वेदमूलाः स्मृतयस्त्रिविधाः धर्मशास्त्रेतिहासपुराणभेदात् । तत्राद्ययोरदूरविप्रकृष्टादेकविद्यास्थाननिवेशः । अत्र चाधिकृतानधिकृतविभागेन बलाबलनियतिराभासाह्निके दर्शिता पुराणेष्वपि सात्त्विकराजसादिविभागश्च । यानि पुनः सांख्ययोगपाशुपतपञ्चरात्राणि तान्यपि धर्मशास्त्रभेदा एव । परिशुद्धात्मचिन्तनरूपज्ञानयोगप्रदर्शनाधिकृतं शास्त्रं साङ्ख्यम् । समाधिपर्यन्तकर्मयोगनिष्ठं शास्त्रं योगः । प्रतिबुद्धेतरविषयपशुपतिभजनप्रतिपादकं पाशुपतम् । प्रतिबुद्धविषयभगवदनन्यभजनोपदेशप्रवृत्तं तु शास्त्रं पञ्चरात्रम् । एतानि च क्वचित् क्वचिदंशे परस्परोपजीवीनि । परस्पराविरोधे तु वेदानुसारेण बलाबलव्यवस्था । वेद-

विरुद्धे त्वंशे बाधः । प्रमादस्यानीश्वरेषु सर्वेषु सम्भवात् । विप्रलम्भस्त्वसुरादिव्यामोहनोद्युक्ते साक्षादीश्वरेऽपि यथोक्तं भगवतैव ।

त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय ।
अल्पायासं दर्शयित्वा फलं शीघ्रं प्रदर्शय ॥
अहं मोहं करिष्यामि यो जनं मोहयिष्यति इति ।

अतो यत्साङ्ख्य ईश्वरानधिष्ठितप्रधानादिप्रतिपादनम् यच्चेश्वरमभ्युपगम्य केवलनिमित्तकारणत्वप्रतिफलनकल्पैश्वर्यवर्णनं योगे यच्च पाशुपते परावरतत्त्वव्यत्ययवेदविरुद्धाचारादिकल्पनम् तत् सर्वं व्यपोह्य शिष्टेंऽशे प्रामाण्यं ग्राह्यम् । नचैतत्तुषतण्डुलविभागवदल्पज्ञैः शक्यम् अतो हि शारीरके त्रयाणां निरासः। पञ्चरात्रं तु कृत्स्नं श्रुतिवत्स्मृतिवद्वा प्रमाणं प्रत्यक्षश्रुत्यादिविरोधाभावात् ।

---

पञ्चरात्रमिति । अत्र केचित् ।

दुर्घटं पञ्चरात्रस्य मानत्वं तद्यथोच्यते ।
उत्पत्त्यसम्भवात्कर्तुः करणस्याप्यसम्भवात् ॥
अर्थविप्रतिषेधाच्च वेदनिन्दादिकीर्तनात् ।
तथा गुणगुणित्वादिविरुद्धार्थप्रकल्पनात् ॥
सूत्रकारेण तन्त्रस्य प्रतिषिद्धा प्रमाणता ।

श्रुतिविरुद्धायाः स्मृतेरप्रामाण्यं हि विरोधाधिकरणन्यायसिद्धम् । श्रुतिविरुद्धं चेदं तन्त्रम् । न जायते इत्यादिश्रुतिभिर्जीवनित्यत्वावगमेऽपि संकर्षणो नाम जीवो जायते इति जीवोत्पत्तेरत्र प्रतिपादनात् । उत्पत्तावभ्युपगम्यमानायां हि जीवस्यानित्यत्वादयो दोषाः प्रसज्ज्येरन् । सूत्रकारोऽपि नात्मा श्रुतेरिति जीवस्योत्पत्तिं प्रतिषेधति । तथा एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । इत्यादिश्रुतिभिः परमात्मनो मन उत्पत्तिः प्रमिता । अत्र तु संक-

र्षणात्प्रद्युम्नसंज्ञं मनो जायते इति जीवात्तदुत्पत्तिः । न चैतदुपपद्यते विरोधादेव । तथा चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधीतवान् इति वेदनिन्दासंकीर्तनाद्वेदार्थविप्रतिषेधश्चास्मिन्नुपलभ्यते । तथा ज्ञानैश्वर्यशक्तिवीर्यबलतेजसां गुणानाम् आत्मान एवैते भगवन्तो वासुदेवा इति गुणित्वकल्पनेन विरुद्धार्थप्रकल्पनबहुलं चेदम् । अतो दुर्घटं पञ्चरात्रप्रामाण्यमिति । अत्रोच्यते ।

जीवोत्पत्त्यादिवचनं प्रामाण्यं न विघातयेत् ।
श्रुतावपि हि तत्सत्त्वादप्रामाण्यं प्रसज्यते ॥
श्रुतावेव तदुत्पत्तिप्रतिषेधान्मुहुर्मुहुः ।
नाप्रामाण्यं श्रुतेरित्थं मन्यसे तर्हि तुल्यता ।
वस्तुतस्त्विह कुत्रापि न जीवोत्पत्तिरीरिता ।
षाड्गुण्यपरिपूर्णस्य वासुदेवस्य शार्ङ्गिणः ॥
स्वसमाश्रितरक्षार्थं वात्सल्यजलधेरिह ।
सङ्कर्षणादिरूपेण चतुर्धा व्यूह्य तिष्ठतः ।
इच्छागृहीताभिमतशरीरत्वं हि कथ्यते ॥
एतेन कर्तुः करणासम्भवोऽपि निराकृतः ।
वेदनिन्दादिकथनादमानत्वं यदीरितम् ॥
श्रुत्यादिज्ञानवैधुर्यमपराध्यति तत्र ते ।
अतः श्रुतिविरुद्धत्वहेतुर्यः कथितस्त्वया ।
स्वरूपासिद्ध एवायं कथं स्वाभीष्टसिद्धिकृत् ॥
आस्तां श्रुत्यविरुद्धत्वं प्रत्युतात्यन्तमेव तु ।
सूत्रानुगुण्यात्तन्त्रस्य कथं त्याज्यत्वमिष्यताम् ॥
अजायमानो बहुधा विजायत इति श्रुतेः ।
अत्यन्तानुगुणे तन्त्रे कथं ते कलिला मतिः ।

यदि नामावश्यं जीवोत्पत्तिकथनमप्रामाण्यमापादयतीति मतं हन्त तर्हि "तोयेन जीवान् व्यससर्ज भूम्यां प्रजा असृजत सन्मूलाः सोम्येमाः सर्वाः प्रजाः यतो वा इमानि भूतानि जायन्ते" इत्यादिभिर्जीवोत्पत्तिप्रतिपादनाच्छ्रुतावप्यप्रामाण्यमापाद्यमानं कथमायुष्मान् परिहरतु । अथ मन्यसे "न जायते म्रियते वा" इत्यादि उ...

वजौ" इत्यादिश्रुतिभिरेवान्यत्र जीवोत्पत्तिप्रतिषेधात् "नित्यो नित्यानाम् अजो नित्यः" इत्यादिभिर्जीवनित्यत्वप्रतिपादनाच्चोत्पत्तिवादिन्यः श्रुतयोऽन्यथा नेया इति। एवं तर्हि।

स ह्यनादिरनन्तश्च परमार्थेन निश्चितः॥

इत्येवं सर्वास्वपि संहितासु जीवस्य नित्यत्वप्रतिपादनाज्जीवस्वरूपोत्पत्तिः पञ्चरात्रतन्त्रे प्रतिषिद्धैवेति जीवोत्पत्तिवादिवाक्यानामन्यथा नेयत्वं तुल्यं किमिति न पश्यसि। वस्तुतस्तु उदाहृतवाक्येऽपि वासुदेवाख्यं परं ब्रह्मैवाश्रितवत्सलतया स्वाश्रितसमाश्रयणीयत्वाय स्वेच्छया स्वात्मानं संकर्षणादिरूपेण चतुर्धा विभज्यावतिष्ठत इति प्रतिपादयितुं जीवाद्यभिमानिसंकर्षणादिरूपेण परमपुरुषस्य शरीरविशेषपरिग्रहः प्रतिपाद्यते न जीवोत्पत्तिरिति पञ्चरात्रसिद्धान्तमजानतामेवेदं चोद्यं यज्जीवोत्पत्तिर्वेदविरुद्धा प्रतिपाद्यत इति। एतेन कर्तुः करणासम्भवोऽपि प्रत्युक्तः। संकर्षणस्य परमात्मनोऽनन्यत्वे सति तस्मादुत्पद्यमानं मनः परमात्मन एवोत्पद्यमानं भवतीति श्रुतिविरोधगन्धाभावात्। यच्चोक्तं वेदनिन्दावचनाद्वेदार्थविप्रतिषेध इति तदिदं वेदतदुपबृंहणन्यायस्वरूपानभिज्ञाननिबन्धनम्। वेदेऽपि हि वेदनिन्दाप्रतीयते। यथा उदितहोमे अनुदितहोमनिन्दा "प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्र"मित्यादि। यथा वा भूमविद्यायां तद्व्यतिरिक्तविद्यानिन्दा। अत्र हि नहि निन्दान्यायादुदितहोमप्रशंसार्थाऽनुदितहोमनिन्देति। वक्ष्यमाणभूमविद्याप्रशंसार्था तदितरनिन्देति च न्यायविदो मन्यन्ते। एवमत्रापि पञ्चरात्रप्रशंसार्था तदितरनिन्देति किं नाभिप्रैषि। वस्तुतस्तु नात्र वेदनिन्दाप्रतीतिः। भूमविद्यायामपि यथा साङ्गवेदप्रतिपाद्यपरतत्त्वालाभनिमित्तको नारदस्य शब्दराशिमात्रपरिज्ञानवादः एवमत्रापि शाण्डिल्यस्येति क्व वेदनिन्दाप्रतीतिः। यदि वेदनिन्दैवावश्यं विवक्ष्येत ततो वेदासंमत एवार्थः स्वस्मिन् प्रतिपाद्येत न वेदानुयाय्यर्थः। न हि वेदं निन्दन् वेदार्थमेव स्वयं प्रतिपादयन् कुत्र चिद्दृष्टश्रुतचरः। वेदानुयाय्येव चार्थः स्पष्टमत्र विशदीक्रियते। भूमविद्यायामिवात्रापि वेदान्तवेद्यस्यैव वासुदेवाख्यस्य तत्त्वस्यो-

पदिष्टतया शाण्डिल्येन तस्यैवानेन शास्त्रेण परिज्ञानात् । अतोऽप्रामाण्यसाधकत्वेनोपन्यस्तस्य श्रुतिविरुद्धत्वहेतोः स्वरूपासिद्धत्वान्न सिषाधयिषिताप्रामाण्यसिद्धिः । किञ्च । न केवलं श्रुत्यविरुद्धत्वं प्रत्युत अजायमानो बहुधाभिजायते इति श्रुतिसिद्धाश्रितवात्सल्यनिमित्तस्वेच्छाविग्रहरूपजन्मप्रकाशकत्वान्नितरां श्रुत्यानुगुण्यमिति श्रुत्यर्थयाथार्थ्यजिज्ञासुभिः सिद्धमवश्योपजीव्यत्वं पञ्चरात्रस्य । आकाशप्राणादिशब्दैर्ब्रह्माभिधानमिव जीवमनोऽहंकारशब्दैः संकर्षणप्रद्युम्नानिरुद्धाभिधानं तेषां जीवादितत्त्वाधिष्ठातृत्वादुपपन्नम् । यच्चोक्तम् । गुणगुणित्वादिकल्पनाद्विप्रतिषेध इति तत्तु स्वाज्ञानविजृम्भितम् । पञ्चरात्रेषु कुत्रापि ज्ञानबलैश्वर्यादिगुणानां गुणित्वानभ्युपगमात् । यत्रापि च ज्ञानादिशब्दानां ब्रह्मवाचकशब्दसामानाधिकरण्यं तत्रापि तद्गुणसारत्वात्तद्व्यपदेशोपपत्तेर्न गुणित्वकल्पना । इतरथा यः सर्वज्ञः सर्ववित् सत्यं ज्ञानमनन्तं ब्रह्म इति श्रुतेरप्यप्रामाण्यप्रसङ्गात् । यदप्युक्तम् । सूत्रकारेणापि पञ्चरात्रप्रामाण्यं प्रतिषिध्यते इति तदिदमाशामात्रमतिसाहसं च। वेदार्थमुपबृंहयता बादरायणेन मोक्षधर्मे विंशत्यध्यायैः आश्वमेधिके त्रयोविंशत्याध्यायैश्च पञ्चरात्रप्रामाण्यं प्रख्यापितवता शारीरके कथं तदप्रामाण्यं प्रतिपाद्येत । मोक्षधर्माश्वमेधिकयोरेतावती तु भिदा । मोक्षधर्मे बह्वीभिरुपपत्तिभिः पञ्चरात्रप्रामाण्यं प्राधान्येन प्रतिपिपादयिषुः प्रमेयशरीरं संचिक्षेप आश्वमेधिके तु पूर्वप्रसाधितं प्रामाण्यं संक्षेपत उपजीव्यत्वेनानूद्य निखिलधर्मरहस्यरूपं पञ्चरात्रप्रमेयशरीरं वितस्तारेति । इयं हि शास्त्रकाराणां शैली यत्प्रमाणत्वेनाभिमतस्य ग्रन्थस्य प्रामाण्यप्रकारमेव प्रथमं सुनिरूप्य ततः प्रमेयशरीरनिरूपणम् । अत एव खलु भगवता जैमिनिनापि पूर्वतन्त्रे विध्यर्थवादमन्त्रनामधेयस्मृत्याचारवाक्यशेषसामर्थ्यानां धर्मप्रमाणानां प्रामाण्यमेव प्रथमेऽध्याये संसाध्य द्वितीयाद्यध्यायेषु प्रमेयशरीरं निरूपितम् । अतः सूत्रकारेण पञ्चरात्रप्रामाण्यं प्रतिषिध्यत इत्येतदुत्स्वप्नायितम् ।

बादरायण आचार्यः पञ्चमं वेदमुद्धिरन् ।
महता च प्रबन्धेन मोक्षधर्मेबहुक्रमैः ॥

पञ्चरात्रस्य कृत्स्नस्य प्रामाण्यं प्रत्यपीपदत् ।
स कथं ब्रह्मसूत्रेषु सूत्रयेदप्रमाणताम् ।

अत्रायं मोक्षधर्मीयवचनसन्दर्भनिर्गलितानां भगवद्वासुदेवमुखविनिःसृतपाञ्चरात्रनिरतिशयवैभवाविष्कारकाणामर्थात्तत्प्रामाण्यप्रसाधकानां सङ्ग्रहो हेतूनाम् । पञ्चरात्रस्य बहुमुखं प्रामाण्यं प्रतिपिपादयिषुणा भगवता व्यासेन समनुगृह्णीते भीष्मयुधिष्ठिरसम्वादरूपे मोक्षधर्मीयग्रन्थसंदर्भविशेषे युधिष्ठिरपृष्टार्थस्य परमरहस्यत्वस्य दुरवबोधत्वस्यायोग्येष्ववक्तव्यत्वस्य च कुरुवृद्धेन भीष्मेण प्रदर्शितत्वात् । लोकहिताय प्रवृत्ततया बाह्यागमव्यावृत्तत्वप्रदर्शनात् । योग्यजनभूयिष्ठकालप्रवृत्तत्वतदितरकालतिरोहितत्वाभ्यां वैलक्षण्यातिशयाविष्करणात् । आविर्भावतिरोभावमात्रकथनेनार्थशरीरस्य वेदार्थवदनादित्वस्य व्यञ्जिततया नितरां बाह्यागमेभ्यो व्यावृत्तत्वस्फोरणात् । सर्वमर्यादास्थापकमुनिजनभूयिष्ठमेरुपृष्ठप्रवृत्ततया विलक्षणदेशप्रवृत्तत्वोत्कीर्तनात् । पञ्चरात्रप्रवर्तकानामृषीणां चित्तैकाग्र्येन्द्रियजयादिबहुगुणवत्त्वस्य तपोमहिमवत्त्वस्य भगवत्प्रसादलब्धसरस्वतीकत्वस्य बहूनामैकमत्यस्य च दर्शिततया विलक्षणप्रवर्तकप्रवर्तितत्वावगमात् । प्रकृष्टदेवर्षिपरिग्रहप्रकृष्टशिष्याधिगमाभ्यां विलक्षणवक्तृश्रोतृकत्वस्य व्यक्तीकरणात् । निखिलवेदवेदान्तसारत्वस्य गुडजिह्विकान्यायेन त्रिवर्गप्रतिपादकत्वस्य मोक्षैकपरत्वस्यानुत्तमाहितत्वस्य च प्रतिपादिततया विलक्षणप्रबन्धत्वावगमात् । इतरप्रबन्धप्रामाण्ये दृष्टान्तीकृतत्वात् । मुक्तकण्ठं भगवन्नियमितप्रमाणभावत्वात् । अव्यवधानेन भगवदनुशासनरूपत्वात् । धर्मतन्त्रप्रवर्तकमन्वादिनिखिलमुनिजनोपजीव्यत्वात् । पञ्चरात्रनिष्ठस्योपरिचरस्य राज्ञोऽश्वमेधकर्तृकत्ववचनाद्वैदिकानां पञ्चरात्रोक्तानां च कर्मणां कर्तृसामान्यावगमेन "अपि वा कर्तृसामान्यात्"इति न्यायानुगृहीतत्वात् । तेषामेव द्विविधानां कर्मणामव्यवधानेनाराध्यपरदेवतासामान्यप्रदर्शनेन संप्रतिपन्नदेवताकत्वावगमात् । सर्वदेवतासाक्षात्कारिबृहस्पत्यदृश्यस्य भगवतः पञ्चरात्रनिष्ठोपरिचरदृश्यत्वप्रतिपादनेन विलक्षणाधिकारिकतया प्रतिपन्नत्वात् । एकतद्वितत्रितवृत्तान्तमुखेन षड्विधतात्पर्यलिङ्गेष्वर्थवादरूपतात्पर्यलिङ्गवत्त्वज्ञापनात् । पञ्चरात्रविहितभगवद्धर्मनिष्ठपुरु-

षाध्युषितदेशस्य परमप्राप्यत्वबहुतपोलभ्यत्वयोर्धर्मान्तरानिष्ठैस्तद्ध-र्मनिष्ठानां दुर्दर्शत्वबहुतपोदृश्यत्वयोस्तेषामितराधिकारिषु शून्यादरत्वस्य तन्मुखेनेतराधिकारिनिकृष्टत्वभगमद्धर्मनिष्ठप्रकृष्टत्वयोर्भगवता स्वयमागत्य दर्शनप्रदानात्तेषां महत्त्वस्य भगवत्स्तोत्रश्रवणस्यापि तपःसाध्यतया भगवद्धर्मप्रकर्षस्य च प्रज्ञापिततया विलक्षणपुरुषानुष्ठीयमाननिरतिशयभोग्यभूतविलक्षणधर्मप्रतिपादकत्वात् । स्वविहित-धर्मानुष्ठातॄणां भगवद्दर्शनतुल्यदर्शनत्वदेवर्षिवन्द्यत्वब्रह्मादिप्रतियोगि-कमहत्त्वादिगुणापादकत्वात् । भगवद्धर्मनिष्ठपरिसरे भगवता नारद-सम्भाषणस्यापि विघ्नरूपताकथनेन नारदादपि तेषामाप्ततरत्वप्रख्यापनात् । मोक्षधर्मापरपर्यायस्य भगवद्धर्मस्य दुरनुष्ठानत्वसनातनत्वैकान्तिकधर्मत्वश्रेष्ठत्वनारायणप्रियत्वकृतयुगप्राप्त्यापादकत्वपर-ममोक्षप्रदत्वप्रतिपादनमुखेन पञ्चरात्रविहितधर्माधिकारिवैलक्षण्यप्रपञ्चनात् । वेदवेदान्तवेद्यपरदेवतायाः सर्वस्मात्परत्वेन पञ्चरात्रप्रति-पाद्यत्वावेदनात् । पञ्चरात्रविषयकोपक्रमोपसंहारादिषड्विधतात्पर्य-लिङ्गपरिष्करणात् । तदेवमाशयदोषविरहितत्वात् विलक्षणदेशकालप्रवृत्तत्वात् । विलक्षणप्रवर्तकप्रवर्तितत्वात् विलक्षणवक्तृ-श्रोतृकत्वात् । विलक्षणप्रबन्धत्वात् । विलक्षणधर्मप्रतिपादकत्वात् । विलक्षणतत्कर्तृकत्वात् । विलक्षणफलकत्वात् । तत्फलदायिविलक्षण-देवताविषयकत्वाच्च वैलक्षण्यप्रतिपादनमुखेन बहुमुखवैलक्षण्याति-शयः स्थिरीकृत इति सिद्धं भगवच्छास्त्रस्यौत्सर्गसिद्धं प्रामाण्य-मप्रामाण्यकारणाभावादनपोदितं दुरपह्नवमिति । तथा स्वमहिर्षी भूमिमुद्दिश्य भगवत्प्रणीते अत एव सात्त्विकत्वेन परिगणिते श्रीमति वाराहे पुराणे मोक्षधर्मानुगुण्येन पञ्चरात्रस्य वेदतुल्यप्रामाण्य-प्रतिपादनमुखेन पाशुपताद्यागमान्तरवैलक्षण्यमुपपाद्य वेदाधिकृत-त्रैवर्णिकाधिकारत्वं तदितरायोग्यत्वं वेदपञ्चरात्रयोः समुच्चित्य मोक्षसाधनत्वं सुनिरूप्य तदितरागमानां मोहशास्त्रत्वमुपवर्णितम् । यदुच्यते यदि भगवत्प्रणीतत्वादेवागमान्तरवैलक्षण्यं पञ्चरात्रस्याभिमतम् हन्त तर्हि किमपराद्धं बौद्धार्हताद्यागमैः बुद्धादीनामपि भगवदवतारतया तत्प्रणीतानामपि भगवत्प्रणीतत्वावि-शेषेण पञ्चरात्रतुल्यत्वादिति । तदिदं दृष्टान्तदार्ष्टान्तिकभूताग-मद्वयस्वरूपानभिज्ञाननिबन्धनं चोद्यम् ।

अन्तरं यादृशं लोके ब्रह्महत्याश्वमेधयोः।
दृश्यते तादृगेवेदं द्वयोरागमयोरिह॥

एकत्र वेदाप्रामाण्यप्रतिपादनपूर्वकं भूयो भूयो वेदाविरुद्धार्थप्रलपनम्। इतरत्र वेदप्रामाण्योपजीवनपूर्वकं कार्त्स्न्येन वैदिकपरमरहस्यार्थविशदीकरणम्। प्रमाणभूतैः प्रबन्धैः श्रुतिविरुद्धत्वनिबन्धनपरित्याज्यत्वंप्रतिपादनाच्छिष्टबहिष्कृतत्वमेकत्र। इतरत्रांशतोऽपि श्रुतिविरोधाभावात् प्रमाणभूतबहुप्रबन्धप्रशस्यमानतया निखिलशिष्टजनसमाद्रियमाणत्वम्। एकत्र विप्रलिप्सादिदोषपुरस्कारेणासुरविमोहनार्थं प्रवर्तितत्वम्। इतरत्र विप्रलिप्सादिदोषसम्भावनागन्धरहितेन परमपुरुषेण नारदशाण्डिल्यादिसाधुजनपरित्राणैकप्रयोजनकतया समनुगृहीतत्वम्। इत्येवं विरुद्धस्वभावयोर्बुद्धागमश्रीपञ्चरात्रयोः कथं साम्यं सम्भाव्यताम्। इत्थं प्रतिष्ठिते च पञ्चरात्रप्रामाण्ये तत्प्रतिपादितभगवदभिगमनोपादानेज्याद्याराधनाङ्गीभूतपञ्चसंस्कारान्तर्गततप्तशङ्खचक्राद्यङ्कनमपि सम्यक् प्रतिष्ठितं भवति। तथाहि तद्विषये केचिदेवं शङ्कन्ते। तप्तचक्राङ्कने प्रमाणं न किञ्चिदुपलभामहे। प्रत्युत निषेधशास्त्राणि सन्ति। तत्प्रमाणतया वादिभिरुदाह्रियमाणाः प्रत्यक्षश्रुतयश्चान्यार्थाः। खिलश्रुतयश्चाविश्वसनीयाः। स्मृतीतिहासपुराणादीनां वेदमूलकतयैव प्रामाण्याद्वेदाविहितार्थे प्रामाण्यं दुर्लभम्। आचारश्च यावत्प्रमाणोपलम्भं भ्रान्तिमूलत्वसम्भावनार्हः। तस्मात्केनापि प्रमाणेन धर्मत्वानिश्चयात्प्रत्युत निषेधशास्त्रैरधर्मत्वनिश्चयाच्च तप्तचक्राद्यङ्कनं नानुष्ठेयमिति। कथयन्ति च कानिचिन्निषेधवचनानि। स एष प्रवादोऽनिर्वचनीयख्यातिवादिनामनिर्वचनीय एव। तथाहि। तप्तचक्राद्यङ्कने प्रमाणाभावोपन्यासपूर्वकं निषेधशास्त्रसद्भाववर्णनं तावदत्यन्ताविचारविलसितम्। तत्तद्ग्रन्थोदाहृतबहुप्रबलतरप्रमाणानां सद्भावात्। प्रसक्तस्यैव प्रतिषेद्धव्यत्वेन निषेधशास्त्रस्य प्रसक्तिसापेक्षत्वात्। तप्तचक्राद्यङ्कनस्येष्टसाधनताया लोकासिद्धताविरहेण तत्प्रसक्तेः शास्त्रैकनिबन्धनताया निषेधशास्त्रसद्भाववादिभिरप्यकामैरपि वक्तव्यत्वात्। विधिशास्त्रसद्भावे निषेधशास्त्रोदयासम्भवाच्च। इदमत्रावधेयम्। शास्त्रं हि कस्मिंश्चिदनिष्टसाधने

कर्मणि प्रसक्तामेव प्रवृत्तिं प्रतिषेधति । कलञ्जभक्षणादौ तथा द-र्शनात् । कलञ्जभक्षणसुरापानपरदारगमनपरद्रव्यापहारादिषु च लोकसिद्धेष्टसाधनताज्ञानमूलो रागो हि प्रवृत्तिं प्रसञ्जयति । अ-तस्तां प्रतिषेधति शास्त्रम् । तप्तचक्राद्यङ्कने तु प्रत्युत प्रत्यक्षं दुःख-रूपतयैवानुभूयमाने लोकसिद्धेष्टसाधनताज्ञानाधीनरागमूलप्रवृत्ति-प्रसङ्गस्य दुर्वचतया कथं तत्र निषेधशास्त्रावतारः सम्भवति । नहि खलु कञ्चित्प्रसङ्गलेशविधुरां प्रवृत्तिमुन्मत्तवत्प्रतिषेद्धुमर्हति शास्त्रम् । प्रतिषेध्यप्रतियोगिप्रसिद्धिमन्तरेण प्रतिषेधस्य कर्तुमशक्य-त्वात् । निष्प्रयोजनत्वादतिप्रसङ्गाच्च । यदि पुनरेतद्दोषपरिहाराय शास्त्रमूलैव तत्र प्रवृत्तिरिति मन्यते कथं नु नाम तर्हि प्रवृत्ति-मूले प्रमाणभूते शास्त्रे प्रजाग्रति प्रतिषेधशास्त्रावतारसम्भवः । कथन्तरां वा प्रमाणाभाववर्णनं संजाघटीति । तस्माल्लोकसिद्धेष्ट-साधनताज्ञानमूलरागानधीनप्रवृत्तिविषये कर्मणि प्रतिषेधशास्त्रस-द्भावप्रवर्तकशास्त्रासद्भावौ नानुन्मत्तः कश्चिद्ब्रूयादिति । अत एव ह्यप्राप्ते प्रतिषेधशास्त्रोदयसम्भवलक्षणाद्धेतोः अपूर्वे विषये साक्षा-त्प्रतिषेधरूपेणैव प्रवृत्तस्यापि शास्त्रस्य प्रतिषेधपरतामनङ्गीकृत्यार्थ-वादरूपता निर्णीता पूर्वतन्त्रे दशमाध्यायाष्टमपादे "अपूर्वेचार्थ-वादः स्यात्" इति सूत्रे । अथ पञ्चरात्रादिशास्त्रप्राप्तस्यैव तप्तचक्राद्य-ङ्कनस्य निषेधपराणि निषेधशास्त्राणि सम्भवन्तीतिचेद्धन्त तर्हि परमाप्ततमभगवत्प्रणीतपरमप्रमाणभूतश्रीपञ्चरात्रशास्त्रविरोधेनैव त न्निषेधपरसच्छास्त्रोदयो न सम्भवति । तादृशासच्छास्त्रोदयश्चा-किञ्चित्करः । पञ्चरात्रशास्त्रस्य प्रमाणसार्वभौमत्वं च भारतादिषु भगवद्बादरायणादिभिरेव सुप्रतिष्ठापितमिति न तस्यासच्छास्त्रको-टिनिवेशः शक्यशङ्कः । तथा च निषेधशास्त्रसद्भाववादिनापि स्व-मुखेनैव यथा प्रापकशास्त्रमविचाल्यमभ्युपगतं भवति न तथा नि-षेधशास्त्रं स्वाभ्युपगतप्रापकप्रमाणविरोधादेव । यानेवोद्दिश्य त-प्तचक्राद्यङ्कनविधानपराणि शास्त्राणि प्रवृत्तानि तद्विषयाण्येव च निषेधशास्त्राणि निषेधशास्त्रसद्भाववादिनो वदन्तीति विषयभेदे-नापि निर्वाहो न तेषां कर्तुं शक्यः । नच परस्परं विरुद्धानि स-च्छास्त्राणि भवितुमर्हन्ति । तस्मान्निषेधवचनानि कैश्चिद्गूढं प्रक-ल्प्य प्रचारितानीति तत्त्वविद्भिर्निश्चीयते । नच विधायकवचना-

न्येव कल्पिततानि कुतो न स्युरिति वाच्यम् । निषेधवचनानां विशेत्य पेक्षया न्यूनानां कल्पितत्वसम्भवेऽपि नानेतिकर्तव्यताकतप्तचक्राद्यङ्कनाववायकस्य वेदपञ्चरात्रस्मृतीतिहासपुराणादिलक्षणस्य महतो महतः शास्त्रौघस्याद्ययावदविच्छिन्नशिष्टगोष्ठ्यनुष्ठानगोचरस्वप्रतिपाद्यार्थजातस्य कल्पितत्वसम्भावनाया अपि दुष्करत्वात् । निषेधशास्त्रसद्भाववादिभिरप्यवर्जनीयप्रापकशास्त्रापेक्षैरपह्नवायोगाच्च । नच केषांचित्तप्तचक्राद्यङ्कनानुष्ठानवत्केषांचिदननुष्ठानमपि दृश्यत इति निषेधशास्त्रमपि नापह्नवमर्हतीति वाच्यम् । शास्त्रोक्तानां सर्वेषां धर्माणां सर्वैरनुष्ठानादर्शनेन केषांचिद्धर्माणां कैश्चिदननुष्ठानमात्रेण तन्निषेधशास्त्रसद्भावानिर्णयानासम्भवात् । एवं तत्तद्धर्माणामननुष्ठानस्य तत्तद्धर्मस्वरूपाज्ञानेन वा तत्साध्यफलरुच्यभावेन वा निषेधशास्त्रमन्तरेणैव निर्वाहसम्भवादनुष्ठानस्यैव शास्त्रैकनिर्वाह्यत्वाच्च परस्परविरोधे निषेधकशास्त्रमेवापह्नवार्हं न विधायकशास्त्रमित्यवधीयताम् । नतौ पशौ करोतीति कद्विकल्पश्च तुल्यप्रमाणयोरसंदिग्धयोस्तुल्यबलयोः शास्त्रयोर्भवतीति मीमांसादशमे स्फुटम् । अत्र तु निषेधकवाक्यानामल्पत्वेन कल्पितत्वशङ्कास्पदत्वेन स्मार्तपौराणिकमात्रत्वेन च तुल्यबलत्वं नास्तीति स्पष्टमेव । इत्थं चेदानीं तप्तचक्राद्यङ्कनप्रतिवादिनः प्रष्टव्याः । किं भवन्तस्तप्तचक्राद्यङ्कनविधायकशास्त्रं यदपलपितुमुद्युञ्जते तत् किं प्रतिषेधकशास्त्रं तथ्यं मत्वा अथ वा अतथ्यं मत्वा अपलपितुमुद्युञ्जते इति । न तावदाद्यः पक्षः सम्भवति प्रतिषेधस्य प्रसक्तिसापेक्षत्वेन रागाप्राप्तविषयस्यास्य प्रतिषेधकशास्त्रस्य प्रागुक्तनयेन प्रापकशास्त्रमन्तरेणोदयासम्भवेन तदसत्त्वेऽस्य तथ्यताया एवासम्भवात् । नापि द्वितीयः पक्षः । प्रतिषेधकशास्त्रस्यापारमार्थिकत्वे प्रापकशास्त्रस्यानादिकालतः शिष्टगोष्ठ्यनुष्ठीयमानस्वार्थस्यान्यथाकरणाभावेन सुतरामेवापलापायोगात् । वस्तुतो विपर्ययस्यैव दुष्परिहरत्वाच्च । किञ्च यानि यानि वचनानि यद्यद्ग्रन्थगतानीति चक्राङ्कननिषेधकत्वेन प्रतिवादिभिरुदाह्रियन्ते तानि तानि वचनानि तत्तद्ग्रन्थमूलकोशेषु परिशीलने अन्वेषणे नोपलभ्यन्ते । अपि च विष्णुस्मृतिगतत्वेनोदाहृतस्य यथाश्मशानजं काष्ठं सर्वकर्मसु गर्हितमिति श्मशानजकाष्ठस्य सर्वकर्मान-

र्हितां निदर्शनीकृत्य चक्राङ्कितविप्रस्य सर्वकर्मसु गर्हितत्वं वदतोऽस्य वचनस्य यथाग्निदग्धस्य श्मशानकाष्ठस्याशुचित्वप्राप्त्या सर्वकर्मानर्हत्व तथा चक्राङ्कितस्य चक्राग्निदाहेनाशुचित्वप्राप्त्या सर्वकर्मानर्हत्वमिति ह्याशयो लभ्यते । तत्र तदिदं निदर्शनं तावन्नितरन संगच्छते । न तावत्तत्र श्मशानकाष्ठस्याग्निदाहतोऽशुचित्वम् । श्मशानेष्वपि तेजस्वी पावको नैव दुष्यतीति मनुस्मृतौ नवमाध्यायवचनेन अग्नेः स्वतः शुद्धत्वेन तद्दाहस्य कथंचिदप्यशुचित्वहेतुत्वासम्भवात् । प्रत्युत तत्तद्वस्तुशुचित्वहेतुताया एव शास्त्रसिद्धत्वाच्च । परंतु श्मशानदेशशवाद्यशुचिद्रव्यसम्बन्धनिबन्धनमेव श्मशानकाष्ठस्याशुचित्वमकर्मण्यत्वं चेति न तद्दृष्टान्तेन चक्राङ्कितस्याशुचित्वं सम्भवदुक्तिकम् । स्वतः शुद्धेन नानाविधपवित्रमन्त्रकरणकहोमसंस्कृतेनाग्निना तप्तैः स्वयं च पावनतमैर्निरतिशयपावनत्वनिबन्धनश्रुतिस्मृत्यादिप्रसिद्धपवित्रसंज्ञासांज्ञितसुदर्शनादिभगवद्दिव्यायुधैरङ्कनलक्षणस्य संस्कारविशेषस्य निरतिशयशुद्ध्यादिहेतोरशुद्धिकथागन्धासहिष्णोरशुचित्वहेतुतायाः अनेकजन्मार्जितापरिमितपापसंचयनिबन्धनदुर्वारबुद्धिमालिन्यासुरप्रकृतीनन्तरेण कस्याप्यन्यस्य कथंचिदप्यस्फुरणात् । "भृगूणामङ्गिरसां घर्मस्य तपसा तप्यध्व"मिति कपालान्यग्नौ सन्तापयन्तीति प्रसिद्धं हि वैदिकगोष्ठ्यां शुद्ध्यर्थमेवाग्निसन्तापनम् । अत्यन्ताशुद्धद्रव्यसंपर्कदूषितानां पात्रादीनां शुद्ध्यर्थमग्नौ सन्तापनं सुप्रसिद्धं च धर्मशास्त्रेषु । यदि चाग्निसयोगाग्निदाहादिमात्रमेवाशुचितोहतुः स्यात् तदा आज्यसंस्कारदर्वीतापनशारीरव्याधिभेषजाग्निदाहादीन्यप्यशुचितामापादयेयुः । किं बहुना अग्निहोत्रादिकृत्येषु पाकादिकृत्येषु शीतवारणार्थाग्निप्रज्वलनदीपोद्योतनादिकृत्येषु चावर्जनीयप्राप्तप्रसङ्गानां प्रायशः सर्वेषामेवाग्निसंयोगतद्दाहादिसम्भवेन सर्वे एव ते सर्वकर्मानर्हाः स्युरितिकेवलमविवेकिजनकोलाहलमात्रमिदमिति सुधियां सुज्ञानम्

अग्निदाहस्य दोषत्वेऽपि ग्रामादिकस्य रोगनिवारणायावर्जनीयतय प्राप्तस्य चाग्निदाहस्य न दोषत्वं न्याय्यमिति चेत् । हन्त तर्हि किं वैद्य एव वा चक्राद्यग्निदाहे दोषं त्वं वक्तुं शक्ष्यसि । प्रसिद्धं च सौराष्ट्रदेशे प्रायशः सर्वेषां रोगविशेषभेषजतयाग्निसन्तप्तलोहशलाकादिभिः रोगाधारदेहभागदहनम् । मैथिलदेशे वधूनां विवाहसम

नन्तरप्राप्तश्रावण्यां सौभाग्यादिसिद्ध्यर्थतया कुलाचारसिद्धं श्वश्रूप्रभृतिभिर्दीपशिखया जानुभागदहनं च । तदिदं सर्वं वैद्यकुलाचाराभ्यां सिद्धमिति न दोष इति चेत् तर्हि निःश्रेयसादिसाधनपरमसंस्कारतया श्रुतिस्मृत्यादिपरःसहस्रप्रमाणगणविहिते लोकमान्यशिष्टगोष्ठीष्वनाद्याचारसिद्धे तप्तचक्राद्यङ्कने किं मुधा दुर्वादप्रलपनेनेति कथ्यताम् । यदपि द्विजेषु निषेधवचनानां सावकाशता शूद्रादिषु विधायकवचनानां सावकाशतेति व्यवस्थापयन्ति तदपि न सम्यक् । यदि विधायकवचनानि शूद्रादिपराण्येव स्युस्तदा द्विजातिषु प्राप्त्यभावेन किमर्थं निषेधवचनानि प्रवृत्तानि स्युरिति । किंच यदीयमेव व्यवस्था भवत्संमता स्यात्तदा तद्वचनानुरोधेन भवदीयैः शूद्रादिषु पारंपर्यतस्तप्तचक्राद्यङ्कनं भवदुपदिष्टं क्रियमाणं दृश्येत । नचैवं लोके भवदीयेषु केनचित् क्वापि कदाचित् कस्य चित् कृतं क्रियमाणं तावदुपलभामहे । प्रत्युत सर्वत्र तदसंमतिमेवोपलभामहे । अत इदमवगम्यते स्वपक्षस्थापनाहीनपरपक्षप्रतिक्षेपमात्रोद्यतकथालक्षणवितण्डावादमात्रेण वैष्णवेषु प्रत्यवस्थातुमेवोक्तलक्षणानि कानि चिद्वचनानि कल्पयित्वा जल्पन्ति भवन्त इति ।

किं बहुना श्रीगयाक्षेत्रे तप्तचक्राद्यङ्कितभगवद्भक्तविप्रानेव निमन्त्र्य सर्वदेशसर्वमतस्थशिष्टैः श्राद्धं क्रियत इत्ययमाचारः सनातनः प्रसिद्धः । गयाश्राद्धस्य चाक्षयपितृतृप्त्यादिबहुफलहेतुत्वं सुप्रसिद्धम् । तप्तचक्राङ्कनविषयनिषेधवचनसत्त्वे अनेन सदाचारेण सह विरोधः पूर्वोक्तविधायकवचनैश्च विरोधः स्यादिति । निषेधवचनानां क्वचिद्बृहन्नारदाद्युपपुराणेषु दुर्बलप्रमाणभूतेषूपलभ्यमानत्वेऽपि "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" इति मीमांसातृतीयपादविरोधाधिकरणस्थसूत्रानुसारेणानादरणीयानि तानि निषेधवचनानि । हेमाद्रिकारेण च प्रायश्चित्तकाण्डे तप्तचक्राङ्कितदूषणदानार्थं यानि कानि चिद्वचनानि यद्यत्पुराणस्थत्वेन लिखितानि तानि वचनानि तेषु पुराणेषु नोपलभ्यन्ते । हेमाद्रिकारादर्वाचीनैः पृथ्वीचंद्रोदयादिभिर्यानि आश्वलायनविष्णुस्मृत्यादिनाम्ना वचनान्युदाहृतानि निर्णयसिन्धुकारादिभिरनूदितानि च तान्यप्याश्वलायनादिग्रन्थेषु नोपलभ्यन्ते । अतस्तान्यपि कल्पितान्येवेति निश्चीयते किंच यदि

वचनानि प्राचीनस्मृतिगतानि स्थितानि तदा ततः प्राचीनेन हेमाद्रिणा पुराणेभ्योऽपि प्रबलानि इमानि स्मृतिवचनानि कुतो नोदाहृतानि । अतः पूर्वं हेमाद्रिणा पुराणनाम्ना वचनानि कल्पितानि ततः पश्चात्पृथ्वीचन्द्रोदयेन स्मृतिनाम्ना कल्पितानि भास्करेण तु महासाहसिकेन श्रुतिम्नापि तप्तमुद्राविद्रावणे कल्पितानि इति विचारयन्तु विद्वांसः॥ एवं रामार्चनचन्द्रिकाख्ये प्राचीननिबन्धनग्रन्थे पञ्चमे पटले आनन्दवनसन्यासिना शाङ्करमतस्थेनैव तप्तचक्राङ्कधारणं श्रुतिस्मृत्याद्युपन्यासेन स्थापितम् । तथा रामनाममाहात्म्याख्ये ग्रन्थे पञ्चमषष्ठप्रकरणयोरच्युताश्रमसन्यासिना द्वारकाशङ्करमठपतिपरंपराघटकेन तप्तचक्राद्यङ्कधारणं श्रुतिस्मृत्याद्युपन्यासेन सप्रपञ्चं स्थापितम् । रामार्चनचन्द्रिकारामनाममाहात्म्यग्रन्थोदयकाले अमीषां निषेधवचनानां सत्त्वे तदुदाहरणं तद्गतिकल्पनं च तत्तद्ग्रन्थकाराभ्यां किमिति नाकारिषाताम् । किञ्च रामनाममाहात्म्यग्रन्थे ऊर्द्ध्वपुण्ड्रत्रिपुण्ड्रविधिनिषेधवचनविषयविचारं कृत्वा तयोः पुण्ड्रयोर्वैष्णवशैवलक्षणाधिकारिविशेषविषयत्वं तत्तदितरनिन्दयोः नहि निन्दान्यायेन तत्तत्प्रशंसामात्रपरत्वं च व्यवस्थापितम् । इत्थं व्यवस्थापयता ग्रन्थकारेण तप्तचक्राङ्कनाविषयेऽपि निषेधवचनानां तदानीं सत्त्वे तेषां गतिव्यवस्थामकृत्वैव तप्तचक्राङ्कनं कथं स्थापितम् । तस्मात्तदानीमस्थितानि पश्चादेवार्वाचीनैः कल्पितानीदृशवचनानीति स्फुटमवगम्यते ! ब्रह्मसूत्रभाष्येऽपि पञ्चरात्राविरोधकथनसमये यथा शाङ्करभाष्यादर्वाचीनाणुभाष्यटीकाप्रकाशकारेण विप्रतिषेधाच्चेति सूत्रे तप्तमुद्रादिधारणविरोध ऊहितस्तथा प्राचीनशङ्कराचार्यैर्नोक्त इति ततोऽपि निषेधवचनानां शङ्कराचार्यकाले असत्त्वं प्रकाशटीकाकारकाले एव च कैश्चित् कल्पितत्वेन सत्त्वं प्रतीयते । एवमनादिकाललोकमान्यवैदिकशिष्टगोष्ठीपारंपर्यानुष्ठानसद्भावोऽपि तप्तचक्राद्यङ्कनविधिपरशास्त्राणामेव सद्भावं पारमार्थिकमवगमयन् प्रतिषेधवचनानां कल्पितत्वमवगमयति । प्रसिद्धो हि श्रीजगन्नाथक्षेत्रादारभ्य तैलङ्गद्राविडकर्णाटकान्ध्रादिमैसूरपर्यन्तदेशेषु दक्षिणदेशेषु गयाकुरुक्षेत्रायोध्यावृन्दावनादिप्रदेशेषु च तप्तशङ्खचक्राद्यङ्कनादिलक्षणवैष्णवधर्मानुष्ठानसदाचारः प्रचुरः । सर्वदेशसर्वमतस्थशिष्टा द्राविडादिदेशे श्रीरङ्गवेङ्कटकाञ्चीप्रभृतिशतशः दिव्यदेशेषु तप्तचक्राद्य-

ङ्कनलक्षणशालिश्रीवैष्णवजनसकाशाद्भगवत्तीर्थप्रसादादिकं निर्विशङ्कं गृह्णन्तो दृश्यन्ते। गयाक्षेत्रे च तप्तचक्राद्यङ्कनादिलक्षणशालिवैष्णवानेव निमन्त्र्य श्राद्धं कुर्वन्तश्च दृश्यन्ते । एष आचारः प्राचीन एव नाधुनिकः । तप्तचक्राङ्कनेन चाण्डालो भवतीत्यादिभवदीयवचनसत्त्वे कथमयमाचारः शिष्टेषु सत्सु प्रचलितः स्यात् । अत एव तु रामार्चनचन्द्रिकाकाररामनाममाहात्म्यग्रन्थकाराभ्याम् ।

दक्षिणे तु भुजे विप्रो विभृयाद्वै सुदर्शनम् ।
वामे तु शङ्खं विभृयादिति वेदविदो विदुः ।

इति श्रुत्या ।

अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा ।
ब्राह्मणस्य तथैवेदं तप्तचक्रादिधारणम् ।

इति पाद्मोत्तरखण्ड स्मृत्या च तप्तचक्रादिधारणस्य नित्यकर्मत्वं स्थापितम् ।

तस्मात्सिद्धं तप्तशङ्खचक्राद्यङ्कनलक्षणधर्मस्य परमवैदिकत्वमिति । अथ तत्र प्रमाणभूताः श्रुत्यादय उच्यन्ते । तत्र तावदृग्वेदसंहितासप्तमाष्टके तृतीयाध्याये षोडशसूक्ते अष्टमवर्गे तथा यजुर्वेदे तैत्तिरीयारण्यके प्रथमप्रश्ने एकादशानुवाके तथा सामवेदसंहितायां पूर्वार्चिके षष्ठप्रपाठके द्वितीयार्धे उत्तरार्चिके द्वितीयार्धे द्वितीयप्रपाठके च पठ्यमानो मन्त्रः ।

पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत इति ।

अस्य चेत्थं विवरणम् । हे ब्रह्मणस्पते चतुर्मुखस्य स्वामिन् विष्णो अत एव प्रभुः सर्वनियामकस्त्वं विश्वतः सर्वेषां सार्वविभक्तिकस्तसिः गात्राणि सजीवशरीराणि पर्येषि व्याप्नोषि अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा ईश्वरः सर्वभूतानामित्यादिश्रुतिस्मृतिभ्यः । ते तव पवित्रं सुदर्शनचक्रम् ।

पवित्रं चरणं नेमिः पविश्चक्रं सुदर्शनम् ।
नामानि विष्णुचक्रस्य पर्यायेण निबोध मे ॥

इति वक्ष्यमाणपाद्मोक्तेः । कर्तरि चर्षिदेवतयोरितीत्रुत्पादितत्वाच्च सुदर्शनचक्रदेवताविशेषे योगरूढोऽयं पवित्र शब्दः । विततं

तवोपासकेष्ववश्यधार्यत्वेन व्याप्तम् । तस्य व्याप्तिभावाभावयोर्लाभ- हानी चाह । अतप्ततनूरित्यादिना । अत्र अतप्ततनूरित्यस्य तेन पवि- त्रेणेत्यादिः । तेनातप्ता तनूर्येषामिति वक्ष्यमाणपाठोक्तेः । अकृत- तत्तापसंस्कारः पुरुष इत्यर्थः । अत एव आमः अपरिपक्वः कषाये कर्मभिः पक्के इतिवत् अविनष्टपापः तत् परं ब्रह्म ओं तत्सदितिनिर्दे- शो ब्रह्मणस्त्रिविधः स्मृत इति गीतोक्तेः । तस्य चक्रस्यानवरत- धारिणं त्वां न अश्नुते न प्राप्नोति । आमो अश्नुते इत्यत्र प्रकृ- त्यान्तःपादमव्यपरे इति प्रकृतिभावः । वहन्त इत् अस्य तत्पवि- त्रमित्यादिः । तेन तप्ता तनूर्येषामिति वक्ष्यमाणात् । तत् पवित्रं व- हन्तो धारयन्त एव इदित्येवार्थे अव्ययम् । अत एव शृतासः शृताः पक्काः शुद्धान्तःकरणाः शृतं पाक इतिनिपातितशृतशब्दा- ज्जस्याज्जसेरसुगित्यसुक् । तत् परं ब्रह्म त्वां समाशत प्राप्नुवन्तीति। ननु सायणाचार्यभाष्ये उद्गातारो द्रोणकलशं प्रतिष्ठाप्य तस्मि- न्नुदीचीनदशं पवित्रं वितन्वन्ति । पवित्रं ते विततं ब्रह्मणस्पते इति वितन्यमानमभिमन्त्रयते यजमान इत्यापस्तम्ब सूत्रेणोद्गातृप्रभृति- भिर्द्रोणकलशोपरि वितन्यमानदशापवित्रानुमन्त्रणे विनियोगादु- क्तमस्याः श्रुतेः सोमयागादिपरत्वं तत एव कृच्छ्रचान्द्रायणादिता- पपरत्वं च इति भास्करादिभिरुक्तत्वेन कथमस्याः सुदर्शनाङ्कनपर- त्वम् । तथाहि हे ब्रह्मणस्पते ब्रह्मणः बृंहकस्य द्रोणादिवर्धकस्यौ- षधिवनस्पतिलक्षणस्यान्नस्य पते सोम यद्वा ब्रह्मणः ब्राह्मणस्य पते ते त्वदर्थं त्वत्पावनार्थं विततं पवित्रं विस्तृतं प्रभुर्गात्राणि पर्येषि वि- श्वतः सर्वेषां गात्राणि विस्तारयसि अतप्ततनूर्न तदामो अश्नुते तेन दशापवित्रेण असंस्कृतः तत् होमकार्यं नाश्नुते । शृतास इद्वह- न्तस्तत्समाशतेति । शृतास इत् संस्कृता एव यागीयपदार्थाः तत् होमकार्यं समाशत इति । अथवा अतप्ततनूरित्यस्य सोमयागादिना कृच्छ्रचान्द्रायणादि तपसा अतप्ततनूः पुरुषः तत् मोक्षसुखं नाश्नु- ते । शृतास इत् वहन्तस्तत्समाशत इति तपसा परिपक्वा एव तपः वहन्तः आचरन्त एव तत् सुखं प्राप्नुवन्तीति शेषं पूर्ववत् इत्य- र्थादितिचेत् । अत्रोच्यते अस्य मन्त्रस्यापस्तम्बसूत्रकारविनि- योगेन दशापवित्रानुमन्त्रणपरत्वन्तु स्वीकर्तव्यमेव परन्तु प्रबल- प्रमाणैरर्थस्वारस्यं तु सुदर्शनपरत्वे एव भवति नतवन्यार्थे अर्थस-

ङ्गतिर्भवति। विनियोगस्त्वस्य मन्त्रस्यापस्तम्बेन दशापवित्रानुमन्त्रणे कृतः। बोधायनेनारुणकेतुकाग्निचयनोपयोग्यविष्टकोपधानकर्मणि कृतः । छन्दोगैस्तु पावनार्थपुण्याहतीर्थाभिमन्त्रणकर्मणि कृतः । पञ्चरात्रानेकसंहितावचनैः पद्मपुराणोत्तरखण्डद्विपञ्चाशदुत्तरद्विशततमाध्ययवचनैर्वृद्धहारीतवसिष्ठशाण्डिल्यादिस्मृतिवचनैश्च सौदर्शने कर्मणि कृतः अतः सर्वत्रैकस्य मन्त्रस्य सर्वे अर्था न सम्भवन्तीति एक एवार्थो मुख्यः स्वीकार्यः। विनियोगस्तु यत्र तत्र भवतु नाम न काचिदपि हानिः । पञ्चरात्रप्रामाण्यं तूपक्रम अत्रैवोपपादितम् । करिष्यमाणशुक्लयजुर्वेदभाष्यपीठिकायां च पञ्चरात्रपुराणस्मृत्यादीनां प्रामाण्यं निपुणतरमुपपादयिष्यते । सुदर्शनार्थभिन्नार्थेषु कथं साङ्गत्यं न भवतीतिचोदितम्।पवित्रं ते इति मन्त्रे हि पूर्वोत्तरार्धयोर्मिलित्वा वाक्यचतुष्टयं भवति । ब्रह्मणस्पते ते पवित्रं विततं भवतीत्येकं वाक्यम् । अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽपि प्रतीयते इति भाष्यात् । त्वं प्रभुः विश्वतः गात्राणि पर्येषीति द्वितीयं वाक्यम् । अतप्ततनूरामस्तन्नाश्नुते इति तृतीयं वाक्यम् । शृतासो वहन्त इत्तत्समाशत इति चतुर्थं वाक्यम् । तत्र पवित्रशब्देन योगरूढ्यादिरीत्या पवित्रे स्थो वैष्णव्यौ इत्यादाविव विशेष्यरूपद्रव्यमेव झटित्युपस्थितं भवति तच्चास्माकं मते सुदर्शनग्रहणे सम्भवति अन्यमते च किञ्चिदध्याहृत्य पवित्रशब्दयोजने अप्राप्ताध्याहाररूपो दोषो भवति । अतप्ततनूरित्यत्रापि कृच्छ्रचान्द्रायणादितपसेत्यध्याहरणे स एव दोषः । यदि च तद्दोषपरिहाराय तप्तपदे भावे कर्तरि वा निष्ठामाश्रित्य अतपस्वितनूरित्यर्थकं व्याख्यानं क्रियते तदा अतप्त इत्यनेनैव निर्वाहे तनूपदवैयर्थ्यम् । तपसोऽदृष्टविशेषात्मकस्यात्मनिष्ठत्वेन तपोऽनुकूलकृतिमत्त्वरूपतपःकर्तृत्वस्याप्यात्मनिष्ठत्वेन च तपोराहित्यस्य तपःकर्तृत्वाभावस्य वा अनुष्ठिततपसामपि पुंसां तन्वामबाधितत्वेन अतप्ततनूरित्यनेनापेक्षितव्यावृत्तेरप्यसिद्ध्यापत्तेश्च । अपि च तपतेः सकर्मकात्भावे कर्तरि वा क्तप्रत्ययस्वीकरणं तयोरेवेत्यनुशासनविरुद्धम् । अतप्ततनूरामस्तन्नाश्नुते इद्वहन्तः शृतासस्तत्समाशतेति तच्छब्दद्वयस्यैकार्थकताया एव स्वरसतः प्रतीयमानतया तां विहाय प्रथमतच्छब्दस्य मोक्षार्थकत्ववर्णनं द्वितीयतच्छब्दस्य तपोऽर्थकत्ववर्णनं

च सन्धौ गतावस्वरसम् । ब्रह्मपरतया प्रसिद्धस्य रूढस्य तच्छब्दस्य सुखपरत्ववर्णनमप्यसङ्गतम् । वहन्त इत्यस्य स्वरसतो धारयन्त इत्यर्थकत्याचरन्त इत्यर्थकत्ववर्णनमप्यत्यन्तास्वरसम् । एतेन भास्करदीक्षितकृतोऽर्थान्तरनिर्वाहः प्रतिक्षिप्तः । अथ सिद्धान्तार्थः । अस्मिन् पक्षे च पवित्रशब्दार्थः सुदर्शनप्रतिकृतिदेवताद्रव्यविशेष्यरूप एव ननु विशेषणरूपः पवित्रशब्दस्य तत्र शक्तिग्राहकं किं प्रमाणमिति चेत् पद्मपुराणोत्तरखण्डे चतुर्विंशत्यधिकाष्टशततमाध्यायस्थं द्विपञ्चाशदुत्तराष्टशततमाध्यायस्थं वा ।

पवित्रं चरणं नेमिः पविश्चक्रं सुदर्शनम् ।
सहस्रारं प्राकृतघ्नं लोकद्वारं महौजसम् ।
नामानि विष्णुचक्रस्य पर्यायेण निबोध मे इत्यादिकं ॥
बृहद्ब्रह्मसंहिताद्वितीयाध्यायस्थम्
त्वामाहु प्रथमा वाणी मम पाणिविभूषणम् ।
पवित्रं चरणं नेमिर्लोकद्वारं महौजसम् ॥

इत्यादिकं च प्रमाणं गृहाण । ननु पुराणस्य कथं शक्तिग्राहकत्वमिति चेत् आधुनिकमनुष्यरचितकोशादीनां वा कथं शक्तिग्राहकत्वमिति त्वमेव वद । कोशकारा हि पुराणादिभ्यः शब्दान् गृहीत्वा सङ्ग्रहं कुर्वन्ति ।

अमृतं विघसो यज्ञशेषभोजनशेषयोः ।
हव्यं कव्यं दैवपित्र्ये अन्ने पात्रं स्रुवादिकम् ॥

इत्यादयः शब्दाः स्मृतिपुराणादिभ्य एव संगृहीता अमरेण । तावतापि न कटादिशब्दानां सङ्ग्रहः कृतोऽमरसिंहेन । न वा श्रुतिस्मृतिपुराणस्थाः सर्वे शब्दाः निघण्टुकारैर्निर्वाचिताः । यथा व्योषवरामधुपर्कादयः । किञ्च ।

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥

इति भारतप्रथमाध्यायवचनेन पुराणादिभिर्वेदवाक्यं शक्त्यादिभिर्विचारणीयमिति निश्चीयते । ननु पवित्रशब्दस्य सुदर्शनपरत्वेऽपि तत्प्रतिकृतिरूपेण तप्तेन लाञ्छनरूपोऽर्थः केनावगम्यते इति चेत् । तत्रापि पूर्वोक्तपद्मपुराणाध्यायस्थं वाक्यं विनियोजकं वर्तते । तथाहि

पवित्रं ब्राह्मणस्पत्यं जगद्यात्तं हरेः सदा ।
तेनातप्ता तनूर्येषां न ते यान्ति परं पदम् ॥
तेन तप्ता तनूर्येषां ते यान्ति परमं पदम् इति ।

एतदुपबृंहकवचनैवेयं श्रुतिरित्थं चक्रधारणपरत्वेन व्याख्यायते । अन्यथा श्रुतिप्रतारणदोषः सम्भवेत् ।

आमाः ह्यतततनवस्तप्ताङ्गा हरिलाञ्छनैः ।
शृताः सुभोग्यतां प्राप्य भुज्यन्ते परमात्मना ॥
इति भरद्वाजसंहितापरिशिष्टप्रथमाध्यायवचनम् ।

पवित्रं ते विततमिति मुद्रयेद्दक्षिणे भुजे ।
ज्ञानं वैराग्यमास्तिक्यं श्रद्धा चास्याभिवर्धते ॥
इति सनकस्मृतिवचनम् ।

पवित्रं विततं ब्राह्मं प्रभोर्गात्रेषु धारितम् ।
श्रुत्यैव चाङ्कयेद्गात्रे तद्ब्रह्मसमवाप्तये ।

इति वृद्धहारीतस्मृतिवचनं चेतीमानि वचनान्यप्यस्याः श्रुतेः सौदर्शने कर्मणि विनियोगं निर्धारयन्ति इति वेदितव्यम् । ननु कल्पकारा गृह्यश्रौतसूत्रकारा एव नियोजका भवन्तीति स्मृतिपुराणवचनानि कथं विनियोजकानि स्युरिति चेत् नायं नियमः ।

सूर्यश्चमेति मन्त्रेण प्रातराचमनं स्मृतम् ।
आपः पुनन्तु मध्यान्हे सायमग्निश्चमेति च ॥
आकृष्णेन च तीव्रांशोरिमं देवा निशाकरम् ।
अग्निर्मूर्धेति भूसूनोरुद्बुध्यध्वं बुधस्य च ॥

इत्यादि द्वितीयैकादशाद्यध्यायेषु तत्तत्कर्मणि बृहत्पराशरस्मृतौ विनियोगदर्शनात् । याज्ञवल्क्याचाराध्याये नवग्रहमन्त्रविनियोगदर्शनात् । निर्णयसिन्ध्वादिषु ।

इदं विष्णुरिति प्रोक्तो मन्त्र उत्थापने हरेः । इति वाराहपुराणे । अतो देवा इति द्वाभ्यां जुहुयात्तिलपायसम् इति पाद्मे च तत्तत्कर्मसु विनियोगदर्शनात् । ननु दशापवित्रानुमन्त्रणस्य श्रौतविनियोगत्वात् स एव ग्राह्यो नेतर इति चेत् । किं तावत् श्रौतविनियोगत्वम् । श्रुतिप्रतिपन्नकर्मणि विनियोगः श्रौत इति चेत् सौदर्शनकर्मणोऽपि पवित्रं त इत्यादिश्रुतिप्रतिपन्नत्वेन श्रौतप्रयोगत्वात्तदपेक्षया दशापवित्रानुमन्त्रणस्य प्राबल्याभावात् । श्रुतिप्रतिपन्नविनियोगः श्रौत इति

चेद्दशापवित्रानुमन्त्रणविनियोगस्याप्यापस्तम्बसूत्रप्रतिपन्नत्वेन श्रुत्य-प्रतिपन्नतया श्रौतप्रयोगाभावेन प्राबल्याभावात् तत्र तन्न वाच्यम् । नहि आपस्तम्बाद्युक्तमेव प्रबलं प्रमाणं न व्यासाद्युक्तमिति केनचिन्नियन्तुं शक्यते । नच सूत्रत्वं प्रबलत्वे हेतुः । सर्वसूत्रमूर्धन्यभूतेषु ब्रह्म सूत्रेषु "अपि च स्मर्यते । स्मरन्ति च । बहिस्तूभयथापि स्मृतेराचाराच्च" इति सूत्राणां भारतविष्णुपुराणमनुश्लोकान् विषयीकृत्यैव प्रवृत्तत्वात् । एतेन पुराणत्वं पुराणस्य दुर्बलत्वे हेतुरित्यपि प्रत्युक्तं वेदितव्यम् । ननु श्रुतेः सुदर्शनार्थपरत्वे अतप्तपदे करणाकाङ्क्षा कथं शाम्यतीति चेत् । यथा पूर्वमीमांसाप्रथमाध्यायचतुर्थपादे "संदिग्धेषु वाक्यशेषात् इति सूत्रे अक्ताः शर्करा उपदधाति तेजो वै घृतमित्यत्र अक्तपदार्थाञ्जनक्रियाकरणाकाङ्क्षाशमनाय तेजो वै घृतमिति वाक्यखण्डसंदर्भबलप्राप्तस्य घृतवाचितृतीयान्ततत्पदाध्याहारस्य करणं दृश्यते । तथा तच्छ्रुतिगतपवित्रवाचितृतीयान्ततत्पदाध्याहारेणाकाङ्क्षा शाम्यतीति गृह्यताम् । अर्थान्तरे च प्रकरणाद्यप्राप्तकृच्छ्रादितपःपदाध्याहारे क्लिष्टकल्पनं भवतीत्युक्तं प्राक् । एवमेव वहन्त इत्यत्र वहनक्रियाकर्माकाङ्क्षायां श्रुतपवित्रवाचि द्वितीयान्तं तत्पदमेव कर्मत्वेनान्वयं लभते इति न कुत्रचिदनुपपत्तिः । ननु श्रुतेः सुदर्शनलाञ्छनपरत्वे अतप्ततनूरित्यत्र तनूपदस्य सकलदेहवाचित्वेन भवतां च बाहुमूलमात्रलाञ्छनस्येष्टत्वेन तनूपदस्य संकोचेनैकदेशार्थकत्वेन लक्षणा समाश्रयणीया स्यात् इति चेत् न बाहुमूलादिस्थलकृतचक्रादिभगवद्दिव्यायुधतापस्य कृत्स्नं देहं तदन्तर्वर्तिनं देहिनं च प्रति संस्काररूपतायाः शास्त्रसिद्धत्वेन तादृशतापसंस्कारजन्यशुद्धिविशेषलक्षणफलशालित्वरूपतापक्रियाकर्मत्वात्मकतत्त्वस्य कृत्स्नायामपि तन्वां संभवेन तद्विवक्षायां तनूशब्दार्थसंकोचानावश्यकत्वात् । बाहुमूलादिप्रदेशस्यापि शरीरत्वाबाधात् तनूशब्दस्य न लक्षणा प्रसक्तिः । "न धातुलोप आर्धधातुके" इति सौत्रप्रयोगे पटोदग्धो ग्रामो दग्ध इत्यादि कैयटप्रयोगे वृक्षगोपुराद्येकदेशारोहणमात्रेण वानराधिरूढो वृक्षः वानराधिरूढं गोपुरं राजाध्यासितम् सिंहासनमित्यादिलौकिकप्रयोगे च एकदेशसंबन्धमात्रसद्भावेऽपि वृक्षादिसमुदायशब्दप्रयोगो हि मुख्यः स्वारसिकश्च दृश्यते इति बाहुमूलादितन्वेक-

देशमात्रस्य तप्तत्वेऽपि तन्वां तप्तत्वव्यपदेशो न काप्यनुपपत्तिः। यच्च पवित्रवन्तः पवित्रं ते ब्रह्मा देवानाम् असतः सत् इति चतस्रः पवित्रवत्य उत्तरस्मिन्निति बोधायनकल्पसूत्रोदाहरणपूर्वकं सायणाचार्यविरचितं माधवीयवेदार्थप्रकाशान्तर्गतमेतन्मन्त्रव्याख्यानम्। हे ब्रह्मणस्पते, अन्नस्य मन्त्रस्य वा पालक सोम ते त्वदर्थम् पवित्रं शोधकमिदं दशापवित्रं विततं विस्तारितम् । प्रभुः तेन पवित्रेण शोधितत्वात्त्वं कर्मणे समर्थः सन् विश्वतः सर्वतः गात्राणि यज्ञाङ्गानि पर्येषि व्याप्नोषि पवित्रेणाशोधितस्य यज्ञाङ्गत्वं नास्ति शोधितस्य तु सोमस्य यज्ञाङ्गत्वमस्ति इत्यत्र हविरन्तरं दृष्टान्तत्वेनोपन्यस्यते । अतप्ततनूः अतप्तातनूः स्वरूपं यस्य पुरोडाशादेः सोऽयमतप्ततनूः तादृशः पुरोडाशः आमः अपक्वः सन् तत् यज्ञाङ्गत्वं नाश्नुते न प्राप्नोति यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्र इति श्रुतेः । शृतास इत् पक्वा एव पुरोडाशादयः वहन्तः यज्ञं निर्वहन्तः तत् यज्ञाङ्गत्वं समाशत सम्यक् प्राप्तवन्तः । यः शृतः सदेव इति श्रुतेः इत्यादि तन्नाक्षरानुगुणं व्याख्यानम् । तथाहि ब्रह्मशब्दो हि अथातो ब्रह्मजिज्ञासेत्यादौ परब्रह्मणि प्रयुज्यमानः तद्गुणलेशादौपचारिकः सामीप्यात्तु तद्व्यपदेश इति ब्रह्मसूत्रोक्तरीत्या कार्ये ब्रह्मणि चतुर्मुखे प्रयुज्यमान एव प्रथमतरं श्रियमधिरोहति पतिशब्दसामीप्यात् पतिशब्दश्च पत्यादिशब्देभ्य इति ब्रह्मसूत्ररीत्या परब्रह्मणि वासुदेवे एव प्रसिद्धः । अतो ब्रह्मणस्पतिशब्दस्य सोमपरत्वेन व्याख्यानमरमणीयम् । पवित्रशब्दस्य प्रागुक्तास्मद्रीत्या विशेष्यद्रव्यपरत्वे सम्भवति प्रमाणान्तराप्राप्तं दशापवित्रशब्दमध्याहृत्य तद्विशेषणत्वेन योजनमप्यस्वरसम्। प्रभुशब्दस्य नियन्तरि रूढस्येह समर्थपरत्ववर्णनमप्यस्वरसम् । गात्राणीत्यस्य चेतनभोगावच्छेदकमनुष्यादिशरीरे रूढस्य लक्षणया यज्ञाङ्गपरत्ववर्णनमप्यसमीचीनम् । अचेतनस्य सोमस्य समस्तयज्ञाङ्गेषु सर्वावयवेन व्याप्तिकथनमप्यसङ्गतम् । अतप्ततनुशब्दस्य तनूशब्दमहिम्ना प्राणिविषयतया प्रस्फुटप्रतीयमानस्यातप्तपुरोडाशादिस्वरूपविषयत्ववर्णनमकिञ्चित्करम् गौरवग्रस्तम् । वहन्त इत्यत्र कर्मतयान्वययोग्यस्य यज्ञमिति पदस्याध्याहारकल्पनमपि तद्वदेव । ब्रह्मणि प्रसिद्धयोस्तच्छब्दयो-

यैन्द्राङ्गत्वपरत्वकल्पनमत्युदक्षरम् । अतस्तस्य सोमस्य तत्पुरोडाशदृष्टान्तीकरणं चात्यन्तविपरीतम् । अतः सायणाचार्यस्य भाष्यकारत्वेऽपि सर्वथा सर्वज्ञत्वाभावेन वा मतपक्षपातेन वा पद्मपुराणपञ्चरात्रादिग्रन्थानां सम्यगपर्यालोचनेन वा तथा व्याख्यानकरणं न सर्वसज्जनहृदयंगमं भवति । ऋग्वेदभाष्योपोद्घाते प्रतिज्ञाचानेन कृता पद्मपुराणाद्यनुसारेण व्याख्यानं करिष्यामीति अग्रे च पाद्मादीनां वचनानि कुतो नोपात्तानीति स एव जानातु । नन्वेवमस्याः श्रुतेः सुदर्शनपरत्वार्थस्वीकारे दशापवित्रार्थपरत्वे मुख्यार्थाभावे च प्रागुक्तो दशापवित्रानुमन्त्रणे कृत आपस्तम्बविनियोगः कथमुपपद्यत इति चेत् श्रूयताम् । पवित्रमिति बोधकशब्दैकरूप्याच्छुद्धिजनकत्वेन गुणेन सादृश्याच्च सुदर्शनदशापवित्रयोरेकत्वमभिसंधाय दशापवित्रे सुदर्शनदृष्टिपूर्वकं तदनुमन्त्रणे करणतया सौदर्शनस्यैवास्य पवित्रमन्त्रस्य गौणोऽयं विनियोगः । सम्भवति चान्यदीयस्यापि मन्त्रस्य केनचिन्निमित्तेनान्यस्मिन् गौणो विनियोगः । अत एव हि निवेशनः संगमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठत इतिश्रुत्यैवैन्द्र्या ऋचो गार्हपत्योपस्थाने विनियोग उक्तः । एतद्विचारश्च कृतः पूर्वतन्त्रे तृतीयाध्याये द्वितीयपादे "वचनात्त्वयथार्थमैन्द्री स्यात् गुणाद्वाप्यभिधानं स्यात्सम्बन्धस्याशास्त्रहेतुत्वात् इति सूत्राभ्याम् । तदर्थस्त्वेवम् । ऐन्द्री ऋक् इन्द्रपरो मन्त्रः वचनात्तु ऐन्द्र्या गार्हपत्यमुपतिष्ठते इति श्रुतिवचनबलात्तु अयथार्थम् इन्द्ररूपं सहजमर्थमतिक्रम्येति यावत् स्यात् । गार्हपत्यरूपार्थान्तरेऽपि वर्तेत कथमिति चेद्गुणाद्वेत्यादि सम्बन्धस्य शब्दार्थयोर्वाच्यवाचकभावलक्षणस्य स्वाभाविकस्य अशास्त्रहेतुत्वात् । ऐन्द्र्यागार्हपत्यमुपतिष्ठत इति विनियोगशास्त्रहेतुकत्वासम्भवात् । विनियोगशास्त्रेण स्वतः सिद्धवाच्यवाचकभावलक्षणशब्दार्थसम्बन्धस्यान्यथाकरणायोगादिति यावत् । गुणाद्वापि इन्द्रसादृश्यहेतुयज्ञसाधनत्वादिगुणयोगाद्वापि अभिधानं मन्त्रघटकेन्द्रादिशब्देन गार्हपत्यस्य बोधनं सम्भवतीति । तथा च यथैन्द्रस्यापि मन्त्रस्य गार्हपत्योपस्थाने विनियोगस्तथा सौदर्शनस्याप्यस्य पवित्रमन्त्रस्य दशापवित्रानुमन्त्रणे गौणो विनियोगः सम्भवत्येवेति न काचिदनुपपत्तिरिति ।

फलार्थाः अन्यस्मिन्नन्यदृष्ट्यस्त्र नाम ब्रह्मेत्युपासीतेत्यादि-प्रतीकोपासनेषु वेदान्तेषु प्रसिद्धाः । नहि यस्मिन् कर्मणि यस्य मन्त्रस्य विनियोगः केनचिदृषिणा कृतस्तदर्थप्रतिपादकत्वमेव मन्त्र-स्येति नियमोऽस्ति । अन्यार्थानामपि मन्त्राणां धूरसीति धूपदाने अग्निर्मूर्धादिव इत्यस्य भौमपूजने उद्बुध्यस्वेति मन्त्रस्य बुधपूजने अन्नात्परिस्रुतो रस इतिमन्त्रस्य शुक्रपूजन शन्नो देवीरिति मन्त्रस्य शनैश्चरपूजने कयानश्चित्र आभुवादित्यस्य राहुपूजने विनियोगदर्श-नात् । सर्वास्वपि नवग्रहपूजनपद्धतिषु तथा व्यवहारात् । बृहत्पा-राशरसंहितायां च ।

विष्णुरादिरयं देवः सर्वामरगणार्चितः ।
नामग्रहणमात्रेण पापपाशं छिनत्ति यः ॥
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ।
तस्य सूक्तस्य सर्वस्य ऋचां न्यासं यथाक्रमम् । इत्याद्युक्त्वा
यथार्चा क्रियते तस्य स्वदेहे चिन्तयेत्तथा ।
आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमम् ॥
द्वितीययासनं दद्यात्पाद्यं चैव तृतीयया ।
चतुर्थ्यार्घ्यं प्रदातव्यं पञ्चम्याचमनं तथा ॥
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वसनं तथा ।
यज्ञोपवीतं चाष्टम्या नवम्या गन्धमेव च ।
पुष्पं देयं दशम्या तु एकादश्या च धूपकम् ॥
द्वादश्या दीपकं दद्यात्त्रयोदश्या निवेदनम् ।
चतुर्दश्याञ्जलिं कुर्यात् पञ्चदश्या प्रदक्षिणाम् ॥
षोडश्योद्वासनं कुर्याच्छेषकर्माणि पूर्ववत् ।

इत्यादिना येषु येषु कर्मसु यस्य यस्य मन्त्रस्य विनियोगः कृतोऽस्ति तस्य तस्य मन्त्रस्य स स एवार्थो भवतीति न केनचिदङ्गीक्रियते । अपि च यजुर्वेदे सप्तदशाध्याये ऋग्वेदे तृतीयाष्टके अष्टमाध्याये दशमवर्गे च ।

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश ॥
इति मन्त्रः पठ्यते तस्य व्याख्याने यद्यपि सूक्तस्याग्निसूर्यादि-

शाकुनसमाधिः संसारसागरमतीत्य परमपदाख्यपरमोर्ध्वलोकगमनं च प्रतिपाद्यते। एषां भगवदसाधारणचक्रलाञ्छनधारणेन भगवदनन्यदेवत्वलक्षणपारमैकान्त्यभाजां व्रतम् अनन्यदेवयाजित्वलक्षणं व्रतं प्रत्नः पुराणः पिता अर्वाचीनकर्मोपाधिकपितृव्यावृत्तप्राचीनाखिलजगन्निरुपाधिकपितृभूतश्रीमन्नारायणः "त्वं माता सर्वलोकानां देवदेवो हरिः पिते"त्यादिविष्णुपुराणादिपरःसहस्रप्रमाणगणप्रसिद्धं हि भगवतो निखिलजगन्निरुपाधिकपितृत्वम्। अभिरक्षति असहिष्णुभ्यः कामव्यामोहादिविनिपातनेन विघ्नचिकीर्षया निर्निमेषदत्तावधानेभ्योऽपि देवतान्तरेभ्यो निर्विघ्नं निवर्तयति । देवतान्तराणि हि परमैकान्तिषु स्वाराधनप्रहाणस्वोत्कृष्टपदगमनोद्यमादभिलब्धासूयानि तदीयव्रतविघ्नकरणे प्रवर्तन्ते। भगवांस्तद्विघ्ननिरसनेन भक्तान् रक्षतीति च प्रसिद्धम्। उक्तं हि श्रीभागवतैकादशस्कन्धे चतुर्थाध्याये।

त्वां सेवितुः सुरकृता बहवोऽन्तरायाः<br>
स्वौको विलङ्घ्य परमं व्रजतः पदं ते।<br>
नान्यस्य बर्हिषि बलीन् ददतः स्वभागान्<br>
धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि इति।

सर्वचित्ताकर्षिसांसारिकविषयव्यामोहसागरं कथमयमुत्तरतीत्यत आह। वरुण इत्यादि । वरुणः नारायणः वृणोति जगदावृणोतीति व्युत्पत्त्या "येनावृतं खं च महीं चे"तिश्रुत्युक्तरीत्या जगदावरणानुकूलापरिच्छेद्यशक्तिमान् वृणुते स्वाश्रितान्निजकरुणया दृढं स्वीकरोतीति व्युत्पत्त्या च।

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।<br>
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वामिति

श्रुत्युक्तरीत्या स्वप्राप्त्यर्थं निजकरुणाविशेषेण स्वाश्रितजनसुदृढस्वीकरणशीलो नारायण इह वरुणशब्देनोच्यते। "वरुणो वारुणो वृक्ष"इति सहस्रनामसु पठितश्च। महः समुद्रं महान्तं समुद्रं संसारसागरं महःशब्दो महत्परःछन्दसि प्रयुज्यते अत्र पत्र महोदेवो मर्त्यां आविवेशेत्यत्र महान् देवः शब्द इति पस्पशाह्निक महाभाष्यम्। तिरोदधे। आच्छादयति निरतिशयभोग्यं स्वात्मानं प्रकाश्य तदन्यत् कृत्स्नमपि भोग्यतया न भासयति। "परमात्मनि यो रक्तो

विरक्तोऽपरमात्मनी"ति श्रूयते । अतो भगवद्भक्तेषु सांसारिकाविषयव्यामोहनिपातनेन अनभजनप्रयत्नो देवतान्तराणां न सफलो भवतीति भावः । धरुणेषु धरन्ति प्राणिजातमिति धरुणानि लोकाः तेषु इच्छब्दोऽवधारणार्थः धीरा इत् धीमतामग्रेसरा एव आरभम् । पारमैकान्त्यलक्षणं यथोक्तव्रतमारब्धुं शेकुः शक्नुवन्ति । "तस्य धीराः परिजानन्ति योनिमिति तं धीरासः कवय उन्नयन्ती"ति च हि श्रूयते ।

वदन्तोऽपि गुणान् विष्णोः कुर्वन्तोऽपि च तत्क्रियाः ।
मन्दपुण्या न विन्दन्ति पारमैकान्त्यमत्पदम् ॥

इति भरद्वाजसंहितायामुक्तम् । अपूजने निग्रहभयात् क्षुद्रफललोभात् परत्वसंदेहात् परापरदेवतैक्यभ्रमाच्च हि प्रायशः सर्वे लोकाः क्षिप्रक्षुद्रफलप्रदानि क्षुद्रदेवतान्तराण्यालम्बन्ते । उक्तान् हेतूनुत्तीर्य भगवति पुण्डरीकाक्षे सुदृढमवगाढपरत्वधियो हि पुरुषा दुर्लभतमा लोके । अत एव हि भगवताप्युच्यते गीतासु ।

वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इति ।

अतस्तादृशानामेव तद्व्रतप्रवृत्तिर्न सर्वसाधारणीति भावः । छन्दसि लुङ् लङ्लिटः इत्यनुशासनेन तिरोदधे शेकुरित्यत्र कालव्यत्ययः शकिणमुल्कमुलौ इत्यनुशासनेन शक्नोतौ धातावुपपदे छन्दसि तुमर्थे णमुल्कमुलौ प्रत्ययौ भवत इत्यर्थकेन आरभमित्यत्र तुमुन्नर्थे कमुल्प्रत्ययः । प्रकृत्यान्तः पादमव्यपरे इत्यनुशासनेन ऋक्पादमध्य एङ् प्रकृत्या स्यादति परे नतु वकारयकारपरेऽतीत्यर्थकेन प्रत्नो अभिरक्षतीत्यत्रैङः प्रकृतिभाव इति ॥ १ ॥

पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत ।

इति द्वितीयो मन्त्रः । अयं प्राग्व्याख्यातः ।

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ।
श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ।

इति तृतीयो मन्त्रः । अस्यार्थः । अत्र सोमशब्दो नारायणपरः सूते स्वाश्रितानां महानन्दलक्षणं मोक्षमुत्पादयतीति सूङ् प्राणिप्रसव इति धातुमूलव्युत्पत्त्या सुनोति स्वाश्रितानानन्दसागरे निमज्जयती-

ति वा स्वयमानन्दसागरे मज्जतीति वा षुञ् अभिषव इति धातुमूलव्युत्पत्त्या वा सर्वथा सोमशब्द आनन्दयितृत्वानन्दमयत्वप्रवृत्तिनिमित्तकः परब्रह्मभूतं नारायणमाचष्टे। "एष ह्येवानन्दयाती"ति।

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।

आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति च।

श्रुतेरानन्दयितृत्वमानन्दमयत्वं च काष्ठापन्नं परब्रह्मणोऽसाधारणो धर्मः। "आनन्दमयोऽभ्यासादि"ति सूत्रकारेणाप्यानन्दमयः परमात्मा निर्णीतः। सूते जगदिति वा सोमो नारायणः। "सोमपोऽमृतपः सोम" इति विष्णुनामसु पठितश्च। असाधारणधर्मावच्छिन्नपरत्वमन्तरेण च भगवन्नामान्तर्भावो नोपपद्यते। अतोऽसाधारणधर्मा न्तरस्य रूढिनिमित्तत्वाद्वा। उक्तधर्माणामेव तथात्वाद्वा नारायणपर इह सोमशब्दः। ब्रह्मादिविभूतिकत्वादिप्रतिपादनालिङ्गाच्चायमिह नारायणपर एव।

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।

तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवमिति।

भगवद्गीतोक्तरीत्या तत्तच्छक्तिविशिष्टानां सर्वेषां भगवदात्मकत्वेन भगवच्छरीरभूततया तदीयतत्तच्छक्तिनिदानभूतं परमैश्वर्यं भगवत एवेति प्रतिपादयत्ययं मन्त्रः। देवानां ब्रह्मा सर्वदेवनियन्तृत्वशक्तिविशिष्टचतुर्मुखशरीरकतया तद्रूपेण वर्तमानः। तदैश्वर्यनिदानैश्वर्यसंपन्नोऽयमिति यावत्। शरीरवाचकानां शब्दानां शरीरिवाचकत्वव्युत्पत्त्यायं निर्देशः। एवमुत्तरत्रापि बोध्यम्। कवीनां पदवीः मार्गः अङ्यन्तोऽप्यस्मिन् पदवीशब्दः अतो न सुलोपः। अथवा पदवीम् ईर्ते गच्छतीति पदवीः ईरगतौ कम्पनेचेति धातोः कर्तरि क्विप् सर्वथा कवीनां मार्गप्रवर्तको वाल्मीक्यादिः कवीनां पदवीः कवीनां कवनचातुर्यप्रवर्तनौपयिकविलक्षणज्ञानशक्तिसंपन्नवाल्मीक्यादिरूपेण वर्तमानः। विप्राणामृषिः। तपोमहिम्ना सर्वातिशायिविलक्षणशक्तिसंपन्नऋषिरूपेण वर्तमानः। मृगाणां महिषः। मदमहिम्ना स्वेतरमृगपरिभवकरणौपयिकशक्तिविशेषसंपन्नमहिषरूपेण वर्तमानः। गृध्राणां श्येनः। पक्ष्यन्तरेभ्यो हठादामिषादिग्रहणचतुराणां गृध्राणामपि हठादामिषादिग्रहणशक्तश्येनरूपेण वर्तमानः। वनानां स्वधितिः। तरुगुल्मलतादिलक्षणदुरुच्छेदविस्तृत-

रूपाणां वनानामसहायच्छेदनशक्तिसंपन्नपरश्वधरूपेण वर्तमानः। एते सर्वे निर्देशाः सादृश्यमुखेन प्रदर्शिततत्तच्छक्तिसजातीयसर्वशक्तिप्रदर्शनपराः सर्वविधशक्त्यन्तरोपलक्षणपराश्च वेदितव्याः। सोमः नारायणः रेफन् युद्धं कुर्वन्। यद्यपि रिफ कत्थनयुद्धनिन्दाहिंसादानेष्विति धातोः शविकरणिनो न गुणः संभवति तथापि भ्वादेराकृतिगणत्वेन भौवादिकोऽप्ययं भवितुमर्हतीति गुणसंगतिः। रेफन् निरसनेन विरोधिनः कुत्सां गमयन्। सर्वथा विरोधिनिरसनोद्युक्तः सन्निति यावत्। पवित्रं सुदर्शनम्। अति अधिकम् एति प्राप्नोति। विरोधिनिरसनसमयेष्वतिशयेन धत्ते। यत्तु सकलपवित्रमन्येति सकलपावनवस्त्वतिशयित इत्यर्थ इति सायणादिव्याख्यानं तत्तु सकलपदाध्याहारसापेक्षत्वात् अध्याहारासंवलितपवित्रशब्दस्य विशेष्यवाचकपदान्तरासमभिव्याहृतस्य रूढिप्राबल्येन रूढ्यर्थप्रहाणायोगात् कथंचित्प्रहाणेऽपि पवित्रातिलङ्घित्वस्यापवित्रत्वपर्यवसानप्रसंगात् पवित्राङ्गिरोदृष्टमन्त्रचतुष्टयघटकैतन्मन्त्रपूर्वमन्त्रयोः प्रथमे पवित्रवन्तः परिवाजमासत इत्यादिके मन्त्रे पवित्रं ते विततं ब्रह्मणस्पते इत्यादिके द्वितीयमन्त्रे पवित्रं ते इत्यत्र च पवित्रशब्दस्य ब्रह्मणस्पतिशब्दितदेवताविशेषसंबन्धिप्रतिनियतयत्किंचिदर्थविशेषरूढत्वदर्शनात्तस्य च सुदर्शनरूपतायाः प्रागुपपादितत्वात्प्रकरणानुरोधेनात्रापि पवित्रशब्दस्य तत्परताया एव न्याय्यत्वात्। पवित्रवत्यश्चतस्र उत्तरस्मिन्नित्येतन्मन्त्रचतुष्टयविनियोगपरबोधायनकल्पसूत्रे चतुर्णामपि मन्त्राणां यत्किंचिदेकपवित्रपदार्थप्राधान्यपरत्वावगतेः। पूर्वोक्तरीत्यार्थकरणे तदनिर्वाहेण तादृशसूत्रानुगुण्यविरहाच्चानुपपन्नम्। तथा च यथोक्तलक्षणनानाविधशक्तिसंपन्न परब्रह्मभूतो नारायणोऽपि शत्रुनिरसनपरिकरतया सुदर्शनं धत्त इति सुदर्शनस्तुतिरनेन मन्त्रेण फलिता भवतीति ॥ ३ ॥

असतः सद्ये ततक्षुः ऋषयः सप्तात्रिश्च यत्।
सर्वे त्रयो अगस्तयश्च नक्षत्रैः शंकृतोऽवसन्।

इति चतुर्थो मन्त्रः। अस्यायमर्थः। ये सप्तऋषयः ते अत्रिश्च चकारेणानुक्तसमुच्चायकेनागस्त्योऽपि गृह्यते। वक्ष्यमाणानुरोधात्। ते एते यत् यतः असतः चक्राङ्कितत्वादिलक्षणभगवदैकान्त्यविधुर-

प्राणिजातरूपाज्जगतः सत् चक्राङ्कितत्वादिलक्षणभगवदैकान्त्यज्ञापकप्राणिजातरूपं जगत्। ततक्षुः। विभिद्यनिष्पादयामासुः। यद्यपि तक्ष तनूकरणे इत्यस्य तक्षत्वचन इत्यस्य वा धातोः काष्ठं तक्षतीत्यादौ छेद्यकर्मकत्वं दृष्टं तथापि वृक्षात् स्तम्भं तक्षति काष्ठात्स्वञ्च तक्षतीत्यादिप्रयोगदर्शनात्छेदननिष्पाद्यकर्मकत्वमप्यनयोरस्ति। अत एव किं स्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुरित्यादिश्रुत्यन्तरेऽपि छेदननिष्पाद्यकर्मकः प्रकृत प्रयोगसमानविषय एव प्रयोगो दृश्यते। तथा च यथा वने कतिपयवृक्षाणां वास्यादितश्छेदनेन स्तम्भादिनिष्पादनं तथा शास्त्रार्थोपदेशात आशयविभेदनेन परविद्याङ्गचक्राङ्कनादिलक्षणपञ्चसंस्कारप्रापणपूर्वकं जगति सत्त्वप्रधानान् पृथक् कुर्वन्ति। तथा च भारद्वाजसंहितायां परिशिष्टप्रथमाध्याये।

तत्र केचित्परं तत्त्वं तमोमीलितदृष्टयः।
अपश्यन्तोऽभिजानन्ति धर्मस्य न परां गतिम्॥
केचित्तु सत्त्वसंपन्नाः केशवेनावलोकिताः।
सारासारविदः प्राज्ञाः परं धर्मं विजानते॥
य ऐकान्त्यंगता विष्णौ भगवत्यात्मभावने।
ते वैष्णवा भगवतः सन्त इत्यपि ते स्मृताः॥
नियोक्ता भगवान् विष्णुर्नियोगस्तस्य वै श्रुतिः।
नियोज्याः सत्त्वनिष्ठास्तु मुख्या मोक्षार्थचिन्तकाः॥
अन्यथैवाभिमन्यन्ते सर्वमेतत्कुदृष्टयः।
यतो दूरतरास्ते हि परस्य परमात्मनः॥

इति वचनैः सत्त्वरजस्तमः प्रकृतिप्राणिजातमये जगति सत्त्वप्रकृतीनामेव परापर तत्त्वधर्माधर्मपरिज्ञानेन भगवत्यैकान्त्यभाजां सच्छब्दवाच्यता कथनात्—परिशिष्टद्वितीयाध्याये।

तापः पुण्ड्रस्तथा नाम मन्त्रो यागश्च पञ्चमः।
अमी परम संस्काराः पारमैकान्त्यहेतवः॥
न वहत्यूर्ध्वपुण्ड्रं वा नैकान्त्यं तस्य विद्यते।

इति वचनेन च भगवदैकान्त्यस्य चक्राङ्कनादिलक्षणसंस्कारैकनिबन्धनत्वावगमाच्च सच्छब्दस्य चक्राङ्कनादिलक्षणसंस्कारसंपन्नवैष्णवगोष्ठीविषयत्वसिद्धेः। इतरगोष्ठ्या असच्छब्दवाच्यतायाः

अर्थवशसम्पन्नत्वाच्च सदसद्गोष्ठीद्वयं हि श्रुत्युपबृंहणसंहितावचनैरपि प्रसिद्धं प्रतिपाद्यते । तस्मादिति यत्तदोर्नित्यसम्बन्धादापतति सर्वे सप्तर्षयः अत्रयः अत्रिमहर्षयः पूजायां बहुवचनमत एव हि पूर्वमपि सप्तर्षय इति सामान्यतः सप्तर्षिमध्यगतत्वेनात्रेरपि ग्रहणे सत्यपि अत्रिश्चेति पृथग्ग्रहणमौत्कृष्ट्यबोधनार्थं कृतम् । अगस्त्यश्चेत्येते । यद्वा अत्रय इति बहुवचनान्तपदम् अत्रिप्रधानाः सप्तर्षय इत्यर्थे लाक्षणिकम् । अगस्त्यश्चेत्येते सर्वे शंकृतः इत्थंलोकोपकारकाः । अत एव नक्षत्रैः सहावसन् । दिवि नक्षत्ररूपेण वासमलभन्त । यत एते शास्त्रार्थोपदेशेन यथोक्तरीत्या सदसद्गोष्ठीविभागपूर्वकं लोकक्षेमं चक्रुः । तत एवैते दिवि नक्षत्ररूपेण शाश्वतीं स्थितिमलभन्तेति भावः । उपनिषत्प्रतिपन्नाः परविद्याश्चक्राङ्कनादिलक्षणपञ्चसंस्काराद्यङ्गोपाङ्गसहिताः प्रतिपादयतो वेदब्रह्मकाण्डकल्पसूत्रभावमापन्नस्य पञ्चरात्रशास्त्रस्य प्रचारं सप्तर्षयश्चक्रुरिति महाभारते शान्तिपर्वणि श्रीनारायणीयोपाख्याने प्रस्फुटं प्रतिपादितम् । यथोक्तं तत्र शान्तिपर्वणि षट्त्रिंशदधिकत्रिशततमे नारायणीयोपाख्याने द्वितीये चाध्याये ।

ये हि ते ऋषयः ख्याताः सप्त चित्रशिखण्डिनः ।
तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् ॥
वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ।
आस्यैः सप्तभिरुद्गीर्णं लोकधर्ममनुत्तमम् ॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महातेजास्ते हि चित्रशिखण्डिनः ॥
सप्तप्रकृतयो ह्येतास्तथा स्वायंभुवोऽष्टमः ।
एताभिर्धार्यते लोकस्ताभ्यः शास्त्रं विनिःसृतम् ॥
एकाग्रमनसो दान्ता मुनयः संयमे रताः ।
भूतभव्यभविष्यज्ञाः सत्यधर्मपरायणाः ॥
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
लोकान् सञ्चिन्त्य मनसा ततः शास्त्रं प्रचक्रिरे ॥
तत्र धर्मार्थकामा हि मोक्षः पश्चाच्च कीर्तितः ।
मर्यादा विविधाश्चैव दिवि भूमौ च संस्थिताः ॥

आराध्य तपसा देवं हरिं नारायणं प्रभुम् ।
दिव्यं वर्षसहस्रं वै सर्वे ते ऋषिभिः सह ॥
नारायणानुशिष्टा हि तदा देवी सरस्वती ।
विवेश तान् ऋषीन् सर्वान् लोकानां हितकाम्यया ॥
ततः प्रवर्तिता सम्यक् तपोविद्भिर्द्विजातिभिः इति ।
ततस्ते लोकपितरः सर्वलोकार्थचिन्तकाः ।
प्रावर्तयन्त तच्छास्त्रं धर्मयोनिं सनातनम् इति च ।

नारायणीयोपाख्यानस्य कृत्स्नस्यैव पञ्चरात्रशास्त्रविषयतया प्रकरणवशादेवोक्तशास्त्रं पञ्चरात्रशास्त्रमिति तत्रैव स्पष्टमवगम्यते। उक्तशास्त्राधिकारिदौर्लभ्येन सत्त्वप्रचुरदेशकालेषु प्रादुर्भावस्य अन्यदा तिरोधानस्य च तत्रैव स्पष्टमभिधानेन तच्छास्त्राधिकारिणः सन्तः अनधिकारिणोऽसन्त इत्यप्युक्तप्रायम् । एवमत्रेरिवागस्त्यस्याप्यसाधारणसंहिताविशेषप्रवर्तकताया अपि दर्शनेन तयोः प्राधान्येन पृथङ्निर्देशोऽपि श्रुतौ दृश्यते । उक्तभारताद्युपबृंहणानुरोधेनास्य मन्त्रस्य यथोक्त एवार्थः प्रामाणिकः । यत्तु असच्छब्देन जगत्कारणमव्यक्तावस्थापन्नमुच्यते सच्छब्देन व्यक्तदशापन्नं जगदिति असतः जगत्कारणादव्यक्तात्सकाशात् सत् व्यक्तं जगत् ततक्षुः तक्षणोपलक्षितं निष्पादनं कृतवन्त इति च सायणव्याख्यानं तत्त्वनुपादेयम् । प्रकरणाननुगुणत्वादसंबद्धत्वात् । पवित्रं ते ब्रह्मा देवानाम् असतः सत् इति चतस्रः पवित्रवत्य उत्तरस्मिन्निति बोधायनकल्पसूत्रेण चतुर्णामपि मन्त्राणां पवित्रप्राधान्यपरत्वरूपस्य पवित्रवत्त्वस्य प्रतिपादनेन तद्विरोधात् सप्तर्षीणां चतुर्मुखसृष्ट्यनन्तरं तद्दत्ताधिकारभाजामर्वाचीनव्यष्टिसृष्टावधिकारसम्भवेऽपि चतुर्मुखोत्पत्तेरपि प्राचीनाया असच्छब्दवाच्याद् विभक्तनामरूपादव्यक्ताद्विभक्तनामरूपस्य महदहङ्कारादितत्त्वजातलक्षणस्य सच्छब्दवाच्यस्य व्यक्तजगतो विभज्योत्पादनलक्षणायां समष्टिसृष्टौ चतुर्मुखस्याप्यनधिकारेण सप्तर्षीणामधिकाराभावस्य कैमुत्यन्यायसिद्धतया वाक्यार्थासङ्गतेश्च। चक्राङ्कितमहिमतन्मूलकमहर्षिमहिमप्रतिपादकतया तादृशसर्वमहिमनिदानभूतं पवित्रशब्दवाच्यम् सुदर्शनमेव स्तुतं भवतीति नास्माकं प्रकरणानुगुण्यविरोध

इति । तथा च पवित्राङ्कः सम्बधिनां चतुर्णामपि मन्त्राणां परस्परैककण्ठ्यानुरोधाद्विनियोजकबोधायनसूत्रानुरोधाच्छ्रुत्यन्तरस्मृत्यादिप्रमाणगणानुरोधाच्च पवित्रशब्दितसुदर्शनवैभवपरत्वमेव स्वारसिकमिति सिद्धं भवति । इत्थं सुदर्शनवैभवपराणाममीषां मन्त्राणामारुणकेतुकचयनोपकरणत्वं तु तत्तदनुगुणानुसन्धानपूरणतस्तत्प्रकरणस्थमन्त्रान्तराणा मिव निर्वहतीति प्रागेवावेदितम् । इत्थं च पूर्वोत्तरमन्त्रार्थस्वरसपर्यालोचनेनापि पवित्रश्रुतेः सुदर्शनधारणैकविषयत्वं सिध्यति । एवमस्याः श्रुते रामार्चनचन्द्रिकायां पञ्चमे पटले आनन्दवनसंन्यासिना रामनाममाहात्म्ये षष्ठप्रकरणे द्वारकाशङ्करमठपतिपरंपराघटकेनाच्युताश्रमसंन्यासिना च तप्तचक्राङ्कनप्रमाणतयोदाहरणं कृतम् । इत्थं स्मार्तमतस्थैरपि प्राचीनैर्निबन्धकारैरस्याः पवित्रश्रुतेस्तप्तचक्राङ्कनपरत्वस्वीकारदर्शनेनार्वाचीनैरत्र विवादकरणमाग्रहैकमूलमिति विदाङ्कुर्वन्तु विद्वांसः इत्यादि श्रीवेङ्कटाचलश्रीनिवासचरणचंचरीकश्रीमदनन्तपुरुषसिंहासनासीन श्रीश्रीरङ्गसूरिविरचितभगवद्धर्मदर्पणे विस्तरः ।

अथ कृष्णयजुर्वेदतैत्तिरीयब्राह्मणतृतीयाष्टकद्वादशप्रपाठकपठितौ चरणं पवित्रं लोकस्य द्वारमिति मन्त्रौ तप्तचक्रधारणपरौ व्याख्यायेते ।

चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि ।
तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम ॥
लोकस्य द्वारमर्चिमत्पवित्रं ज्योतिष्मद् भ्राजमानं महस्वत् ।
अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधितां दधातु ॥

अस्यार्थः पवित्रं परिशुद्धिकरं पुराणं पुरातनमनादिसिद्धमित्यर्थः । एवंभूतं चरणं परलोकगतिसाधनभूतं सुदर्शनचक्रम् अङ्कनादिद्वारा भगवद्भक्तेषु विततं व्याप्तं वर्तते । पुनः कीदृशं चरणं येन चरणेन हेतुभूतेनाङ्कनादिद्वारा पूतः शुद्धः चेतनः सर्वाणि दुष्कृतानि तरति । तेन स्वतः शुद्धेनात एव पवित्रसंज्ञकेन चरणेनाङ्कनद्वारा पूताः शुद्धा वयं सर्वे अरातिरूपं पाप्मानमतितरेम इति प्रथमस्यार्थः । लोकस्य विष्णुलोकस्य द्वारं प्राप्तिसाधनभूतं अर्चिमत् ज्वाला युक्तं पवित्रं परिशुद्धिकरं ज्योतिष्मत् किरणवत् भ्राजमानं शोभमानम् ।

महस्वत् प्रकाशवत् बहुधा बहुप्रकारेणामृतस्य मोक्षस्य धारा अनुभवप्रकारान् दोहमानं प्रपूरयत् चरणं सुदर्शनचक्रं लोके विष्णुलोके नः अस्मान् सुधितान् सुप्रतिष्ठितान् दधातु करोतु इति द्वितीयमन्त्रार्थः। अत्र चरणशब्देन सुदर्शनचक्रार्थस्य ग्रहणं।

पवित्रं चरणं नेमिर्हरेश्चक्रं सुदर्शनम्।
सहस्रारं प्राकृतघ्नं लोकद्वारं महौजसम्।
नामानि विष्णुचक्रस्य पर्यायेण निबोध मे।

इति पूर्वोक्तपाद्मोत्तरखण्डवाक्यं प्रमाणम् तथा च पवित्रं परिशुद्धिकरमित्यत्र परिशुद्धिश्च प्रत्यवायाभावप्रकारकभगवत्संकल्पः। विशेष्यतासंबन्धेन तादृशसंकल्पं प्रति स्वाश्रयवह्निसंतप्तमुद्रासंयुक्तभुजघटितदेहवत्तासंबन्धेन सुदर्शनस्य हेतुत्वात्तस्य परिशुद्धिकरत्वोपपत्तेः। यद्यपि पूर्वोक्तरीत्या पवित्रशब्दस्यापि सुदर्शनत्वावच्छिन्ने रूढिरस्ति तथापि विशिष्टवाचकानां पदानां पृथग्विशेष्यवाचकपदसमवधाने विशेषणमात्रपरत्ववत् धर्मद्वयावच्छिन्नवाचकपदानामप्येकधर्मावच्छिन्नवाचकपदान्तरसमवधाने तदितरधर्मावच्छिन्नमात्रपरत्वस्य कुर्यां हरस्यापि पिनाकपाणेरित्यादाविव वक्तव्यतया सुदर्शनत्वावच्छिन्नवाचकचरणपदसमभिव्याहारात् पवित्रशब्दस्य योगार्थमात्रपरत्वं बोध्यम्। न च विनिगमनाविरहाच्चरणशब्दस्यैव योगार्थमात्रपरत्वमिति वाच्यं चरणं नो लोके इत्याद्युत्तरवाक्यानुरोधेन चरणशब्दस्य विशेष्यवाचकत्वेन विनिगमकसत्वात् विततं संस्कृतमुद्रात्वव्यापकं संस्कृतमुद्रासामान्ये समाश्रितानुग्रहार्थं सन्निहितमास्त इति विततपदार्थविधेयको बोधः। येन पूतः यज्जन्यपापाभावप्रकारकभगवत्संकल्पविषयीकृतः। दुष्कृतानि तरति दुष्कृतनाशानुकूलव्यापाराश्रयः भवति तादृशव्यापारश्चक्रधारणरूप एव। नाशानुकूलव्यापारार्थकतरतिधात्वर्थतावच्छेदकनाशरूपफलस्य प्रतियोगितासंबन्धेन दुष्कृतेषु सत्त्वात् घटं नाशयेदित्यादौ घटादेरिव तेषां कर्मता बोध्या। नच प्रतियोगितासंबन्धेन पापनाशं प्रति स्वाश्रयभुजघटितदेहावच्छिन्नत्वकालिकविशेषणत्वोभयसंबन्धेन तप्तचक्रसंयोगस्य कारणत्वे प्रायश्चित्तादीनां वैयर्थ्यमिति वाच्यं स्वसमानकालीनपापानां चक्रधार-

णेन नाशेऽप्यनन्तरकालीनपापनिरासकतया तेषां सार्थक्यात् । अन्यथा ।

संध्यामुपासते ये तु सततं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥

इत्यादिशास्त्रात्संध्यावन्दनादीनामपि पापनिवर्तकत्वोक्त्या तेषां वैयर्थ्यप्रसंगस्य दुर्वारतापातात् । पवित्रेण परिशुद्धिकरेण शुद्धेन निरस्तसमस्तदोषगन्धेन तेन सुदर्शनेन धृतेनेति शेषः । पूता वयमरातिं शत्रुं भगवत्साक्षात्कारप्रतिबन्धकमिति यावत् । पाप्मानं पापं प्रत्यवायं वा अतितरेम नाशानुकूलव्यापाराश्रयाः । अभावप्रयोजकधर्माश्रया वा । लोकस्य द्वारं भगल्लोकप्राप्त्युपायभूतम् । अर्चिर्ज्योतिर्महःशब्दैर्ज्वालाकिरणप्रकाशभेदस्य विवक्षितत्वान्न पौनरुक्त्यम् । भ्राजमानं शोभमानम् । अमृतस्य परमपुरुषार्थस्य मोक्षस्य धाराः अनुभवप्रकारान् दोहमानं दुहानं मुक्तिप्रदमित्यर्थः । लोकस्य द्वारमित्यनेन स्वरूपयोग्यत्वरूपकारणत्वस्य दोहमानमित्यनेन च फलोपधायकत्वस्य च विवक्षणान्न पौनरुक्त्यम् । एतादृशं चरणं सुदर्शनं नः अस्मान् लोके परमपदे सुधितान् सुप्रतिष्ठितान् दधातु करोतु । मोक्षकामो नरः सुदर्शन धारणं कुर्यात् यद्वा पापनिवृत्तिकामः सुदर्शनधारणं कुर्यादिति विधिरत्र द्रष्टव्य इति प्राञ्चः । अत्र विधिप्रत्ययार्थो न तावदिष्टसाधनत्वं लोकस्य द्वारमित्यादिभिरेव तदवगमात् । नापि कृतिसाध्यत्वं धृतेनेत्यध्याहृतपदेन तदवगमात् नित्यत्वालाभाच्च । किन्तु प्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वम् । तथा च मोक्षकामादिनिष्ठतद्धारणाभावस्य प्रत्यवायप्रयोजकत्वलाभान्नित्यतासिद्धिः इत्यादि यादवाद्रिनिवासरसिक पण्डितसार्वभौमश्रीमदनन्ताचार्यरचितसुदर्शनसुरद्रुमे विस्तरः । अत्र सायणाचार्यभाष्य अग्रे वक्ष्यमाणश्रुतिवाक्येषु तंचरणमब्रवीदित्यादौ मनः पाठसाहचर्येणात्र मनइन्द्रियग्रहणवत् चरणशब्देन पादेन्द्रियं गृह्यते इत्येतत्परं व्याख्यानं दृश्यते तत्तु तत्रैवानिन्द्रियाणां श्रद्धातपः सत्यशब्दानां दर्शनेन तेनैव साहचर्यग्राहकप्रायपाठेन विरुद्धं भवति तथा च यथा तत्र श्रद्धादिदेवतानां ग्रहणमावश्यकं तथा चरणशब्देन सुदर्शनदेवतापरिग्रह एव सामञ्जस्यं भवति नान्यथा । चरणशब्दस्य चरत्यनेनेति योगेन पादेन्द्रियग्रहणेन आचारग्रहणेन वा अर्थलापनेऽपि द्विती-

यमन्त्रे अर्चिमत् ज्योतिष्मत् भ्राजमानं महस्वत् इतिविशेषणानां पादेन्द्रिये असंभवः स्यादेव । ज्वालामालिसुदर्शनग्रहणे तु सर्वं सुसंगतं भवति तथा च चरणशब्देन रथकाराधिकरणन्यायेन योगार्थं त्यक्त्वा रूढिरेवाश्रयणीया भवति । तेन सुदर्शनपरत्वमेवाङ्गीकार्यम् । तथा च परिभाषेन्दुशेखरः अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी तेन शुद्धरूढस्य जननीवाचकस्यैव मातृशब्दस्य ग्रहणं न परिच्छेतृवाचकस्य योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिरेव तद्बीजं रथकाराधिकरणन्यायसिद्धोऽयमर्थ इति । स च न्यायः पूर्वमीमांसायां षष्ठस्य प्रथमे पादे दर्शितो यथा वर्षासु रथकारोऽग्निमादधीतेति श्रुतौ रथकारपदेन माहिष्येण करण्यां तु रथकारः प्रजायते इत्युक्तसंकरजातेर्वेदानधिकाराद्रथंकरोतीतिव्युत्पत्त्या त्रैवर्णिक एव ग्राह्य इति पूर्वपक्षे योगाद्रूढेर्बलीयस्त्वेन रथकारजातिमत एवाग्न्याधानं विधीयत इतिसिद्धान्तितम् ।

चरणं पवित्रं विततं पुराणं वाङ्मयं शुभम् ।
तेन चक्रेण संतप्तास्तरेयुः पातकाम्बुधिम् ॥

इति पाद्मोत्तरखण्डीयपूर्वोक्तप्रकरणगतवचनम् ।

आज्यं हुत्वा ततश्चक्रं तदग्नौ प्रतपेद्गुरुः ।
चरणं पवित्रमिति तच्चक्रेणाङ्कयेद्भुजम् ॥

इति वृद्धहारीतस्मृतिवचनम् ।

त्वामाह प्रथमा वाणी मम पाणिविभूषणम् ।
पवित्रं चरणं नेमिं लोकद्वारं महौजसम् ॥

इति पञ्चरात्रबृहद्ब्रह्मसंहितावचनं चानयोर्मन्त्रयोः सुदर्शनपरत्वं निर्धारयन्ति । लोकद्वारत्वं च सुदर्शनस्य बृहद्ब्रह्मसंहिताद्वितीयाध्यायाख्यानेन सुप्रसिद्धतरं तत्रैव द्रष्टव्यम् । तिष्ठन्तु सर्वाण्यपि प्रमाणानि पवित्रचरणशब्दयोः सुदर्शनवाचकत्वे अनयोर्मन्त्रयोः सुदर्शनपरत्वे च श्रुतिरेव परमं प्रमाणं जागर्ति तथाहि । अष्टोत्तरशतोपनिषत्सु परिगणितायां मुक्तिकोपनिषदि दक्षिणाशरभं स्कन्दं महानारायणाह्वयम् । इति सर्वासूपनिषत्सु परिगणितायां महानारायणोपनिषदि सप्तमाध्याये ।

ततः सुदर्शनवैकुण्ठपुरमाभाति नित्यमङ्गलमनन्तविभवं सहस्रार्कद्युप्राकारपरिवेष्टितमयुतकुक्ष्युपलक्षितमनन्तोत्कटज्वलदरमण्डलं

निरतिशयदिव्यतेजोमण्डलं वृन्दारकपरमानन्दं शुद्धबुद्धस्वरूपमनन्तानन्दं सौदामिनीपरमविलासं निरतिशयपरमानन्दपारावारमनन्तैरानन्दपुरुषैश्चिद्रूपैरधिष्ठितम्। तन्मध्ये च सुदर्शनं महाचक्रम्

चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि।
तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम ॥ १ ॥
लोकस्य द्वारमर्चिमत् पवित्रं ज्योतिष्मद्भ्राजमानं महस्वत्।
अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधितां दधातु॥२॥

अयुतारं ज्वलन्तमयुतारसमष्टयाकारं निरतिशयविक्रमविलासमनन्तदिव्यायुधदिव्यशक्तिसमष्टिरूपं महाविष्णोरनर्गलप्रतापविग्रहमयुतायुतकोटियोजनविशालमनन्तज्वालाजालैरलंकृतं समस्तदिव्यमङ्गलनिदानमनन्तदिव्यतीर्थानां निजमन्दिरमेवं सुदर्शनं महाचक्रं प्रज्वलति। इत्यादि। अत्र पूर्वापरयोश्चक्रवर्णनसत्त्वेन संदंशन्यायेन ज्योतिष्मदित्यादि विशेषणदर्शनेन च पादेन्द्रियपरत्वं कथमपि न चरणशब्दस्य सम्भावयितुं शक्येत। सुदर्शनस्य पवित्रशब्दवाच्यत्वे अभियुक्तप्रयोगश्च

प्राणे दत्तप्रयाणे मुषितदिशि दृशि त्यक्तसारे शरीरे
मत्यां व्यामोहवत्यां सतमसि मनसि व्याहृते व्याहृते च ॥
चक्रान्तर्वर्ति मृत्युप्रतिभयमुभयाकारचित्रं पवित्रं
तेजस्तात्त्विष्ठतां वस्त्रिदशकुलधनं त्रीक्षणं तीक्ष्णदंष्ट्रम् इति।

अथ ऋग्वेदसप्तमाष्टकचतुर्थाध्यायनवमवर्गपञ्चमानुवाके षण्णवतितमसूक्ते पठितस्तथा सामवेदे पञ्चमप्रपाठके च पठितः सुदर्शनार्थपरो मन्त्रः।

चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत्।
अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥

अस्यार्थः अपामूर्मिं भूतानां विकारभूतम् अप्छब्दस्य भूतत्वावच्छिन्ने लाक्षणिकत्वात्। तद्विकारत्वं च तदभिन्नत्वे सति तत्कार्यत्वं शरीरत्वावस्थाविशिष्टस्य भूताभिन्नत्वे सति भूतकार्यत्वात्। समुद्रं संसारसागरं शरीरमिति यावत्। सचमानः अपृथक्सिद्ध्यात्मकसंयोगानुकूलव्यापाराश्रयः। सच समवाये इति धातुपाठेन तद्धातोरुक्तार्थकत्वावसायात्। द्रप्सः ईश्वरांशभूतो जीवः। जीवस्य तदंशत्वं चापृथक्सिद्धसम्बन्धेनेश्वरविशेषणत्वं विशिष्टव-

स्तुनि विशेषणांशोऽयं विशेष्यांशोऽयमिति विशेषणस्यांशत्वव्यवहारात् । गाः विन्दतीति गोविन्दः तुज्वद्भावश्छान्दसः गोविन्दुरिति षष्ठी छान्दसत्वेन सर्वदोषपरिहारः । छान्दसत्वाश्रयणे च ।

गोविन्दुस्यायुधान्यङ्क विभ्रत्सुश्रोणि वै द्विजः ।
तुरीयं धाम तद्विष्णोर्महिष्ठः प्राप्नुयादिति ।
चमूषच्छ्येनः शकुनो विभृत्वेति ऋगब्रवीत् ॥

इति स्कान्दवचनं प्रमाणम् । आयुधानि चक्रशङ्खगदाखड्गशार्ङ्गरूपाणि पञ्चायुधानि । नच शत्रुहिंसानुकूलव्यापाराश्रयस्यैवायुधत्वाच्छङ्खस्य तत्वमसंभवीति वाच्यम् शत्रुनाशानुकूलशब्दाश्रयत्वेन तस्याप्यायुधत्वात् । बिभ्रत् । सम्बन्धप्रयोजकव्यापाराश्रयः स च सम्बन्धः स्वसंयुक्तभुजा दिघटितदेहवत्त्वमेव । चमूषदित्यादिना फलनिर्देशः । नच चक्रधारणस्याङ्गत्वेन फलत्वं न सम्भवति फलवत्संनिधावफलं तदङ्गमितिन्यायादिति वाच्यम् । अङ्गिभूतोपासनद्वारा तस्यापि फलवत्त्वसम्भवात् । अत्र चमूशब्देन नित्यसूरिपरिषद्विवक्षिता तस्यां सीदतीति चमूषत् नित्यसूरिभिरनुगम्यमान इति यावत् । श्येनः प्रशस्ततमभगवत्समीपदेशसंयोगानुकूलव्यापाराश्रयः । संशनीयं गच्छतीति श्येन इति निरुक्तात् । शकुनः आत्मानं संसारादुद्धर्तुं शक्त इत्यर्थः । शक्नोत्यात्मानमुन्नेतुमिति निरुक्तात् । भक्तिप्रपत्त्यन्यतरजन्यसंसारनिवृत्त्युपधायकभगवत्प्रसादविषय इति फलितार्थः । शक्तेः प्रकृते भगवत्प्रसादरूपत्वात् । विभृत्वा भरणसमर्थः स्वसम्बन्धिनामपि भरणसमर्थ इति यावत् । तादृशसामर्थ्यं च मुक्त्युपधायकस्वसमाश्रयणको भूयादित्याकारकप्रसादविशेषविषयत्वम् । एवं विधः सन् तुरीयं श्रेष्ठं धाम स्थानं परमपदमिति यावत् । महिषः महनीयः सन् विवक्ति प्राप्नोति इत्यर्थः । अत्र गोविन्दुरायुधानि बिभ्रत् शकुनो विभृत्वा चमूषच्छ्येनो महिषस्तुरीयं धाम विवक्तीति योजनाङ्गीकारात् धनवान् सुखीत्यादिवदुद्देश्यतावच्छेदकस्य विधेये प्रयोज्यतासम्बन्धेन भानाद्भगवदायुधधारणस्य शकुनपदार्थं प्रति तस्य च बिभ्रत्पदार्थं प्रति तदुभयस्य च चमूषत्त्वविशिष्टश्येनत्वं प्रति तस्य च महिषत्वविशिष्टतुरीयधामप्राप्तिं प्रति प्रयोजकत्वं लभ्यते । तथा च चक्रधारणस्य स्वजन्यप्रसादद्वारा मोक्षोपधायकभक्तिप्रपत्त्य-

न्यतरजन्यप्रसादे तादृशप्रसादस्य च सम्बन्धिमोक्षप्रयोजकप्रसादान्तरे तादृशप्रसादद्वयस्य च नित्यसूरिपारिषदनुगम्यमानत्वविशिष्टार्चिरादि गमनरूपे चमूषच्छ्येन इत्यस्यार्थे तादृशगमनस्य च तं ब्रह्मालङ्कारेणालं कुर्वन्तीति श्रुतिसिद्धब्रह्मालङ्कारविशिष्टभगवत्समीपगमनरूपे महिषस्तुरीयं धाम प्राप्नोति इत्यस्यार्थे प्रयोजकत्वलाभादलौकिकश्रेयःसाधनत्वरूपं धर्मत्वं चक्रधारणस्योक्तश्रुत्या सिध्यति। यदत्र सायणभाष्ये चमन्त्यत्रेति चम्बश्चमसास्तेषु सीदन् श्येनः शंसनीयः शकुनः शक्तः विभूत्वा पात्रेषु विहरणशीलः गोविन्दुः गवालम्भकः द्रप्सं द्रवणशीलः स्फ्यकपालादीन्यायुधानि बिभ्रत् अपामूर्मिं प्रेरकं समुद्रमन्तरिक्षं सचमानः महिषो महान् एवंविधः सोमः तुरीयं धाम चतुर्थं चन्द्रस्थानं विवक्ति सेवते इति व्याख्यानदर्शनेन सोमपरत्वमेवैतन्मन्त्रस्येतिकेचिन्नियमयन्ति तत्रोच्यते। यस्य मन्त्रस्य यद्देवताकत्वेनाभिधीयमानत्वं तस्य तत्परत्वमिति न व्याप्तिः। इन्द्रदेवताकत्वेनाभिधीयमाने निवेशनः सङ्गमनो वसूनामिति मन्त्रे गार्हपत्यपरे इन्द्रपरत्वाभावेन व्यभिचारात्। ऐन्द्र्या गार्हपत्यमिति विनियोगेन तस्य मन्त्रस्य गार्हपत्यपरत्वस्य तार्तीयिकाधिकरणसिद्धत्वात्। किन्तु यस्य मन्त्रस्य यद्देवताकत्वेनाभिधीयमानत्वे सति यदुद्देश्यककर्मकरणतया विनियुक्तत्वं तस्य मन्त्रस्य तत्परत्वमित्येव व्याप्तिः।

पाठयेद्बहुवान् पश्चाच्छाकुनं सूक्तमेव चेति।

पारमेश्वरसंहितायां चक्रप्रतिष्ठायां विनियुक्तस्य शाकुनसूक्तस्य सुदर्शनपरत्वाभावेन व्यभिचारवारणाय सन्यन्तम। तथा चमूषन्मन्त्रस्य सोमदेवताकत्वेऽपि तदुद्देश्यककर्मविनियुक्तत्वाभावान्न सोमपरत्वसम्भवः। नच सोमदेवताकत्वाभिधानं तत्कर्मणि विनियोगार्थमेवेति तद्देवताकत्वे सति तत्कर्मविनियुक्तत्वसत्वात्सोमपरत्वं दुर्वारमिति वाच्यम् तथा सत्युक्तव्याप्तिबलात्सोमपरत्ववत्सुदर्शनपरत्वस्यापि दुर्वारत्वात्। तथाहि भगवच्छास्त्रे पाञ्चरात्रे पारमेश्वरसंहितायां चक्रप्रतिष्ठां प्रस्तुत्योक्तम्।

तत्तत्स्थापनकाले तु तत्तत्संज्ञान् मनून् जपेत्।
विधां गदामित्याद्यं पाठयेत्तद्विदो जनान्।
चमूषच्छ्येन इति च प्रते विष्णो इति त्वृचौ।

पाठयेद्वहृचान् पश्चाच्छाकुनं सूक्तमेव च इत्यादि ।

अतश्चमूषन्मन्त्रस्य क्वाचित्सोमदेवताककर्मविनियोगमात्रेण नाव-श्यं तद्घटकपदानां बलाद्सम्भवदपि सोमपरत्वं मुख्यं स्वीकर्तुं शक्यम् । एवं चमूशब्दस्य समाजपरतया रूढस्य योगेन पात्रपरत्व-स्वीकारोऽयुक्तः । सम्भवति रूढार्थपरत्वे तत्प्रहाणस्य रथकाराधि-करणन्यायविरुद्धत्वात् । एवं द्रप्सपदस्यांशपरत्वप्रसिद्ध्या कस्य द्र-प्स इत्याकाङ्क्षोदयात् । आयुधानीत्यत्र कस्यायुधानीत्याकाङ्क्षोदया-च्च तद्वारकतया भगवत्परषष्ठ्यन्तशब्दरूपतैव च गोविन्दुरित्यस्य स्वारसिकी । एवं रूढिप्रहाणेन द्रप्सपदस्य योगतो द्रवणशीलपर-त्वं यज्ञायुधानीत्यत्र यज्ञपदसमभिव्याहारेणायुधशब्दस्य स्फ्यकपा-लादियज्ञोपकरणपरत्वसम्भवेऽपि निरुपपदायुधशब्दस्य तत्परत्वं च न स्वीकर्तुमुचितम् । ऊर्मिमित्यस्य प्रेरकमित्यर्थवर्णनं समुद्रपद-स्यान्तरिक्षलोकवर्णनं चास्वारसिकम् । तस्मादस्य मन्त्रस्य सर्वप-दानामतिक्लिष्टकल्पनयार्थं विभिद्य सोमपरतया मुख्ययोजनाकल्प-नप्रयत्नो न कथञ्चिदपि सफलो भवति । विस्तरस्तु सुदर्शनसुरद्रु-मभगवद्धर्मदर्पणयोर्द्रष्टव्यः । शुक्लयजुर्वेदैकोनविंशाध्याये पञ्चमा-नो मन्त्रः ।

यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनातु मा ।

अस्यार्थः । हे अग्ने यत् ते अर्चिषि ज्वालायामन्तरा मध्ये वि-ततं प्रविष्टं पवित्रं स्वर्णादिनिर्मितप्रतिकृतिभूतं सुदर्शनं चक्रं हो-मानन्तरं स्थापितं वर्तते तेन पवित्रेण भुजमूलाङ्कनेन ब्रह्म परं ब्रह्म चक्रस्वामी विष्णुर्मां पुनातु पवित्रयतु इति । अत्र पवित्रशब्द-स्य सुदर्शनपरत्वे पवित्रं चरणं नेमिरित्यादिपूर्वोक्तोपबृंहितपवि-त्रमित्यादिश्रुतिरेव प्रमाणम् । अस्य मन्त्रस्यैतादृशव्याख्यानकरणं च पद्मोत्तरखण्डाद्विपञ्चाशदधिकद्विशततमाध्यायोक्तम् ।

पवित्रं विष्णुचक्रं तज्जगद्व्याप्तं हरेः सदा ।
तेन तप्ता तनूर्येषां ते यान्ति परमं पदम् ॥
शुद्धेन वह्नितप्तेन ब्रह्म तेन पुनीहि नः ।
यत्ते पवित्रमर्चिमदग्ने तेन पुनीहि नः ॥
इत्येवं श्रुतयः सर्वाः कथयन्ति वरानने ।

इति वाक्येषु श्रुतिसंवाददानं पूर्वोदाहृतानि प्रमाणानि च स-

ह्यायभूतानि सन्ति । अत्रत्यमन्यविशेषविस्तरं च करिष्यमाणशुक्ल-यजुर्वेदभाष्ये द्रक्ष्यन्ति सज्जनाः । यदत्र यत्ते तव पवित्रम् अर्चिषि हे अग्ने विततं प्रसारितम् । अन्तरा मध्येन ब्रह्म तेन पवित्रेण मां पातु इत्युव्वटव्याख्यानम् । हे अग्ने ते तव अर्चिषि अन्तरा मध्ये यद्ब्रह्म परं ब्रह्मरूपं पवित्रं विततं प्रसारितं तेन मां भवान् पुनातु इति महीधरव्याख्यानं च वर्तेते ते परस्परं किञ्चिद्विरुद्धे सन्दर्भविरुद्धे च प्रतीयेते । तथाहि । तत्र पूर्वव्याख्याने तवेति युष्मदर्थे पवित्रपदार्थस्यान्वयः कृतोऽस्ति द्वितीये च युष्मदर्थे अर्चिःपदार्थान्वयः कृत इति विरोधः । पुनः पूर्वव्याख्याने अन्तरेत्यस्य मध्येनेत्यर्थः । द्वितीये च मध्ये इत्यर्थः कृतोऽस्ति । पुनः पूर्वव्याख्याने पवित्रकरणकपवनक्रियायां परब्रह्मणः कर्तृत्वमुक्तं द्वितीये च पवित्रपदार्थे ब्रह्मपदार्थस्याभेदान्वयं कृत्वा पवित्रकरणकपवनक्रियाया-मध्याहृतभवच्छब्दार्थस्याग्नेः कर्तृत्वमुक्तमिति विरोधः । पूर्वव्याख्याने पवित्रपदार्थस्य युष्मदर्थभूतेनाग्निना न कोऽपि सम्बन्धः प्रसिद्धो यदर्थिका षष्ठी स्यात् इतिसन्दर्भविरोधः । द्वितीये च सम्भवत्कर्तृत्वस्य प्रथमान्तब्रह्मपदस्य व्यत्ययं कृत्वा पवित्रविशेषणीकरणम् अध्याहृतभवच्छब्दार्थस्य कर्तृत्वकरणं च सन्दर्भविरुद्धम् । उभयत्रापि पवित्रपदार्थः कोऽपि नोक्तः यदि च पुनन्त्विति मन्त्रे उदाहृतस्य कात्यायनसूत्रोक्तस्याजाविलोमकृतस्य गोवालकृतस्य च पदार्थस्यात्रापि पवित्रपदेन ग्रहणमित्यभिमानस्तदा तादृशपदार्थस्याग्निसन्निकर्षादेव भस्मीभवनसम्भवेन अग्नेरर्चिषि प्रसारितत्वं न सम्भवतीति दृष्टविरोधः स्पष्टः । पूर्वोक्तसुदर्शनप्रतिकृतिग्रहणे तु न कोऽपि विरोध इत्यलम् । नन्वेतेषु मन्त्रेषु चक्रधारणमहिमादिसत्त्वेऽपि शङ्खस्य धारणादिकं तु न श्रुतमिति कथं शङ्खधारणानुष्ठानमितिचेन्न तत्र चक्रधारणस्य शङ्खधारणोपलक्षणार्थत्वात् । यथा च श्रुतिषु हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि इतित्रिवृत्करणं प्रमाणान्तरानुगुण्याय पञ्चीकरणोपलक्षणार्थं स्वीक्रियते । तथा उपलक्षणार्थत्वे प्रमाणानि तु स्मृतिपुराणानि बहूनि वक्ष्यन्ते । इयं खिलश्रुतिरपि तु प्रमाणभूता विद्यते । तथा हि । ऋग्वेदे बाष्कलशाखायां श्रूयते ।

प्रते विष्णो अब्जचक्रे पवित्रे
जन्माम्भोधिं तर्तवे चर्षणीन्द्राः।
मूले बाह्वोर्दधतेऽन्ये पुराणा
लिङ्गान्यङ्गे तावकान्यर्पयन्ति इति ॥

अस्यार्थः। हे विष्णो पवित्रे प्रत्यवायाभावप्रकारकभगवत्संकल्पहेतुभूते ते अब्जचक्रे त्वत्सम्बन्धिशङ्खचक्रे अब्जचक्रपदार्थयोर्द्वयोरेव ते इति षष्ठ्यर्थान्वयात्। अब्जौ शङ्खशाङ्कौ चेत्यमरात्, प्सु जायते इति व्युत्पत्तेश्चाब्जः शङ्खः। नन्वेवमब्जपदस्य चक्रपदेन साकं समासानुपपत्तिः। तस्य वृत्त्यघटकपदार्थानन्वितस्वार्थपरत्वरूपसामर्थ्याभावात्। षष्ठ्यर्थेनाब्जपदार्थस्यान्वयात्। नच चैत्रस्य दासभार्या शरैः शातितपत्र इत्याद्युपपत्तये वृत्त्यघटकपदार्थानन्वितेत्यत्राभेदान्वयस्य विवक्षणीयत्वान्नानुपपत्तिरिति वाच्यम्। तथा सति चैत्रपुत्रदेवदत्तोभयानयनतात्पर्येण चैत्रस्य पुत्रदेवदत्तावानयेति प्रयोगापत्तेरभेदान्वयनिवेशासम्भवात्। तन्निवेशेऽपि वृत्त्यघटकपवित्रपदार्थेनाभेदान्वयस्यैव सत्त्वेन समासासाधुतापत्तेर्दुर्वारत्वाच्चैवम्। समासजन्यबोधे प्रकारभूतो योऽर्थस्तदुपस्थापकपदे सामर्थ्यापेक्षणेऽपि विशेष्यभूतार्थोपस्थापकपदे तदनपेक्षणात्। चैत्रस्य पुत्रदेवदत्तावित्यादिप्रयोगाभावे तादृशसमभिव्याहारस्य तादृशबोधौपयिकाकाङ्क्षात्वाकल्पनादेव तादृशप्रयोगस्य वारणात्। तादृशे अब्जचक्रे चर्षणीन्द्राः ज्ञानिश्रेष्ठाः मूले बाह्वोः बाहुमूलावच्छेदेन प्रदधते। प्रकृष्टवह्निसंतप्तस्वसंयोगजन्यकिणवत्त्वरूपसम्बन्धप्रयोजकव्यापाराश्रया इत्यर्थः। व्यवहिताश्चेत्यनुशासनात्प्रशब्दस्य दधत इत्यनेनान्वयात्। धारणघटकसम्बन्धे प्रकर्षश्च शरीराधिकरणकालत्वव्यापकत्वरूपयावद्देहभावित्वम्। धारणस्य फलमाह। जन्माम्भोधिं तर्तव इति। अत्र जन्मशब्देन जन्मजरामरणादिप्रयोजकं प्रकृतिमण्डलं लक्षणयाभिधीयते। तस्य दुस्तरत्वातिविशालत्वादिना समुद्रसादृश्यात्तत्त्वेन रूपणं तरणं च तीरसंयोगानुकूलव्यापारः। नदीं तरतीत्यादौ स्वाश्रयसंयोगसम्बन्धेन नदीनिष्ठो यस्तीरसंयोगस्तदनुकूलव्यापारकर्तेति बोधात्। उक्तसम्बन्धेन तादृशसंयोगरूपधात्वर्थतावच्छेदकफलवत्त्वान्नद्याः कर्मत्वं जन्माम्भोधेस्तीरं च वैकुण्ठलोक एवेति

तत्प्राप्तिरेव सुदर्शनधारणेऽन्वयात् । तरणेच्छाधीनेच्छाविषयत्वस्य तरणहेतुत्वव्याप्यत्वादाक्षेपात्तरणहेतुत्वलाभः । उपायेच्छां प्रति फलेच्छायाः कारणत्वात् । एवं शङ्खचक्रे केचिद्धारयन्ति अपरे पुनः परिपूर्णानुष्ठायिनो धर्मप्रवर्तकाः पुरातनाः परमर्षयः पञ्चायुधरूपाणि तावकानि लिङ्गानि तद्व्याप्यानि पञ्चस्वपि भुजशिखरयुगलललाटमध्यमूर्धहृदयाख्येषु स्वावयवेषु धारयन्तीत्याह । अन्ये पुराणा इति । अत्रायुधं प्रति भगवतो व्यापकत्वं तादात्म्यसमानभोगवत्त्वान्यतरसम्बन्धेन विवक्षितम् । अतो मुक्तेषु चक्राद्यायुधसत्त्वेऽपि न क्षतिः । तथा च विकल्पतः पञ्चानामायुधानां शङ्खचक्रयोश्च धारणविधिः फलितो भवति । नन्वत्र खिलानामनाश्वसनीयत्वादाम्नातानामन्यत्रविनियोगेनान्यपरत्वात्स्मार्तविनियोगस्य सतोऽपि श्रौतविनियोगानुरोधेन नेयत्वाद्विनियुक्तमन्त्राणां विधिपरत्वायोगादविनियुक्तस्य खिलस्याखिलस्य च त्वयैवानभ्युपगमाच्चाभिमतासिद्धिरितिचेत् । अतिमन्दमेतत् । तथा हि खिलानां तावत्किं खिलत्वमात्रादनाश्वसनीयत्वमथ तद्विशेषत्वात् । नाद्यः यज्ञोपवीतादिमन्त्राणामप्यनाश्वासपदत्वप्रसङ्गात् । न द्वितीयः वैषम्यासिद्धेः । नह्यस्य प्रत्यक्षश्रुतिविरोधतदभावलक्षणं वैषम्यमस्ति ब्राह्मणादिभिश्चक्रादिकं न धार्यमिति प्रतिपादयन्त्याः श्रुतेरदर्शनात् । तद्दर्शनेऽपि प्रत्यक्षबहुश्रुत्यन्तरतत्सदृशभगवच्छास्त्रमहाभारतादिविरोधे सत्यन्यपरतया निर्वाह्यत्वात् । नचात्र निषेधसम्भवः चक्रादिधारणस्य दुःखैकरूपतयोपलभ्यमानस्य रागप्राप्तत्वायोगेन निषेधाविषयत्वात् । विधिप्राप्तत्वे तु विधिरेव परिपन्थी नास्या विकल्पोऽपि सम्भवति एकस्मिन्नेवाधिकारिणि दुःखतदभावरूपयोस्तदयोगात् । व्यवस्थापकस्यापि क्लृप्तौ गौरवादतिप्रसङ्गाच्च । स्मृतिविरोधतदभावाभ्यां वैषम्यमिति चेत् । स्मृत्यन्तरसंगृहीतश्रुतिविरुद्धायाः स्मृतेरात्तमेवानुदयात् । उदितायाश्च यथाकथंचिदविरोधेन नेयत्वात् । अत्यन्तविरोधे तु विरोधाधिकरणन्यायेन परित्याज्यत्वात् । नचात्यन्तविरोधः सामान्यतो व्रणकरणादिनिषेधस्योत्सर्गापवादन्यायेन समर्थ्यमानैः श्रुतिस्मृतीतिहासपुराणपञ्चरात्रैरैककण्ठ्येन प्रतिपादितार्थव्यतिरिक्तपरत्वात् । अन्यथाग्नीषोमीयहिं-

सादेरपि न हिंस्यादित्यादिना निषिद्धत्वेनाधर्मत्वप्रसङ्गात् । प्रसिद्धितदभावाभ्यां वैषम्यमिति चेत्केयं प्रसिद्धिः । किमधीतत्वमेव उत संप्रतिपन्नत्वं किंवा खिलत्वेन श्रवणपरम्परागतत्वम् । यद्वा सूत्रकारादिभिरुपात्तत्वम् । नाद्यः खिलत्वविरोधात् न द्वितीयः धाष्ट्यात् । त्वामिव विप्रतिपद्यमानं प्रति तदसिद्धेः । इतः पूर्वं तत्र विप्रतिपत्तिर्नास्तीति चेत् । अत्रापि पूर्वोत्तरेषु सर्वोत्तरेषु कालेषु विप्रतिपत्तिसद्भावे प्रमाणाभावात् । इदानीमपि सात्त्विकानां विशिष्टदेशादिभाजामपि संप्रतिपन्नत्वात् । न तृतीयः । अननुष्ठातॄणामनुतिष्ठतामपि परप्रत्ययशरणानां च तच्छ्रवणपारंपर्यनैरपेक्ष्येण तेषु तदभावस्याकिञ्चित्करत्वात् । अनुतिष्ठतां तु स्वयं बुभुत्सूनां तत्पारम्पर्यसिद्धेरवैषम्यात् । चतुर्थस्तु परिशिष्यते । तत्र किं सूत्रकारादिभी रुचिमात्रपरिगृहीतैः पुरुषविशेषैरुपादानं विवक्षितम् । उताविशेषेणाप्तैरुपादानम् । न प्रथमः अप्रयोजकत्वात् सजातीयजन्मान्तररुचिपरिगृहीतपुरुषान्तरानुपात्तत्वेन त्वदभिमतस्यापि विलयप्रसङ्गात् । न द्वितीयः अस्मदभिमतेऽपि तत्सद्भावेन वैषम्यासिद्धेः । चक्रादिधारणविषयखिलानां कैराप्तैरुपादानमिति चेत् । आप्ततमपुरुषोत्तमदयोदञ्चितपञ्चरात्रसंहिताभेदकथकैर्महर्षिभिः तस्य च शास्त्रस्य वेदाविरुद्धतत्त्वानुष्ठानप्रतिपादकत्वात् इत्यादि श्रीकवितार्किकसिंह श्रीवेदान्ताचार्यकृतसच्चरित्ररक्षायां विस्तरः । कतिपयपुरुषैरेव व्यवहृतत्वाद्वैषम्यमिति चेत् असति बाधके कतिपयपुरुषव्यवहृतत्वस्याप्यर्थसाधकत्वात् । अन्यथा शाखा गोत्रब्राह्मण्याद्यसिद्धिप्रसङ्गात् । सति बाधके कल्पसूत्रकारादिवचनानामप्यर्थसाधकत्वाभावात् । अङ्गं वा समभिव्याहारादविशेषादुभौ वेत्यादिकल्पसूत्राणामप्रामाण्यस्य पूर्वतन्त्रसिद्धत्वात् । तथाहि पिण्डपितृयज्ञो दर्शकर्मणोऽङ्गं अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति दर्शकर्मवाचकामावास्याशब्दसमभिव्याहारादिति प्रथमसूत्रार्थः । चतुर्थे पितृयज्ञः स्वकालत्वादनङ्गं स्यादित्यत्रामावास्याशब्दस्य कालवाचित्वमेव तादृशापराह्णशब्दसमभिव्याहारात् । तथा च दर्शकर्मसमभिव्याहाराभावान्न तदङ्गं पिण्डपितृयज्ञः किन्तु स्वतन्त्र इति व्यवस्थापितम् । दर्शपूर्णमासयोराग्नेयं चतुर्धा करोतीत्युक्तचतुर्धाकरणे कल्पसूत्रमविशेषादुभौ वेति अग्निसम्बन्धा-

विशेषादाग्नेयाग्नीषोमीयावुभावपि चतुर्धा कुर्यादिति तदर्थः । सत्यप्यग्नीषोमीयस्याग्निसम्बन्धेनासावाग्नेयशब्दोनाभिधातुं शक्यः । तत्र केवलस्याग्नेर्दैवतात्वाभावेन तद्धितानुपपत्तेः । ततः केवलाग्नेयस्यैव कल्पसूत्रस्यार्थसाधकत्वे तादृशस्याभियुक्ताधुनिकवचनस्याप्यर्थसाधकत्वादुक्तमन्त्राणां श्रुतित्वं दुर्वारम् । उक्तमन्त्राणा श्रुतित्वे बाधकप्रमाणानुपलम्भात् । प्रत्युत पाञ्चरात्राद्युपादानरूपस्य साधकस्यैव सत्त्वात् । किंच स्मृतिकल्पसूत्रकाराद्युदाहृतानामेव श्रुतित्वमितिनियमे ऊर्जाय पशूनाप्नोत्यूर्जैवावरुध्य इत्यादिशावरभाष्योदाहृतानां तथा विरोधाधिकरणे औदुम्बरीं सर्वां वेष्टयितव्येति स्मृतिमूलतया वार्तिककारादितानामूर्ध्वदर्शन वाससा परिवेष्टयन्तीत्यादीनाम् अत एव चोपमा सूर्यकादिवत् इति सूत्रे शाङ्करभाष्योदाहृतस्य यथा ह्ययं ज्योतिरात्मा विवस्वान् इति वाक्यस्यापि श्रुतित्वानिश्चयापत्तिः । अबाधितवैदिकपरिग्रहात्तेषां श्रुतित्वे चोक्तमन्त्राणामपि वैदिकपरिग्रहात् श्रुतित्वं दुरपह्नवम् । इत्यादि सुदर्शनसुरद्रुमचक्रोल्लासयोर्विस्तरः । एकत्र विनियुक्तानामन्यत्रापि विनियोगो भवतीति तु पूर्वमेव बहुनिरूपितम् । ननु स्मृतिपुराणादिभिर्विनियुक्तत्वेन तस्य कर्मणोऽवैदिकत्वं स्यादिति चेत् किं तावदवैदिकत्वं न तावद्वेदविरुद्धत्वं षोडशीग्रहणाग्रहणयोरुदितानुदितहोमयोश्चावैदिकत्वापत्तेः । विरोधप्रतिभासमात्रस्य स्मृतिपुराणादिषु सर्वत्र सत्त्वेन तावन्मात्रेणावैदिकत्वानापत्तेश्च । नापि प्रामाण्याभ्युपगन्तृपुरुषप्रणीतत्वं वैदिकत्वं तद्भिन्नत्वमवैदिकत्वं वेदप्रामाण्याभ्युपगन्तृबृहस्पतिप्रणीतचार्वाकसूत्राणां वैदिकत्वापत्तेः । पञ्चरात्रप्रणेतुरीश्वरस्य वेदाभ्युपगन्तृत्वाच्च नावैदिकत्वं स्यात् । नच वेदाभ्युपगन्तृपुरुषपरिगृहीतत्वं वैदिकत्वं तथात्वस्य पञ्चरात्रेऽपि सत्त्वात् । नापि वेदविहितधर्मविधायकत्वं धर्मत्वे वेदाविहितावश्यम्भावात् । सर्वस्यापि धर्मत्वे श्रौतस्मार्तविभागः कथमिति चेत् । अस्मदाद्यधीयमानश्रुतिविहितत्वे श्रौतत्वं ग्रहयज्ञादिव्यवहाराणां पठ्यमानश्रुतिविहितत्वाभावात्स्मार्तत्वमिति । तस्मान्न वेदाविहितधर्मविधायकत्वेनावैदिकत्वम् । नापि पञ्चरात्रस्य परिगणितचतुर्दशविद्यास्थानानन्तर्गतत्वेनावैदिकत्वं तथा स्वीकारे रामायणमहाभारतादीनामप्यपरिगणितत्वेनावैदिकत्वापातात् ।

विनियुक्तानां मन्त्राणां विधिर्न सम्भवतीत्येतत्तु परिशिष्यते। यथाहुः।

विलुप्तविधिशक्तित्वात्सिद्धत्वद्योतनादिभिः।
प्राप्तत्वादन्यतस्तेषां विधिशब्दाद्यभावतः॥
ब्राह्मणैर्विनियुक्तत्वात्करणत्वेन कर्मणाम्।
मन्त्रत्वादपि नैते स्युस्तत्समुद्राविधायकाः॥

विधायकत्वं हि मन्त्राणां विधिशक्तिमत्त्वेन नान्यथा नचैतेषां मन्त्राणां तादृशशक्तिमत्त्वं तद्विरुद्धार्थस्यैव प्रतीतेरिति। तत्रोच्यते। अमीषां मन्त्राणां विधायकत्वं हि कृतिसाध्यत्वेष्टसाधनत्वादिबोधजनकत्वम्। तत्र च कृतिसाध्यत्वादिवाचकपदघटितत्वे सति साकाङ्क्षत्वे सति योग्यत्वं नियामकम्। पवित्रमन्त्रे इद्वहन्तस्तत्समाशत इत्यनेन धनवान् सुखीत्यादाविवोद्देश्यतावच्छेदकस्य विधेये प्रयोज्यतासम्बन्धेन भानेनेष्टसाधनत्वस्य इद्वहन्त इत्यस्य पूर्वोपस्थिततापवहनानुकूलकृतिमानित्यर्थकतया तापवहनरूपतत्समुद्राधारणं कृतिसाध्यत्वस्य च प्रत्ययेन तन्मन्त्रस्य विधायकतानिर्वाहात्। चरणवमूषन्मन्त्रयत्तेपवित्रमित्यादिमन्त्राणामप्युक्तरीत्या कृतिसाध्यत्वेष्टसाधनत्वादिबोधकत्वसम्भवाद्विधायकत्वोपपत्तेः। नच विधायकत्वप्रयोजकं विधिशक्तिमत्त्वं मन्त्रेषु नास्तीति वाच्यम्। विधिशक्तिमत्त्वं हि कृतिसाध्यत्वाद्युपस्थितिजनकपदगतशक्तिमत्त्वं वा कृतिसाध्यत्वादिरूपविध्यर्थविषयकबोधजनकतावच्छेदकवाक्यगतशक्तिमत्त्वं वा। नाद्यः वहन्त इत्यनेन वहनसाधककृतेः प्रतीत्या साध्यतासम्बन्धेन धात्वर्थान्वयिकृतिवाचकशतृप्रत्ययसत्त्वेन तादृशशक्त्यभावासिद्धेः। न द्वितीयः कारणसामान्ये शक्तिवादिनां मीमांसकादीनामपि मते साकाङ्क्षयोग्यपदसमुदायतादृशशक्तिस्वीकारेण मन्त्रे तादृशशक्त्यभावे बीजाभावात्। नचोक्तमन्त्रेषु कृतिसाध्यत्वबोधौपयिकशक्तिमत्त्वं न सम्भवति कृतिसाध्यत्वबोधं प्रति सिद्धत्वद्योतनद्वारा प्रतिबन्धकस्य यच्छब्दस्य येन पूत इत्यादौ सत्त्वेन तादृशशक्तेर्नाशात्। प्रतिबन्धकतायाः कार्यानुकूलशक्तिविघटकत्वरूपत्वादिति वाच्यम्। वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोपस्थापकस्य यच्छब्दस्य सिद्धत्वद्योतकत्वासिद्ध्या तस्य प्रतिबन्धकत्वासम्भवात्। अन्यथा य-

दाग्नेयोऽष्टाकपाल इत्यादेरपि विधायकत्वानुपपत्तेः । नचाप्राप्तार्थत्वाभावविशिष्टयच्छब्दादेस्तादृशबोधप्रतिबन्धकत्वाङ्गीकारान्नानुपपत्तिः । यदाग्नेयोऽष्टाकपाल इत्यादावप्राप्तार्थत्वस्यैव सत्त्वेन तदभावविशिष्टयच्छब्दादेरभावात् । प्रकृते च पाञ्चरात्रादिवचनैः सुदर्शनधारणस्य प्राप्ततया अप्राप्तार्थत्वाभावेन तद्विशिष्टयच्छब्दरूपप्रतिबन्धकसत्त्वाद्विधिशक्तितिरोधानमिति वाच्यम् । अप्राप्तार्थत्वं हि न तावन्मानान्तराग्राह्यार्थत्वं श्रुतेः स्मृतिनिरुक्तपञ्चरात्रपुराणवेदभाष्यादिग्राह्यार्थत्वेनाप्राप्तार्थत्वानापत्तेः । किन्तु स्वानुपजीविमानान्तराग्राह्यार्थत्वम् । यत्रापूर्वार्थत्वमुपपादनीयं तत्परं स्वपदम् । तथा च स्मृतेरिव पञ्चरात्रस्यापि श्रुत्युपजीवित्वेन तदनुपजीवित्वेन तदनुपजीविमानान्तराग्राह्यार्थत्वरूपमप्राप्तार्थत्वमुक्तमन्त्राणामक्षतमेव । अत एव पूर्वमीमांसायां विधिविभक्तिरहितानामपि उपांशुयाजमन्तरा यजतीत्यादीनां "वचनानि त्वपूर्वत्वा"दिति न्यायेन पञ्चमलकारकल्पनया विधायकत्वं समर्थितम् । उत्तरमीमांसायामपि । "त्रयो धर्मस्कन्धा"इत्यादिश्रुतीनां "ब्रह्मसंस्थो अमृतत्वमेति"इत्यादीनां च "विधिर्वा धारणवत्" इति सूत्रेण संन्यासाश्रमविधायकत्वमिति सर्वैरपि भाष्यकारैर्व्याख्यातम् । अत एवं च "ब्रह्मविदाप्नोति परं तस्य तावदेव चिर"मित्यादौ परप्राप्तिकामो ब्रह्म विद्यादिति विधिः सर्ववेदान्तिभिः कल्प्यते । "कपिञ्जलानालभते प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती"ति वाक्येषु विधिकल्पनं शास्त्रेषु प्रसिद्धमेव । व्याकरणमहाभाष्ये च "चत्वारि शृङ्गा" इत्यादिषु प्रतिमन्त्रं महता देवेन नः साम्यं स्यादित्यध्येयं व्याकरणमिति अमिता पतञ्जलिमुनिना विधयः कल्पिताः । एवं सर्वत्र शास्त्रेषु यत्रापूर्वार्थः श्रूयते फलं वा कीर्त्यते तत्र सर्वत्र विधिः कल्प्यते । शास्त्रेषु बहुत्र विधिप्रत्ययोच्चारणं तु कल्पनाभावरूपलाघवायेति तत्त्वम् । यदपि विवादास्पदानि पवित्रं त इत्यादयो मन्त्रा न विधायकाः कर्मकरणतया ब्राह्मणेन विनियुक्तत्वात् व्रीह्यादिवदित्यनुमानादेतेषां मन्त्राणामविधायकत्वसिद्धिरिति तदयुक्तम् । पवित्रं त इत्यादयो मन्त्रा इत्यत्र पवित्रं त इति मन्त्रः आदिः प्रथमोपस्थितिविषयो येषामिति विग्रहवाक्याद्यदुपस्थितिध्वंससमानकालीनोपस्थितिविषयत्वस्य लाभात्तस्य

पक्षतावच्छेदकत्वे पवित्रमन्त्रस्य पक्षबहिर्भावप्रसङ्गः। तद्गुणसंविज्ञानबहुव्रीह्याश्रयणे चापि विवादास्पदानीति व्यर्थम्। एवं कृतिसाध्यत्वादिविषयकबोधजनकत्वरूपविधायकत्वाभावस्य साध्यत्वे बाधः। उक्तरीत्या तेषां मन्त्राणां तद्विषयबोधजनकत्वात्। कृतिसाध्यत्वादिवाचकलिङादिविभक्तिघटितत्वाभावसाधने च सिद्धसाधनम्। विधिवाक्यकल्पकत्वाभावसाधने च करणतयेत्यादिपदानां व्यावृत्त्यसङ्गतिः। ज्योतिष्टोमेन स्वर्गकामो यजेत समिधो यजति वसन्ताय कपिञ्जलानालभेत इत्यादेर्विधायकत्वेऽपि विधिवाक्यकल्पकत्वाभावरूपसाध्यस्याबाधेन व्यभिचाराप्रसक्तेः। कर्मकरणतया ब्राह्मणेन विनियुक्तत्वादिति हेतुकथनमपि न सत् असिद्धेः। मन्त्रं विनापीच्छाविशेषरूपत्यागादेरुत्पत्त्या मन्त्रस्य तत्करणताया बाधितत्वात्। इष्टसाधनताज्ञानादिघटितक्लृप्तसामग्र्यान्यथासिद्धत्वाच्च मन्त्रस्य करणतां कथं ब्राह्मणं बोधयेत् बोधयद्वा कथं प्रमाणी भवेत् इत्याद्यन्यत्र विस्तरः। इदं तप्तशङ्खचक्रधारणं रामार्चनचन्द्रिकानृसिंहपरिचर्यारामनाममाहात्म्यहरिभक्तिविलासवैष्णवसुरद्रुममञ्जरीजयसिंहकल्पद्रुमादिमहानिबन्धेषु विहितत्वेनाङ्गीकृतमेवास्ति। निर्णयसिन्धौ तु श्रौतं विधिं प्रदर्श्य स्मार्तनिषेधश्चान्येषां पृथ्वीचन्द्रोदयादीनां सम्वादेन प्रदर्शितः। तत्र निषेधवचनानां गतिस्तु मत्कृतविष्णुचिह्नग्रन्थे सुष्ठु प्रदर्शितास्ति। तत्र रामानुजमाध्वसम्प्रदाययोस्तु तप्तशङ्खचक्रादिधारणं दीक्षासमय एव नियतं वर्तते। निम्बार्कसम्प्रदायेऽप्यनुमन्यते ग्रन्थेष्वपि प्रमाणान्युपात्तानि वर्तन्ते। वल्लभसम्प्रदाये परं तप्तमुद्राधारणप्रमाणमनुमन्यते काम्यमिति धारणं परं न क्रियते गोपीचन्दनमृत्तिकयैव क्रियते। तथा हि वल्लभाचार्यकृततत्त्वदीपनिबन्धग्रन्थः।

शङ्खचक्रादिकं धार्यं मृदा पूजाङ्गमेव तत्।
तुलसीकाष्ठजा माला तिलकं लिङ्गमेव तत् इति।

तत्र तत्कृतैव टीका च। अत्र वैष्णवमार्गे वेदमार्गाविरोधो यत्र तत्र कर्तव्यम्। यद्यनित्यो धर्मो भवेत्। नित्येऽपि वेदविरोधः सोढव्य इत्याह। शङ्खेत्यादि।

वह्निनैव तु सन्तप्तं चक्रमादाय वैष्णवः।
धारयेत्सर्ववर्णानां हरिसालोक्यकाम्यया॥

इति तप्तमुद्राधारणं काम्यम्।
शङ्खादिचिह्नरहितः पूजां यस्तु समारभेत्।
निष्फलं पूजनं तस्य हरिश्चापि न तुष्यति।

अतो मृदा शङ्खचक्रादिधारणं पूजाङ्गमवश्यं कर्तव्यम् इत्यादि। अत्र काम्यत्वश्रवणेन नित्यत्वं न सम्भवतीति काम्यानां कर्मणां न्यासमिति भगवदुक्तेस्तप्तचक्राङ्कनस्य काम्यत्वेन मुमुक्षुभिर्न कर्तव्यमिति ग्रन्थकाराशयः प्रतीयते। एवमेव पूर्वोक्तचक्रधारणमन्त्रेषु इद्रहन्तस्तत्समाशत तुरीयं धाम महिषो विवक्ति येन पूतस्तरति दुष्कृतानि जन्माम्भोधिं ततवे इत्यादौ फलश्रवणेन काम्यत्वप्रतीत्या चक्रधारणस्य नित्यकर्मत्वं न सम्भवतीत्यन्येऽपि शङ्कन्ते। तत्रोच्यते यथा एकादशीजन्माष्टमीव्रतादौ कतिपयेषु वचनेषु पुत्रादिफलस्य कतिपयेषु पापनाशस्य च श्रवणेऽपि केषुचित् एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीति केवलविधेः श्रवणेन नित्यत्वस्वीकारेण सर्वैरपि मुमुक्षुभिरेकादशीव्रतं जन्माष्टमीव्रतं च क्रियते तथा दक्षिणे तु भुजे विप्रो विभृयाद्वै सुदर्शनमित्यादिषु केवलं धारणश्रवणेन नित्यत्वं स्वीकृत्यावश्यं धारणं क्रियते इति। किञ्च। मनुस्मृतौ द्वितीये।

नाकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित्।
यद्यद्धि कुरुते जन्तुः सर्वं कामस्य चेष्टितम्।

इत्युक्तत्वेन कामनास्पर्शरहितं किमपि कर्म न भवतीत्युच्यते। एवं सत्यपि तत्र नित्यनैमित्तिककाम्यानां व्यवस्थोक्ता श्रीवेदान्ताचार्यकृततत्त्वमुक्ताकलापसर्वार्थसिद्ध्योः।

यन्नित्यं तन्न काम्यं तदपि न तदिति स्थापिते कर्मभेदे
ऽप्येकं विद्याश्रमाङ्गं भवति हि विनियुक्त्यन्तरेणोपपत्तेः।
तत्रानुष्ठानतन्त्रं विदुषि तु घटते कर्तृकालाद्यभेदात्
प्राजापत्यादिलोकार्थिनि च तदितरोऽनर्थरोधाय तद्वान्॥
ज्योतिष्टोमाग्निहोत्रादौ विनियोगपृथक्त्वतः।
नित्यकाम्यस्वरूपत्वं दृष्टं तद्वदिहास्तु नः॥
विध्यैक्ये ऽपि क्वचिद्दृष्टा काम्यनैमित्तिकात्मता।
विधिभेदे तु किं न स्यादत्र कैमुतिकी गतिः इति॥

ज्योतिष्टोमस्य प्रयोगभेदेन नित्यत्वकाम्यत्वयोर्दर्शनात्। नित्यस्य स्वाध्यायस्य सावित्रीजपस्य च यो याजयति प्रतिगृह्णाति याजयित्वा प्रतिगृह्य वाश्नन् त्रिः स्वाध्यायं वेदमधीयीत त्रिरात्रं वा सावित्रीमन्वारेचयतीत्यत्र प्रतिग्रहयाजनकर्मजन्यपापप्रायश्चित्तत्वेनाम्नातत्वेन नैमित्तिकत्वमपि सिद्धं भवति। इति सुदर्शनमीमांसायां वेदाचार्यकृतायां स्पष्टम्। तथैव तप्तचक्राद्यङ्कनस्य काम्यत्वे नैमित्तिकत्वे वा नित्यत्वमपि सुस्थिरमेव भवतीति। एवं स्थिते हेमाद्रिप्रायश्चित्तकाण्डपृथ्वीचन्द्रोदयाद्युच्छिष्टभूतानि कानिचिद्विरोधिवचनान्युदाहरतामाचारभूषणशैवसुधाकरस्मृतिसारकाशीखण्डटीकाकारादीनां सिद्धान्ता विलीना एव भवन्ति। सर्वार्वाचीनभूतश्च तन्त्राधिकारिनिर्णयकारस्तदुक्तयस्तावत्प्रधानभूता विचार्यन्ते। तत्र पूर्वं कौर्मवाक्यं यत् प्रदर्शितम्।

कापालं पाञ्चरात्रं च यामलं वाममार्हतम्।
एवं विधानि चान्यानि मोहनार्थानि तानि तु इति।

तद्भवतु तथा न तेन सर्वसम्प्रदायिनां वैष्णवानां काचित्क्षतिः। तथाहि तत्रत्यपाञ्चरात्रपदेन कापालवामार्हतादिसमभिव्याहृतत्वेन मध्यपतितत्वेन सन्दंशन्यायेन विशये प्रायदर्शनादिति मीमांसासूत्रोक्तन्यायेन प्रायपाठेन च शैवपाञ्चरात्रनामकाः ग्रन्थाः केचनान्ये शिवनिर्मिता गृह्यन्ते। नतु नारदपञ्चरात्रत्वेन प्रसिद्धा विष्णुसमाराधनपरा ग्रन्थाः "न विष्ण्वाराधनात्पुण्यं विद्यते कर्मवैदिकमिति स्मृतेस्तेषु मोहनार्थत्वलेशाभावाच्चेति सन्तोष्टव्यम्। तथाग्रे।

अङ्किताश्च भविष्यन्ति।
नराणां नामरूपाभ्यां युगान्ते समुपस्थिते।
पाञ्चरात्रं प्रशंसन्ति केचिद्भागवतं मुने।
केचित्कापालमिच्छंति केचित्पाशुपतं मुने

इत्याद्युदाहृतवासिष्ठलैङ्गग्रन्थेऽपि ताभ्यामेव प्रायपाठसंदंशन्यायाभ्यां शैवा एव केचन ग्रन्था ग्राह्या नतु विष्ण्वाराधनशास्त्ररूपा महाभारतप्रशंसिताः पञ्चरात्रग्रन्थाः। अन्यथा तद्वाक्ये भागवतग्रन्थस्यापि पठितत्वेन तस्यापि तथात्वापत्तौ सकलशिष्टविद्वज्जनव्यवहारविरोधः स्यात्। अतोभागवतमपि तत्रत्यं भिन्नम् अथः शूलेति सूत्रे

महाभाष्ये शिवस्य भगवतो भक्तः शिवभागवतं इत्युदाहृतत्वेन पाशुपतानामेव कश्चिद्ग्रन्थो भवेत् पाशुपतमतं वेदविरुद्धमिति पत्युरसामञ्जस्यादिति ब्रह्मसूत्रेषूक्तं शाङ्करादिभाष्यसंमतं च । अग्रे च ब्रह्मवैवर्तनाम्ना यानि वचनानि लिखितानि हेमाद्र्युक्तानीति । तेष्वपि वचनेषु ।

सात्वतास्तेऽपि विज्ञेया उक्ता भागवताश्च ते ।
शैवाः पाशुपताश्चान्ये पाञ्चरात्रास्तथा परे ॥
तथान्ये च दुरात्मानः सर्वेऽप्यसुरदैवताः ।

इत्युक्तत्वेन पूर्वोक्तप्रायपाठात् पाशुपतैः सहपठितत्वात् भागवताः पाञ्चरात्राश्च शिवागमनिष्ठा एव ज्ञेयाः । अन्यथा व्याहर्तुमारभत भागवतप्रधान इत्यादावुक्तानां शुकादीनामपि निन्द्यत्वापत्तिः । नचैते नारदपञ्चरात्रनिष्ठा वैष्णवाः असुरदैवतत्वेन क्वचित् प्रसिद्धाः । किन्तु अनन्यत्वेन विष्णूपासकाः वैष्णवा इत्येव तान् विभजन्ति शाक्तादयः । हिरण्यकशिपुप्रभृतयोऽसुराः शिवोपासका इति शिवभक्तिप्रकर्षाय तदुपासका इदानींतनाः पाशुपता एव असुरदैवतत्वेन ग्रहीतुमुचिताः । सूतसंहितावचने तद्व्याख्याने च ।

पाञ्चरात्रादिमार्गाणां वेदमूलत्वमास्तिके ।
न हि स्वतन्त्रास्ते तेन भ्रान्तिमूला निरूपणे ।

इति पाञ्चरात्रादीनां तैः स्वयमेव वेदमूलत्वानङ्गीकाराद्वेदविरुद्धानेकार्थोपदेशाच्चेत्येतत्सर्वमपि शैवपाञ्चरात्रेष्वेव सम्भवेत् । अत एव त्वग्रे तत्रैव पाञ्चरात्रादयो मार्गाः कालेनैवोपकारकाः । तान्त्रिकाणामहं देवि न लभ्योऽव्यवधानतः इति रुद्रोक्तिः । अन्यथा संयोगो विप्रयोगश्चेत्यत्र अशङ्खचक्रो हरिरित्युक्ते यथा विष्णुरेव गृह्यते न मर्कटादिस्तथा संयोगवद्विप्रयोगस्यापि हेतुत्वमिति हल्सन्धिमनोरमोक्तरीत्या ये शिवोपासकास्ते तन्त्रनिष्ठाश्चेद्व्यवधानेन न प्राप्नुवन्तीत्युक्तं सम्भवति वैष्णवास्तु न रुद्रमुपासते इति कुतस्तेषां तत्प्राप्तिसम्भावना यथाक्रतुन्यायविरोधश्च स्यात् । तथा हि शैवशाक्ताद्रिते ज्ञानार्णवतन्त्रे ।

भगगुह्ये भगप्रान्ते योनिप्रान्ते भगान्तिके ।
भगानि मे ह्यानयेति वरदेति सदा लिखेत् ॥

सर्वाणि च भगाम्यन्ते मे वशं चानयेति च ॥
तत्पदार्थं तु जानीहि मुखमस्या वरानने ।
त्वंपदार्थोऽसि वाक्यार्थः कुचयुग्मं क्रमेण हि ॥
नादोदितं वरारोहे विश्वं योनिर्न संशयः ।
तत्रैव शक्तिं सम्पूज्य स्वात्मलिङ्गं शिवं यजेत् ॥
मले मूत्रे कथं दोषो भ्रान्तिरेव न संशयः ।
रेतः पवित्रं देहस्य कारणं केन निन्द्यते ॥

इत्यादीनि वचनानि पञ्चदशद्वाविंशत्रयोविंशपटलादिषु दृश्यन्ते । वैष्णवपाञ्चरात्रेषु तु न क्वचिदपीदृशजघन्यविषयाणां लेशोऽप्यस्ति । अतो वेदविरुद्धार्थोपदेशास्तेष्वेव स्युः । वेदमूलत्वानङ्गीकारोऽपि तेष्वेव सम्भवति । वैष्णवपाञ्चरात्रेषु तु वेदमूलत्वमन्तरा व्यवहार एव न विद्यते । यथा भारद्वाजसंहितायाम् ।

वेदवेदन्तविज्ञानं विश्वासो गोप्तरि स्वयम् ।
साङ्गान् वेदानधीयीत न्यायैश्चार्थं विचारयेत् ॥
विद्यात्कर्मादिकं यत्र विष्णोराराधनादिकम् ।
अथौपनिषदं चार्थं शृणुयान्न्यायतः सुधीः ॥
वेदवेद्यः स भगवान् कृपया परयाच्युतः ।
चतुर्विधमिदं प्राह सर्वेषां हितकारणात् ॥
य आत्मनां परो वेद्यस्तं विष्णुं वेदयन्ति यत् ।
तद्वेदानां हि वेदत्वं यस्तं वेद स वेदवित् ॥
वेदवेदाङ्गतत्त्वज्ञा नारायणपरायणाः ।
इत्यादि द्वितीयतृतीयपरिशिष्टचतुर्थाध्यायादिषु ॥
एवं सात्त्वतसंहितायां चतुर्विंशपरिच्छेदे ।
ऋग्वेदान् पाठयेद्भक्त्या युञ्जतेत्यपरान् यजुः ॥
रथन्तराख्यं यत्साम सामज्ञान् भगवन्मयान् ।
इति । पञ्चविंशे च ॥
उदुत्तमं हि ऋग्वेदान् पाठयेद्द्रविणं यजुः ।
ततस्तु वारणं साम सामज्ञोऽथर्वणस्ततः ॥
पवित्रं ते हि यत्साम संचोद्यैकायनांस्ततः ।
पवित्रमन्त्रं तदनु इदं विष्णुर्विचक्रमे इत्यादि
अहिर्बुध्न्यसंहितायां च ।

पुरुषार्थैश्चतुर्भिस्तदन्वितं हेतुसङ्कुलम् ॥
ऋग्यजुः सामभिर्जुष्टमाङ्गिरोभिरथर्वभिः। इत्येकादशे।
वेदवेदान्ततत्त्वज्ञो विद्यास्थानविचक्षणः।
इत्यादिवैष्णवगुरुलक्षणं विंशेऽध्याये चोक्तम्।
पाद्मसंहितायां च शास्त्रारम्भ एव।
शृणु विप्र प्रवक्ष्यामि सिद्ध्युपायमनामयम्।
श्रुतिरेव द्विजातीनां निःश्रेयसकरी परा ॥
यतो वै श्रुतिमन्त्रेण नित्यमाराधयन् हरिम्।
कैवल्यं परमं प्राप्तो न भूयः संसरेदिह इत्युक्तम् ॥

एवं विष्णुतिलकपराशरबृहद्ब्रह्मसंहितादिषु वेदमूलकत्वेनैवाचारः स्वीकृतः पाञ्चरात्रशास्त्रे। अग्रे भट्टपादग्रन्थेऽपि सांख्यपाञ्चरात्रपाशुपतशाक्येति वाक्ये इतरसाहचर्यरूपप्रायपाठन्यायात्पाशुपतसबन्धिन एव पाञ्चरात्रस्य ग्रहणमिति नास्माकं क्षतिः। अग्रे च।

पाञ्चरात्रान् पाशुपतान् वाङ्मात्रेणापि नार्चयेदिति।

कौर्मवाक्येऽपि पाशुपतसाहचर्यरूपप्रायपाठात् पाशुपतानां पाञ्चरात्रं ग्राह्यम्।

अग्रे च बौद्धश्रावकनिर्ग्रन्थाः पाञ्चरात्रविदो जनाः।
कापालिकाः पाशुपता

इत्युक्तत्वेन तत्रापि पाशुपतपाञ्चरात्रमेव ग्राह्यम्।

वामाः पाशुपताचारास्तथा वै पाञ्चरात्रकाः।

इत्यत्रापि शैवपाञ्चरात्रमेव साहचर्याद्ग्राह्यम्। पाराशरोपपुराणवचने।

धर्माधार्मादिविज्ञाने त्वागमाः पुरुषोदिताः।
पाञ्चरात्रादयः सर्वे न प्रमाणमिति स्थिति।

रित्यत्रापि पुरुषोदिता इत्युक्तत्वेन शैवा एव ग्राह्याः वैष्णवपाञ्चरात्रविषये तु।

पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयमिति

भारतशान्तिपर्वनारायणीयोपाख्यानवचनेन परमपुरुषस्योत्तमपुरुषस्य कर्तृत्वं स्मर्यते इति तद्व्युदासः। अग्रे मुक्तिखण्डवाक्येऽपि।

वामपाशुपतादीनां शाक्यादीनां परिग्रहः।
पाञ्चरात्रादयश्चापि ज्ञानानुत्पत्तिकारणमिति

वामादिभिः सह पाठाच्छैवा एव पाञ्चरात्रा ग्राह्याः स्युः । अग्रे च।

तथापि योंऽशो मार्गाणां वेदेन न विरुध्यते ।

इत्यत्रापि वैष्णवपाञ्चरात्रेषु कस्याप्यंशस्य वेदैर्विरोधाभावात् शैवपाञ्चरात्रा एव ग्राह्याः ।

यज्ञवैभवखण्डकथायां तु नास्माकं हानिस्तत्र सम्बन्धाभावात् ।

अग्रे उत्तरतन्त्रे उत्पत्त्यसम्भवाधिकरणवृत्तान्तप्रलपनं त्वरण्यरोदनप्रायमेव । यतः शाङ्करकभाष्योक्त सर्वदूषणानि श्रीभाष्यादिषु स्पष्टप्रमाणैः खण्डितान्येव । अग्रे या शाण्डिल्यकथा वर्तते तस्या न वैष्णवपञ्चरात्रेषु कश्चन सम्बन्धो विद्यते । शाङ्करभाष्ये हि चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगतवानित्युक्तम् । स एव तु वैष्णवपाञ्चरात्रिकाणां सिद्धान्तः । अनेन प्रसङ्गेन वेदनिन्दा भवतीति यच्छाङ्करभाष्ये दूषणाभिधानं तन्न सङ्गतम् तथा सति छान्दोग्ये नारदसनत्कुमारसम्वादे ऋग्वेदादिसकलशास्त्रपठनेनापि ममात्मज्ञानं नोत्पन्नं त्वमेव मामुपदिशेति कथनेन वेदादीनां निन्दा संजातेति भूमविद्योपदेशोऽपि निन्दितः स्यात । तस्मात् केवलसामान्यपण्डितात् पठनेन दुरवगाहस्य वेदादिशास्त्रस्थस्य तत्त्वस्य ज्ञानं न भवति किन्तु सद्गुरुस्तत्रस्थमेव पदार्थं दर्शयतीति मन्तव्यं । तथैव पञ्चरात्राणां वेदोपबृंहणरूपत्वेन वेदोक्ताः पदार्थाः स्फुटं प्रतीयन्ते इति ज्ञानलाभसौलभ्यार्थं शाण्डिल्यस्योपनिषदस्य तत्र प्रवृत्तौ न कोऽपि दोषः । अत एव महाभारते प्रथमाध्याये ।

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥

बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति इत्युक्तम् ।

अयं हि शाण्डिल्यश्चतुर्षु वेदेष्वित्याद्युक्तत्वेन चतुर्वेदाध्यायी छान्दोग्योपनिषदादिषु इति हस्माह शाण्डिल्यः कौण्डन्यः शाण्डिल्यात् शाण्डिल्यः कौशिकाच्च आग्निवेश्यः शाण्डिल्याच्च वात्स्यः शाण्डिल्यात् शाण्डिल्यः कैशोर्यात् वामकक्षायणः शाण्डिल्यात् शाण्डिल्यः पैङ्गलं शाण्डिल्यो हवा आथर्वणं पप्रच्छेत्याद्युपनिषत्सु प्रसिद्धो विद्वान् पुण्यात्मा तस्यैव भक्तिसूत्राणि सन्ति यत्र स्वप्नेश्वरभाष्यमस्ति शाण्डिल्यस्मृतिरपि तत्कृतोपलभ्यते । तत्र वैकोक्तकथायां तु वेदवादं परित्यज्य परदारान् स गत्वा इत्या

त्वेन महापापी अन्य एव कश्चन शाण्डिल्यः सम्भवति अतः यथा वाममार्गेण केचन शैवाः शिवं पूजयन्ति तथा कोऽपि अवैदिकः शाण्डिल्यस्तत्र विष्णुपूजकः स्यात् । तस्य शाण्डिल्यसंहिताकरणमपि नैव वैष्णवपञ्चरात्रेषु प्रसिद्धमत्र च पाद्मसंहितायामष्टोत्तरशतसंहितानां नामानि पठ्यमानान्युपलभ्यन्ते तेषु न शाण्डिल्यसंहिता परिगणितास्ति । अत्रत्यशाण्डिल्यस्य तु विष्णुना सह सम्वादो नास्ति तत्र तु वर्तते इति महान् भेदः । किञ्च तत्रत्यकथासन्दर्भो महानसङ्गतः । यस्मिन् विष्णुविषये भागवतद्वितीयस्कन्धे ब्रह्मणोऽपि सृष्टिकर्तुरतिखिन्नस्य तप इति शब्दश्रवणमेव जातं ततः सहस्राब्दं घोरतपश्चरणेन भगवान् प्रादुर्भूतः सन्नुक्तवान् ।

त्वयाहं तोषितः सम्यग्वेदगर्भ सिसृक्षया ।
चिरंभृतेन तपसा दुस्तोषः कूटयोगिनाम् ।

इति कथानकं विद्यते तस्य विष्णोः पापात्मनः शाण्डिल्यस्य समीपे स्वयं धावित्वा आगमनमतीव विरुद्धम् । यदि पापात्मनोऽपि तस्य पूजनेनागत इत्युच्येत तदा तु सर्वेषां सदाचारानुष्ठानेन पूजनं किमर्थं स्यात् । ततश्च विष्णुर्दर्शनं दत्त्वापि स्वयं रुष्ट इत्यपि विरुद्धम् । यदि च पूजया तुष्टस्तदा कथं रुष्टः । पुनश्च पाञ्चरात्रेण मामाराध्य ततो वेदमार्गं गमिष्यसीति विष्णुनोक्तमित्यप्यसङ्गतम् । पूर्वोक्तभागवतस्थले ।

वरं वरय भद्रं ते वरेशं माभिवाञ्छितम् ।
ब्रह्मन् श्रेयः परिश्रामः पुंसो मद्दर्शनावधिः ।

इति भगवतोक्तं ततश्च पुंमात्रस्य भगवद्दर्शनानन्तरं किमपि न कर्तव्यं यतः सर्वकरणसमाप्त्यनन्तरमेव दर्शनं भवतीति । तदा शाण्डिल्यस्य भगवद्दर्शनानन्तरमपि पापिष्ठत्वं वर्तेत इत्यतीव चित्रम् । अग्रे च ।

पुनर्विष्णोः प्रसादेन वेदमार्गातिवर्तिनीम् ।

संहितां चक्रे इत्यप्यसङ्गतम् । विष्णोः प्रसादश्चेत्स्यात्तदा वेदमार्गातिवर्तिग्रन्थकर्तृत्वं कथं तस्य स्यात् । ध्रुवचरित्रे पस्पर्श वालं कृपया कपोले इत्यत्र भगवत्प्रसादेनानुपनीतस्यापि ध्रुवस्य स्तुतिकरणयोग्यसर्वशास्त्रस्फूर्तिर्जातेति विरुध्येत । अन्ते मरणानन्तरं स यमादिभिर्दण्डित इत्यपि विष्णुप्रसादविषयीभूतस्य विरुद्धम् ।

पुनश्च यमेन स विष्णुलोकं प्रेषित इत्यप्यसङ्गतम् । किं विष्णुलोकं जीवान् पापिनोऽपि प्रेषयितुं यमस्याधिकारोऽस्ति कथमपि न । तस्य पापित्वं च विष्णुना पुनः पृथिव्यां प्रेषित इत्यग्रे कथने न स्पष्टम् । विष्णुलोकविषये तु गिरं समाधौ गगने समीरितामित्यादौ ब्रह्मरुद्रेन्द्रादीनामपि गमनदौर्लभ्यं स्मर्यते । अग्रे च विष्णुना शाण्डिल्यो वैकुण्ठाद्विष्णुलोकात् पुनर्भूमिं प्रेषित इत्यतीव विरुद्धम् । नहि विष्णुलोकं गतः पुनरावर्तते ।

आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ।

इति गीतायां भगवदुक्तिविरोधादित्यलम् । ईदृशासम्बद्धकथाया अपि यद्यार्षग्रन्थेऽस्तीत्यास्तिकत्वेन परिग्रहस्तदा तप्तमुद्राधारणस्यापि पाद्मादौ सत्त्वात्कुतस्तत्र प्रद्वेषस्तदप्यास्तिकत्वेन परिग्राह्यमेव । अग्रे कौर्मकथायाम् ।

एवं सम्बोधितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ।
कपालं मुद्गलं वामं भैरवं पूर्वपश्चिमम् ।
पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ।

इति वाक्ययोरपि वामपाशुपतयोर्मध्यपाठेन सन्दंशन्यायेन साहचर्यरूपबोधकेन विशये प्रायदर्शनमितिन्यायेनान्य एवावैदिकपाञ्चरात्रग्रन्थो गृह्यते । वैदिकपाञ्चरात्रस्य सृष्टिस्त्वन्यथैव स्मर्यते न त्वीदृशी। तथाहि महाभारते शान्तिपर्वणि नारायणीयोपाख्याने ।

यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप ।
तत्रैष धर्मः कथितः स्वयं नारायणेन ह ।
पितामहाय शुद्धाय युगादौ लोककारिणे ।
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ । इत्यादि ।

यदत्राग्रे अपरार्कग्रन्थप्रदर्शनं तदपि न किञ्चिद्बाधकम् । तत्र हि याज्ञवल्क्यटीकायां शैवपाशुपतैः सहाग्रहेण तन्त्रसामान्यात् । पाञ्चरात्रमप्युपक्षिप्य तद्ग्रन्थोक्तविरोधप्रदर्शनसमये ।

दीक्षितस्य च वेदोक्तं श्राद्धकर्मातिगर्हितम् ।इत्यादिवचनान्ते शैवशाक्तप्रतिपक्षस्येत्यादिना शैवग्रन्था एव प्रदर्शिता नतु वैष्णवपाञ्चरात्रग्रन्थाः कुतः प्रदर्शनं स्यात् सर्वास्वपि वैष्णवपाञ्चरात्रसंहितासु

श्रुति स्मृति पुराणोक्ता धर्मा एव प्रतिपादिताः सन्तीति। यदुक्तमग्रे।

अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन ह।
आचारेण प्रवर्तन्ते ते मां प्राप्स्यन्ति मानवाः।
ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते।
शूद्रादीनां न तच्छ्रोत्रपदवीमुपयास्यति।

इति वाराहपुराणभगवद्वचनमुदाहृत्य अस्य वाक्यस्य कुतश्चिद्दैवयोगादकृतप्रायश्चित्तव्रात्यविषयत्वादविप्लुतब्राह्मणाद्यनाश्रयत्वम्। एवं हि सत्यलाभपदमुपपत्तिमत्स्यात् इत्यादि। तत्रैवं विस्मीयते अहो स्मार्तानां निबन्धकाराणां वैष्णवशास्त्रार्थप्रच्छादनपटीयान् महिमेति। अत्रैवं प्रष्टव्यम्। अलाभे वेदमन्त्राणामिति कथनेन व्रात्यानामेव पाञ्चरात्रेऽधिकारोऽस्तीति कुतस्त्वयायमर्थः सम्पादितः। यदि च।

नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेद्ब्राह्मणः सह।

इति मानवं वचस्त्वमेवाग्रे प्रमाणयसि तदा कः प्रसङ्गो व्रात्यानां वेदमन्त्रलाभस्य यदर्थमुच्यते अलाभे इत्यादि संयोगवद्विप्रयोगस्यापि वाक्यार्थावगतिहेतुत्वस्य पूर्वं मनोरमोदाहरणेनास्माभिरुक्तत्वेन कथं तेषु तत्प्रसङ्गः यदर्थमलाभपदं सार्थकं स्यात्। अप्रसक्तिस्थले प्रसञ्जनेन निषेधे।

धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्।

इति भारतोक्तधौम्यवचनन्यायविरोधश्च भवेत्। किञ्च तथा सति शूद्रादयोऽपि म्लेच्छादयोऽपि पञ्चरात्राधिकारिणस्तत एव वाक्यात्कुतो न कल्प्यन्ते। तेषामपि वेदानधिकारित्वात्। तथैव कुर्म इति चेत् तत्रैव शूद्रादीनां न तच्छ्रोत्रपदवीमुपयास्यतीति वचनविरोधः स्यात्। किञ्च।

ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते।

इति तत्रत्यस्यैव वचनस्य का गतिः। व्रात्यानामेव पञ्चरात्राधिकार इति तव मतं यदि तदा ये व्रात्यास्ते ब्राह्मणत्वक्षत्रियत्ववैश्यत्वधर्मविशिष्टा अपीति त्वं वक्तुं शक्ष्यसि तथासति।

शूद्रेण हि समस्तावद्यावद्वेदे न जायते।

इति मनुवचनविरोधः स्यात्। तस्मात् यत्र क्वचिद्ग्रामे कश्चिद्-

चेको वेदमन्त्राध्यायी नष्टस्तदा तत्पुत्रस्यैव पूजनेऽधिकारः स चो-पनीतो बालस्तदा वेदस्यान्यप्रकरणानि पठन् स्थितः पुरुषसूक्तादय-स्तु पूजोपयोगिग्रन्थास्तेन न पठितास्तस्मिन् काले ।

श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि ।

युक्तश्छन्दांस्यधीयीत विप्रो मासार्धपञ्चमानिति स्मृतिवच-नात् श्रावणादिपौषान्तस्यानध्यायकालत्वेन वेदपठनयोग्यताया अभावेन पूजानिर्वाहार्थमनध्यायकालपरं वराह पुराणवचनम् । अलाभे वेदमन्त्राणामित्यादि इति सङ्गतौ न कश्चन विरोधः सम्भव-तीति विचारयन्तु सुधिय इत्यलम् । अपरार्कग्रन्थप्रदर्शकेन वीर-मित्रोदयग्रन्थः प्रच्छादित एव य एतस्यापरार्कस्य खण्डनं कृतवान् स्मार्तोऽपि सन् । तथाहि वीरमित्रोदयनिबन्धकारस्य परि-भाषाप्रकाशप्रकरणे योगियाज्ञवल्क्यः ।

सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।

अतिप्रमाणान्येतानि हेतुभिर्न विरोधयेत् इति ।

अत्र सांख्यं योगः पाञ्चरात्रमित्युपक्रम्य हेतुभिर्न विरोधये-दित्युक्तेस्तेषामदूष्यत्व मात्रेतात्पर्यं न तु प्रामाण्यमित्यपरार्कोक्तम-नादरणीयम् । अतिप्रमाणानीत्यभिधानात् । तथा महाभारते ।

पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः ।

प्रापणं भगवद्भुक्तं भुञ्जते चाग्रभोजनम् ।

इति पञ्चरात्रस्य प्राशस्त्यमुक्तम् ।

सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।

पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयम् इति ।

बृहत्पराशरोऽपि ।

वैदिकं तु जपं कुर्यात्पौराणं पाञ्चरात्रिकम् ।

यो वेदस्तानि चैतानि यान्येतानि च सा श्रुतिः ।

पञ्चरात्रविधानेन स्थण्डिले वाथ पूजयेत् इति ।

विष्णुधर्मोत्तरेऽपि ।

साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।

कृतान्तपञ्चकं विद्धि ब्रह्मणः परिमार्गणे । वायुसंहितायां तु

शैवागमोऽपि द्विविधः श्रौताश्रौतश्च संस्मृतः । इत्यनेन श्रौ

श्रौतविभागः स्पष्टीकृतः । अत्र शैवागमोऽपि द्विविध इत्यपिना ८०

समानयोगक्षेमवैष्णवपञ्चरात्राद्यागमानामपि श्रौताश्रौतभेदेन द्वैविध्यमुक्तं भवति । उक्तं च पञ्चरात्रादेर्वैदिकत्वं हेमाद्रौ विष्णुधर्मोत्तरे साङ्ख्यं योगः पाञ्चरात्रमित्यादिपूर्वोक्तमेव । एवं च कौर्मे ।

कापालं पञ्चरात्रं च यामलं वाममार्हतम् ।
एवं विधानि चान्यानि मोहनार्थानि तानि तु ।

इति पञ्चरात्रस्य यन्मोहकत्वाभिधानं तदवैदिकपञ्चरात्रपरम्

यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि तु ।
श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी इति । तत्रैव वेदविरुद्धानामेवोपक्रमे श्रवणात् । मीमांसाभट्टपादग्रन्थेऽपि यान्येतानि त्रयीविद्भिर्न परिगृहीतानि इत्यादिग्रन्थदर्शनेनावैदिकागमविषयत्वेनाप्युपपत्तेर्नावश्यमागममात्रस्याप्रामाण्यमापादयितुम् । कथं तर्हि धर्मस्य च चतुर्दशेति संख्यानिर्देश उपपद्यते उपलक्षणमात्रतयेति ब्रूमः । अन्यथा रामायणभारतशिष्टाचारादीनामप्यनुपसङ्ग्रहादप्रामाण्यापत्तेः । यत्तु—

श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः ।
क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत् ।

अथांशुः सात्वतो नाम इत्यादिवचनैः श्रुतिभ्रष्टानामेवागमेष्वधिकार इति कैश्चिदुक्तं तन्न न्यायविदामभिधानम् । तथाहि श्रुतिभ्रष्टादिवाक्येषु न तन्त्रमुद्दिश्य कर्तारो विधीयन्ते राजसूयोद्देशेन राजेव येनान्येषामनधिकारः स्यात् । किन्तु श्रुतिभ्रष्टादीनुद्दिश्य तन्त्रं विधीयते । तथाच—

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।

इति भारतमाख्यानमिति वचनात् स्त्रीशूद्रादीन् प्रति भारतप्रवृत्तावपि अन्येषां भारताधिकारवदागमेष्वप्यविरुद्धेष्वविहतो वैदिकानामधिकार इति । एतावत्पर्यन्तमविकलः सर्वो वीरमित्रोदयग्रन्थ एव वर्तते । अत्र मीमांसाभट्टपादग्रन्थे यान्येतानि त्रयीविद्भिर्न परिगृहीतानीत्युक्तत्वेन वैष्णवपाञ्चरात्राणां त्यागो न विवक्षितः । अग्निमीळे इषेत्वोर्जे अग्न आयाहीत्यादित्रयीविद्भिरस्माभिः परिगृहीतत्वात् ।

एवं नवीनकाशीनिवासरसिकशास्त्रिप्रवरोमापतिद्विवेदिविरचितसनातनधर्मोद्धारनामकमहानिबन्धेऽप्यपरार्कग्रन्थखण्डनपूर्वकमे·

ाद्विषयकः सर्वोऽपि वीरमित्रोदय ग्रन्थ एव स्वीकृतो वर्तते । अत्र
ाारासारं मध्यस्थाः पण्डिता एवा विवेक्तुं प्रभवो भविष्यन्ति ।

सूतसंहितायज्ञवैभवकथयापि नास्माकं वैदिकपाञ्चरात्रिकाणां
ाचन क्षतिः । तत्र हि महादेवपूजनरुद्राक्षधारणाभावः शापफल-
ुच्यते । तत्त्वस्माकं शास्त्रप्रमाणैरिष्टमेव । तथाच श्रीभागवते ।

भवव्रतधरा ये च ये च तान् समनुव्रताः ।
पाखण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः ।
नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः ।
विशन्तु शिवदीक्षायां यत्र दैवं सुरासवम् ।

इति चतुर्थस्कन्धोक्तिः । श्रीवेदव्यासप्रणीतमहापुराणश्रीमद्भा-
ावतसन्निधौ च सूतसंहिताविरोधोऽकिञ्चित्कर एव ।

विष्ण्वादिदेवताः सर्वाः विशिष्टाः शङ्करादिति ।

इति तत्रोक्तवचनार्थस्तु नास्माकमनुष्ठानगोचरः । वयं तु वि-
ाुव्यतिरिक्तं कञ्चिदपि देवं श्रेष्ठं न मन्यामहे ।

शङ्खचक्रगदापद्मदण्डपाशाङ्कुशादिभिः ।

अङ्किताः श्रद्धया यूयमित्याद्यपि नास्मासु सम्भवति दण्डपाशा
ङ्कुशादीन्यन्यदेवताचिह्नानि नास्माकं पञ्चरात्रादिषु विहितानि न
ा तथाविधः कश्चिदाचारः । पितृसुरामत्स्यादिविक्रयकथने तु प्र-
ायक्षेण बाध एव ।

पाञ्चरात्रे च कापाले तथा कालमुखेऽपि च ।

शाक्ते च दीक्षिता यूयमित्यादावपि शाक्तकापालादिभिः सह-
ाठादन्य एव पाञ्चरात्रग्रन्थः शैवो ग्राह्यो नतु वैष्णवः । पराशरो-
ापुराणकथायामपि—

पुण्ड्रान्तरे रता नित्यं भवेयुस्तान्त्रिका द्विजाः ।
आयुधैः शङ्खचक्राद्यैस्त्वदीयैरङ्किता द्विजाः ।
अङ्कितास्तैर्महामोहाद्भवेयुश्चांसयोर्द्वयोः ।
वेदासिद्धेन मार्गेण त्वदीयाराधने द्विजाः ।
त्वदीये पाञ्चरात्रे च तन्त्रे भागवते तथा ।
श्रौतस्मार्तसदाचारे त्वद्भक्ता विमुखाः सदा ।

इत्यादि यदुक्तं तदपि नास्मासु सम्भवति । किन्त्वन्येष्वेव पाञ्च-
रात्रेषु त्वदीये पाञ्चरात्रे इत्यत्रापि कौर्मे दारुवने गौतमशापे शिवप्र-

रणया बौद्धावतारकार्यवत् यः पाञ्चरात्रग्रन्थो विष्णुना कृतः स एव ग्राह्यो न महाभारतोक्तः पूर्वोक्तप्रकारेण स्पष्टः । नह्यस्माकं पञ्चरात्रे वेदासिद्धेन मार्गेण तप्तचक्राङ्कनमुक्तं किन्तु ।

विष्णोर्नुकेति मन्त्रेण तापयित्वा सुदर्शनम् ।
पवित्रन्ते विततमिति मुद्रयेद्दक्षिणे भुजे ।

इत्यादिवेदसिद्धमार्गेणैवोक्तम् । श्रौतस्मार्ताचारे विमुखत्वकथने तु प्रत्यक्षत एव बाधः । दृश्यन्ते ह्यासेतुहिमाचलमूर्ध्वपुण्ड्रधारणपूर्वकं सन्ध्यातर्पणश्राद्धादि कुर्वाणा उपनीता वैष्णवदीक्षायुक्ता ब्राह्मणादयः । अग्रे कौर्मग्रन्थेऽपि ।

वामाः पाशुपताचारास्तथा वै पाञ्चरात्रकाः इत्यत्र पाशुपतसाहचर्येण भिन्नपाञ्चरात्रग्रहणमेव युक्तम् । अग्रे पाराशरपाठेऽपि ।

शङ्खचक्रगदापद्मवज्रपाशाङ्कुशादिभिः ।
अङ्किताश्च भविष्यन्ति मनुष्याः पापकर्मणा ।
पाञ्चरात्रे च कापाले पाखण्डेष्वपरेषु च इति ।

कापालसाहचर्यात् पाञ्चरात्रग्रन्थो भिन्नो वज्रपाशादिभिः सहपाठाच्चक्राद्यङ्कनमपि अवैदिकान्यतन्त्रस्थमेव ग्रहीतव्यं । नह्यस्माकं शास्त्रे अनुष्ठाने वा वज्रपाशाङ्कुशाद्यङ्कनं क्वचिदप्युपलभ्यते । साम्बपुराणोक्ते श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयङ्गतः इत्यादिवचनेऽपि भिन्ना एव केचन ग्राह्याः । दृश्यन्ते ह्यास्माकीना वैष्णवा आसेतुहिमाचलम् इषे त्वोर्जेत्वेत्यादिश्रुतीरधीयानाः । किञ्चास्यार्थस्य परिहारस्तु पूर्वं वीरमित्रोदयग्रन्थे दर्शितोऽयोग्योऽयमर्थ इति । मुक्तिखण्डस्थे ।

अत्यन्तस्खलितानां हि द्विजानां वेदमार्गतः ।
पाञ्चरात्रादयो मार्गाः कालेनैवोपकारकाः ।

इत्यादावपि अन्य एवैतद्वचनविषयीभूताः स्युः । नह्यास्माकीनाः कस्मिन्नप्यंशे वेदमार्गतः स्खलिताः क्वचिदुपलभ्यन्ते । यच्चवैभवखण्डवचनमपि तत्परमेव सङ्गच्छते । सूतसंहिताचरमाध्यायस्थः ।

श्रुतिपथगलितानां मानुषाणां तु तंत्रं हरिरपि मुनिमुख्याः प्राह तन्त्रे स्वकीये । इति श्लोकोऽपि दारुवनप्रसङ्गरचितावैदिकपञ्चरात्रं विषयीकरोति ।

विष्णवागमादितन्त्रेषु दीक्षितानां विधीयते ।

शङ्खचक्रगदापूर्वैरङ्कनं नान्यदेहिनाम् ।
इतिश्लोकस्त्वस्मदनुकूल एव ।
वेदमार्गैकनिष्ठस्तु मोहनाप्यङ्कितो यदि ।
पतत्येव न सन्देहस्तथा पुण्ड्रान्तरादपि ।

इत्यपि वचनमेकग्रहणेन केवलवेदमार्गनिष्ठानां दोषं ब्रूते न त्वस्माकं वयं तु महाभारतोक्तपञ्चरात्रे वेदे चोभयत्र निष्ठता इति ।

तन्त्रेषु दीक्षितो मर्त्यो वैदिकं न स्पृशेत्सदा ।
वैदिकश्चापि तन्त्रेषु दीक्षितं न स्पृशेत्सदा ।

इति वचनमपि केवलवैदिकतान्त्रिकविषयकम् । वयं तु महाभाष्योक्तभूमिप्रासादवासिन्यायेन नैतस्य विषयाः । तथाहि मुखनासिकावचनसूत्रे भाष्ये "ये प्रासादवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन । ये भूमिवासिनो गृह्यन्ते ते भूमिवासिग्रहणेन । ये तूभयवासिनः गृह्यन्ते ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च"त्युक्तम् । ततश्च वैदिकतान्त्रिकाणां केवलवैदिकैर्व्यवहारे नेदं वचनं बाधकं भवति । वासिष्ठलैङ्गवचनमपि नास्मद्विषयकम् । तत्र हि

अश्रौतमूर्ध्वपुण्ड्रादि ललाटे श्रद्धया सह ।
धारयिष्यन्ति मोहेन युगान्ते समुपस्थिते ।

इत्युक्तम् । वयं तु अष्टोत्तरशतपरिगणितवासुदेवोपनिषदुक्तं श्रौतमेव मृदूर्ध्वपुण्ड्रं धारयामः । तत्रहि गोपीचन्दनं नमस्कृत्योद्धृत्य इमं मे गङ्गे इति जलमादाय विष्णोर्नुकमिति मर्दयेत् । अतो देवा अवन्तु न इत्येतैर्मन्त्रैर्विष्णुगायत्र्या केशवादिनामभिर्वा धारयेत् । अथ आत्मानः पुण्ड्रास्त्रय ऊर्ध्वा इत्यादिविस्तरेणोर्ध्वपुण्ड्रविधानं वर्तते । पाराशरोपपुराणमप्येतेनैवोत्तरितम् । ब्रह्मपुराणोक्तम् ।

त्यागो दानं तपो होमः स्वाध्यायः पितृतर्पणम् ।
भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विनाकृतम् ।

इति वचनन्त्वस्मदनुकूलमेव । कौर्मोक्तवचनम् अथांशुः सात्वतो नाम इत्यादिकमपि अन्यदेव शास्त्रं किमपि वदति । तस्य परिहारश्च पूर्वोक्तवीरमित्रोदयग्रन्थे उक्त एव । अस्माभिरङ्गीक्रियमाणं तु सात्वतशास्त्रमन्यदेव । तथाहि । भारते शान्तिपर्वणि नारायणीयोपाख्यानप्रान्ते ।

ततः प्रावर्तत तदा आदौ कृतयुगं युगम् ।

ततो हि सात्वतो धर्मो व्याप्य लोकानवस्थितः॥
तेनैवाद्येन धर्मेण ब्रह्मा लोकविसर्गकृत् ।
पूजयामास देवेशं हरिं नारायणं प्रभुम् ॥
एवमेष महान् धर्म आद्यो राजन् सनातनः ।
दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदा ॥
इत्याद्युक्तम् ।
ब्रह्मपुराणनाम्ना लिखितौ ।
तप्तमुद्रा ह्यन्त्यजाय ब्रह्मणा निर्मिता पुरा ।

इति श्लोकौ तु तत्पुराणे नोपलभ्येते केवलं पक्षपातिभिः कल्पितावेव । कचित्सत्त्वेऽपि अन्त्यजार्थं किमपि शास्त्रं पृथक् ब्रह्मणा न कृतमस्ति यत्रत्येन विधिना तेषां होमादिकं तप्तमुद्राधारणं च भवेदित्यर्थासङ्गतिर्महती । आश्वलायनस्मृतिनाम्ना ।

शिवकेशवयोश्चिह्नं चक्रशूलादिकं द्विजः ।
न धारयेत मतिमान् वैदिके वर्त्मनि स्थितः ॥

इत्यादयश्चत्वारः श्लोका लिखितास्तेऽप्याश्वलायनस्मृतौ नोपलभ्यन्ते तत्राचारभूषणे शिवकेशवयोश्चिह्नांश्चक्रशूलादिकान् द्विज इति । निर्णयसिन्धौ शिवकेशवयोरङ्कान् शूलचक्रादिकान् द्विज इति पाठभेदोऽपि वर्तते सोऽपि कल्पितत्वं सूचयति । कचित्सत्त्वेऽपि शिवकेशवचिह्नयोः सहैव धारणे निषेध उच्यते इति नास्माकं तत्र विषयतास्ति । किञ्च तत्राग्रिमे ।

तेषां भिन्नधियां किञ्चित्सुगत्यर्थं शिवः पुरा ।
कृपया तच्चकारेह पुराणे सूदितं च तत् ॥

इति श्लोके किञ्चित् तन्त्रमित्यर्थ इति व्याख्यातं तथाच शिवकृतं तप्तमुद्राविधायकं तन्त्रं शैवानामेव स्यात् नास्माकं किञ्चिदस्ति ।

वेदमूलया नित्यं प्रवृत्ता अपि सत्तम ।
कचित्कदाचित्स्मर्तारस्तन्त्रार्थं च ब्रुवन्ति वै ॥

इति पराशरपुराणवचनेऽपि योऽशः श्रुत्या विरुध्यते इत्यत्र च पूर्वोक्तत्वदीयव्याख्यानरीत्या शैवतन्त्रार्थविषय एव तत्र ग्राह्यो भवति । अग्रे वैदिकान् प्रति तप्तमुद्रादेर्निषेधकं तद्धारणे प्रायश्च-

त्साननुष्ठाने नरकादिबोधकं च वचनसहस्रं तत्र तत्रोपलभ्यत इत्युक्तं तद्विषये तत्र तत्र महापुराणादिषु श्लोकदशकमपि नोपलभ्यते त्व-त्सदृशैः संगृहीतग्रन्थेष्वेव प्रायस्त्रिंशदवधिकाः श्लोकाः स्युरिति प्रत्यक्षेण बाधितो मिथ्याप्रलापः । बृहन्नारदीयपुराणस्य चतुर्था-ध्यायश्लोकाः सन्तीत्युक्तं परन्तु चतुर्दशाध्याये वर्तन्ते । ते यथा ।

यस्तु सन्तप्तशङ्खादिलिङ्गचिह्नतनुर्नरः ।
स सर्वयातनाभोगी चण्डालो जन्मकोटिषु ॥
तं द्विजं तप्तशङ्खादिलिङ्गाङ्किततनुं नरः ।
सम्भाष्य रौरवं याति यावदिन्द्राश्चतुर्दश ॥
चक्राङ्किततनुर्यत्र तत्र कोऽपि न सम्वसेत् ।
यदि तिष्ठेन्महापापी सहस्रब्रह्महा भवेत् ॥
गङ्गास्नानरतो वापि अश्वमेधरतोऽपि वा ।
चक्राङ्किततनुं दृष्ट्वा पश्येत्सूर्यं जपन्नरः ॥
जपेत पौरुषं सूक्तमन्यथा नरकं व्रजेत् ।
लिङ्गाङ्किततनुं दृष्ट्वा पश्येत्सूर्यं जपन्नरः ॥
जपेच्च शतरुद्रीयमन्यथा रौरवं व्रजेत् ।
ब्राह्मणस्य तनुर्ज्ञेया सर्वदेवसमाश्रिता ॥
सा चेत्सन्तापिता राजन् किंवक्ष्यामि तदेनसः ।
चक्राङ्किततनुर्वापि राजंल्लिङ्गाङ्कितोऽपि वा ॥
नाधिकारी परिज्ञेयः श्रौतस्मार्तेषु कर्मसु ।
भृतकाध्यापकाश्चैव भृतकाध्यायिनस्तथा ॥
आकल्पं यातना भुङ्क्ते तदन्ते म्लेच्छजातयः ।
स्त्रीशूद्राणां समीपे तु वेदाध्ययनकृन्नरः ॥
कल्पकोटिसहस्रेषु प्राप्नोति नरकान् क्रमात् इति ।

माधवकृतशङ्करदिग्विजये तु पञ्चदशसर्गव्याख्याने एतत्पुरा-णनाम्ना अन्यथैव श्लोका रचिताः सन्ति । यथा ।

किन्तु कृच्छ्रादिकं तापः कृच्छ्रचान्द्रायणैः कृशः ।
इत्युक्तेनारदीयेन विरोधाद्गुहता तथा ॥
लिङ्गाङ्किततनुं दृष्ट्वा शङ्खचक्राङ्कितं तथा ।
स्नानमेव तदा कार्यमन्यथा सूर्यमीक्षयेत् ॥

पतितं तप्तलिङ्गाढ्यं चक्राङ्कितमथापि वा।
वाङ्मात्रेणापि नार्चेत पाखण्डाचारतत्परम्।
शूद्रवत्स परित्याज्यो जीवन् शवसमाकृतिः।
तस्मै दत्तं च हव्यं च कव्यं चापि वृथा भवेत्॥
तद्दर्शनात्परित्याज्यमन्नं मन्त्राभिमन्त्रितम्।
अपि शूद्रेक्षणाद्भुञ्जेल्लिङ्गचक्राङ्कितं विना॥
अपिचेन्निगमाचाररतो वेदाङ्गतत्परः।
लिङ्गचक्राङ्कमात्रेण स सद्यः पतितो भवेत्।
इत्युक्तं हि बृहन्नारदीये किञ्च प्रकीर्तितम् इति।
काशीखण्डैकविंशाध्यायस्थस्य।
शङ्खचक्राङ्कितनतुस्तुलसीमञ्जरीधरः।
गोपीचन्दनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः॥

इति श्लोकस्य व्याख्यानेऽपि गोपीचन्दनादिनाङ्कनं नतु दाहेन इत्युक्त्वा एते पुराणश्लोका उदाहृताः। इदं चोदाहरणादिकं पृथ्वीचन्द्रोदयनिर्णयसिन्ध्वाद्युदाहृतेन विष्णवाश्वलायनवाक्यमिति प्रख्यापितेन।

शङ्खचक्रे मृदा यस्तु कुर्यात्तप्तायसेन वा।
स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः॥

इति वचनेन विरुध्यते। प्रकृतवचने मृदा चक्राङ्कनं निषिद्धं काशीखण्डोक्तवचनेनतु मृदैव चक्राङ्कनं स्थाप्यत इति। अपिचैतानि बृहन्नारदीयवचनानि आनन्दगिरिदिग्विजयग्रन्थरचनकाले ईदृशानि न स्थितानीति ज्ञायते यतस्तत्पुराणनाम्ना यानि वचनानि तत्रोक्तानि तानि भिन्नान्येव सन्ति। यदि च पुराणवचनानामर्थोपनिबन्धनेन भिन्नाः कारिकास्तत्र रचिता इत्युच्येत तदपि न सम्भवति चक्राङ्कितदर्शनेनान्नं न भक्षणीयमित्यादिभिन्नार्थदर्शनात्। यथा वा भवतु एतेष्वपि वचनेषु शङ्खादीनां शिवलिङ्गस्य चाङ्कने दोष उच्यते सोऽपि नास्मद्विषयः नहि वयं चक्रादिभिः सह लिङ्गाङ्कनं कुर्मो नवास्माकं पञ्चरात्रादिपुराणादिषु तथाविधिरस्ति। सामान्यतश्चक्राङ्कनविषये दोषस्वीकारेऽपि वक्ष्यमाणभारतप्रशंसितपञ्चरात्रमहापुराणादिवचनोपबृंहितपूर्वोदादतश्रुतिभिः पुराणैश्च सह वि-

रुद्धत्वे दुर्बलोपपुराणवचनानि विरोधाधिकरणन्यायेन न प्रतिवादिमनोरथसाधकानि भविष्यन्ति । एतेन श्राद्धप्रकरणे वर्ज्यब्राह्मणपरिगणने ईदृशवचनबलेनैव चक्राङ्कितानामग्राह्यत्वं वदन् निर्णयसिन्धुकारोऽप्याग्रही प्रत्युक्तो वेदितव्यः । नहि मनुयाज्ञवल्क्यादिस्मृतिकारैः पुराणकारैर्हेमाद्र्यादिमिताक्षरापरार्कादिनिबन्धकारैर्वा क्वचिदपि एते तत्र परिगणिताः । तथा हि विरोधाधिकरणन्यायः । तत्र हि शावरभाष्ये अथ यत्र श्रुतिविरोधस्तत्र कथम् । यथा औदुम्वरी सर्वावेष्टयितव्या इति महता वाससा सर्वौदुम्वरीवेष्टनम् औदुम्वरीं स्पृष्ट्वोद्गायेदिति श्रुत्या विरुद्धम् । अष्टाचत्वारिंशद्वर्षाणि ब्रह्मचर्यचरणस्मृतिवचनं जातपुत्रः कृष्णकेशोऽग्नीनादधीतेति श्रुत्या विरुद्धम् । क्रीतराजको यजमानो भोज्यान्न इति स्मृतिवचनं तस्मादग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यमित्यनेन विरुद्धमिति संशये ।

विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ।

इति सूत्रमुक्त्वा ।

हेतुदर्शनाच्च ।

इति द्वितीयं सूत्रमुक्तं तत्र प्रत्यक्षश्रुत्या विरोधे स्मृतिवचनमनपेक्ष्यमनादरणीयमसतिप्रत्यक्षश्रुतिविरोधे तु स्मृतिवचनानुरोधेन श्रुतिरेतदर्थिका स्यादित्यनुमानं कार्यमिति प्रथमसूत्रार्थस्तेनोदाहृतस्मृतिवचनानि श्रुतिविरुद्धत्वेन नोपादेयानीति सिद्धान्तितम् । हेतुदर्शनाच्चेति द्वितीयसूत्रे श्रुतिविरुद्धस्मृतिकरणे स्मृतिकाराणां लोभादिकमेव हेतुः स्यात्ततस्तानि नोपादेयानीत्युक्तम् । तथा च भाष्यं लोभाद्वास आदित्समाना औदुम्वरीं कृत्स्नां वेष्टितवन्तः केचित् तत्स्मृतेर्बीजम् । बुभुक्षमाणाः केचित् क्रीतराजकस्य भोजनमाचरितवन्तः । अपुंस्त्वं प्रच्छादयन्तश्चाष्टाचत्वारिंशद्वर्षाणि वेदे ब्रह्मचर्यं चारितवन्तः तत एषा स्मृतिरित्यवगम्यते इति । एवं प्रकृतेऽपि वक्ष्यमाणैरुक्तैश्च प्रमाणैस्तप्तचक्राद्यङ्कनस्य प्रमाणसिद्धत्वेऽपि तप्ताङ्कने किञ्चिद्देहदाहभीरुणा बृहन्नारदीयस्मृतिकारेण तथा दोषदर्शकवचनान्युपनिबद्धानीति तान्यपि विचारकपण्डितगोष्ठ्यामनादरणीयानि भवन्ति । अन्यत्र कुत्र चिद्देवीभागवतादिषूपलभ्यान्यपि तथाविधानि वचनानि तथा भवन्ती-

त्यनवद्यं सर्वम् । सर्वश्रुतिस्मृतिप्रतिपादितब्रह्महत्यादिमहापातकेभ्योऽप्यधिकापूर्वपातकप्रतिपादकानि ।

स सर्वयानाभोगी चण्डालः कोटिजन्मसु ।
सम्भाष्य रौरवं याति यावदिन्द्राश्चतुर्दश ।

तत्र कोऽपि न सम्वसेत् । यदि तिष्ठन्महापापी सहस्रब्रह्महा भवेत् ।

गङ्गास्नानरतो वापि अश्वमेधरतोऽपि वा ।

चक्राङ्कितदर्शनेन पाप्येव भवतीति वचनानि कथं पण्डितगोष्ठ्यां माननीयानि स्युः ।

गङ्गास्नानेनाश्वमेधेन च चक्राङ्कितदर्शनस्पर्शनकर्तृपापं न नश्यतीति कथनं च । अपि घ्नन्तो विप्रानविरतमुशन्तो गुरुसतीः पिबन्तो मैरेयं पुनरपि हरन्तश्च कनकम् इत्यादिपापनिवारकगङ्गास्नानफलप्रतिपादकपौराणिकार्थनिवेदकगङ्गालहरीकारवचनविरुद्धम् ।

यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः ।
तथाघमर्षणं सूक्तं सर्वपापापनोदनम् ॥

इतित्येकादशीयमनुस्मृतिवचनविरुद्धं च । चक्राङ्कितस्थितग्रामनिवासेन सहस्रब्रह्महन्तृत्वकथनं चक्राङ्कितस्पर्शने सूर्यदर्शनपुरुषसूक्तजपाभ्यां पापनिवृत्तिकथनं च तत्रैव ग्रन्थे परस्परं विरुद्धम् । चक्राङ्कितसम्भाषणेन चतुर्दशेन्द्रराज्यकालं रौरववासकथनं चक्राङ्कितस्पर्शनेसूर्यदर्शनपुरुषसूक्तजपाभ्यां पापनिवृत्तिकथनं चातीव विरुद्धम् ।

ब्राह्मणस्य तनुर्ज्ञेया सर्वदेवसमाश्रिता ।

सा चेत्सन्तापिता राजन् किं वक्ष्यामि तदेनसः इति युक्तिमात्रप्रदर्शकवचनं च क्षारादग्निर्गरीयान् क्रियासु व्याख्यातस्तद्ग्धानां रोगाणामपुनर्भवात् । जाम्ब्रवौष्ठेतरलौहानि मांसगतानां तत्राग्निकर्म सर्वर्तुषु कुर्यादन्यत्र शरद्ग्रीष्माभ्यामित्यादिव्यवह्रियमाणब्राह्मणादिदेहदाहविधायकभगवद्धन्वन्तरिशुश्रुतमहर्षिसूत्रस्थानवचनविरुद्धम् । तदौषधार्थं क्रियत इति न दोष इति चेदेतदपि धर्मार्थं क्रियत इति सन्तोष्टव्यमायुष्मता । किञ्चैतेषु वचनेषु विश्वासं कृत्वा वैष्णवद्वेषकरणे आसेतुहिमाचलं लक्षावधिषु चक्राङ्कितेषु स-

स्तु काश्यादिक्षेत्रेषु वसतां महतां विद्वज्जनानां यत्र कुत्रापि चक्राङ्कितैः सम्भाषणस्यावश्यभावित्वेन तेषामपि चतुर्दशेन्द्रराज्यपर्यन्तं रौरवे एव वासो भवेदिति गङ्गास्नानेनापि पापं न गच्छतीत्यत्रैव कथनेन काशीवासादिकं व्यर्थमेव भवेदिति महाननर्थः स्यात्। तस्माद्दाच्छाद्यैवैतानि वचनानि स्थापनीयानि। अथवा बृहन्नारदीयानामेतेषां श्लोकानामन्ते।

भृतकाध्यापकाश्चैव भृताकाध्यायिनस्तथा।
आकल्पं यातनाभुञ्जन्ते म्लेच्छजातयः॥
स्त्रीशूद्राणां समीपे तु वेदाध्ययनकृन्नरः।
कल्पकोटिसहस्रेषु प्राप्नोति नरकान् क्रमात्॥

इति वचनद्वयसत्त्वेऽपि यथा भृतकाध्यापका न दूष्यन्ते किन्तु शिष्टत्वेनैव परिगण्यन्ते तथा चक्राङ्किता अपि न दूष्या भविष्यन्ति। एतेषां दूष्यत्वे तेऽपि दूष्या भविष्यन्तीति तुल्यन्यायसंचारः कार्य इति प्रकृतमनुसरामः। अग्रे हेमाद्रिप्रायश्चित्तकाण्डोक्तानि वचनानि तु कुत्रापि पुराणेष्वन्वेषणे नोपलभ्यन्ते लाभे वा तेषां पूर्वोक्ता गतयः कर्तुं शक्यन्ते इति न कापि हानिः। विष्णवाश्वलायनस्मृतिप्रभृतिषु तानि वचनानि नोपलभ्यन्ते यानि निर्णयसिन्धुकारेणोक्तानि। अत एव सोऽपि अत्र शिष्टार एव सङ्कटपाशनिःसरणसृणिरित्युक्तवान्। अग्रे च नृसिंहपरिचर्याविष्णुभक्तिचन्द्रोदययोर्ग्रन्थौ गृहीत्वा यत्किञ्चिदुक्तं तस्य सर्वस्यापि परिहारस्तु अत्रत्यपूर्वोक्तग्रन्थेन बहुधा सञ्जात एवेति किं पिष्टपेषणेन। अग्रे श्रुतेर्निषेधपरत्वेनोच्छृङ्खलभवनं तु तेष्वेव शोभते नास्मासु इति पूर्णस्तन्त्राधिकारिनिर्णयकारप्रतिवादः। अथोपपुराणबृहन्नारदीयनिषेधप्रतिद्वन्द्वीभूतानि महापुराणवचनान्युच्यन्ते यैर्विरोधाधिकरणन्यायेन तेषामनादरः स्यात्। तत्र तावत् स्कन्दपुराणवैष्णवखण्डान्तर्गतेऽवान्तरखण्डे पञ्चमे मार्गशीर्षमाहात्म्ये तृतीयाध्याये।

नारायणायुधैर्नित्यं चिन्हितो यस्य विग्रहः।
पापकोटिप्रयुक्तस्य तस्य किं कुरुते यमः॥
कृष्णायुधाङ्कितो यस्तु श्मशाने म्रियते यदि।

प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य नारद ॥
सौवर्णं राजतं ताम्रं कांस्यमायसमेव च ।
चक्रं कृत्वा तु मेधावी धारयीत विचक्षणः ॥
दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।
सव्ये तु शङ्खं बिभृयादिति वेदविदो विदुः ॥
तप्तचक्राङ्कितं कृत्वा ह्यात्मानमथ दीक्षितम् ।
पद्माक्षतुलसीमाला फलं किं ब्रूहि केशव ।
पाद्मे पातालखण्डे एकोनाशीतितमे
शङ्खचक्राङ्कितो विप्रः श्मशाने म्रियते यदि ।

प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य निश्चिता । ८२ अध्याये ।
अङ्कनं शङ्खचक्राद्यैः सच्छिद्रः पुण्ड्र उच्यते ।
दासशब्दयुतं नाम मन्त्रो युगलसंज्ञकः । पाद्मोत्तरखण्डे २५१ अध्याये ।

मच्चक्राङ्कितदेहत्वं मदीयाराधनं तथा ।
मयि संन्यस्तकर्मत्वं मदनन्यशरण्यता ॥
तस्मिन्नग्नौ क्षिपेच्चक्रं शङ्खं च द्विजसत्तमः ।
प्रतप्तं चक्रमादाय मन्त्रेणैवाङ्कयेद्गुरुः ॥
शङ्खेनैवाङ्कनं कुर्याद्बाह्वोर्दक्षिणसव्ययोः ।
आद्यं तु वैष्णवं प्रोक्तं शङ्खचक्राङ्कनं हरेः ॥
धारणं चोर्ध्वपुण्ड्राणां तन्मन्त्राणां परिग्रहः ।
दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ॥
वामे तु शङ्खं बिभृयादिति वेदविदो विदुः ।
ये कण्ठलग्नतुलसीनलिनाक्षमाला
ये वा ललाटपटले लसदूर्ध्वपुण्ड्राः ।
ये बाहुमूलपरिचिह्नितशङ्खचक्रा
स्ते वैष्णवा भुवनमाशु पवित्रयन्ति ॥
पवित्रं ब्राह्मणस्यत्यं जगद्व्याप्तं हरेः सदा ।
तेनातप्ता तनूर्येषां न ते यान्ति परं पदम् ॥

तेन तप्ता तनूर्येषां ते यान्ति परमं पदम् । निर्णयसिन्ध्वादौ स्थितः पाद्मोत्तरखण्डश्लोकः ।

अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा ।
ब्राह्मणस्य तथैवेदं तप्तचक्रादिधारणम् इति ।

अन्यान्यपि बहूनि वचनानि तत्रोपलभ्यन्ते । यत्तु अत्राष्टादशपुराणदर्पणकर्ता ज्वालाप्रसादशर्मा एते सर्वे सांप्रदायिकश्लोकास्तथा

मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ।

मयैव कथितं देवि कलौ ब्राह्मणरूपिणा । इत्यादयोऽपि श्लोकाः विक्रमार्कद्वादशशताब्दीमध्ये रामानुजमाध्वमतानुयायिभिः प्रक्षिप्ता इत्यादियुक्तवान् ॥ तद्वैष्णवशास्त्रप्रच्छादनपटीयसोऽपिप्रत्यक्षशास्त्रापाकरणाभीरोरपि तस्य वचनमुपलभ्यमानान्यथायुक्तिकलापेन बाधितं भवति । तथाहि ये मायावादेत्यादि श्लोकास्तेन तदा प्रक्षिप्तत्वेनोक्तास्ते श्लोकाः विज्ञानभिक्षुरचिते सांख्यप्रवचनभाष्येऽपि वर्तन्ते सांख्यप्रवचनभाष्यकर्ता तु विक्रमादित्यराजवर्तमानसमकालिकः विज्ञानभिक्षुरचितयाज्ञवल्कयमिताक्षराया अन्ते ।

नासीदस्ति भविष्यति क्षितितले कल्याणकल्पं पुरं
नो दृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः ।
विज्ञानेश्वरपण्डितो न भजते किञ्चान्यदन्योपम
आकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत्त्रयम् ।

इति श्लोकदर्शनात् । एवं च यद्येकोनविंशशताब्दीकालतः पूर्वं महापुराणग्रन्थे दृश्यमाना अपि एते श्लोकाः स्थितास्तदा कथमेषां द्वादशशताब्दीमध्ये प्रक्षेपः सम्भवतीति मिथ्याप्रलापकतैव स इति विवेचनीयं सुधीभिः । किञ्च प्रत्युत्तरं दातुमसमर्थानामेवार्यसामाजिकेभ्यः शिक्षितोऽयं प्रक्षिप्तकथनवादः । किञ्च त्वदनभिमतवचनानि महापुराणेषु वर्तमानान्यपि प्रक्षिप्तानीति त्वयोक्ते मदनभिमतवचनान्यपि प्रक्षिप्तानीति मयापि वक्तुं शक्यत्वेन न त्वं निवारयितुं शक्त इति सर्वमपि प्रमाणजातमुच्छिन्नं भवेदिति कोऽपि किमपि वक्तुं न शक्नुयादिति महाननर्थः स्यात् । यच्चात्र निर्णयसिन्धुकारेण तप्तचक्राङ्कनविषये श्रुतिपुराणस्थविधायकवचनानि तन्निषेधविषये आकरग्रन्थेष्वनुपलभ्यमानानि स्मृतिवचनानि चोपन्यस्य पृथ्वीचन्द्रोदयादयस्तु इत्याश्वलायनादिनिषेधवचनादृग्वेदादिश्रुतीनामन्यार्थत्वादन्यश्रुतीनां चास्वाश्चक्रादिधारणं शूद्र-

विषयमित्यूचुः यद्यपि निषेधस्य प्राप्तिसापेक्षत्वाद्विधिं विना च तद्योगादुपजीव्यविरोधेन "न तौ पशौ करोती"तिवद्विकल्पो युक्तस्तथापि एकजातेरयं धर्म इत्यनेन सामान्यवाक्यानामुपसंहारात् द्विजातिनिषेधो नित्यानुवाद इति तदाशयः अत्र शिष्टाचार एव संकटपाशनिःसरणसृणिरिति सङ्क्षेप इति व्यवस्थापितं तदप्यमीमांसितरमणीयम् । तथाहि चक्रादिधारणं शूद्रविषयमित्यत्रानुमानप्रयोगे पूर्वोक्तशङ्खचक्राङ्किततनुरिति काशीखण्डोक्तवचने गोपीचन्दनादिना विप्राणामपि शङ्खचक्रादिधारणस्य टीकाकाराभिमतत्वेन यस्य कस्यापि हेतोर्व्यभिचरितत्वेन सामान्यतश्चक्रधारणपक्षीकरणं नापेक्षितसाध्यसाधकमिति वैयर्थ्यं दुरुद्धरम् । वक्ष्यमाणविकल्पस्य सम्भावितत्वेन इति वचनादिति हेतुर्व्यभिचार्येव । श्रुतीनामन्यार्थत्वेऽपि तदर्थकत्वस्य पूर्वं साधितत्वेन ऋग्वेदादिश्रुतीनामन्यार्थत्वादिति हेतुः सत्प्रतिपक्षितः । दक्षिणे तु भुजे विप्र इत्यादिश्रुतिसत्त्वेनान्यश्रुतीनामसत्त्वादिति हेतुरपिस्वरूपासिद्धिग्रस्तः । विप्रविषयकानेकविशेषवचनानां दर्शितत्वेन सामान्यवाक्यानामुपसंहारादित्यपि स्वरूपासिद्धः । तस्मान्न निर्णयसिन्धुकारनिर्णयो निर्णयत्वार्ह इति । अनयैव दिशा सर्वोऽपि तप्तमुद्राविषयकशास्त्रार्थः परिशीलनीयो बुद्धिमद्भिरिति श्रीनिवासः शिक्षकः स्यात् ।

लक्ष्मणाचार्यविदुषा वृन्दावननिवासिना ।
तप्तचक्राङ्कशास्त्रार्थो यथामति समापितः ।

इति श्रीमद्दाशरथिवंश्यकोइल्कंदाडेअप्पन् श्रीनिवासवरदाचार्यस्वामिशिष्येण वृन्दावनलक्ष्मणाचार्येण लिखितः

तप्तशङ्खचक्र धारणविचारः समाप्तः ।

महाभारते च आप्ततमप्रमानवधर्मशास्त्रस्यापि तन्मूलत्वोक्ते-रत्यादरेण व्यासादिभिः परिग्रहविशेषात् ईश्वरदयामूलत्वेनच कारणदोषप्रसङ्गाभावात् ।

वेदान्तेषु यथा सारं संगृह्य भगवान् हरिः ।

भक्तानुकम्पया विद्वान सञ्चिक्षेप यथा सुखम् इति ।

च तत्रैव व्यक्तेः । वेदप्रामाण्याङ्गीकारतदर्थवाक्यभूयस्त्वतद्वे-षहेतुत्ववचनसाधुपरित्राणार्थत्वसत्त्वोत्तरनारदादिश्रोतृकत्वा-दिनिबन्धनस्पष्टप्रामाण्यत्वात । नच विप्रलम्भार्थं तथा नि-बन्धः अन्यत्रापि प्रसङ्गात् । अधीता भगवन्वेदा इत्यादेर्दुर्ग्रह-त्वमात्रतात्पर्येण वेदनिन्दादिरूपत्वाभावात् । निन्दारूपत्वेऽप्यु-दितहोमनिन्दावत् निन्दितादितरत् प्रशंसितुं प्रवृत्तेः । "शङ्कुर्ण-र्णो नाम जीवो जायत" इत्यादेस्त्वव्रतारादिगोचरत्वस्य तत्रैव सिद्धेः। शारीरके च "उत्पत्त्यसम्भवात नच कर्तुः करणम्"इति सूत्रद्वयेन पूर्वपक्षं कृत्वा "विज्ञानादिभावे वा तदप्रतिषेधः वि-प्रतिषेधाच्च"इति तत्प्रामाण्यप्रतिषेधः परिहृतः। तथा निर्मूलत्वा-सत्परिग्रहसत्परिग्रहाभाववैदिकसंस्कारवर्जनावैदिकसंस्कारवि-धानविद्यास्थानपरिगणनाभावक्षुद्रविद्याबाहुल्यादिमन्दशङ्कानां भगवद्यामुनमुनिभिः परिहारः प्रपञ्चित इति नेह प्रतन्यते एवं साक्षादीश्वरदयामूलत्वान्मन्वादिनिबन्धनेभ्योऽस्यातिरेकः। तेषां हि श्रुतिविरोधे सति वाध्यत्वमपि सम्भवेत् गुणत्रयवश्यतया कादाचित्कभ्रमादिसम्भवात् । स्मृत्यादीनां तु श्रुतिमूलतयैव प्रामाण्यमिति भाष्येऽप्युक्तम् । तदुपर्यपि इत्यधिकरणे । "संकी-र्णब्राह्मणमन्त्रार्थवादमूलेषु धर्मशास्त्रेतिहासपुराणेष्वि"ति तत एव चैषां विप्रकीर्णशाखामूलत्वं सिद्धान्त इत्यपि सूचितम्। क्वचि-त्कदाचित्केषांचित् शाखाविशेषाणामुच्छेदः ते च पुनर्व्यासादिभिः

क्वचित् कदाचित्प्रवर्त्यन्त इत्येतावता एषामुच्छिन्नशाखामूलत्वमस्तु। उक्तं च भगवतापस्तम्बेन तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्त इति। मन्त्रादिवचनप्रामाण्यं न्यायमन्तरेणापि श्रुत्यैव सिद्धं "यद्वै किञ्चनमनुरवदत्तद्भेषज"मित्यादिभिः। एवं शिष्टाचारस्यापि "यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि"इत्यादिभिः। स्मृतिश्च "स्मृतिशीले च तद्विदाम् आचारश्चैव साधूना"मित्यादि। श्रुत्यैव धर्मनिर्णये संभवति किं धर्मशास्त्रेणेत्याशङ्क्याह मरीचिः।

दुर्बोधा वैदिकाः शब्दाः प्रकीर्णत्वाच्च येऽखिलाः।
तज्ज्ञैस्त एव स्पष्टार्थाः स्मृतितन्त्रे प्रतिष्ठिताः इति।
सत्यपि धर्मशास्त्रे गृह्यापेक्षां दर्शयति देवलः।
मन्वादयः प्रयोक्तारो धर्मशास्त्रस्य कीर्तिताः।
तत्प्रयुक्तप्रयोक्तारो गृह्यकाराः स्वमन्त्रनः इति।

अतो धर्मशास्त्रगृह्यादि सापेक्षत्वं वेदार्थनिर्णयस्य विरोधे च यथायोगं बलाबलव्यवस्था सिद्धा। भगवद्धर्मशास्त्रस्य तु पञ्चरात्रस्य श्रुत्यादिविरोधे षोडशिग्रहणादेरिव देशकालाधिकार्यवस्थाविशेषविषयतया विकल्प एव। श्रुतेरिवास्यापि दोषसम्भावनाविरहादिसिद्धेः। आहुश्चैवमभियुक्ताः। वेदे कर्त्राद्यभावादित्यारभ्य।

तस्मात्सांख्यं सयोगं सपशुपतिमतं कुत्रचित् पञ्चरात्रं सर्वत्रैव प्रमाणं तदिदमवगतं पञ्चमादेव वेदादिति।

अन्यत्र च। उपनिषदि तु बह्वथां व्यावघोष्याम दोष—

प्रतिभटगुणराशिर्घुष्यते तार्क्ष्यकेतुः।

श्रुतिरपि तदुपज्ञैः पञ्चरात्रैर्विकल्पं—

न लभत इति सूक्तं भाष्यकृद्यामुनार्यैः इति ।
तदेतद्यामुनाचार्यैरागमप्रामण्ये सम्भावितसमस्तपूर्वपक्षयुक्तिनिराकरणेन प्रपञ्चितं तदनुसारेणैव च भाष्यकारैः श्रीपञ्चरात्राधिकरणे व्याख्यातम् ।

श्रुतिमूलमिदं तन्त्रं प्रमाणं कल्पसूत्रवदित्यादिवचनं तु प्रत्यन्तमूलतया एकायनश्रुतिमूलतया च योज्यम् । नचात्र वेदत्वे संदेग्धव्यम् ।

यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
महतो वेदवृक्षस्य मूलभूतो महानयम् ।
स्कन्धभूता ऋगाद्यास्ते शाखाभूतास्तथा मुने ।

इत्यादिवचनात् । तथा ऋग्वेदपाठे पठितं व्रतमेतत्सुदुश्चरमिति सम्वादप्रदर्शनाद । वेदशाखाव्यासदशायां निरुक्तशाखाया अगणितत्वात् । भगवच्छास्त्रसारभूतसात्वतपौष्करादिषु रहस्याम्नायविधाने । एकायनीयशाखोक्तैर्मन्त्रैः परमपावनैरित्यादिभिस्तच्छ्रुतित्वप्रतिपादनात् । अत्र भगवद्यामुनमुनिभिरेवोक्तो ग्रन्थो लिख्यते । यदप्युक्तं गर्भाधानादिदाहान्तसंस्कारान्तरसेवनात् भागवतानामब्राह्मण्यमिति तत्राप्यज्ञानमेवापराध्यति न पुनरायुष्मतो दोषः । यत एते वंशपरम्परया वाजसनेयशाखामधीयानाः कात्यायनादिगृह्योक्तमार्गेण गर्भाधानादिसंस्कारान्कुर्वते । ये पुनः सावित्र्यनुवचनप्रभृतित्रयीधर्मत्यागेनैकायनश्रुतिविहितानेव चत्वारिंशत्संस्कारान कुर्वते तेऽपि स्वशाखागृह्योक्तान् धर्मान यावदनुतिष्ठमानाः न शाखान्तरीयकर्माननुष्ठानात् ब्राह्मण्यात् प्रच्यवन्ते । अन्येषामपि परस्पर शाखाविहितकर्माननुष्ठाननिमित्ताब्राह्मण्यप्रसङ्गात् । सर्वत्र हि जातिचरणगोत्राधिकारादिव्यवस्थिता एव समयाचारा उपलभ्यन्ते । यद्यपि

सर्वशाखाप्रत्ययमेकं कर्म तथापि न परस्परविलक्षणाधिकारिसम्बद्धा धर्माः क्वचित्समुच्चीयन्ते । विलक्षणास्त्रयीविहितस्वर्गपुत्रादिविषयोपभोगसाधनैन्द्राग्नेयादिकर्माधिकारिभ्यो द्विजेभ्यस्त्र्यन्तैकायनश्रुतिविहितविज्ञानाभिगमनोपादानेज्याप्रभृतिभगवत्प्राप्त्येकोपायकर्माधिकारिणो मुमुक्षवो ब्राह्मणा इति नोभयेषामप्यन्योऽन्यशाखाविहितकर्माननुष्ठानमब्राह्मण्यमापादयति । यथा चैकायनशाखाया अपौरुषेयत्वं तथा काश्मीरागमप्रामाण्य एव प्रपञ्चितमिति नेह प्रस्तूयते । प्रकृतानां तु भागवतानां सावित्र्यनुवचनादित्रयीसम्बन्धस्य स्फुटतरमुपलब्धेर्न तत्त्यागनिमित्तव्रात्यत्वादिसन्देहं सहत इति । चतुर्विधं चेदं पञ्चरात्रम् । आगमसिद्धान्तो दिव्यसिद्धान्तस्तन्त्रसिद्धान्तस्तन्त्रान्तरसिद्धान्तश्चेति चतुर्विधं चेदं वेदमूलभूतांशस्योपबृंहणम् । तदभिप्रायेणैव ह्युक्तं महाभारते ।

महतो वेदवृक्षस्य मूलभूतो महानयम् इत्यादि ।

चतुर्णाञ्चैषां लक्षणादिकं श्रीपौष्करादिषु भगवतैव दर्शितम् । यच्च तेषु चतुर्षु साधारण्यासाधारण्याच्चोपसंहार्यानुपसंहार्यादिकं वक्तव्यम् तत्सर्वं श्रीपञ्चरात्ररक्षासिद्धान्तव्यवस्थायां सर्वपरामर्शेन साधितमस्माभिरिति तत्रैव तद्विस्तरः सात्त्वतधर्मगोप्तुरनन्यैरनुसन्धेय इति नात्र प्रब्रूमः । एवं स्थिते केचिद्बाहीकप्राया आगमबाह्याः श्रीमद्वैखानसप्रामाण्ये विशेरते । तत्र तावत् कल्पसूत्रं नाप्रमाणम् । इतरवदेव कल्पसूत्रत्वात् । तत्कर्तुश्च कल्पसूत्रकारत्वप्रसिद्धेः वेदाविरुद्धत्वाद्वैदिकमन्त्रैरेव सकलकर्मविधानात् सूत्रान्तराणामपि कुण्डसंनिवेशलक्षणादिषु क्वचित् क्वचित् तदुपजीवनात् वर्णाश्रमधर्माणामनुकूलं नारायणपरत्वप्रतिपादनादेरपि सत्त्वमूलत्वे-

न प्रामाण्यैकहेतुत्वात् ।

हरिमेव स्मरेन्नित्यं कर्मपूर्वापरेष्वपि ।
ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु ।

इत्यादिना शौनकादिभिरपि तथैव विधानात् । वंशपरंपरया च वैखानसैरधीयमानतया विप्लवस्याप्यनवकाशत्वात् । अस्तु किमपि तत् इदं तदिति किं नियामकमिति चेत् इतरानुपलम्भस्तदुपलम्भश्च । अन्यथा सर्वत्र श्रुतिस्मृत्यादीनां तथा तथा संशयप्रसङ्गात् । अस्त्विदमेव तत् प्रमाणं च तथापि भार्गवादिचतुष्कस्य कथं प्रामाण्यमिति चेन्न उक्तोत्तरत्वात् । महर्षिप्रणीतत्ववेदाविरुद्धत्वादेः समत्वात् । पञ्चरात्रविरोधोऽस्तीति चेन्न तत्त्वे तदभावात् । कर्तव्यक्रियादिभेदस्यापि प्रतिनियताधिकारिविषयत्वेनैवोपपत्तेः । कल्पसूत्रप्रक्रियाभेदवत् आगमदिव्यतन्त्रतन्त्रान्तररूपपञ्चरात्रावान्तरचतुष्कक्रियादिविभागवच्च । आश्वमेधिके श्रीवैष्णवधर्मशास्त्रे द्वितयमपि समप्रमाणतयोपात्तं द्वयोरपि परस्परप्रामाण्यं "विष्णोस्तन्त्रं द्विधा प्रोक्त"मित्यादिषु व्यञ्जितम् परस्पराक्षेपवचनानि तु इक्षुभक्षकुतिचिकार्षुभिरसहिष्णुभिरुपक्षिप्तानि वा स्वशास्त्रप्रशंसार्थवादरूपाणि वेति न ततो विरोधः । ननु भार्गवादिसंहिता न कल्पसूत्राणि तथानभ्युपगमात् । अप्रसिद्धेरयुक्तेश्च । न स्मृत्यन्तराणि मन्वादिष्वपाठात् तद्वत् प्रसिद्ध्याद्यभावाच्च । नच स्वतन्त्रतन्त्रान्तराणि सांख्ययोगादिसहपाठादर्शनात् वैखानसानुवर्तनाच्च । तत्कतमां विधामवलम्ब्यामीषां प्रामाण्यमुच्यते । मन्वत्रिभार्गवादिवत् नारदीयादिवच्च धर्मशास्त्रतयैव तेषामपि प्रामाण्यम् । अष्टादशादिपरिगणनस्य उपलक्षणतायाः प्रामाणिकैरभ्युपगमात् । स्मृत्यन्तरेषु देवोत्सवादिप्रपञ्चनं नास्तीति चेत् माभूत् प्रपञ्चनं स्वरूपं तावदनुज्ञातं त-

ष्प्रपञ्चनपराणाम् । तथापि जीवानामन्ततोऽन्योऽन्यवैषम्यमात्रस्य च सार्वत्रिकत्वात् निकृष्टाधिकाराणि तानीति चेत् न तेष्वन्येषु च ब्राह्मण्यैकप्रधानत्ववचनात् तथोपलब्धेश्च । कथं तेषां ब्राह्मण्यमिति चेत् शान्तं पापम् । अत्रसौ पिदधीमहि तथापि च वक्तव्यम् । दृश्यन्ते ह्येते वंशपरम्परया वेदमधीयाना वैखानससूत्रोक्तवैदिकसकलसंस्कारशालिनो वर्णाश्रमधर्मकर्मठा भगवदेकान्ता ब्राह्मणाः । नूनममीषां ब्राह्मण्यैककारणेन भागवतत्वेनैव विपरीतं बम्भ्रमीति ब्राह्मणगर्दभः । अन्यथा वैखानसकल्पस्यापि निरधिकारिकत्वेनाप्रामाण्यप्रसङ्गः । अस्तु च तत्प्रामाण्यं सन्तु च देशान्तरे कालान्तरे वा तदधिकारिणः अमी तु न त इति चेत् देशान्तरादावप्येवं वक्तुं शक्यत्वात् विपरीतं वा कस्मान्न स्यात् । एवं च सति सूत्रान्तरादिष्वपि कः समाश्वासः वैखानसानां निकृष्टजातित्ववचनवादाभ्यां संदेहविषयत्वमिति चेत् आप्तग्रन्थस्थतादृशवचनाभावात् । भावेऽप्येतेषां निकृष्टजातित्वे प्रमाणाभावात् । आगमप्रामाण्योक्तसात्त्वतादिसमाख्यानिर्वाहसमर्त्वात् । नह्यनेकार्थः शब्दो नास्ति नच शब्दैक्यादर्थैक्यं शब्दभेदेनार्थभेदो वा । अन्यथा विलीनं तृतीयाश्रमेणापि विवादस्य तु भवादृशजिह्वास्पन्दमात्राधीनस्य सूत्रगोत्रान्तरादावपि सुशकत्वात् । इतः पूर्वं तावन्नास्तीति चेत् न अस्यापि विवादस्यानादित्वायोगात् ततः पूर्वमभावात् । तथा च भवतो भविष्यतो वा विवादस्य विवादत्वाविशेषात् ततः परं तेषामनाश्वासप्रसङ्गात् । अस्माकं तावत्तेषु संशयो नास्तीति चेत् अस्माकं वा किमस्त्यमीषु । क तर्हि निकृष्टजात्यन्तरं किमस्मासु तन्न्यासीकृतं येन अस्माभिः प्रदर्शनीयम् । नचास्माभिरनन्ता देशा द्रष्टुं शक्याः सम्भवति चोच्छेदः । इदानीं क्षत्रि-

यवैश्यमाहिष्यादिवचेषां केषां किञ्चिन्नामसाम्यमात्रादत्रानुप्रवेशः सम्भवतीति चेत् न अस्या अपि शङ्कायाः सर्वत्र सुलभत्वात् अस्ति च वर्णित्वभिक्षुत्वादीनां साम्यमन्यत्रापि । यश्चैवमति-शङ्कामाद्रियते स तु स्वमातापितृचरितानवधारणेन स्वब्राह्मणत्व मपि यथार्हमतिशङ्केतेति जितं लोकायतेन।

उक्तं च भगवता।

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति।
नायं लोकोऽस्ति न परो न सुखं संशयात्मन इति।

तत्सिद्धं विशिष्टाधिकारिकं वेदाविरुद्धं वैखानसादिस्मरणं प्रमाणमिति। यच्च धर्मशास्त्रादिष्वष्टादशादिष्वपरिसंख्यानं न तदधिकसंख्याव्यवच्छेदपरम्। अन्येषामपि शिष्टपरिग्रहादेर-विशिष्टत्वात्। अनुक्तांशदर्शनादिनोपजीव्यत्वाच्चेति। एवं सपरिकरा वेदाः प्रमाणमिति सिद्धम्।

छन्दः पादौ शब्दशास्त्रं च वक्त्रं
कल्पः पाणी ज्योतिषं चक्षुषी च।
शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं
वेदस्याङ्गान्याहुरेतानि षट् च॥

एवं सपरिकरवेदार्थतत्त्वनिर्णयविषया। "अथातो धर्मजिज्ञासा" इत्यारभ्य अनावृत्तिः शब्दादनावृत्तिः शब्दादित्येवमन्ता विंशतिलक्षणी मीमांसा। तत्र च संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरिति भाष्योपात्तो वृत्तिग्रन्थः। तत्त्वरत्नाकरे त्वेवमुक्तम्।

कर्मदेवता ब्रह्मगोचरा सा त्रिधोद्भवौ सूत्रकारतः।
जैमिनेर्मुनेः काशकृत्स्नतो वादरायणादित्यतः क्रमात् इति॥

अनयोर्देवताकाण्डस्य जैमिनीयत्वकाशकृत्स्नीयत्वोक्ती-

तादर्थ्यादिविवक्षया समनार्थे गमयितव्ये । तत्र कर्मकाण्डार्थमेवं संजगृहुः ।

धर्मधीमानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः ।
सातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः इति ॥

वेदार्थे न्यायचिन्त्ये प्रथममवसितं कर्म तद्देवता चाथातः शारीरकांशे निरवधिकफल ब्रह्मचिन्ता त्वमुत्र । तत्राध्याये परस्मिन् स्वयमुपनिषदामन्वयो ऽस्याविरोधो मोक्षोपायोऽथ मुक्तिर्विषयविषयिणौ सिद्धसाध्यौ द्विकार्थौ ।

तत्राद्येऽत्यन्तगूढाविशदविशद तच्छायजीवादिवाचः पश्चात्स्मृत्यादिकैः रक्षितरहितहतिः कार्यताप्रेन्द्रियादेः ।

दोषादोषौ तृतीये ऽप्यवरपरगतौ भक्तिरङ्गानि चाथोपासानुष्ठानभावोत्क्रमसरणिफलान्यन्तिमे चिन्तितानि ।

विचारात् पूर्वमेवात्र प्राप्तमध्ययनं विधेः ।
अतो ऽनधीतवेदस्य विचारः शास्त्रबाधितः ।
क्रमो विंशतिलक्षिण्या न वैधः किन्तु यौक्तिकः ।
अतो व्युत्क्रम चिन्तायामनौचित्यं प्रशिष्यते ॥

एवं विंशतिलक्षणीश्रवणमननाभ्यां सुप्रतिष्ठितसमस्तशास्त्रार्थस्य मोक्षसाधनतया विधेयं निदिध्यासनं न वाक्यार्थज्ञानमात्रं तस्य रागप्राप्तश्रवणादिसिद्धत्वात् । अत एव च तस्मिन् विशेषे वेदनादिसामान्यशब्दपर्यवसानम् । नच निदिध्यासनादिकं निषिद्धं वरणीयत्वमेव विहितमिति वाच्यम् । स्वतन्त्रान्यकर्तृकवरणकर्मीभावस्यापुरुषतन्त्रत्वेनाविधेयत्वात् । अतस्तद्धेतुना प्रीतिरूपत्वेनोपासनमेव विशिष्यते तथा सति भक्त्या त्वनन्यया इतिस्मृत्यविरोधश्च । तदेव च निदिध्यासनं प्रीतिरूपं प्रकर्षविशेषात् समाधिः । स चाष्टाङ्गः शास्त्रेषु शिष्यते । तावति

च पातञ्जलप्रामाण्यमपि । आगमशीलनं च आफलान्मात्रयानुवर्तनीयम् । स्मरन्ति च ।

स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमाविशेत् ।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशत इति ।

यत्पुनः श्रूयते ।

ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषत इति ।

तत्कोशत्यागाभिप्रायं न च सादरपटुसंस्कारप्रचयसंसिद्धमेधासम्पदः पुरुषस्य कोशेन किञ्चित् साध्यम् । मेधावीति च विशिष्यते धीर्धारणावती मेधेति च नैघण्टुकाः । अधीमहे च "मेधा मनीषे मा विशतां समीची भूतस्य भव्यस्यावरुद्ध्या" इति । यद्वा मुक्तप्रायात्यन्तनिष्पन्नयोगपुरुषविषयमेतत् । नहि तस्य शास्त्रेण ज्ञातव्यं तदानीमस्ति साक्षात्कृतसमस्ततत्त्वार्थत्वात् । यत्तु स्मर्यते ।

शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम् ।
उपदेशाद्धरिं बुद्ध्वा विरमेत् सर्वकर्मस्विति ।

इदं तु तीव्रसंवेगिनामलसास्तिकानां च ग्राह्यं बुद्धिचलनहेतूनामसच्छास्त्राणां त्यागार्थं वा तदा विशेषणसाफल्यं धर्मविद्यास्थानेष्वपि हि बहिर्दलेष्वतिसंरम्भो मुमुक्षोरपोद्यते ।

न शब्दशास्त्राभिरतस्य मोक्षो
न चैव रम्यावसथप्रियस्य ।
न भोजनाच्छादनतत्परस्य
न लोकचित्तग्रहणे रतस्य इति ।

तदेवत् शाब्दं प्रमेयतत्त्वमधिजिगमिषतां प्रमाणेषु सारं तदभावे पुंसः पशुभिः समत्वप्रसङ्गादिति ।

यस्याज्ञा निगमैकहर्म्यवलभी वास्तव्यपारावती

यद्भूलास्यवशंवदा त्रिधिशिवस्वस्थानसुस्थासिका ।
यः सर्वेश्च यथापुरं वितनुते नामानि विश्वाकृति-
र्नित्यं नः प्रतिभातु सर्ववचसां निष्ठा स नारायणः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ शब्दाध्याये द्वितीयमाह्निकम् । ३ । २ । समाप्तश्चाध्यायस्तृतीयः । ३ ।

## स्मृत्यध्यायः ।

### प्रथममाह्निकम् ।

अथ स्मृतिर्निरूप्यते । संस्कारमात्रजं ज्ञानं स्मृतिरिति तल्लक्षणम् । ननु स्मृतिर्न प्रमाणम् अविद्यमानविषयत्वात् अननुभूतित्वात् भ्रमसम्भवाच्चेति चेन्न । स्मृतिमात्राप्रामाण्यस्य प्रथमाह्निके प्रतिक्षिप्तत्वात् । अबाधितबाह्यार्थदर्शनात् । अतीतानागतविषयानुमानादिबाधप्रसङ्गात् । सर्वलोकाविरोधात् अननुभूतेऽर्थान्तरेऽपि स्मृतिप्रसङ्गात् । स्मृतेरपि स्वप्रकाशत्वेऽपि वेद्याकारे संस्कारादिसापेक्षत्वात् । अथ पूर्वानुभवपुरस्कारेणैव ग्रहणादप्रामाण्यमिति चेन्न स्मृतिप्रमोषे तदभावात् । प्रमाणतया संमतायां प्रत्यभिज्ञायां भावाच्च परतन्त्रत्वादप्रामाण्यमिति चेन्न स्वहेतुपारतन्त्र्यमात्रस्य सार्वत्रिकत्वात् । अनुभवमूलत्वस्य प्रमाणमूलत्वस्य च सविकल्पकादिभिरनैकान्तिकत्वात् । संस्कारमात्रजन्यत्वस्यासाधारणत्वात् । स्वविषयप्रकाशव्यवहारयोस्तु स्मृतेरपि स्वतन्त्रत्वात् । इच्छादिवद्विषयनियमेऽपि पारतन्त्र्यमस्तीति चेन्न तद्वदेवाज्ञानत्वप्रसङ्गात् । ज्ञानमेवहि स्वतो विषयप्रवणमिच्छसि । अत एव हि नित्ययोरपि ईश्वरचिकीर्षाप्रयत्नयोर्विषयनियमाय ज्ञानापेक्षां ब्रूषे इच्छादीनामपि स्वतो विषयप्रावण्यं ज्ञानत्वं चास्माभिः स्वी-

कृतम्। ननु संस्कारवदिति चेन्न तस्यापि स्वहेतुसमानविषयज्ञानोत्पादनशक्तस्वभावत्वात्। अतो हेतुनियतविषयत्वमेव फलितम्। तच्चानुभवेऽपि समम्। तथा च समानविषयानुभवजन्यत्वतदभावाभ्यां स्मृत्यनुभवयोः पारतन्त्र्यस्वातन्त्र्यव्यवहारो मन्दानाम्। स्वप्रामाण्यनिर्णयादावपि नानुभवापेक्षत्वनिर्बन्धः। स्वविषयप्रकाशनबाधाविरहादिभिस्तत्सिद्धेः। गृहीतमात्रग्राहित्वस्यासाधारणत्वात्। प्राभाकराणामनुमानादौ नैयायिकादीनां धारावाहिकादौ योगसिद्धसर्वज्ञवादिनां द्वितीययोगप्रत्यक्षादौ केषांचिदीश्वरवादिनामनित्येश्वरज्ञाने च व्यभिचाराच्च। निष्प्रयोजनत्वादप्रामाण्यमिति चेन्न तृणादिविषयप्रत्यक्षादिनानैकान्त्यात्। असिद्धेश्च स्मृत्यैव हि जगतां कृताकृतप्रत्यवेक्षणादिसिद्धिः। स्मृत्यैव हि काव्यानि कवयः कवयन्ति। स्मृत्यैव हि शब्दानुमानयोः प्रवृत्तिः। परभक्त्यादिनिष्पत्तिश्च। पूर्वानुभवस्यैव तानि प्रयोजनानि इति चेत्। सर्वजगदादिकारणस्य ब्रह्मसङ्कल्पस्यैव किं न स्युः। एवं चानुभवस्यापि न तत्सिद्धिः तत्कारणस्येति वक्तुं शक्यत्वात्। यदुक्तं प्रज्ञापरित्राणे।

ज्ञातात्मज्ञानरूपत्वात् स्वप्रमेयप्रहाणतः।
विषयाव्यभिचारित्वेऽप्यप्रामाण्यं स्मृतेर्मतमित्यादि।

तदप्येतेन परिहृतम्। प्रमाणव्यवहाराभावादप्रामाण्यमिति चेन्न पामरव्यवहाराभावस्यानैकान्तिकत्वात्। एवं परीक्षकव्यवहाराभावस्यापि विगीतत्वाच्च। सर्वपरीक्षकव्यवहाराभावस्य चासिद्धेः मानमनोहरादौ वादिवागीश्वरादिभिस्तत्प्रामाण्यस्योक्तत्वात्। कतिपयपरीक्षकव्यवहाराभावस्य चातिप्रसञ्जकत्वात्। अक्षपादादिव्यवहाराव्यवहारयोर्बृहस्पत्यादिव्यवहारादिवदस्माभिर्नातीवादरणात्। इन्द्रपाणिन्यादीनां तु सर्वसंप्रतिपत्तेरबा-

धाच्चादरात् । पाराशर्यादीनां प्रमाणगणनानधिकृतत्वेन तद्नुक्तेरप्रयोजकत्वात् । आगमः प्रमाणमित्यपि व्यवहाराभवात् ।

प्रत्यक्षमनुमानं च शास्त्रं च त्रिविधागमम् । इत्यादिषु च प्रत्यक्षादिमूलस्मृतेः प्रत्यक्षादिसमानचर्चत्वेन पृथग्व्यवहाराभावोपपत्तेः । प्रमाणहेतुका स्मृतिः प्रमाणमेवाविसंवादात् इति । उक्तं च न्यायतत्त्वे स्मृत्युदासीनभेदके चतुर्थेऽधिकरणे । अप्रमाणमूलत्वं तूभयोरपि नास्ति व्यभिचाराभावेनानधिगतार्थं प्रमाणमिति विशेषणस्यायुक्तत्वात् । प्रमितं प्रमिसनुपपत्तिः क दृष्टा स्मृतौ चेत् प्रतिज्ञैव दृष्टान्तः स्यात् ज्ञानान्तरे चेन्नतु जानामि इत्यादि । तत्त्वरत्नाकरे च ।

यथार्थनिश्चयो मानं तद्धेतुश्चेति सूरयः ।

नातिव्यप्तिः स्मृतौ व्याप्तिर्यथार्थेन हि सा प्रमा इत्युक्तास्योत्तरार्धविवरणेऽप्युक्तम् । अनुभूतविषयासम्प्रमोषः स्मृतिः यथा स घट इति । ननु तामपि व्याप्नोति लक्षणं सत्यं तद्व्याप्तौ नातिव्याप्तिः । तस्या अपि लक्ष्यपक्षे निक्षेपात् ।

लक्ष्यालक्ष्ये अनालक्ष्य क्षिप्यते लक्षणं कथम् ।

लोके धीव्यवहाराभ्यां लक्ष्यालक्ष्यावधिं विदुरित्यादि ।

यत्त्वनुभवः प्रमाणं स्मृत्यतिरिक्तं ज्ञानमनुभव इत्यादिना स्मृतेरप्रामाण्यमुक्तं श्रीविष्णुचित्तैस्तन्नूनं परमतान्वारोहेण । अत एव हि तैः स्वतः प्रामाण्यनिर्णयदशायामन्यथा व्यवहृतम् । तथा हि । तस्मात्सिद्धमेतत् प्रमाणानां यथार्थत्वलक्षणं प्रामाण्यं गुणादिज्ञानानपेक्षकत्वात् स्वप्रमाणादेवावसीयत स्वकीयात् कारणादेव ज्ञायत इति चेति तथा अर्थतथात्वं गुणसंवादज्ञानानपेक्षज्ञप्ति तदभावे च ज्ञायमानत्वादित्यादौ । न च हेतोरसिद्धत्वम् । तथाहि । रजतज्ञानस्यार्थतथात्वं नाम रजतविषयत्वं तच्चासति बा-

धके रजतग्राहिणैव ज्ञानेनावगम्यते इत्यादि । अतो यथावस्थितवस्तुनिश्चयात्मकत्वमेव प्रामाण्यं प्रमाणज्ञानानामात्मीयात् कारणादेव ज्ञायते न गुणसम्वादज्ञानमपेक्षत इति । तथा प्रमाणानां यथावस्थितवस्तुनिश्चयात्मकत्वमेव प्रामाण्यम् । तदाभासयुक्तयः पूर्वपक्षिणोच्यन्ते । सिद्धान्तेऽपि विवेकप्रदर्शनमेवेति । यदि चानुभव एव प्रमाणं निश्चितं तच्च युक्तमुपयुक्तं वा । न च सर्वमनुभवं प्रमाणतया व्यवहरन्ति । पीतशङ्खभ्रमादिष्वदर्शनात् । नापि सर्वां स्मृतिमप्रमाणतया प्रमाणमूलस्मृतिषु तदभावात् । अगृहीतग्रहणशक्तं प्रमाणमिति वरदविष्णुमिश्रोक्तिरपि परमतान्वारोहेण नेतव्या । यत्त्वागमप्रामाण्ये प्रोक्तम् ।

प्रमाणान्तरदृष्टार्थविषयव्यापि शेमुषी ।

प्रमाणमेव तत्पूर्वं न चेत् स्वार्थं विगाहत इति ।

इदमप्यनुवादवाक्यस्यान्यपरतया स्वार्थप्रामाण्यव्यवच्छेदार्थम् । अन्यथा स्मृतिप्रमोषे प्रमुषिततदंशे पूर्वानुभवपुरस्कारेण स्वार्थावगाहनासिद्धेः कथं तत्र स्मृतित्वनिबन्धनमप्रामाण्यं भविष्यति । यत्तु भाष्ये सन्मात्रग्राहिप्रत्यक्षनिराकरणदशायामुक्तम् अश्वे हस्तिनि च संवेदनयोरेकविषयत्वेन उपरितनस्य गृहीतग्राहित्वाद्विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यादिति न तत्र स्मृतेरप्रामाण्यं सूचितं प्रकारान्तरेणापि वैलक्षण्यसिद्धेः । तदपेक्षया च प्रसङ्गोपपत्तेः । यच्चापरम्भाष्यं इन्द्रियजन्मनः प्रत्यक्षस्य ह्येष स्वभावनियमः यत्स्वसमकालवर्तिनः पदार्थस्य ग्राहकत्वं न तु सर्वेषां ज्ञानानां प्रमाणानां च स्मरणानुमानागमयोगिप्रत्यक्षादिषु कालान्तरवर्तिनोऽपि ग्रहणदर्शनादित्यादि । तत्रापि परस्यानिष्टप्रसङ्गाय तदभिप्रायानुभावनेन विभज्योदाहरणं युक्तम् । यच्च शास्त्रयोन्यधिकरणे भाषितं भाव-

नाप्रकर्षपर्यन्तजन्मनस्तस्य विशदावभासत्वेऽपि पूर्वानुभूतविषयस्मृतिमात्रत्वान्न प्रामाण्यमिति कुतः प्रत्यक्षतेति । इदमपि न साक्षात्सिद्धान्तस्थम् । नच याथार्थ्यं तत्र प्रतिक्षिप्तम् । एवमन्यदपि भाव्यम् । स्मृत्यप्रामाण्यवादिनोऽपि वैशेषिकास्तां याथार्थ्याद्विद्याकोटौ पठन्ति । तत एव च तदेकदेशिभिरपि तत्प्रामाण्यं स्वीकृतमिति ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य न्यायपरिशुद्धौ स्मृत्यध्याये प्रथममाह्निकम् ४।१

एवं तावद्विवेचितं प्रमाणम् । चार्वाकास्तु प्रत्यक्षमेकं प्रमाणमित्याहुः । तेष्वेव केचिदनुमानस्य प्रत्यक्षेऽन्तर्भावमिच्छन्ति। केचित्त्वप्रामाण्यम् । प्रत्यक्षमनुमानं च काणादाः सौगताश्च । तत्र पूर्वे शब्दस्यानुमानेऽन्तर्भावमाहुः । परे तु केचिदन्तर्भावं केचिदप्रामाण्यम् । ते चागमं च सांख्याः भूषणमतानुवर्तिनश्च तत्र वेदस्यानादित्वं पूर्वे परिजगृहुः । उत्तरे त्वीश्वरसृष्टतां तानि च स्मृतिं च वैशेषिकैकदेशिनो ऽस्मत्सिद्धान्तैकदेशिनश्च स्मृतिरहितानि सोपमानानि तान्यक्षपादसूत्रस्वारस्यानुसारिणः। तान्येव सार्थापत्तिकानि प्राभाकराः । अनुपलब्धिषष्ठानि तान्येव तौताततिताः । तत्प्रलोभनरुचयो मायावादिनश्च । तान्येव सम्भवैतिह्ययुक्तानि पुराणशरणाः । अद्यतनप्रमाणपरिग्रहोपलम्भप्रक्रियेयम् । अनन्ते पूर्वापरकाले कः किमङ्गीकुर्यात् किं वा बहिष्कुर्यादिति को जानात्यन्यत्र कृत्स्नसाक्षात्कारिणस्तदेकस्माद्देवात् इह च न्यूनवादिनस्तदवसरे निरस्ताः । अधिकतया पराभिमतानां तु अन्तर्भावो वक्तव्यः । तत्र यथा प्रत्यभिज्ञादीनां प्रत्यक्षादिष्वेव निवेश इष्यते एवमन्येषामपि

प्रत्यभिज्ञा तावत् ग्रहणात्मिकैवेत्येके तथाहि प्रत्यभिज्ञायामपि स्मृतिरनुभव इत्यंशभेदोऽस्तीति चेदित्याशङ्क्य प्रत्युक्तं श्रीविष्णुचित्तैः यदिविषयभेदस्तदा अंशभेदःसंभवेत् नह्येकस्मिन्नर्थे ज्ञानांशद्वयं संभवेत्। ऐक्यमेवहि निरंशं प्रभिज्ञाप्रत्यक्षविषयः। कथं संस्कारोऽपरोक्षधीजनक इति चेन्न। चक्षुरादीन्द्रियसहकृतस्य संस्कारस्य ज्ञातुरैक्यात्। तदिदमित्यपरोक्षधीहेतुत्वोपपत्तेः। अपरोक्षार्थैक्यसाधिका।

साप्रत्यभिज्ञा सोऽयं वै पुमानित्येव मादिका।
संस्कारमात्रजन्यत्वाभ्र स्मृतिर्मानमेव तत् इति।

दीपे च अनुस्मृतेश्च इति सूत्रे भाषितम्। प्रत्यभिज्ञानाच्च न घटादेः क्षणिकत्वं तदेवेदमिति प्रत्यभिज्ञायते प्रत्यभिज्ञा हि नामातीतवर्तमानकालवर्त्यैकवस्तुविषयमेकं प्रत्यक्षज्ञानम् तस्य कालद्वयसम्बन्धविशिष्टमेकमेव वस्तु विषयः। नच तदित्यंशःस्मरणमिदमंशश्च ग्रहणम् अतीतसम्बन्धिनीन्द्रियसंप्रयोगाभावात् इति वाच्यम्। तदिदमिति सामानाधिकरण्येन ग्रहणस्यैकत्वस्फुरणात्। पूर्वानुभवजनितसंस्कारसचिवेन्द्रियसंप्रयोगयुक्तस्य पुरुषस्य तथा ग्रहणमुपद्यत एव। अन्वयव्यतिरेकाधीनं हि सर्वत्र सामग्रीपरिकल्पनमिति। अन्ये त्वत्र धीभेदबाध्यपरिहारौ मत्वा तदिदमंशयोस्तदंशे संस्कारान्वयव्यतिरेकानुविधानदर्शनात् परोक्षरूपतया इदमंशे च उभयात्मकत्वमाहुः। तन्मते संस्काराधीनप्रकाशा स्मृतिरिति लक्षणम्। अपरोक्षज्ञानं प्रत्यक्षम् उभयलक्षणयोगात् प्रत्यभिज्ञायामुभयात्मकत्वमिति। अभ्युपगन्तव्यं चास्मत्सिद्धान्तिभिः सर्वैः प्रत्यक्षेतरज्ञानानां परोक्षापरोक्षरूपत्वं स्वयंप्रकाशत्वात् सर्वज्ञानानां वेद्येतरांशापेक्षया च प्रत्यक्षत्वात्। उक्तं चेदं श्रीविष्णुचित्तै-

ऽपि स्वप्रकाशकं विषयप्रकाशकं चैकमेव ज्ञानम्। तत्र स्मृतिरनुभूतिरिति कुतो भेद इति परिचोद्य प्रकाशमानभेदादिति ब्रूमः। यथा गौरयमित्येकस्मिन्नेव ज्ञाने प्रकारप्रकारिविषयभेदेन ज्ञानांशभेदः। यथा च घटपटावित्येकस्मिन्नेव ज्ञाने ऽशभेदः। यथा वा पराभ्युपगतभ्रमज्ञाने स्वाधिष्ठानांशे प्रामाण्यमितरत्राप्रामाण्यं चेति परिहारात्। तथा स्मृतेः स्वप्रकाशांशोऽपि संस्कारमात्रज एवेन्द्रियादिप्रतिनियतकारणान्तराभावादिति परिचोद्य नैवं ज्ञानानां प्रकाशमानत्वस्य स्वाभाविकत्वादिति परिहाराच्च। तस्मात्सर्वत्र विषयापेक्षयैवापरोक्षत्वानुमितित्वस्मृतित्वादिविभागः। जातिसंकरासंकारादि तु दर्शनादर्शनाभ्यां व्यवस्थाप्यमौपाधिकसंस्कारादिवच्च। तदेवमुभयात्मकत्वोपपत्तेः प्रत्यभिज्ञाप्युभयात्मिकेति।

प्रत्यभिज्ञाप्यभिज्ञावत् त्रिधा चाक्षादिभेदतः।
तत्तत्संस्कारसम्भेदमूलत्वान्नवधा भवेत्॥
प्रत्यक्षतोक्तिर्दीपादौ प्रदर्शनपरेष्यताम्।
नहि लिङ्गादिभिः सोऽयमिति ज्ञानं न जायते॥
शब्दजं प्रत्याभिज्ञानमुपजीव्य प्रवर्तते।
शाखान्तराधिकरणन्यायश्च क्रतुविद्ययोः॥
दीपादिष्विव सर्वत्र बाधकादेरसम्भवात्।
बौगीतं प्रत्यभिज्ञानं प्रमाणं सविकल्पवत्॥
करणाकरणादीनां कालभेदाद्युपाधितः।
अविरोधान्न जीवादौ शक्यते भेदकल्पनम्॥
अन्यथा देशभेदेन करणाकरणादिभिः।
एकं जगति नैव स्यादिति स्यात् सर्वशून्यता॥
तस्माद्विरुद्धसंस्पृष्टविषयप्रत्यभिज्ञया।

स्थिरत्वमात्मनां सिद्धं बाह्यानामपि वास्तवम् ॥

प्रतिसन्धानमप्यात्मगोचरं प्रत्यभिज्ञाविशेष एव । योऽहमद्राक्षं स एव स्पृशामीत्येवमादिरूपत्वात् । प्रतिसन्धिरर्थद्वयविषयैकबुद्धिरित्येके । तत्रापि पृथगनुभूतानेकार्थगोचरैककर्तृकैकबुद्धिरिति पूरणीयमिति । संवादो नाम ज्ञानजात्यन्तरमिति केचित् । तदयुक्तं संख्यान्तरासम्भवात् । यत्तु वरदविष्णुमिश्रैरुक्तं गृहीतार्थविषयं शब्दकारणकं ज्ञानं संवाद इति । तदपि शाब्दावान्तरभेदे संज्ञाविशेषनिवेशमात्रपरम् । नहि गृहीतार्थविषयत्वे शब्दशक्तिप्रसूतत्वमपैति । गृहीतमात्रगोचरप्रमाणान्तरेऽपि तदन्यत्वप्रसंगात् । भवति हि पर्वतोऽयमग्निमानिति शब्दश्रवणानन्तरं धूमं परामृशतोऽपि तादृशी बुद्धिः । तथा द्वितीययोगिप्रत्यक्षादावपि द्रष्टव्यम् । अनपेक्षितत्वादिकमपि श्रुतविषयानुमानादौ समम् । नचापेक्षायत्तं प्रामाण्यं भेदो ऽभेदो वा तृणादिप्रत्यक्षस्यापि तथा प्रसंगादित्युक्तम् । किमर्थं तर्हि वेदानां वेदान्तानां चाप्राप्तविषयत्वं समर्थ्यत इति चेत् अतथाप्राप्तौ साक्षात्प्रामाण्यप्रसंगात् । तथाप्राप्तावप्युपेक्षिततया प्रेक्षावद्भिर्निरर्थकप्रयासभीरुभिस्त्याज्यत्वापातेन फलतोऽप्रामाण्यप्रसंगादिति पश्य । उपमानमपि यदि गृह्यमाणपदार्थगतसादृश्यविज्ञानात् स्मर्यमाणपदार्थगतसादृश्यविज्ञानं तदा स्मृतिः । तत्तद्वस्तुसंस्थानविशेषाद्यतिरिक्तस्य सादृश्यस्याभावात् । तस्य च पूर्वदृष्टत्वात् स्मर्यमाणत्वाच्च । व्यवहारोऽप्यस्त्वपूर्वस्तत्तद्व्यवहारवत् प्रतिसम्बन्धिविशेषपरामर्शोपाधिकः । यद्वा यो यत् सदृशः स तद्गतसादृश्यप्रतियोगी यथा मिथः स्वहस्ताविति व्याप्तिसिद्धौ गौरेतत्सदृशः एतद्गतसादृश्यप्रतियोगित्वादित्यनुमानात् स्मर्यमाणगतसादृश्यसिद्धिः । अन्यथा गृ-

श्रूयमाणगतवैसादृश्यज्ञानात् स्मर्यमाणगतवैसादृश्यप्रतीतिरपि मानान्तरं स्यात्। सा चेदर्थापत्तिः सादृश्यधीरपि तथा किन्न स्यादिति। अथवा युगपदेव तत्सदृशोऽयमिति प्रत्ययेनैवोभयवर्तिसादृश्यस्मरणान्न तद्धेतुकम्। अन्यथा पृथगनुभूतयोस्तदानीमप्रतीतसादृश्ययोः परस्ताद्युगपत् स्मर्यमाणयोर्युगपदेव प्रतीयमानसादृश्ययोः को निर्वाहः। अत्रापि वा प्रमाणान्तरं कल्प्यते। यथा गौस्तथा गवयः गोवद्द्विशफो न भवत्यश्वः दीर्घग्रीवः प्रलम्बोष्ठो विकटाकृतिः पशुः क्रमेलक इति तु साधर्म्यवैधर्म्यधर्ममात्रविषयम्। त्रिविधमप्यतिदेशवाक्यमागम एव। यत्तु श्रुतातिदेशवाक्यस्य गवयादौ अतिदेशवाक्यार्थप्रत्यभिज्ञानमुपमानं तच्च व्युत्पत्तिफलमिति। तदप्यनुपपन्नं प्रागेव व्युत्पत्तिसिद्धेः। यत्तु

सादृश्यस्य निमित्तत्वात् निमित्तस्याप्रतीतः।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वा इति ॥

तत्र निमित्तस्याप्रतीतित इति त्वसिद्धं गवयत्वादेरेव जातिविशेषस्य गोसादृश्याकारोपलक्षितस्य प्रथममेव वाक्यार्थतया प्रतीतेः गोसादृश्योपलक्षितः कश्चित्त्वर्थविशेषो गवय इति हि प्रतीतिः। पश्चात् प्रत्यक्षितगवयस्य तद्वैशद्यमात्रमेव। उक्तं च श्रीविष्णुचित्तैः। गोसदृशो गवय इति गोसादृश्यैकाधिकरणं सामान्यं वाच्यमिति व्युत्पन्नं प्रथमं वाक्यार्थतया प्रतीतेः गोशादृश्योपलक्षितस्यानिर्णये पश्चादप्यनिर्णयः। अन्यथा निर्णये तथा पश्चादपि ततो वाक्यश्रवणवेलायामेव निर्णीतमिति। एवं चानभ्युपगमे कथमिन्द्रादिशब्दव्युत्पत्तिः। नह्यत्र निमित्तभूतसंस्थानविशेषादिदृष्टिः। नच नित्यं तत्राव्युत्पत्तिः तदर्थविशिष्टवाक्यार्थाबोधापातात्। एवं नित्यातीन्द्रियविषयसंस्काररामादिशब्दानामपि नित्यमव्युत्पत्तिरेव स्यात्। तत्र चेत् कथंचि-

त् तन्निर्वाहः तथात्रापि तत्सिद्धेर्नोपमानमतिरिक्तमिति। अर्थापत्तिस्त्वनुमानमेव तथा ह्यनुपपद्यमानदर्शनादुपपादककल्पनं न व्याप्यव्यापकज्ञानम्। अव्याप्यस्य तेन विनानुपपद्यमानत्वाभावात्। अव्यापकस्य च तदुपपादकत्वायोगादिति प्रमाणद्वयविरोधे सति विषयव्यवस्थापनमर्थापत्तिरित्यपि न वाच्यम्। प्रमाणयोः सतोर्विरोधाभावात्। विरुद्धयोरपि प्रामाण्यायोगात्। ननु देवदत्तस्य जीवने कुतश्चित्प्रमाणात्प्रतीते जीवता क्वचित् स्थातव्यमिति अविशेषेण देशसामान्यसम्बन्धावगतौ गृहमप्यास्कन्दन्त्यां सत्यां प्रत्यक्षेच गृहे तदभावं प्रतिपादयतः स्पष्टो विरोधः। अतस्तच्छान्त्यै: बहिर्भावकल्पनमर्थापत्तिरिति। मैवं क्वचिदिति विदितस्य जीवनस्य नियमाभावात्। बहिर्विद्यमानता संदेहे निश्चयरूपेण गृहाभावप्रत्यक्षेण प्रतिस्पर्द्धितुमसामर्थ्यात्। नच विरुद्धविषययोर्वास्तवं कुत्रापि समबलत्वं समस्ति उभयाप्रामाण्ये तु कथंचित्स्यात्। आभिमानिकबलसाम्येऽपि तथैव यदा वैषम्यग्रहस्तदा तत एव बलाबलसिद्धौ किमर्थापत्त्या साध्यम्। अतः केवलनिरवकाशविरोधिविशेषसन्निधौ सति सावकाशं सामान्यं संकोचयितव्यमिति व्यवस्था स्यात्। सापि तथैव व्याप्तिरिति अनुमानफलमेवअन्यथाविरोधिविषयत्याग इवाविरोधिविशेषपर्यवसानादावपि मानान्तरक्लृप्तिः किं न स्यात्। एवमनभ्युपगमे च धूमानुमानादावप्यर्थापत्तित्वप्रसंगः। अग्निं विनानुपपद्यमानत्वस्य लिङ्गप्रत्यक्षरूपप्रमाणद्वयविरोधस्य च वक्तुं शक्यत्वात्। धूमो हि काणभूतं वन्हिमाक्षिपति प्रतिक्षिपति तु प्रत्यक्षमिति विरोधे पर्वतार्वाग्भागे वन्हिरिति व्यवस्थाकल्पनस्यार्थापत्तित्वं स्यात्। व्याप्तिनिरूपणमन्तरेण गमकतागमकस्यैव धर्मान्तरयोगितया गम्यते

इत्यादिभेदास्त्वाशामात्रकल्पिता इति । उक्तं च श्रीविष्णुचित्तैरर्थापत्तिरनुमानमित्यादि । केचित्तु केवलव्यतिरेकिणि अर्थापत्तिसंज्ञां निवेशयन्ति तस्य प्रागेव निरासान्न प्रमाणवर्गानुप्रवेशः । अनुप्रवेशेऽपि वा न पृथक्त्वम् । यत्त्वागमप्रामाण्ये अनुभवश्चेन्द्रियलिङ्गशब्दसदृशान्यथानुपपद्यमानार्थपूर्वक इत्यादिषूपमानार्थापत्तिपरिग्रहः प्रतिभाति तदपि पूर्वपक्षप्रदेशगतत्वान्न सिद्धान्तत्वाय कल्पते । अभावस्त्वस्मन्मते भावान्तरात्मा । स चाक्षादिभिर्यथासंभवं सिध्यति । अभावात्मना तु ग्रहणेऽपि प्रतियोगिस्मरणादिसहकारिसहितानि तान्येव प्रमाणानीति न तदतिरिक्तकल्पनावकशः । अत एव हि प्रातर्गजाभावादिविज्ञानमपि निर्व्यूढम् । दृष्ट एव हि देशकालसंसर्गादिविशेषः पश्चात्प्रतियोगिस्मरणादिमतः पुरुषस्य तदभावात्मना धियमधिरोहति स्मर्तव्यस्य स्मरणाभावाद्वा तत्र तदभावादनुमानम् । एवमतिरिक्ताभावपक्षेऽपि निर्मूला प्रमाणान्तरक्लृप्तिः सघटं भूतलमितिवत् अघटं भूतलमित्यपि ह्यपरोक्षप्रतीतिः नचाधिकरणग्रहणोपक्षीणमिन्द्रियं गुणादिष्वपि प्रसंगात् । अतिरेकवदनतिरेकेऽप्यविज्ञातकरणतादीन्यनुमानानि च सुलभानीति । संभवोऽप्यनुमानमेव सहस्रे शतं संभवति इत्यादेः पूर्वानुभूतसहस्रशतव्याप्तेर्बोधनत्वात् संभवति क्षत्रिये शौर्यमित्यादेः संदेहात्मकत्वेनाप्रामाण्यात् । अविरोधनिश्चयरूपत्वेऽपि तदविरोधनिश्चायकप्रमाणान्तरे विश्रमः । ऐतिह्यन्तु प्रमाणमूलं चेत् आगमः । तदाभासमूलं चेत् तदाभासः । एवं चेष्टालिप्यक्षरादिकमपि अभिप्रायवर्णविशेषाद्यविनाभूतमनुमानमेव । चेष्टायां तु वरदनारायणभट्टारकैरेवमुक्तम् ।

शाब्दस्य व्यवहारस्यानुकारश्चेष्टयापि हि ।

क्रियते शाब्दविज्ञानयोगिनां स्वार्थबोधिका ॥
अनादिव्यवहारेषु चेष्टाविज्ञातशक्तिकाः ।
बोधिकाः स्युर्यथाध्यक्षमिति चेद्भवतोमतम् ।
चेष्टा गिरो वा स्वीकार्याः परप्रत्यायनाय हि ॥
अनाद्यो गिरामेवानादिता ज्यायसीसदा ।
चेष्टा सामयिकी शाब्दव्यवहारानुसारिणी ।
अस्यैवं बोधिके त्वेवं भरतस्यागमे स्थिता ॥
दृश्यतेऽनादिराम्नायः स्मर्यमाणप्रणेतृकः ।

इत्यादि । तत्त्वरत्नाकरेत्त्वेवमुक्तम् । व्युत्पन्नबोध्यबोधकनियमं चेत् चेष्टितं शाब्दम् । अनियतमपि सह दृष्ट्यास्मारकमिति न पृथगेष्टव्यमिति । लिप्यक्षरेषु त्वयं गकारोऽयं ककार इति वर्णात्मना ज्ञानमप्रामाणमेव । एतेन चिह्नेन इदमक्षरं जानीहीत्याद्यभिप्रायेण लिप्यक्षरसम्बन्धग्राहकाणां प्रवृत्तिः । तत एव च व्याप्तिसिद्धिः । एषा लिपिरेतद्वर्णविशेषाभिप्रायपूर्विका भ्रमादिरहितवर्णप्रत्ययवत्पुरुषलिखितैतल्लिपित्वात् संप्रतिपन्नव्युत्पत्तिकालीनलिपिवदित्यादिरूपः प्रयोगो द्रष्टव्यः । यत्तु प्रतिभायामुक्तं तत्त्वरत्नाकरे ।

ननु च प्रतिभा काचिद्यथार्था मानमिष्यताम् ।
बाह्यार्थनैरपेक्ष्येण बाह्यज्ञानक्षमास्तु सा ॥
विशिष्टकालपुरुषाद्यपेक्षोत्कर्षसम्भवा ।
सत्यं कालादिभेदस्तु दुर्विवेचोऽस्मदादिभिः ॥
सन्नप्यसौ व्यवहृतौ नोपयोगीत्युपेक्ष्यते ।
प्रतिभायाः फलं दृष्टं यदा प्रामाण्यनिश्चयः ॥
तदान्यतः कृतार्थत्वात् प्रेक्ष्यते न परीक्षकैः ।
पुण्येषु पुरुषेष्वेषा भवित्री सत्यदर्शिनी ॥

तस्मात् पतञ्जलिः प्राह प्रतिभा चेति तां प्रमाम् इति ।

तदपि प्रागुक्त योगिप्रत्यक्षविशेषविषयमेव । नन्वेवं तदपि प्रमाणत्रित्वं चतुष्ट्वं वानुपपन्नं प्रत्यक्षपरोक्षरूपेण द्वित्वस्यैव युक्तत्वादिति चेन्नातिप्रसंगात् । तथाहि ।

बहुष्वेकैकमुद्धृत्य तदन्येष्वैकराश्यतः ।
द्वैधकल्पसौ घटादावप्येवमेव प्रसज्ज्यते ॥
अनुमाननुमानत्वशब्दाशब्दविभागतः ।
प्रमाणद्वित्वमेवं ते वद किं वा न रोचते ॥
प्रत्यक्षस्य तदन्याभ्यां वैजात्यग्रहणाद्यदि ।
तयोरपि स्वेतराभ्यां वैजात्यं स्फुटमेव नः ॥
अतो ऽक्षलिङ्गशब्दाख्यासाधारणनिदानतः ।
उपलक्ष्यं प्रमात्रित्वं चतुष्ट्वं वापि संस्मृतेः ॥
स्पष्टमस्पष्टमिति च जैना यद्द्वैधमूचिरे ।
तत्प्रत्यक्षपरोक्षत्वविभागान्न विशिष्यते ॥
अतो न तावति द्वैधे साधिते विवदामहे ।
परोक्षस्यैकमानत्वं दुर्वचं भेदसाधनात् ॥
नन्वध्यक्षेऽपि भेदोऽस्ति बाह्यान्तरविभागतः ।
दिव्यादिव्यतया चक्षुःश्रोत्रादिभिदयापि च ॥
तद्वत्परोक्षस्यैकस्य प्रमाणस्य विभागतः ।
अनुमानागमाभिदा कथं नाभ्युपगम्यते ॥
दत्तोत्तरमिदं किंच दृष्टमेतच्छ्रुतं त्विदम् ।
एतत्त्वनुमितं चेति लोकोक्तिरपि साक्षिणी
यतः कुतश्चित्साधर्म्यं वैधर्म्यमपि केनचित् ।
सर्वत्र सुलभं काममिहापि परिगृह्यते ॥
अतः स्मृत्यनुभूत्याख्यविभागादपि नोचितम् ।
प्रमाणद्वित्वमित्येवं प्रागुक्तैव सुपद्धतिः ॥

त्रिविधोऽनुभवश्चैव तन्मूला च तथा स्मृतिः ।
इति षोढाविभागेतु न विमन्यामहे वयम् ॥
अनुभूतिविभागेन तन्मूलायाः स्मृतेरपि ।
विभागस्य गतार्थत्वादेकराश्यमुदाहृतम् ॥
अतो हि तस्यास्तन्मूलेष्वन्तर्भावविवक्षया ।
प्रामाणवर्गं त्रित्वेन प्राज्ञः केचिद्विविञ्चते ॥

एवमन्यदपि चिन्त्यमिति । नन्वनेन किंप्रमाणचिन्तार्थक्लेशेन अविमृश्यापि प्रमाणवर्गमुपलम्भान्वयव्यतिरेकादिवशात् पश्वादीनामिव मनुष्यादीनामपि लौकिकेष्वर्थेषु प्रवृत्तिनिवृत्तितत्प्रयोजनादिकं निरुपद्रवं सिध्यति । अलौकिकेष्वपि तत्तद्विधायकैस्तदनुग्राहकैश्च कल्पसूत्रादिभिश्चारितार्थ्याधियां किमनेन पिष्टपेषणादिकल्पेन पृथाविमर्शेनेति चेन्मैवम् ।

अवकाशोपरोधाय तत्त्वोपप्लवमिच्छताम् ।
अविपर्याससिद्ध्यै च विचिन्त्या मानपद्धतिः ॥
प्रतिसंधाय च फलं प्रारम्भाह्निकदर्शितम् ।
साध्यप्रमेयसंशुद्ध्यै साङ्गे माने परिश्रमः ॥
प्रत्यक्षितसमस्तार्थैर्योगीन्द्रैरपि लङ्घ्यते ।
प्रमाणप्लवमारुह्य तत्त्वविप्लवसागरः ॥

तस्मादुक्तरीत्या शुद्धिः कर्तव्येति ।

शुद्धन्यायनिषेविता श्रुतिशिरः शुद्धान्तसिद्धान्तिनी
भद्राणां प्रतिपादनाय जयतु प्रसक्षतामक्षताम् ।
पत्यौ नित्यरसे समं करुणया पातिव्रतीं बिभ्रती
सर्वग्रन्थिविमोचनी भगवती सा मे समीची कृतिः ॥

इति श्रीकवितार्किकसिंहस्यसर्वतन्त्र स्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौस्मृत्यध्याये
द्वितीयमाह्निकम् । ४ । २ ।
समाप्तश्चतुर्थोऽध्यायः ॥ ४ ॥

एवं सपरिकरं प्रमाणं विशोधितम् अथ प्रमेयं प्रदर्शयामः तत्र यत्पुनः षट्सप्तादिरूपेण पदार्थान् विभज्य वैशेषिकादयश्चिन्तयन्ति तन्न साक्षादपवर्गाङ्गमिति तैरेवाभ्युपेतम् । अथ च—

विद्यमानपरित्यागादसतां च परिग्रहात् ।
व्यामोहनविमर्शास्ते बहिष्कार्या मुमुक्षुभिः ॥
सावान्तरविभागेषु तत्त्वचिन्ताश्रमेष्विह ।
अविस्तराय दिङ्मात्रं दोषाणामभिदध्महे ॥

यत्तत्राहुः अभिधेयः पदार्थः स च भावाभावभेदेन द्विधेति तत्तावत् "व्यपदेशान्नेतिचेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च" इत्यारम्भणाधिकरणसूत्रेणाभावस्य पराभ्युपगताभावाभावस्येव भावान्तरत्वसमर्थनात् प्रतिक्षिप्तम् । यदपि च द्रव्यगुणकर्मसामान्यविशेषसमवायरूपेण भावरूपाणां पदार्थानां षोढा परिसंख्यानं तदपि वैशेषिकाधिकरणे "समवायाभ्युपगमाच्च साम्यादनवस्थिते"रिति सूत्रकारैरेव समवायाख्यपदार्थदूषणेन परास्तम् अभावतदधिकरणयोर्विशेषणविशेष्यभावसंनिधिविशेषादिशब्दवाच्यसंबन्धान्तरानुमानमपि समवायदूषणच्छाययैव दूषितमेव यश्चान्योऽन्यमत्यन्ततुल्येषु मुक्तात्मादिषु मिथो व्यावृत्तधीजननाय द्रव्यत्वादिहेतुना विशेषाख्यः पदार्थः कल्प्यते सोऽपि तुल्यन्यायतया सूत्रकारैर्दूषितप्राय एव । "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्या"मिति अनुपपन्नपरमाणुद्व्यणुकादिप्रक्रियानिदर्शनेनान्येषामपि तदभ्युपगतानामनुपपन्नत्वस्य सूचितत्वाच्च । अपि च नित्येषु द्रव्येषु तावज्जातिगुणादिभिरेव व्यावृत्तधीः सिध्यतीति नित्येषु हि विशेषोऽन्यः कल्प्यते यथाहुः "नित्यद्रव्यवृत्तयोऽन्त्या विशेषा" इति तथापि वेदान्तिभिर्दिक्संज्ञकविभुपदार्थान्तरानभ्युगमादाकाशस्य च कार्यत्वादि श्रुतेः प्रकृतिविकारभूतपृथिव्या-

ध्वंशविशेषातिरिक्तपरमाणुजालप्रतिक्षेपात्तथाविधपरमाणूनां चावस्थाप्रवाहस्यानाद्यनन्तत्वान्न तत्र विशेषक्लृप्तिः । ततः कालात्मानौ परिशिष्येते तत्रापि चेतनानां न कालतत्त्वमात्मतया भाति क्षणलवाद्यवस्थापरंपरायोगित्वपराक्त्वाचेतनत्वादिभिरेव तस्मात् स्वेषां स्वेभ्यश्चतस्यव्यावृत्तधीसंभवात्। अन्यथान्येनापि कल्पितेन तदसंभवप्रसंगात्। मुक्तात्मपरिशेषे तत्रापि जीवेश्वरयोरणुत्वविभुत्वनियाम्यत्वनियन्तृत्वाधेयत्वाधारत्वविशेषणत्वविशेष्यत्वशेषत्वशेषित्वशरीरित्वशरीरत्वादिभिरनेकविधैर्धर्मभेदैर्व्यावृत्तधीसिद्धौ किमन्येन विशेषेण । तदत्यन्तसाम्यवत्सु मुक्तेषु नित्येष्वपि हि तत्साम्यस्यैव संरक्षणाय धर्मिग्राहकसिद्धाः यावदात्मभाविनस्ते ते विशेषा न परित्यक्ताः । नचेश्वरद्वैतं येनेश्वराणां मिथो व्यावृत्तप्रतीत्यै विशेषं कल्पयिष्यामः । एकस्यैव सर्वदेशकालेष्वेकातपत्रतया सर्वश्रुतिसिद्धत्वात् अस्यैव च सामान्यशब्दैर्विशेषशब्दैश्च रूढितो योगतस्तत्तद्वस्तुविशिष्टत्वादिना च तत्तत्प्रकरणानुगुणं शारीरके प्रतिपाद्यत्वस्थापनात्। जीवेष्वपि बद्धानां मिथो भेदस्तत्तत्सुखदुःखधीच्छावैचित्र्येण व्यक्तः । बद्धमुक्तयोश्च किञ्चिज्ज्ञत्वसर्वज्ञत्वादिभिर्मुक्तानां नित्यानां च विशुद्धेरादिमत्त्वानादिमत्त्वाभ्यामेव विभक्तधी संभवः । मुक्तदशायां नित्येभ्यः किंवैषम्यमिति चेत् किंतेन प्राक्तनेन तत्तदात्मवर्तितया प्रत्याक्षितेन गुणादिभेदेन तदन्यव्यावृत्तिसिद्धेः । सिद्धैरपि तद्व्यवहारे प्राक्तनोपाधिभेदैरेव तत्तत्प्रमाणप्रमितैः प्रतिसंहितैः सर्वनिर्वाहात् । एतेन मुक्तानां मिथो विभक्तबुद्धिरपि निर्व्यूढा । नहि तेषामेकरूपः प्राक्तनः संसारः विषमविपाकसमयानाद्यसंख्यातकर्मप्रवाहवैचित्र्यप्रतिनियतदेशकालस्वरूपसुखदुःखतत्कारणादिसंततैरेव मिथोव्यावर्तकत्वात्। तदत्यन्तविभागो हि तत्र कालवर्ति-

नैव धर्मेणेति न नियमः । अतत्कालवर्तिनापि तन्निष्ठतोप लभ्यमानेन तत्सिद्धेः । नह्यतीतः संसारो मुक्तात्मस्वरूपमुपलभमानैर्नोपलभ्यते । उपलभ्यमानो वान्यनिष्ठः प्रतिभाति । अथ नित्येषु मिथः का वार्ता सापि कुशलैव । तेषामपि हि सत्यसंकल्पानां विचित्राः संकल्पेच्छादय ईश्वरस्येवानियतदेशकालविषयाः पर्यनुयोज्यसामग्रीका अनाद्यनन्तसन्तानवन्तः वन्तते इति किमन्येन विशेषेण । अपिच यद्दर्शने यत्र यदारोपो न भवति स हि तस्य ततो भेदः स एव च विशेषः स चेत् स्वरूपभूतोऽहंत्वमादिरूपेण भातः परारोपं प्रतिरुन्ध्यात् कस्ततोऽन्यस्ततो विशेषस्तस्य । एवमनभ्युपगमे विशेषलक्षणेऽपि का गतिर्वैशेषिकस्य । स्वपरनिर्वाहकास्ते विशेषा इति चेत् किं त एव । अपि च पृथक्त्वे विद्यमाने किं तैर्विशेषैः । पृथक्त्वस्यैकजातिसंगृहीतत्वान्न ततोऽपि व्यावृत्तधीरिति चेत् तर्हि ततो न क्वचिदपि स्यात् । विशेषेष्वपि वा विशेषत्वाक्रान्तेषु कस्ते निस्तारः । विशेषत्वं नाम जातिर्नास्तीतिचेत् । किं तत् उपाधिरिति चेत् । किं ततो न संग्रहः । तथा सति क्वचिदपि तन्निबन्धनानुवृत्तधीभङ्गप्रसंगात् । एवमन्योऽन्याभावेनापि गतार्थता दुस्तरेति परास्तः पराभिमतविशेषः । सामान्यमपि परोक्तं सूत्रकारैरेव निरस्तप्रायम् । तथाहि "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यादिभिः सूत्रैः कार्यदशायामुपादानस्यावस्थान्तरापत्तिमात्रमेव न पुनः पराभिमतमवयव्याख्यं द्रव्यमस्तीति समर्थनात् घटाद्यवयव्यभावे तदाश्रितघटत्वादिसामान्यमवयविसमवेततयाभ्युपगतगुणादय स्तदुभयारम्भक्रियाजालं च निर्मूलितम् । यच्चोपादानस्य घटत्वादिरूपमवस्थान्तरं संयोगविशेषादिरूपं तत्परैरपि कार्यतयाभ्युपेतमुपलम्भादिभिश्च तथैव सिध्यतीति न तत्रापि नित्यत्वकल्पना-

वकाशः । ततः सर्वेषां द्रव्याणां स्वरूपतो नाद्यनन्तत्वात् कार्यद्रव्यत्वात्मत्वादिमात्रमेव शिष्यते । गुणेषु नित्येष्वेवस्थारूपेषु चानुवृत्तप्रत्ययनिमित्तं किमितिचिन्त्यम् । तत्रैवं भाषितं शारीरकाद्ये संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात् तावतैव गोत्वादिजातिव्यवहारोपपत्ते रतिरेकवादेऽपि संस्थानस्य संप्रतिपन्नत्वाच्च संस्थानमेव जातिः संस्थानं नाम स्वासाधारणं रूपमिति यथावस्तुसंस्थानमनुसंधेयमिति । एतदुक्तं भवति । किं संस्थानातिरिक्तं सामान्यं विभक्तस्फुटप्रत्यक्षाध्यवसायभेदादङ्गीक्रियते उतोपपत्ति बलादिति । नाद्यः असिद्धेः नापि द्वितीयः अन्यथासिद्धेः अतिरिक्तसामान्यमभ्युपगच्छतोऽपि हि तदुपलक्षणं संस्थानमिष्टं दृष्टं च । प्रतिव्यक्तिनियतं संस्थानं कथमनुवृत्तिप्रत्ययकारणमिति चेत् कथं वा तज्जातीयस्य लक्षणं भवति । अनुवृत्तजात्यन्तरसंगृहीतोपाधिरूपतयेति चेत् तावतैव गवादिव्यवहारसिद्धौ किमन्येन । तथाप्यन्ततोनुवृत्तसामान्यं क्वचिदभ्युपगन्तव्यम् यत्रानन्यथासिद्धिः अन्यथोपाधिकसंग्रहस्याप्यसंभवादितिचेत् तत्रापि वा तत्र सामान्यमुपलक्षणेन संगृह्यते न वा पूर्वत्रान्यथासिद्धिरनवस्थितिश्च । उत्तरत्र नियामकादर्शनाज्जातेराश्रयव्यवस्था न स्यात् व्यावृत्तानामपि स्वभावत एव कासांचित्व्यक्तीनां तद्व्यञ्जकत्वनियतिरितिचेत् स एव स्वभावः किं न व्यवहारं नियच्छेत् । निर्विषयः कथं व्यवहारः स्यादितिचेन्न तासामेव व्यक्तीनां विषयत्वात् । व्यावृत्तानामनुवृत्तव्यवहारविषयत्वे सर्वत्र विषयव्यवस्था भज्येतेतिचेत् व्यावृत्तानामनुवृत्तव्यञ्जकत्वे सर्वत्र तद्व्यक्तिः किं न स्यात् । संबन्धासम्बन्धाभ्यां नियमादिति चेत् न सम्बन्धस्यापि समवायनाम्नः सार्वत्रिकत्वाभ्युपगमात् त-

प्यभिव्यक्तिनियमस्य द्रष्टव्यत्वात्। नानासमवायवादेऽपि व्यक्तिस्वभावनियमस्य दुस्त्यजत्वात्। तथापि दृष्टैकगोव्यक्तेर्व्यक्त्यन्तरे सोऽयमिति प्रत्यभिज्ञानं कथं स्यात् अयं गौरित्येकव्यक्तौ व्युत्पादितश्च कथं व्यक्त्यन्तरेऽपि तच्छब्दवाच्यतां प्रतीयादितिचेत्। तत्रापि वा कथम् एकधर्मसमवायादितिचेत् तेनैव धर्मेण स्वतो मिलितस्य समवायस्यैकस्यैव नित्यस्य सर्वत्र वृत्त्यभ्युपगमेन सर्वव्यवहारसंकरप्रसंगात्। कासांचिदेव व्यक्तीनां तद्व्यञ्जकत्वस्वाभाव्याद्व्यवस्थोक्तेति चेत् तर्हि तासामेव व्यक्तीनां प्रतिसंधानव्यवहारयोर्विषयत्वमस्तु। तथा सति भ्रान्तत्वं तयोःस्यादितिचेत् न तद्व्यक्तित्वेन तत्प्रतिसंधानादेरभावात्। अपि तर्हि तथात्वेन व्यक्तिस्वरूपातिरिक्तं तथात्वं नामान्तरेण जातिरेव स्यादिति चेत् तज्जातिव्यञ्जकं तत्तदेकव्यक्तिस्वरूपातिरिक्तं किं न जात्यन्तरं स्यात् उपाधिविशेष एवायं प्रतिनियताश्रय इति चेत्। एवं तर्हि प्रतिनियतप्रतियोगिकं स्वभावनियतं परस्परस्मारकत्वमुपजीव्य तज्जातीयतया प्रतिसंधानव्यवहारोपपत्तौ किमन्यकल्पनेन। तत्स्मारकतादितरविभागः कुतस्त्य इति चेत् तद्व्यञ्जकतादितरविभागस्ते कुतस्त्यः दर्शनादर्शनायत्त इति चेत् तुल्यं सम्बन्धसादृश्ययोरभावे कथं स्मारकत्वमितिचेत् तयोर्वा कथं सदृशसहानुभूतदर्शनस्य संस्कारोद्बोधकत्वादिति चेत् तदपि कुतः कार्यदर्शनात् कल्प्यत इति चेत् तुल्यम् अन्यथा सम्बन्धसादृश्ययोरेकमुपादाय तदन्यस्य कथं स्मारकत्वमिति चोद्यस्य दुर्वारत्वात्। नचात्र सादृश्यं नाङ्गीकुर्मः सौसादृश्यरूपत्वाभ्युपगमात् सामान्यस्य। नामान्तरेण पराभिमतजातिस्वीकार इति चेत् व्यावृत्तानां सन्निवेशादीनामेव प्रातिनियतप्रतियोगिस्मारकस्वभाव-

तया सादृश्यरूपत्वात् । गवयादेरपि तर्हि गोजातीयत्वा-दिप्रसङ्ग इति चेत् न सादृश्यसौसादृश्यविभागस्य सांप्रत्ययि-कस्य सर्वसंमतत्वात् इति । एवं सामान्यादिषु सूत्रकारा-दिभिर्निरस्तेषु परिशिष्टा द्रव्यगुणकर्मरूपास्त्रयः पदार्था इति केचिदाचार्या मन्यन्ते । अन्ये तु यथा तत्प्रतीतेरन्यथासिद्धतया ते पदार्था भाष्यकारादिभिर्निरस्यन्ते तथा कर्मापीति । ये तावदिह सर्वत्र सूर्यपरिस्पन्दादिवदप्रत्यक्षं कर्म फलेनानुमेयमिच्छन्ति तत्र यथा सामग्र्या कर्मणःसिद्धिरभिमता तयैव दृष्टं कर्मफलंसाध्यतां किमन्तरात्र कल्पितेन कर्मणा । तथापि चेत् क्लृप्तिस्तर्हि अन्यत्रापि कालविप्रकर्षादर्शनेऽपि सामग्रीकार्ययोर्मध्येऽन्यस्य क्लृप्तिप्रसङ्गः-तथैव च तत्रापीत्यनवस्था स्यात् । ये च प्रत्यक्षं कर्मेत्याहुस्तैरपि नूनं कर्मफलत्वेनाभ्युपगतसंयोगविभागातिरिक्तं निपुणनिरूपणे-ऽपिनोपलभ्यत इति मन्यामहे । चलतिप्रत्ययोऽपि हि तावतैव चरि-तार्थः । न च वाच्यं यावत्संयोगं चलतिप्रत्ययप्रसंग इति पूर्वदेश-विभागपूर्वकदेशान्तरसंयोगप्रथमक्षणविषयत्वात्तत्प्रत्ययस्य । त-त एव ह्युत्तरकालसंयोगे वर्तमानेऽपि अचलदिति भूतानुसंधा-नमुपपन्नम् । ननु प्रवाहमध्यस्थिते स्थाणौ पूर्वसलिलस्कन्धवि-संयोग उत्तरसलिलस्कन्धसंयोगश्च दृश्यते न च तत्र चलत्वमिच्छा-मः व्योमादय एव स्थिरदेशत्वेन विवक्षिता इति चेत् न प्रवा-हस्य ततो विशेषादर्शनात लौल्यं विशेष इति चेत् तर्हि संयो-गविभागातिरिक्तं लौल्यरूपं कर्म प्रत्यक्षमिति कथं तदपन्हव इति तत्राहुः या नाम कर्मसामग्री त्वयेष्यते सा तत्तत् कर्मफलतयाभिमतं संयोगविशेषमुत्पादयन्ती नियतस्वभावमेव तमुत्पादयति अत एक एव संयोगोऽनेकनिष्ठोऽपि सन् क्वचिच्चलतिप्रत्ययं क्वचित्संयोगमा-त्रप्रत्ययं च जनयति यथैक एव समवायो गुणगुणिभ्यामविशे-

षेण स्वतो मिलितोऽपि सन् क्वचिदाश्रयप्रत्ययं क्वचिदाश्रितप्रत्ययं च जनयति नह्याश्रयभाव आश्रितभावो वा समवायस्वरूपातिरिक्तः तद्वदिहापीति । वयं तु ब्रूमः अप्रत्यक्षकर्मवादस्तावत् प्रागुक्तदूषणादयुक्तः। प्रत्यक्षन्तु कर्म स्वरूपतो दुरपन्हवम्। तत्र भाष्यादिष्वतिरेकविधिनिषेधादर्शनात् अर्थान्तरविरोधाभावाच्च उदासितव्यमिति। इदं तु मन्यामहे अतिरेकेऽपि गुणवर्गान्न राश्यन्तरं कर्म विभाजकाभावात् स्वेच्छाकल्पितविभाजकस्य सर्वत्र सुलभत्वेन यथाभिमतमेकं गुणमुभयं वाङ्गीकृत्य राश्यन्तरकल्पनप्रसङ्गात् । गुणावान्तरवैचित्र्यस्य गुणत्वविरोधाभावात् । अतो द्रव्यमद्रव्यमित्येव विभाग इति । तत्र चात्मगुणतयाभिमतेषु सुखदुःखेच्छाद्वेषप्रयत्नाः पञ्च तत्तदुत्पादकतयाभिमतबुद्धिविशेषानतिरिक्ततया वेदार्थसंग्रहे समर्थिताः । धर्माधर्मौ विहितनिषिद्धक्रियासाध्यतयाभिमतावाज्ञावतो राज्ञ इव सर्वप्रशासितुरीश्वरस्यानुग्रहनिग्रहाख्यबुद्धिविशेषरूपौ भाष्यादिषु बहुषु प्रदेशेषु प्रपञ्चितौ। यःपुनः संस्कारः स तावत्बुद्धिविशेषात्मको युक्तः। नच तत् प्रयुक्तः ततश्चिरविनष्टविप्रकृष्टाकारे क्वापि व्याप्त्यदर्शनात् वासनानुवृत्तेश्च वाचनिकत्वात् । यद्यपि इन्द्रियस्येन्द्रियस्यार्थे इत्यादिगीताश्लोकेषु भाष्यकारैर्वासनाया इच्छाद्वारेणैव प्रवृत्तिहेतुत्ववर्णनात् ज्ञानवासनाविशेषातिरिक्ता कर्मवासना नास्तितथापि ज्ञानवासना दुरपन्हवा ततश्च तदाश्रयमात्रं विचार्यं तत्र धर्मभूतज्ञानस्य द्रव्यत्वं न्यायतत्त्वात्मसिद्धिभाष्यादिसिद्धमनुसरतां तन्निष्ठस्मृत्याख्यविकारोत्पादकः संस्कारोऽपि तन्निष्ठः प्राप्तः । अन्तरङ्गत्वादबाधाच्च । ये तु परपरिभाषामनुसरन्तः तदनुगुणं तस्य गुणत्वं गृणन्ति तेषा मात्मन्येव संस्कार इति विशेषः । नच बुद्धेर्नित्यत्वं संकोचविकाशादिदशाभेदं चाभ्युपगच्छद्भिरद्रव्यत्वं तस्याः सुवचम् अवस्थान्तर-

ोगित्वमेव ह्युपादानत्वं तदेवहि द्रव्यलक्षणम्। तथापि न गुणवहानिः। अपृथक्सिद्धविशेषणत्वातिरिक्तगुणत्वादर्शनात्। कर्मवव्यतिरिक्तजातिमात्राश्रयत्वादिरूपगुणलक्षणसंकेतस्यास्माभिरनादरणात्। नच द्रव्यस्याश्रितस्वभावत्वलक्षणमपृथक्सिद्धविशेषणत्वं विरुद्धम्। अवयविनि युष्माभिरपि स्वीकरणात्। यथाच त्वया द्रव्यत्वविशेषणत्वादिभिर्न विरोधइष्यते एवमत्रापि उपलम्भयुक्त्यादेः समानचर्चत्वात्। अतो ज्ञानं द्रव्यं तदवस्थाविशेषास्तु अद्रव्याणीति संस्काराख्यविकारस्थितिरपि तत्रैव युक्ता। वेगाख्यस्तु संस्कारस्तदुत्पादकत्वाभिमतकर्मविशेषातिरिक्तो न दृश्यते। नच युज्यते। स्थितस्थापके तु कर्मनिवृत्तावपि तदविनाभूतसंयोगविशेषत्वं वक्तुं युक्तम्। ये च भगवतोऽनन्ता मङ्गलगुणाः प्रकीर्त्यन्ते। ते सर्वेऽपि षाड्गुण्यविततिरूपा इति संमतम्। यथाहुः।

तत्रानन्तगुणस्यापि षडेते प्रथमे गुणाः।
यैस्त्वयेव जगत्कुक्षावन्येऽप्यन्तर्निवेशिता इति।

षट्सुच गुणेष्वपि बलं धारणसामर्थ्यम्। ऐश्वर्यं नियमनशक्तिः विकारहेतुष्वप्यविकृतत्वं वीर्यम्। तेजः पराभिभवनसामर्थ्यम् अन्यानपेक्षता वेति। लक्षितानां चतुर्णामपि प्रथने ज्ञानशक्तिविततिरूपत्वं व्यक्तम्। नच ज्ञानशक्त्योरप्येवं मिथोऽन्तर्भावः शक्यः अज्ञेष्वपि द्रव्येषु शक्तिदर्शनात्। अशक्तेष्वपि ज्ञानदर्शनात्। अत एव ज्ञानविशेषः शक्तिरित्यपि निरस्तम्। शक्तिविशेषस्तु ज्ञानं स्यादितिचेत् कोऽसौ शक्तिपदार्थः विलक्षणो गुणविशेषः प्राभाकरादिनयेन पदार्थान्तरं वेति चेन्न। तर्हि ज्ञानस्य तद्विशेषता सिध्येत्। अथ कार्योपयुक्तं विशेषणमात्रं शक्तिरिति सर्वप्रयोगानुगतं पश्यसि तदा

न केवलं ज्ञानस्य अपि तु सर्वस्यैव शक्तित्वं प्राप्तं सर्वस्यापि प्रधानकारणतयाभिमते कस्मिंश्चिद्विशेषणत्वेनावस्थानात् । नन्वेवमुदयनादीनामिव स्वरूपसहकारिव्यतिरिक्तशक्त्यभावः प्रसक्त इति चेत् अनन्यथासिद्धयुक्तिवशादागमबलाद्वा तत्सिद्धेः। तच्छब्दस्तु विवक्षाविशेषात् स्यादिति ब्रूमः । शक्तिसमर्थनसंरम्भश्चाचार्याणां न्यायकुलिशे निपुणमनुसंधेयः । शक्तिमात्रकारणादिवादाश्च बाह्यानामुपलम्भयुक्त्या आप्तागमादिविरहादनादरणीयाः । सा चेदुपादानं सूक्ष्मं द्रव्यमेवासौ स्यादिति न विवादः । अथाचिद्द्रव्यविशेषगुणान् पश्यामः । तत्र शब्दादयः पञ्च तत्तद्भूतवर्तिनः प्रत्यक्षादिबलादभ्युपगताः तथा सत्त्वरजस्तमांसि च शास्त्रानुसारेण संयोगश्च प्रत्यक्षादिसिद्धः । नैरन्तर्यमात्रमेवायमिति चेत् तत्किं द्रव्यस्वरूपम् उतागन्तुरवस्थाविशेषः । नाद्यः नित्यत्वप्रसंगात् । न द्वितीयः नामान्तरेण तदभिधानादिति । विभागपृथक्त्वे तु अभावोक्तन्यायेन दूषणीये । परत्वापरत्वे अपि सुखादिच्छायया नहि तत्तदुपाध्यवच्छिन्नदेशकालविशेषसंबन्धातिरिक्ते परत्वापरत्वे पश्यामः । तत्कल्पने च प्राक्त्वप्रत्यक्त्वादयोऽपि बहवो गुणास्तुल्यन्यायाः कल्प्याः स्युः । एवं सदसद्गुणप्रदर्शनप्रक्रियया संख्यापरिमाणगुरुत्वद्रवत्वस्नेहानां तत्त्वमवसातव्यमित्यद्रव्येष्वेषा दिक् । अथ द्रव्याणि विमृश्यन्ते । तत्र तावत् कौमारिलाभिमतविभुशब्दाख्यद्रव्यवादः शब्दस्याचिदवस्थाविशेषत्वेन श्रुत्यादिसिद्धत्वान्निराकार्यः। आत्मसिद्धौ तु शब्दस्य धर्म्यतिवर्तित्वगतिमत्त्ववादस्तदाश्रयभूतावयवद्वारेणेति नेतव्यः । यत्तु

तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हतीत्याहुः ।

तदेतद् द्रव्यं तावदभ्युपगच्छामः । तथा ह्युक्तं वरदगुरुभिस्तत्त्वसारे

तमो नाम द्रव्यं बहुलविरलं मेचकचलं
प्रतीमः केनापि क्वचिदपि न बाधश्च ददृशे ।
अतः कल्प्यो हेतुः प्रमितिरपि शाब्दी विजयते
निरालोकं चक्षुःप्रथयति हि तद्दर्शनवशात् इति

एतेन वियति विततानां सूक्ष्माणां पृथिव्यवयवानां कृष्णो गुणस्तम इति पक्षोऽपि निरस्तः । साश्रयस्यैव ग्रहणविरोधाभावात् । गुणमात्रतया च कस्याप्यनुपलम्भात् । स्पर्शरूपरसानां च शब्दगन्धवत् भ्रान्तौ प्रमितौ वा निराधारग्रहणादर्शनाच्चेति । एवं द्रव्यत्वे सिद्धे कृष्णवर्णस्य द्रव्यस्य पृथिवीत्वमेवाभ्युपगन्तुमुचितम् । यत् कृष्णं तदन्नस्येति श्रुतेः । यद्यपि पृथिव्यां पाकविशेषवशात् शुक्लतादिरूपं भवति तथापि कृष्णरूपं नान्यत्र पाकादपि भवति । आकाशादिषु नैल्योपलम्भोऽपि हि पञ्चीकरणमूलपृथिवीसंसर्गात् आकाशे चाविशेषादिति सूत्रे भाषितम् । अण्डान्तर्वर्तिनश्चाकाशस्य त्रिवृत्करणोपदेशप्रदर्शितपञ्चीकरणेन रूपवत्त्वाच्चाक्षुषत्वेऽप्यविरोध इति । नन्वेवमाकाशमेव द्रव्यान्तरसंसर्गान्नीलं तम इति उपलभ्यत इति स्यादिति चेन्न आकाशे तम इति पृथगुपलम्भस्वारस्यात् । द्रव्यान्तरत्वे तु कल्पनागौरवात् । अन्ततोऽत्रापि पञ्चीकरणेन द्रव्यान्तरसंसर्गस्याभ्युपगतत्वाच्चेति । स्पर्शानुपलम्भास्त्विन्द्रनीलालोकदुर्दिनातपादेरिवानुद्भवादेरपि स्यात् । न च पार्थिवरूपस्य सर्वस्यालोकसापेक्षचक्षुर्ग्राह्यत्वनियमः कल्प्यः । करणवैचित्र्यादिवद्विषयवैचित्र्यादपि व्यवस्थोपपत्तेः । दिवाभीतानां विशिष्टाञ्जन-

रञ्जिताक्षाणां चालोकानिरपेक्षचक्षुषैव पदार्था गृह्यन्ते । आलोकाभावमात्रत्वे च तमसस्तमोऽज्योतिषोर्निवृत्तिवचनं च व्याहन्येत प्रतिनियतनैल्यारोपकल्पनाप्रयासश्च । अतः पृथिवीविशेषत्वं तमसो युक्तम् । पृथिव्यादीनि पञ्चभूतानि मनश्च त्रिगुणद्रव्यपरिणातिविशेषतया श्रुत्यादिसिद्धत्वान्न पृथग्द्रव्याणि । तत्र चावयव्याख्यं भौतिकं द्रव्यम् "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यादिभिः सूत्रैः षड्भिः बुद्धिशब्दान्तरादेरन्यथा सिद्ध्याद्युपपादनेन निरस्तम्। "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्या" मित्यादिभिश्च पराभिमतः परमाणुः । अतः परिमाणविशेषादुपलम्भयोग्यत्वायोग्यत्वादिदशाविशेषयोगि प्रकृत्यादिसंज्ञं द्रव्यं विचित्रव्यवस्थितक्रमसमष्टिव्यष्टिरूपमवतिष्ठते । दिक्तत्त्वमपि तत्तदुपाध्यवच्छिन्नास्तत्तद्देशविशेषा एव अतिरिक्तकल्पकानां परापरप्रत्ययविशेषादीनामन्यथासिद्धेः । दिगुत्पत्तिश्रुतिश्च तदुपाधिकतन्निर्वाहकसृष्ट्योपपन्ना अन्यथा द्युपृथिव्यन्तरिक्षादिवत् त्रिगुणपरिणतिविशेषतैव स्यात् न पृथग्द्रव्यता । नचैवं कालेऽपि प्रसंगः । नित्यस्य कालस्य भगवत्पराशरादिभिः पृथक् प्रसंख्यानात् । तस्य प्रकृतिपरिणतिविशेषत्वादिपक्षास्तत्पूर्वापरकालावश्यंभावात् श्रुत्यादिबलाच्च प्रत्यस्ताः । अतः त्रिगुणकालावात्मा चेति त्रीणि सिद्धानि । ईश्वरस्य तु पृथक् संख्याने चत्वारि । तस्य हि चेतनत्वादिभिः संग्रहसंभवेऽप्यनन्तप्रकारात्यन्तवैलक्षण्यज्ञापनाय पृथक्संख्यानं प्राचामनादिवाचां च । अन्यथा प्रक्रियान्तरेणाचेतनेष्वपि संग्रहप्रसङ्गाव । विविक्तं च भगवता पराशरेण

परमात्मात्मनोर्योगः परमार्थ इतीष्यते ।

मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यत इति

एवं धर्मभूतज्ञानाख्यमपि द्रव्यमजडत्वाविशेषेऽपि स्फुटतरवैधर्म्यान्तरबलात् पृथग्गणयन्ति । तस्याद्रव्यत्वादिवादः केषांचिन्नाथमुनियामुनमुनिभाष्यकारादिप्रबन्धविरोधात् प्रायः परचित्तरञ्जनार्थः । शुद्धसत्त्वाख्यस्य च द्रव्यान्तरस्य परविग्रहादियाथात्म्योपदेशप्रवृत्तनिरुक्ताद्याप्तागमसिद्धत्वात् सूक्ष्मत्रिगुणावस्थाविशेषादिपक्षा बहिष्कार्याः । अतः षडेतानि द्रव्याणि भोक्तृभोग्यनियन्तॄणां सदात्मनैकद्रव्यत्वादि पक्षा अपि निर्विशेषसन्मात्रपक्षवद्व्याघातश्रुतिविरोधादिभिर्बहुशो भाष्यादिषु निरस्ताः । तत्र त्रिगुणशुद्धसत्त्वे स्वनिरुक्त्यैव लक्ष्ये । क्षणलवाद्यात्मा कालः । अणुर्ज्ञाता जीवः । विभुस्त्वीश्वरः । जानातिव्यवहारासाधारणकारणव्यवहार्यविशेषो मतिः । एवं त्रिगुणकालजीवेश्वरशुद्धसत्त्वमतिरूपेण षोढा द्रव्यविभागः । एवं प्रमाणसार्थघण्टापथेन द्रव्याद्रव्यरूपप्रमेयग्राममधिजिगमिषतां न कुदृष्टिबालकल्पितकूटयुक्तिगर्तनिपात इति ।

इतिश्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीवेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ प्रमेयाध्याये प्रथममाह्निकम् ॥ ५ । १ ।

अत्र यद्यपि प्रमाणविषयः प्रमेयमिति व्युत्पत्त्या आरोपिताकारव्यवच्छेदार्थतया नारोपितरूपं सर्वं प्रमेयं तथापि निःश्रेयसान्तरङ्गतया तदार्थिभिः प्रकर्षेण मेयं प्रमेयमिह विवक्षितम् । तच्च यद्विषयेण भ्रमेण संसारो यद्विषयेण च तत्त्वज्ञानेनापवर्गश्च तदिह नः प्रकर्षेण मेयं प्रमेयम् । तच्च द्वादशविधमुक्तमाक्षपादैः । आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति । तत्र चेतन आत्मा स द्विधा ईश्वरोऽनीश्वरश्च । जगत्कर्तेश्वरः जगद्व्यापाररहितश्चेतनोऽनीश्वरः । यच्चैतन्यसमानाधिकरणं यदपृथक्सिद्धं यद्द्रव्यं तत्तस्य शरीरम् । तद् द्विविधं कर्मजमकर्मजं चेति । आद्यमस्मदादीनां द्वितीयमीश्वरादीनां सात्त्विकाहंकारोपादानकद्रव्यमिन्द्रियम् । तदेकादशविधं पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनश्चेति । इन्द्रियगोचरा इहार्थाः । ते च शब्दादयो गुणाः तद्विशिष्टानि च । अर्थप्रकाशो बुद्धिः । स्मृत्यादिकरणमिन्द्रियं मनः । मनोवाक्कायानां पुण्यापुण्यरूपो व्यापार इह प्रवृत्तिः । तथाविधप्रवृत्तिहेतवो दोषाः । ते च संग्रहाद्रागद्वेषमोहाः । पूर्वदेहं विहायोत्तरदेहप्राप्तिः प्रेत्यभावः । प्रवृत्तिसाध्यं फलम् तदेव पुरुषेण प्रवृत्तिफलतयोद्दिष्टं प्रयोजनम् । प्रातिकूल्यवेदनीयम् दुःखम् तत्र सुखतत्साधनादिकमपि विषसंसृष्टमधुवत् प्रभूतानर्थानुषङ्गित्वाद्दुःखमेव मुमुक्षुणा भाव्यमिति तस्यापि प्रतिकूलवेदनीयत्वम् । दुःखान्तरकारणासमानाधिकरणा दुःखनिवृत्तिरपवर्गः । स च स्वाभाविकात्मकस्वरूपाविर्भावपूर्वकं समस्तविभूतिगुणविशिष्टनिरतिशयानन्दब्रह्मानुभवगर्भ इति परमः पुरुषार्थः । तत्पूर्वको वा तादृशब्रह्मानुभवोऽपवर्ग इति । एतदेव च प्रमेयं संग्रहाच्चतुर्धा विभज्य केचिदनु-

संदधते । हेयं तस्य निवर्तकं हानं तस्योपाय इति । ये तु कणचरणादयः षट्सप्तादिरूपेण सर्वान् पदार्थान् विभज्य परीक्षन्ते ते सामान्यविशेषसमवायादीनां पदार्थान्तरत्वप्रतिक्षेपेण निरस्ताः । ततश्च द्रव्यगुणकर्माणि त्रीण्येव शिष्यन्ते तत्रापि कर्मणः संप्रतिपन्नगुणातिरिक्तत्वपक्षेऽपि संस्कारादिगुणावान्तरविशेषवत् गुणपक्षकुक्षीकाराद्वौ पदार्थौ । तत्र च गुणशब्दस्यापृथक्सिद्धविशेषणमात्रव्युत्पन्नस्य तथाविधेषु केषुचिद्द्रव्येष्वपि वृत्तेर्द्रव्यगुणरूपेण विभागानौचित्यात् द्रव्यमद्रव्यमित्येव पदार्थविभागमाद्रियामहे । ईदृशस्य तु विचारस्याप वर्गे परंपरयोपयोगः । मुमुक्षूणां प्रधानतमं तु प्रमेयं विशिष्टं ब्रह्मैकमेवेति मन्वानो भगवान् बादरायणः अथातो ब्रह्मजिज्ञासेत्युपक्रम्य तदेव सप्रकारं निरूपितवान् तत्प्रकारतयैवान्यत्प्रमेयम् केचित्तु देहात्मविवेकक्रमानुसारेण भोक्ता भोग्यं प्रेरितारं मत्वेति श्रुतिप्रक्रियया च त्रिधा तत्त्वं विभज्य चिन्तयन्ति तत्रापि सप्रकारद्रव्यचिन्तनाद्द्रव्यचिन्तनाप्यन्तर्भवति । तत्तुल्यन्यायतया कालचिन्ता च । तदभिप्रायेण कालस्य पदार्थविशेषणतयैव समस्तवस्त्वन्तर्भावान्न पृथगस्तित्वादयो वक्तव्या न च परिहर्तव्याः । कालोऽस्ति नास्तीति व्यवहारो व्यवहर्तॄणां जात्याद्यस्तित्वनास्तित्वव्यवहारतुल्य इति जैननिराकरणसमये भाष्यकारैरुक्तम् । ततश्च ब्रह्मैकमेव तत्त्वमिति वा चिदचिदीश्वरभेदेन त्रीणि तत्त्वानीति वा पश्यतां न कश्चिद्विशेषः । स्वरूपभेदस्य विशिष्टैक्यस्य चोभयेषामभिमतत्वात् । अत एव

प्रधानपुरुषव्यक्तकालास्तु प्रविभागशः ।
रूपाणि स्थितिसर्गान्तव्यक्तिसद्भावहेतवः ।

इत्याद्यनुसारेण चतुर्धा पञ्चधा वा विभज्य चिन्तयतां का-

र्थविशेषैः सह पञ्चषट्सप्तविंशत्यादिसंख्यां निवेशयतां च पूर्वाविशेष एव । श्रूयते च ।

तं षड्विंशकमित्याहुः सप्तविंशमथापरे ।
पुरुषं निर्गुणं सांख्यमथर्वाङ्गिरसो विदुरिति

प्राप्यं प्राप्ता प्राप्त्युपायः फलं प्राप्तिविरोधि चेति केचित् पञ्चधा प्रमेयं परिचक्षते । संबन्धविशेषेण सहान्ये षोढेति । अथायमपरः प्रवृत्त्यर्थसंग्रहः अनुष्ठानपरिहारान्तरङ्गः । तथाहि हितमहितं च प्रकर्षेण मेयम् तत्र लौकिकहिताहितयोरन्वयव्यतिरेकायुर्वेदनीतिशास्त्रादिकं प्रमाणम् । तदपि योगसाधनभूतशरीररक्षणार्थं मुमुक्षुणापि श्रुतिस्मृत्याद्यविरोधेनानुसरणीयम् । अलौकिकहिताहितयोस्तु वेदाः प्रमाणम् । तदुपबृंहणतया स्मृतीतिहासपुराणानि च । यच्च श्रुतिविहितं तदखिलमपि यथाधिकारं हितम् । यत्तु च तन्निषिद्धं तदखिलमप्यहितम् । नन्वभिचारादिकर्मणामनर्थहेतूनां क्षुद्रपुरुषार्थसाधनानां च काम्यानां कर्मणां कथं हितत्वम् । उच्यते । अधिकारिविशेषमपेक्ष्य हि सर्वो विधिर्निषेधश्च यथोक्तम् ।

त्रैगुण्यविषया वेदा इति

यो हि सुखं दुःखनिवृत्तिं चेच्छति तस्य तत्साधनमपेक्षमाणस्य लौकिकेषु साधनेषु प्रवृत्तस्य तेषां निरयादिभूतानर्थहेतुत्वेन तत्परिहारायानर्थहेतुत्वरहिताः सुखाद्युपायाः प्रतिपाद्यन्ते । एवं काम्यकर्माणि पारलौकिकानि दृष्टसजातीयतदधिकफलार्थतया दृष्टानर्थावहसुखदुःखप्रवृत्तिप्रतिबन्धौपायिकत्वाद्धितान्येव रागिणाम् । तथेह लौकिकान्यपि चित्रादीनि । कारीर्यादीनि तु जगद्धितान्यपि । अभिचारकर्मणोऽपि हिंसादियुक्तस्यापि स्वरूपतो नानर्थरूपत्वं तदङ्गपशुहिंसादेरग्नीषोमीयादिवद्विधिप्राप्तत्वात् ।

अपि तु स्वसाध्येनाप्तविषयवधादिना तदपेक्षया चाभिचारो निषिध्यते। सोऽपि हि क्वचिदवश्यकर्तव्य एव षट्स्वनभिचरन् पतेदित्यादिदर्शनात्। अतश्च मुमुक्षोरपि रक्षकक्षत्रियाद्यभावे राक्षसाद्यभिभवे चात्मरक्षणार्थमभिचारः कर्तव्य एव। सर्वत एवात्मानं गोपायेदिति शास्त्रात्। अन्यथाहरहरनुष्ठेयस्यामयाणादनुवर्तनीयस्य कर्मादेरुच्छेदप्रसंगेन उपायानिष्पत्तेर्मोक्षासिद्धिप्रसंगात्। दृष्टयन्त्रादिदृष्टार्थानि च सर्वाण्युपासननिष्पत्त्युपपादकतया तत्तदपेक्षायामनुष्ठेयानि। पारलौकिकानि तु तत्फलाभिसंधिविरहेण कर्मयोगानुष्ठानदशायां नित्यनैमित्तिकैरेकीकृत्य कर्तव्यानि। नैमित्तिकान्यपि हि सर्वाणि प्रसक्तानर्थपरिहारार्थतया सर्वहितान्येव। एवं नित्यान्युत्तरकर्माधिकारार्थत्वादकरणनिमित्तप्रत्यवायपरिहारार्थत्वाच्च। अतः श्रुतिविहितं स्ववर्णाश्रमोचितं सर्वं हितमेव। अत एव हि स्मरन्ति।

शास्त्रं हि वत्सलतरं मातापितृसहस्रत इति।

एवं स्थिते प्रवाहानादिसामग्रीचक्रवशादनियतसमयसमागतसकलसैद्धान्तिकसमालम्बनीयसुचरितपरिपाकनिवृत्तप्रतिबन्धपरमपुरुषकटाक्षविशेषसमुन्मिषितसत्त्वसामर्थ्येन करतलामलकवदालोकितहेयोपादेयविभागस्यानाद्यनन्तबहुविधदुर्विषहदुःखानुषंगिदूषितालपास्थिरसांसारिकसुखमयविषयमधुविरक्तस्य समस्तदुरितवर्गापवर्गायमाणनित्यनिरतिशयानन्दमुकुन्दचरणारविन्दसेवामकरन्दलम्पटस्य यथाशक्ति वर्णाश्रमोचितानित्यनैमित्तिकनिषिद्धपरिहारसहकृतं दर्शनसमानाकारध्रुवानुस्मृतिरूपं भगवदुपासनं हिततमं विहितम्। तच्च सदक्षरन्यासवैश्वानरमधुभूमदहरादिभेदेन बहुविधम् त्रैवर्णिकसर्वाश्रमसाध्यम्। तस्य च महनीयविषयनिरतिशयप्रीतिरूपत्वेन भक्तिशब्दवाच्यत्वम्। अयमेव च

परमो योगस्त्वत्यन्तानुविधायिषु सर्वेषु मोक्षशास्त्रेषु प्रतिपाद्यते यथाह भगवान् पराशरः ।

आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ।
तस्या ब्रह्मणि संयोगो योग इत्याभिधीयत इति ।

स्मरति च भगवान् शाण्डिल्यः ।

ईदृशः परमात्मायं प्रत्यगात्मा तथेदृशः ।
तत्संबन्धानुसंधानमिति योगः प्रकीर्तित इति ।

तत्र चिदचिद्विवेकादिमात्रे सांख्यमुपकुरुते । यमनियमादिसमाधिपरिकरशोधने योगः । इतिकर्तव्यताविशेषे कर्मकाण्डादयः । सर्वत्रैव पञ्चरात्रम् । च । निषिद्धकाम्यवर्गेषु व्यर्थानावश्यकेषु शमादिविधिरन्यत्र प्रवृत्त्या न विरुध्यते ।

सोऽयमेवंविधः परमो योगाख्यो धर्मो मय्येव मनआधत्स्वेति गीयते । तदशक्तस्य

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ।
अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।

इत्यादिना प्रीतिपूर्वककर्माणि विधीयन्ते । यः प्रीतिपूर्वकभगवदसाधारणकर्मण्यपि न समर्थः । तस्य विषयरसवैमुख्यजननाय समस्तवैषयिकसुखशेषित्वेन चिरतरमनुसंहितस्यापि स्वात्मनः सांसारिकसमस्तसुखसमधिकानन्दस्वरूपमालोकयितुमान्तरचक्षुर्विरोधितिमिरपटलपाटनाय ज्ञानकर्मयोगाख्ये द्वे भेषजे । तत्रात्मचिन्तनरूपो ज्ञानयोगस्तदालोकनेऽन्तरङ्गभूतः । तत्राप्यसमर्थस्य तदधिकारसिद्ध्यर्थं कर्मयोगः । तेन तत्र सिद्धाधिकारस्यापि शिष्टतया व्यपदेश्यस्यान्तर्गतात्मज्ञानः कर्मयोग एव कार्यः । अन्यथा कृत्स्नविदोऽप्यस्य ज्ञानयोगाशक्ताकृत्स्नवेदिपुरुषबुद्धिभेदजनन-

मूलमहत्तरदुरितवशेन ज्ञानयोगोऽपि प्रतिबध्येत। तादृशेनैव च कर्मयोगेन सुकरत्वादिगुणवता चिरतरमनुष्ठितेन ज्ञानयोगव्यवधानमन्तरेणाप्यात्मावलोकनं सिद्ध्यति। कर्मयोगेऽप्यसमर्थस्तु विकलमपि कर्मयोगमारभेत।

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।

स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्

इत्यादिभिर्वैकल्यविच्छेदादिसंभवेऽपि फलाविनाभावादिप्रतिपादनात्। उपक्रममात्रेणापि प्रसन्नो भगवान् पौष्कल्यमापादयति। सर्वेषु चामीषु पर्वसु तत्तत्सामग्रीचक्रघटनाय तत्तत्फलप्रदानाय च स एव हि शरणमनुसंधेयः। तथाचामनन्ति। सा काष्ठा सा परा गतिरिति। स एव परमपुरुषो वशीकार्यकाष्ठा परमप्राप्यश्चेत्यर्थः। तस्य च वशीकरणं तच्छरणागतिरेवेति भाष्यम्। एवं हिततमस्योपासनस्य दिङ्मात्रं दर्शितम्। फलं चापवर्गरूपं प्रागेव लक्षितम्। अन्येषां तु देहविच्छेदमात्रसहस्रयुवतिसंभोगसमस्तालीकविषयविज्ञानसंतानोच्छेदवासनात्यन्तविरामविषयोपरागवैधुर्यनित्योर्ध्वगमनसकललोकमस्तकोपरि निविष्टसाधारणदेहविशेषानुप्रवेशनिरावरणत्वस्वानन्दानुभवस्वातन्त्र्यलाभशिवसारूप्यशिवापत्तिचिच्छक्तिपरिशेषाविद्यानिवृत्त्युपाधिनिवृत्तिसकलवैशेषिकगुणोच्छेदप्रभृतयो निःश्रेयसविकल्पा देहाद्यतिरिक्तात्मसद्भावबाह्यार्थपारमार्थिकत्वतत्तदागमप्रामाण्यब्रह्मनिर्विकारत्वनिर्दोषत्वैतज्ज्ञानानन्दनित्यत्वादिसमर्थकैः शारीरकपर्यन्तैः शास्त्रैः प्रतिक्षेप्या इति तत्र तत्र विस्तरो द्रष्टव्यः। इह तु प्रमाणचिन्तायाः परमप्रयोजनं दर्शयितुं प्रमेयस्य सङ्ग्रहोक्तिः सपरिकरप्रमाणमर्यादाप्रतिपादनपरत्वान्न्यायाविस्तरस्यास्येति।

स्वातन्त्र्येण मितं सुखेतरतया यद्भाति जन्तोरिदं
सर्वं यस्य विभूतिरित्यवसितं स्वादं व्यनक्ति स्वकम् ।
अन्तःस्वान्तमनन्तनन्दथुनिधिर्मद्दोदृशां मादृशा
माविर्भावयतु स्वयं स भगवानात्मानमात्मेश्वरः ॥

यत्रोदासत जैमिनिप्रभृतयः श्रुत्यर्थचिन्तापराः
यस्यां कन्दलयन्ति मन्दमतयः पारिप्लवान् विप्लवान् ।
विश्वेषामिह वेङ्कटेशविदुषा विश्रान्तये वादिनां
प्राची नीतिषु पर्यशोधि सरणिः प्रच्छायानिष्कण्टका ॥

शुद्धिं बिभ्रति मादृशां भणितयश्चूडान्वये केवलं
प्रान्ते विश्रमभाणि नीतिनिपुणैः किं तेष्वमन्तव्यता ।
युक्तं वर्गयुगे विमृश्य सरघापुष्पक्रमं यौक्तिकै-
रङ्गीकर्तुमशक्यनिन्हवगुणग्रन्थो निबन्धो मम ॥

निरूढनिगमत्रये निखिललोकचिन्तामणौ
प्रसत्तिमुपसेदुषि प्रणिदधानभावास्पदे ।
रतिं भजति भावना लयमिवोपयाति द्रुतं
रमावसुमतीसहाचरितधर्मणि ब्रह्मणि ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु न्यायपरिशुद्धौ प्रमेयाध्याये द्वितीयमाह्निकम् ५ । २ समाप्तश्चाध्यायः पञ्चमः । ५ ।

न्थश्च परिसमाप्तः ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

समाप्ता न्यायपरिशुद्धिः ।

# भूमिका ।

—:०:—

श्रीमते भगवद्रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

श्रीमद्वेङ्कटनाथदेशिकमणिमञ्जासारित्वरत्नपरम्परापरिणामभूतन्यायपरिशुद्ध्यभिधानं प्रबन्धरत्नमिदं जयति जीवितमिव न्यायविस्तरस्य विद्यास्थानस्य श्रीभगवद्रामानुजमुनिवरक्षुण्णवर्त्मनो ब्रह्ममीमांसाशास्त्रस्य च । अनुपजीव्य चेदं विद्यास्थानं को विभवः स्पन्दितुमपि शेषस्य विद्यास्थानजातस्य । सर्वमेव हि लोके श्रुतं संशयविपर्ययाभ्यामाहितपारिप्लवं वात्यास्पृष्टमिव तृणशकलं न कथंचिदपि प्रतितिष्ठति । प्रमाणपरीक्षया तु यथावदुपपादितया दृषदिव व्यपोढविक्षोभं निष्कम्पमवतिष्ठते । प्रमाणपरीक्षैव च प्रथमावतारपदवी न्यायविस्तरस्य पदवाक्यप्रमाणभेदेन हि त्रेधा विभजन्ति शास्त्रं शास्त्रविदः । तत्र पदं नाम शब्दानुशासनं पाणिन्यादिप्रणीतम् । वाक्यं च विचारपूर्वकश्रौतवाक्यार्थनिर्णयरूपं कर्मब्रह्मात्मकविषयविभागविभक्तमुभयं मीमांसाशास्त्रम् । प्रमाणं तु क्वचिदप्यर्थेष्वनवगाढावष्टम्भां स्वात्मन्यप्यनुपजातविस्रम्भां डोलायमानां बुद्धिं करेणुमिव तर्कशृङ्खलाभिरालानयन्मननव्यपदेशं शास्त्रम्; यस्य संज्ञान्तरं न्यायविस्तरः तर्कशास्त्रमित्यादि ।

तदेतत् प्रमाणप्रधानमपि प्रमाणगतेः प्रमेयस्वरूपविवेचनपर्यवसानतया प्रमेयेऽपि न्यस्तपदं प्रवृत्तम् । इतरेतरविसम्वादुसंरब्धोद्धुरैरास्तिकैर्नास्तिकैश्च बहुधा वादिभिः स्वच्छन्दानुरोधेनान्यथा चान्यथा च प्रमेयं प्रतिपद्यमानैरितस्ततः परिकृष्यमा-

णानि प्रमाणान्यपि परावृत्तरूपतया लक्षणतो दुर्ग्रहाण्यभूवन् । मानाभासव्यामिश्राणि हि मानानि न सुकराणि विवेक्तुम् । तदेवं शास्त्रमेव पङ्किली कृतं चक्षुरिव तिमिरोपसृष्टं विगलितार्थग्रहणपाटवं संवृत्तम् । अविपर्यस्तलक्षणं प्रमाणवर्गं परिगृह्णद्भिरपि सौगतार्हतकापिलचार्वाकजैमिनीयादिभिरङ्गेष्ववान्तरभेदेषु च न्यूनातिरेकमास्थितैरनेकधोपयोगादनेकान्तीकृतमतयः कृतमतयोऽपि स्वस्वोपदेशपारम्परीप्रत्ययादेकतमं पक्षमभिमन्यमानाः स्वपरिग्रहावसादकातरतया पक्षान्तरेषु साभ्यसूयाश्रितायापि गुरुकुलेषु परिश्रम्यालब्धबुद्धिप्रसादा विभ्राम्यन्त एवानुभूयन्ते । अतः सर्वोपयोगाय दोषगुणहानोपादानाभ्यां शिक्षणीयस्यास्य न्यायविस्तरस्य पृथक् प्रस्थानं न्यायदर्शनं नाम सूत्रजातं गौतमेन मुनिना प्रथमं प्रणीतम् । यत्र प्रमाणाप्रमाणादिविवेचनया तत्त्वनिर्णयोपायास्तत्र च सम्भवन्तो गुणदोषाः कथासु च ग्राह्यपरिहार्यविभागाः सविशेषं प्रदर्शिताः ॥

तच्च न्यायदर्शनं प्रथमं प्रमाणप्रमेयादि सूत्रेण षोडशधा पदार्थान् विभज्य तत्परीक्षणेन चरितार्थम् । तत्र प्रमेयत्वस्य केवलान्वयिनः सर्वपदार्थसाधारणतया विभाजकत्वमनुपपद्यमानं मन्यमानेन कणादेन मुनिना कृत्स्नमेव प्रमेयजातं द्रव्यादिसप्तपदार्थपरिसंख्यानेनासंकीर्णं विभक्तम् । तत्र च सामान्यविशेषसमवायाभावान् वितथमेवापदार्थान् पदार्थयता तथाविधमेव चान्यदन्यदालपता ग्राह्यमगृह्णता त्याज्यं चात्यजता कणभक्षेण दूरमपथीकृतः शास्त्रपथ इति ब्रह्मसूत्रकारादिभिः प्रतिक्षिप्तो वैशेषिकः पक्षः । न्यायपक्षस्तु शङ्क्यमानोपसर्गोऽपि कथंचिद्व्याख्यानाधेयसंस्कारतया नात्यर्थपरिवर्जनीय इति मन्यमानाः कतिपयसंस्कारसंस्कृतमिमं पक्षं परिगृह्य निबन्धान् निबबन्धुः पूर्वे केचिदाचार्याः । ते च निबन्धा एषु दिवसेषु नातीव केवलमवाशिष्यन्ते । तद्यथा श्रीमन्नाथमुनिमिश्रप्रणीतं न्या-

यतत्त्वम्, श्रीमत्पराशरभट्टारककृतिस्तत्त्वरत्नाकरः, श्रीभगवद्यामुनाचार्याणामाचार्यैः श्रीमन्नाथमुनिचरणाश्रयाणां श्रीपुण्डरीकाक्षाणां शिष्यैश्च श्रीराममिश्रगुरुभिर्विरचितं विवरणं षडर्थसंक्षेपश्चेति ग्रन्थद्वयम्। अविदितप्रबन्धृव्यपदेशं न्यायसुदर्शनं प्रज्ञापरित्राणं चेति प्रबन्धयुगलम्। श्रीमन्नारायणमुनिविरचितत्वेनाचार्योपात्तं नाम्ना चानुद्दिष्टं किमपि प्रबन्धरत्नम् अस्यैव च न्यायपरिशुद्धिप्रणेतुराचार्यस्याचार्येण मातुलेन च वादिहंसाम्बुवाह इति प्रशस्तिनामाङ्किनेन आत्रेयरामानुजाचार्येण कृतं स्वप्रतिभाद्रविणनिक्षेपायमाणं न्यायकुलिशाभिधानं चेत्येते निबन्धाः न्यायपरिशुद्धिकृतैवाचार्येण तत्र तत्र भूयिष्ठमुदाह्रियन्ते। यदेव यावदेव चाचार्येण क्वचित् क्वचिदुदाहृतं वाक्यं वाक्यखण्डं वा तदतिरिक्तं कियदपि टीकाकृतामपि दृष्टिविषयीभूतं नोपलभ्यते अयमत्र हेतुः प्रतिभाति—आचार्यसंनिहितकालेष्वप्यनतिसंक्षेपविस्तररमणीयानि प्रस्फुटार्थानि नित्यप्रकाशान्याचार्यश्रीसूक्तिरत्नान्यवमृश्य रसास्वादवादिविजयशिष्यप्रवचनादिप्रवणेषु उपर्युपरि व्याख्यानादिप्रणयनैरविस्तृत्य शास्त्रं वितथमेवातिपातितकालेषु शिष्यप्रशिष्यवर्गेषु कुमारवेदान्ताचार्यादिषु अतीते च गणरात्रे कैश्चिदर्वाचीनैराविर्भूतैर्ग्रन्थकृद्भिरज्ञातपूर्ववृत्तान्तैर्यथाकथंचिद्व्याख्यानेन कश्चिदुपकारः कृत इति ॥

अस्यैवाचार्यस्य वाङ्मधुनिष्यन्दो मुधैव कियान् न विस्रंसितः। सर्वतन्त्रस्वतन्त्राणामाचार्यचरणानां शताधिकाः प्रबन्धा हारविमलाः प्रसिद्धाः। संस्कृतप्राकृतद्राविडभाषाभिस्त्रैराशिकानि काव्यनाटकस्तोत्राणि लोकशास्त्रव्यवहारानिरूढसंस्कृतव्यतिकीर्णद्राविडभाषामयानि च चतुर्थराशिनिविष्टानि। लौकिकानामप्यनुग्राहकाणि परीक्षकाणामपि सुग्रहसांप्रदायिकतत्त्वहितपुरुषार्थान्यादर्शविमलानि मणिप्रवालशब्दितानि नि-

यतश्चान्यतया रहस्य संज्ञितानि सिद्धान्तनिष्कर्षणैदंपराणि लोकश्रेयसे जातानि ग्रन्थजातानि । तत्र वेदान्ते तावत् तत्त्वटीका नाम श्रीभगवद्रामानुजमुनिवरविरचितस्य शारीरकमीमांसाभाष्यस्य विवृतिरपूर्वार्थविशेषविन्यासपरिभूषिता त्रैकाल्यसंभावनीयानामशेषाक्षेपाणामचलनिश्चयान् परिहारानुपदर्शयन्ती गङ्गेव गौरीगुरोरेतस्मादाचार्यवर्यादाविर्भूता । सा च प्रथमसूत्रमात्रमपि यावदसमग्रोपलब्धप्रचारा वेदान्तविद्याविचारकाङ्क्षिणां चिन्ताव्यसनायैव खण्डभूता परिदृश्यते । विचित्रायोधनाकुण्ठशक्तौ तेजस्विनि स्वां शक्तिं समग्रमदर्शयित्वैव नियतिवैयात्येनाकस्मादुपरते योधरत्ने तटस्थदृष्टेः कस्य वा वीरधर्ममनुतिष्ठतो हृदयं न दूयेत । सोऽयमस्य निबन्धरत्नस्य लोपे दृष्टान्तः । अपि च

"निखिलनिगमश्रेणीचूडापरिष्कृतिरूपिणी<br>
निपुणमनसामाशासौधस्थलीषु निबध्यते ।<br>
यतिपतिभुवो भाष्यस्यासौ यथाश्रुतचिन्तित<br>
प्रवचनविधावष्टाविंशे जयध्वजपट्टिका ॥

इति स्वकृतस्य भाष्यप्रवचनस्य अष्टाविंश्यामावृत्तौ तत्त्वटीकानिबन्धप्रणयनमाचार्यस्तत्त्वटीकाप्रारम्भे स्वयमेव स्पष्टमाह ।

संकल्पसूर्योदयप्रस्तावनायां च—

विंशत्यब्दे विश्रुतनानाविधविद्य-<br>
स्त्रिंशद्वारं श्रावितशारीरकभाष्यः ।<br>
श्रेयः श्रीमान् वेङ्कटनाथः<br>
श्रुतिपथ्यं नाथप्रीत्यै नाटकमथ्यं व्याधितैतत् ।

इति सूत्रधारवाचा शारीरकभाष्यप्रवचनं संकल्पसूर्योदयनिर्माणकाले त्रिंशद्वारकृतं प्रथयति । तदानीमेव त्रिंशद्वारं शारीरकभाष्यप्रवचनमासीद्यदि, ततः पश्चात् प्रवचनावृत्त-

यस्ततोऽपि हि भूयस्यो भवितुमर्हन्ति । कृष्णमिश्रसमागमकालो हि संकल्पसूर्योदयानिर्माणसमयः । ततश्चाष्टाविंश्यावावृत्तौ तत्त्वटीकानिर्माणं कृष्णमिश्रसमागमात् पूर्वतरं भवति । शतदूषण्याः समनन्तरं तत्त्वटीका कृतेति च प्रतीयते । उक्तं हि स्वयमेवाचार्यैस्तत्त्वटीकां प्रक्रममाणैः—

शातितः शतदूषण्यां शङ्करादिमुधाग्रहः ।
शारीरकशरीरं तु व्यक्तमत्र प्रदर्श्यते इति ॥
श्रुतप्रकाशिका भूमौ येनादौ परिरक्षिता ।

प्रवर्तिता च पात्रेषु तस्मै श्रेष्ठाय मङ्गलम् इति कुमारवेदान्ताचार्यकृतमङ्गलानुशासने आचार्यकृतोपकारोऽप्युच्यते । आचार्यकृतं न्यायसिद्धाञ्जनमपि जडद्रव्यपरिच्छेदेनैव पर्यवसितं सांप्रतं परिदृश्यते । शतदूषण्यपि हि न समग्रा दृश्यते षट्षष्टिरेव वादा लोके प्रचरन्ति । तत्रत्यश्चायं श्लोकः ।

प्राचीमुपेत्य पदवीं यतिराजदृष्टां
तत्सान्निकृष्टमपि वा मतमाश्रयन्तः ।
प्राज्ञा यथोदितमिदं शुकवत्पठन्तः
प्रच्छन्नबौद्धविजये परितो यतध्वम् इति ।

अत्र तत्संनिकृष्टमतमिति मध्वमतमुच्यते इति सांप्रदायिकाः । श्रीरङ्गनाथेन वेदान्ताचार्यपदवीप्रदत्तेति चाचार्येण स्वयमेवाधिकरणसारावल्यामुक्तम् यथा

विश्वस्मिन्नामरूपाण्यनुविहितवता देवदेवेन दत्तां
वेदान्ताचार्यसंज्ञामबहितबहुवित्सार्थमन्वर्थयामि इति ।

सा चैषा न्यायपरिशुद्धिर्गौतमादिविहितरेखामात्रगृहीतरूपस्य सर्वोपजीव्यस्य न्यायविस्तरस्य विद्यास्थानस्य समस्तदोषरजःपरिमार्जनदर्शिताभिनवरूपा प्रत्यङ्गसंस्कारोपपादनप्रगुणा कृतसौभाग्या च काचिदाचार्यविरचिता मूर्तिरिवाभाति ।

पूर्वे हि दिङ्नागप्रभृतयः सुगतमताचार्याः स्वबुद्धिपरिकल्पितैर्दूषणैर्गौतमीयं न्यायदर्शनं विक्षोभयामासुः । यदपोहेन गौतमदर्शनस्य संस्कारान्तरमाधातुं स्वस्य न्यायवार्तिकप्रणयनमुद्योतकारेण ग्रन्थारम्भे प्रदर्शितम् । तस्यापि न्यायवार्तिकस्य तदर्वाचीनैः कृतं कलङ्कं परिमार्ष्टुं तात्पर्यटीकां नाम न्यायवार्तिकव्याख्यां वाचस्पतिमिश्रः प्राणिनाय । तदुपर्यपि शास्त्रपद्धतिं निष्कण्टकीकारिष्यन्नुदयनाचार्यस्तात्पर्यटीकाया अपि टीकान्तरं तात्पर्यपरिशुद्धिं नाम कामपि विवृतिं व्यवृणोत् । तेषामपि परिश्रमकृतावधानानां न्यायाचार्याणामालोकपथमप्राप्तान्येव बहूनि न्यूनानि शास्त्रस्य पर्यशिष्यन्त । पूर्वाचार्यैरपि शारीरकमीमांसाशरीरसंस्कारतत्परैः श्रीभगवद्यामुनभट्टपराशरादिभिरङ्गभूतां न्यायशास्त्रप्रवृत्तिं समयोपयोगामाधातुकामैरपि संस्कारभित्तौ चिरलग्नया प्राचीनन्यायशास्त्रवासनया क्वचित् क्वचिदुपरक्तबुद्धिभिनात्यन्ताय वैमल्यमनीयत मार्ग इति निःशेषसंस्कारणार्थां न्यायपरिशुद्धिग्रन्थप्रणयनप्रावृत्तिराचार्याणां न केवलं न्यायाविस्तरस्य अपि तर्हि शारीरकादेरपि शास्त्रस्य कथकानां कथाव्यतिकरस्य च कंचिदन्यादृशमुपकारमावहति इति तस्य प्रथमं प्रकाशनमिदानीमुपक्रान्तम् । आचार्याणां कालदेशनिर्णयश्च तच्छिष्यप्रशिष्यपरम्परायातः सुगम एव । तथाहि शालिवाहनशकाब्देषु नवत्युत्तरशताधिकसहस्रगणितेष्वतीतेषु एकनवत्युत्तरशताधिकसहस्रतमे विभवसंवत्सरे कन्यामासि श्रवणनक्षत्रे आचार्याणामाविर्भावः । द्विनवत्युत्तरद्विशताधिकसहस्रगणितेषु चातिक्रान्तेषु शालिवाहनशकाब्देषु त्रिणवत्युत्तरद्विशताधिकसहस्रतमे सौम्यनामनि वत्सरे वृश्चिकमासस्य सप्तदशे दिने कार्तिक्यां पौर्णमास्यां रात्रौ देहत्याग इति च स्पष्टं निर्णीतम् । आचार्याणां चरमश्लोकश्चात्र प्रमाणम्; यथा—

अब्दे सौम्ये च वारे गतवति तरणौ वृश्चिकं कार्त्तिकर्क्षे
राकायां वेङ्कटेशो यतिनृपतिमतं सर्वतः स्थापयित्वा ।
वेदान्ताचार्यनामा विरचितविविधानेकदिव्यप्रबन्धः
श्रीशैलाधीशघण्टाकृतिवपुरभवद्देशिकेन्द्रो दयालुः ॥

इति हि निर्णीतम् । क्रैस्तववर्षे ( १२७० ) सप्तत्युत्तरद्विशताधिकसहस्रतमे आचार्याविर्भावः ( १३७२ ) द्वासप्तत्युत्तर-त्रिशताधिकसहस्रतमे देहत्याग इत्यपि सुगमम् । काञ्च्यां तुप्पुल् इति प्रसिद्धं दीपप्रकाशाभिधानस्यार्चारूपस्य भगवतः प्रासादान्तिकमेव च स्थानमाविर्भावतिरोभावयोः इति च देश निर्णयः । एतदाचार्यप्रभावश्चान्यैरन्यत्राप्युक्तः स यथा—

वेदे संजातखेदे मुनिवरवचने प्राप्तनित्यावमाने
संकीर्णे सर्ववर्णे सति तदनुगुणे निष्प्रमाणे पुराणे ।
मायावादे समोदे कलिबलवसतः शून्यवादे विवादे
धर्मत्राणाय योऽभूत्स जयति भगवान् विष्णुघण्टावतार इति
संकल्पसूर्योदये अन्यत्रचाचार्यवचनान्यपि ।

अन्येन्द्रकं भुवनमन्यदनिन्द्रकं वा कर्तुं क्षमे कविरभूदय-मन्ववाये ।

जन्माद्वितीयमृषिभिः कथितं यतः सा देवी च विश्वजननी यदनन्यगोत्रा ।

त्रिस्रासिनी विबुधवैरिवरूथिनीनां पद्मासनेन परिचार-विधौ प्रयुक्ता

उत्प्रेक्ष्यते बुधजनैरुपपत्तिभूम्ना घण्टा हरेः समजनिष्ट यदात्मनेति ।

अनाराध्य कालीमनास्वाद्य गौडीं विना यन्त्रतन्त्रैरकृते शब्दचौर्यात् । प्रबन्धं प्रगल्भं प्रकर्तुं प्रवक्तुं विरञ्चिप्रपञ्चे मदन्यः कविः क इति ।

आचार्यकृता बृहन्तो ग्रन्थाः न्यायपरिशुद्धिः तत्त्वमुक्ताकलापः सर्वार्थसिद्धिः अधिकरणसारावली श्रीभगवद्रामानुजगीताभाष्ये तात्पर्यचन्द्रिका टीका शतदूषणी च तथा चाहुः

सर्वार्थसिद्धिः शतदूषणी च द्वे खेटखड्गेकथकाग्रकाणाम् इति। लघवश्च ग्रन्थाः स्तोत्ररत्नभाष्यं चतुःश्लोकीभाष्यं गद्यत्रयटीका यतिराजसप्ततिः दयाशतकं द्रविडोपनिषत्तात्पर्यरत्नावली द्रविडोपनिषत्सारः गोपालविंशतिः गरुडदण्डकं न्यासतिलकं न्यासविंशतिः सेश्वरमीमांसा पादुकासहस्रं संकल्पसूर्योदयः यादवाभ्युदयः प्रातर्निवेदनकारिकाः अधिकारसंग्रहः हयग्रीवस्तोत्रं कनकधारास्तोत्रं हरिदिनतिलकं गोदास्तुतिः सुभाषितनीवी सच्चरित्ररक्षा पञ्चरात्ररक्षा निःक्षेपरक्षा गीतार्थसंग्रहरक्षा रहस्यरक्षा यज्ञोपवीतप्रतिष्ठाया नव स्रग्धराः । अन्येऽपि मदीयदृष्टिपथमप्राप्ताः सपादशतोपर्यधिकाः ग्रन्थाः श्रूयन्ते। तदन्तर्गता चेयं न्यायपरिशुद्धि रुपलभ्यमानानुमानाध्यायान्तटीका श्रीवृन्दावनरङ्गमन्दिरपुस्तकालयस्थ द्रविडाक्षरतालपत्रपुस्तकादुद्धृत्य प्रकाशिता न्यायरसिकानां मुदे भवत्विति साञ्जलिबन्धं प्रार्थयते ।

वृन्दावननिवासी श्रीमद्रामानुजाचार्यावतारधामभूतपुरीवास्तव्य श्रीमत्कोइल्कन्दाडे अप्पन् श्रीश्रीनिवासवरदाचार्यचरणाश्रितः लक्ष्मणाचार्यापरपर्यायो लक्ष्मणरामानुजदासः ।

श्रीरामानुजाब्दाः ९९५

# न्यायपरिशुद्धे शुद्धिपत्रम् ।

| अशुद्धि | शुद्धि | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| प्रत्यक् | प्रत्यक् | ६ | १० |
| विजिगीषु | पक्षद्वयसाधनवतीविजिगीषु | | ७ |
| तीन्द्रिय | तीन्द्रिय | १९ | १ |
| नन्त्याशंङ्कयेष्टा | नन्त्यमाशङ्कयेष्टा | ३० | २५ |
| तत्रास्मदायी | तत्रास्मदीया | ३५ | ७ |
| प्रमोत | प्रमेति | ३६ | ६ |
| एतावत् | येतावत् | ४२ | ३० |
| एतावत् | येतावत् | ४३ | १ |
| एतावत् | येतावत् | ४३ | ४ |
| क्षिणत्वं | णिकत्वम् | ४४ | १८ |
| ऽन्यत्व | ऽन्यस्व | ४४ | २३ |
| अन्याख्यात्या | अन्यथाख्यात्या | ४६ | ११ |
| एवस्वात् | एवस्यात् | ४८ | २१ |
| पत्रा सद्धि | पत्रासद्धि | ५० | १८ |
| भदेन | भेदेन | ६६ | १८ |
| द्वितीय | द्वितीयौ | ७९ | ९ |
| प्रमाण्या | प्रामाण्या | ८० | ९ |
| विजज्ञो | विजज्ञौ | ८६ | २६ |
| मुपदेश | मुपदेशः | ८८ | १२ |
| प्रज्ञेना | प्राज्ञेना | ९१ | १८ |
| श्रीमद्वेदांता | श्रीदेवराजा | ९५ | २४ |
| पुत्रेषु | पुत्रेषु | ११७ | १ |
| प्रतिपक्षं | प्रतिपक्षत्वं | ११८ | ३ |
| प्रमसंगा | प्रसंगा | १२३ | १ |
| है | है | १२५ | १ |
| बाधः । स्पष्टः | बाधःस्पष्टः | १२५ | ९ |
| दिना । आ | दिना आ | १२७ | ११ |
| दित्युपपक्ष | दित्युपक्ष | १२८ | २ |
| षशा | षेशा | १५२ | ४ |
| पक्षाप्रमाण्य | पक्षाप्रामाण्य | १६८ | २ |
| पथेच्छ | यथेच्छ | १९२ | १० |
| व्यमोह | व्यामोह | १९९ | ८ |
| त्रिभग्यन्त | त्रिभङ्ग्यन्त | २०४ | ११ |

| शुद्धि | शुद्धि | ० | पङ्क्तौ |
|---|---|---|---|
| पत्ति | संपपत्ति | १९ | १ |
| ख्यो | आख्या | २४ | ३ |
| ायममि | स्वयमपि | ३० | ५ |
| द्न्यभ्यां | तदन्याभ्यां | ३८ | ६ |
| यैव | छाययैव | ७० | ३ |
| ासतो | न्यस्यतो | ७० | ५ |
| द | भेद | ७१ | ११ |
| ये | रूपे | ८३ | ४ |
| शेण | वेषेण | ८४ | ७ |
| स्वककर्तृ | तेष्वकर्तृ | ८५ | ११ |
| नेराम्लवन | निरालम्बन | ११५ | १६ |
| ाण्योच्छद | माण्योच्छेद | ११६ | १८ |
| वेच्छेना | विच्छेदना | १२७ | १ |
| त्रापि | ह्यत्रापि | १४४ | ८ |
| ाशुपाताना | पाशुपताना | १५१ | |
| ाह्यनां | वाह्यानां | १५२ | १० |
| आवुद्धि | अबुद्धि | ३०५ | ५·५ |
| व्यवस्थना | व्यवस्थाना | ३५८ | ५ |
| निमापेक्षः | नियमापेक्षः | ३६६ | ७ |
| येभजा | यभेदा | ३६८ | ११ |
| पभ्यमाने | पलभ्यमाने | ३८२ | ५ |
| स्मृत्वं | स्मृत्वा | ३९२ | १६ |
| शब्दस्तर्थं | शब्दस्तदर्थं | ३९५ | २५ |
| स्वर्बवर्णनं | स्वर्यवर्णनं | ४०५ | ८ |
| धमाणामनुं | धर्माणामनु | ४७७ | २५ |
| चिकार्षुभि | चिकीर्षुभिः | ४७८ | १६ |
| समनार्थे | समानार्थे | ४८१ | १ |
| पृथा | वृथा | ४९६ | १२ |
| विशेषवि | विशेषादि | ४९९ | २४ |
| नित्येष्वेष | नित्येष्वव | ५०० | २ |
| अश्रित | आश्रित | ५०२ | २ |

# न्यायपरिशुद्धिविषयानुक्रमणिका ।

इति न्यायपरिशुद्धिविषयाक्रमणिका ।

# चौखम्बासंस्कृतसीरीज़ ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादि-कार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः १० आणका

५ देशान्तरीयैरेतद्ग्राहकैर्देयं वार्षिकमग्रिमं ... ... ... ... ... ... मूल्यम्—मुद्राः १८ ''

६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ... ... ... ... ... ...

७ अन्यैर्देयं प्रतिस्तबकं ... ... ... ... ... ... ... '' '' १ ''

---

१) संस्काररत्नमाला । गोपीनाथभट्टकृता ख० २ ३)
२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृत प्रथमाध्यायमारभ्य तृतीयाध्यायद्वितीयपादचतुर्थाध्यायपर्यन्तम् ३३)
३) श्लोकवार्तिकं भट्टकुमारिलविरचितं पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् १५)
४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) ३)
५) करणप्रकाशः । श्रीब्रह्मदेवविरचित ... १॥)
६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचित तर्कपादः (मीमांसा) ... ... ३)
७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा ३)
८) ब्रह्मसूत्रभाष्यम्—बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानं । सम्पूर्णम् । (वेदान्तः)९)
९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा । ... ३)
१०) सिद्धित्रयम्—विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । १॥)
११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः(वेदान्तः) ६)
१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचित सम्पूर्णः ( न्यायः ) ... ... ... ७॥)
१३) विधिरसायनम् । श्रीमदप्पय्यदीक्षितकृतं सम्पूर्णम् ३)
१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता । ( मीमांसा ) ... ... ... २४)
१५) शिवस्तोत्रावली । उत्पलदेवविरचिता श्रीक्षेमराजविरचितवृत्तिसमेता ( वेदान्त ) ... ... ३)
१६) मीमांसाबालप्रकाशः । जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । (मीमांसा) ३)
१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृत मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ५)
१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ४॥)
१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्य-

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपू[illegible] चितया खण्डनफक्किकाविभजनाख्यया व्या[illegible] विद्यासागरीति प्रसिद्धया समेतम् । ( वेदान्तः)
(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता ...
(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणि[illegible] च सहितम् ... ... ...
(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ।
(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तव[illegible] विरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानग[illegible] र्योः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्ति[illegible] मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुम[illegible] क्रोडपत्राणि ख० ७ ... ...
(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचित[illegible] न्तजाह्नवीयुतम् ... ... ...
(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशे[illegible] जैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया स[illegible] हरिभद्रसूरिकृतः ... ... ...
(२८) शुद्धाद्वैतमार्तण्डप्रकाशव्याख्यासहितःप्रमेयरत्ना[illegible]
(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतद[illegible] जागदीशी टीका ... ... ...
(३०) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्[illegible] विरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्[illegible] प्रकरण श्रीसुबोधिनीटिप्पण्योः—प्रकाश. गो[illegible] श्री पुरुषोत्तमजीमहाराज विरचितः ...
(३१) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलि[illegible]
(३२) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृ[illegible]
(३३) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीम[illegible] विरचितः ... ... ... ...
(३४) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्री[illegible] र्काचार्यविरचितम् ... ... ...
(३५) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनाराय[illegible] विरचित—योगसिद्धान्तचन्द्रिकासमाख्यया व्य[illegible] संवलितम् ... ... ... ...
(३६) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरा[illegible] सरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्[illegible]

वीरमित्रोदयः महामहोपाध्यायश्रीमित्रमिश्रविरचित परिभाषा-संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च १६॥)
वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ... ... ... ९)
वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः ... ... ... ६)
वीरमित्रोदयः । लक्षणप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः खण्डा ७ ... १०॥)
वीरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः... ... ... ७॥)
वीरमित्रोदयः । तीर्थप्रकाशः । महामहोपाध्याय श्रीमित्रमिश्रविरचितः खण्डा ६ ... ... ९)
वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता ... ... ४॥)
स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः स्वकृतटीकाविभूषितश्च ... ... ... ... ३)
याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... १६॥)
गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता ख०१४ २१)
शास्त्रदीपिका । श्रीपार्थसारथिमिश्रप्रणीता । रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपादः ... ... ... ... ९)
वैयाकरणसिद्धान्तलघुमञ्जूषा म० म० श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य- बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाढ्यटीकाद्वयसंवलिता ख० ११ ११)
व्याकरणसिद्धान्तसुधानिधिः । पर्वतीय विश्वेश्वरसूरिविरचितः खण्डा १२ ... ... १८)
बृहदारण्यकवार्त्तिकसारः श्रीमद्विद्यारण्यस्वामिविरचितः । म० स्वरतीर्थकृतयालघुसंग्रहाख्ययाटीकयासमलंकृतः१९)
पूर्वमीमांसाअधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता नेनं इन्युपाख्य गोपालशास्त्रिणा परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृत । ... ... ... १॥)
प्रशस्तपादभाष्यटीकासंग्रहः । तत्र कणादरहस्यम् । श्रीशंकरमिश्रविरचितम् ख० १ ... ३)
क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेता ... ... ... ... ४॥)
सांख्यसंग्रहः । तत्र सांख्यतत्त्वविवेचनम् श्रीषिमानन्द 'क्षेमेन्द्र' विरचितम् । सांख्यतत्त्वयाथार्थ्यदीपनम् भा- गणेशविरचितम् । समाससूत्रव्याख्या सर्वोपका-

च खण्डे २ ... ... ...
(५६) न्यायपरिशुद्धिः । श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यविरचिता । श्रीनिवासाचार्यविरचित न्यायसारसमाख्यटीकया युता ख० ९ ... ...
(५७) निर्णयसिन्धु—कमलाकरभट्टविरचितः, कृष्णभट्टव्याख्यासहितः खण्डा ११ ... ...
(५८) न्यायप्रकाश, श्रीमदापदेवविरचितः । श्रीमदनन्तविरचितया "भाट्टालङ्काराख्य" व्याख्ययासहिता
(५९) सांख्यतत्त्वकौमुदी—षड्दर्शनकृद्वाचस्पतिमिश्रविरचिता । पण्डितराड्—वंशीधरमिश्रविरचित "तत्त्वाकर" टीकासहिता खण्डे ९ ... ...
(६०) न्यायदर्शनं सभाष्यसटीकं खद्योत सहितम्-खण्डे १
(६१) साङ्ख्यकारिका ईश्वरकृष्णविरचिता । माठराचार्यविरचिता—माठरवृत्तिसहिता । ... ...
(६२) पुष्पसूत्रं । सामप्रातिशाख्यं पुष्पर्षिप्रणीतम् श्रीमदजातशत्रुकृतभाष्यसहितम् ख० ३ ...

## मुद्यमाणा ग्रन्थाः ।

(६३) मीमांसाकौस्तुभः—श्रीखण्डदेवविरचितःखण्डाः ४
(६४) वीरमित्रोदयः । व्यवहारप्रकाशः । महामहोपाध्यायश्रीमन्मित्रमिश्रविरचितः । खण्डाः ४ ...
(६५) प्रशस्तपादभाष्यटीकासंग्रहः ( तत्र व्योमशिवाचार्यकृता व्योमवती—पद्मनाभमिश्रकृतः सेतुः—जगदीशभट्टाचार्यकृता-सूक्तिश्च ) । खण्डाः ४ ...
(६६) आत्मतत्त्वविवेकः उदयनाचार्यकृतः । शङ्करमिश्ररचित कल्पलता व्याख्ययासमन्वितः । खण्डाः ४
(६७) श्रीमच्छङ्कराचार्यकृता-जयमङ्गलाख्या सांख्यकारिकाटीका । खण्डः १ ... ...
(६८) न्यायचन्द्रिका । श्रीनारायणतीर्थ विरचिता-भट्टपरिच्छेदव्याख्या । खण्डः १ ... ...
(६९) याज्ञवल्क्यस्मृतिः । श्रीमन्मित्रमिश्रविरचिता 'वीरमित्रोदया'ख्यटीकया च सहिता । खण्डाः ४
(७०) काव्यप्रकाशः श्रीभीमसेनविरचितया 'सुधासागर' कया विशद टिप्पणेन च सहितः । खण्डाः ४
(७१) संस्कारगणपतिः । पण्डितवर श्रीरामकृष्ण विरचित खण्डाः ४ ... ... ...

## अग्रे मुद्यमाणा ग्रन्थाः ।

( १ ) अनुमानखण्डालोकः । महामहोपाध्याय श्रीजयदेवमिश्रविरचितः । ... ... ...
( २ ) वीरमित्रोदयः । समयप्रकाशः श्रीमन्मित्रमिश्रविरचि
( ३ ) वीरमित्रोदयः । शुद्धिप्रकाशः श्रीमन्मित्रमिश्रविरचि
( ४ ) अलङ्कारकौस्तुभः । श्रीकविकर्णपूर विरचितस्तेनैव या टीकया च सहितः । ... ...
( ५ ) धर्मसंग्रहः । ... ... ...
( ६ ) वादार्थसंग्रहः । ... ... ...
( ७ ) कालमाधवः । श्री'लक्ष्मी' अपरनामधेय बालम